# ARYAMANJUSRIMULAKALPA

Three Parts in one complete volume

*Edited By*

Mahamahopadhyaya T. Ganapathi Sastri

CBH PUBLICATIONS

*Originally Published in 1920*

*Reprint, 1992*

ISBN 81 85 381 19 4

This Publication has been brought out with the Financial Assistance received from the Government of India, Ministry of Human Resources, New Delhi.

Price .Rs. 93 - 00

*Published By*

**C B H PUBLICATIONS**

**20/2093, Single Street**

**P.B.No.617, Trivandrum,695 002**

**S.India**

*"If any defect is found in this book, please return the copy by V.P.P. to the publisher for exchange free of cost of postage"*

**Published By M. Girija, Proprietor, CBH Publications, Trivandrum.**
**Printed by Offset at**

अनन्तशयनसंस्कृतग्रन्थावलिः

# आर्यमञ्जुश्रीमूलकल्पः

संस्कृतग्रन्थप्रकाशनकार्याध्यक्षेण

त. गणपतिशास्त्रिणा

संशोधितः

स च

अनन्तशयने

सि. बि. एच्. प्रकाशनेन

पुनर्मुद्रितः

# PREFACE.

Among the collection of manuscripts acquired in 1909 from the Manalikkara Mathom near Padmanabhapuram, was found a volume of a Buddhist work called Bodhisattva-Pitakāvatamsaka or Manjusrī-Mūlakalpa. It is a pretty large palm-leaf manuscript containing about 13,000 granthas. The palm-leaves are long, light and soft and the manuscript is written in Devanagari characters with ink. Though the leaves have an appearance of being from 300 to 400 years old, the characters (except in the first and the last leaf) look clear and legible as if they were just written down. The copyist of the manuscript is one Pandita Ravichandra the head of the Mūlaghosha-vihāra who went out from Madhyadesa* as is evidenced from the colophon at the end of the manuscript "श्रीमूलघोषविहाराधिपतिना श्रीबो + + + + + + + + + + मध्यदेशाद् विनिर्गतेन पण्डितरविचन्द्रेण लिखितम्" । The copyist also tells us at the end of the manuscript, "परिसमाप्तं च यथालब्धमार्यमञ्जुश्रियस्य कल्पम्", which means, 'here ends the Kalpa of Ârya Manjusri as is available'. It cān be inferred from this that the manuscript from which the present manuscript was copied was itself an incomplete one.

The subjects here dealt with are the Mantric texts of Kumāra-Manjusri Bodhisattva Mahāsattva, which bestow on all humanity long life, health, wealth, happiness and other desired objects; the ways and means of attaining the Mantric powers; the science of astrology, omens and other similar matters. The sermons given here are found in the form of a conversation between Bhagavat-Sākya-Muni and Kumāra-Manjusri; between Bhagavat-Sākya-Muni and Parshan-Mandala (पर्षन्मण्डल) and between Kumāra-Manjusri and Parshan Mandala (पर्षन्मण्डल). Most of the words and sentences used in this work pay little or no attention to the rules of Vyākarana. Having learnt from me the discovery of the manuscript, a few years ago, Prof. Sylvain Levi, Professor au College de France wrote to me to say that he had seen only a Chinese translation of the Manjusrīmūla-Kalpa in China, but nowhere its Sanskrit original and that this rare

---

* "हिमवद्विन्ध्ययोर्मध्यं यत् प्राग्विनशनादपि ।
प्रत्यगेव प्रयागाच्च मध्यदेशः प्रकीर्तितः ॥" (मनुः)

work should be published without delay. I have now undertaken to publish this work with the hope that it will be found useful by all who are interested in Mantric literature especially by the Buddhists and most of all by the students of Indian antiquities. The work being a voluminous one, it is intended to publish it in parts; and the first part is now given to the public. This is a holy work of the Buddhists and deserves to be placed along with the Vedas. As the non-observance of the rules of Vyākaraṇa in regard to gender, number and case, found throughout this work is becoming its sacred character, and as no second manuscript has been obtained, the text in this edition is adopted exactly as it is found in the original manuscript.

Trivandrum,
7th August 1920.

T. GAṆAPATI SÂSTRÎ

---

# उपोद्घातः।



---

१९०९ तमे क्रैस्ताब्दे वृत्तायां ग्रन्थगवेषणयात्रायां पद्मनाभपुरसनीडसन्निविष्टाद् मणलिक्करमठादुपात्तेषु ग्रन्थेषु बोधिसत्त्वपिटकावतंसक इति मञ्जुश्रीमूलकल्प इति च व्यपदेश्यः कश्चिद् बुद्धसमयग्रन्थोऽन्तर्गत आसीत्। स खलु त्रयोदशसहस्रग्रन्थपरिमितो दीर्घश्लक्ष्णलघुषु तालपत्रेषु मषीद्रवलिखितनागरलिपिविन्यासः त्रिचतुरशतवर्षपुराणतावभासकेऽपि पत्रजाते सद्योमषीलिखितनिर्विशेषस्फुटभास्वरवर्णलिपिर्निकामं दर्शनीयाकारः। अस्योपलब्धादर्शग्रन्थस्य लेखकः श्रीमूलघोषविहाराधिपतिर्मध्यदेशाद् विनिर्गतः पण्डितरविचन्द्रो नाम, यस्माद् ग्रन्थान्ते 'श्रीमूलघोषविहाराधिपतिना श्रीबो- + + + + + + + + + + + + मध्यदेशाद् विनिर्गतेन पण्डितरविचन्द्रेण लिखितम्' इत्युपन्यस्तम्। 'परिसमाप्तं च यथालब्धमार्यमञ्जुश्रियस्य कल्पम्' इति ग्रन्थान्ते लेखदर्शनाच्च ग्रन्थस्य सावशेषत्वं सम्भावयितुं शक्यम्।

मञ्जुश्रीनाम्नः कुमारभूतस्य बोधिसत्त्वस्य महासत्त्वस्य सर्वसत्त्वायुरारोग्यैश्वर्यमनोरथपुण्यपरिपूरकाणि मन्त्रपदानि, तत्साधनानुष्ठानविधयः, ज्योतिषनिमित्तादिविज्ञानानि चात्र प्रतिपाद्यन्ते। इह तत्त्वोपदेशाः सर्वे भगवच्छाक्यमुनि-कुमारभूतमञ्जुश्रियोः संवादभङ्ग्या, भगवच्छाक्यमुनि-पर्षन्मण्डलयोः संवादभङ्ग्या, मञ्जुश्री-पर्षन्मण्डलयोः संवादभङ्ग्या च संघटिताः। इह व्याकरणातिगा एव भूयिष्ठाः पदवाक्यप्रयोगाः। ग्रन्थमिमं मयोपलब्धं विज्ञाय विद्वद्वरिष्ठः फ्रान्सदेशीयविश्वविद्यापीठमहाप्रवक्ता श्रीमान् सिल्वैन्लेविमहाशयो मामाह—'मञ्जुश्रीमूलकल्पस्य चीनभाषानुवादं चीनदेशेऽद्राक्षं, मूलग्रन्थं तु न क्वचिदुपलभामहे' इति, 'अपूर्वत्वादविलम्बं प्रकाशनीय' इति च। सर्वथा मन्त्रभक्तानां विशिष्य ताथागतानां विशिष्यतरां तु भारतपुरावृत्तविमर्शकाणामुपकाराय प्रभविष्णुरिति कृत्वा मन्त्रविद्याकोशोऽयमस्माभिः प्रकाशयितुमारब्धः। अतिविपुलत्वादेष

भागशः प्रकाशनमर्हतीत्येतस्य प्रथमो भाग इदानीं प्रकाश्यते । वेदवन्माननीयस्यास्य बोधिसत्त्वमन्त्ररहस्यग्रन्थस्य पदेषु लिङ्गवचनविभक्त्यादीनां व्यत्ययकरणमकरणं च बहुलमादर्शे दृश्यमानं भूषणमिति बुद्ध्या द्वितीयादर्शानुपलब्ध्या च तत्तथैवास्माभिरादृतं, न तु तत्र बिन्दुमात्रकमपि परिवर्तयितुं व्यवसितम् ।

अनन्तशयनम्,
२५-७-१९२०.

त. गणपतिशास्त्री.

॥ श्रीः ॥

# आर्यमञ्जुश्रीमूलकल्पम् ।

---

नमः सर्वबुद्धबोधिसत्त्वेभ्यः । एवं मया श्रुतम् । एकस्मिन् समये भगवां शुद्धावासोपरि गगनतलप्रतिष्ठितेऽचिन्त्याश्चर्याद्भुतप्रविभक्तबोधिसत्त्वसन्निपातमण्डलमाडे विहरति स्म । तत्र भगवां शुद्धावासकायिकान् देवपुत्रानामन्त्रयते स्म । शृण्वन्तु देवपुत्राः! मञ्जुश्रियस्य कुमारभूतस्य बोधिसत्त्वस्य महासत्त्वस्याचिन्त्याद्भुतप्रातिहार्यचर्यासमाधिशुद्धिविशेषविमोक्षमण्डलबोधिसत्त्वविकुर्वणं सर्वसत्त्वोपजीव्यमायुरारोग्यैश्वर्यमनोरथपापारिपूरकाणि मन्त्रपदानि सर्वसत्त्वानां हिताय भाषिष्ये । तं शृणु, साधु च सुष्ठु च मनसि कुरु, भाषिष्येऽहं ते ।

अथ शुद्धावासकायिका देवपुत्राः साञ्जलयो भूत्वा* +++++ +++++++++++++++ विशेषभूमिप्रतिलाभवज्रासनाक्रमणमारधर्षणधर्मचक्रप्रवर्तनसर्वश्रावकप्रत्येकबुद्धनिर्याणदेवमनुष्योपपत्तिसर्वदुःखप्रशमनदरिद्रव्याधितआढ्यरोगोपकर्षणतां सर्वलौकिकलोकोत्तरमन्त्रचर्यानभिभवनतां सर्वाशापरिपूरणतः सर्वतथागतानामवश्यवचनधारणम् । तद् वदतु भगवान् मैत्रचित्तो हितचित्तोऽस्माकमनुकम्पामुपादाय सर्वसत्त्वानां च ।

अथ भगवान् शाक्यमुनिः सर्वावन्तं शुद्धावासभवनं बुद्धचक्षुषावलोक्य विशुद्धविषयज्योतिर्विकिरणविध्वंसिनीं नाम समाधिं समापद्यते स्म । समनन्तरसमापन्नस्य भगवत + + + + + सङ्कुसुमितबोधिसत्त्वसञ्चोदनी नाम रश्मि + + + + + + + + + + + + + सितरश्म्यवभासं दृष्ट्वा, ईषद

---

* इहैकाविंशतेरक्षराणामवपातो रेखाविशेषैरनुमातुं शक्यते ।

प्रहसितवदनो भूत्वा तं बोधिसत्त्वगणमामन्त्रयते स्म । इयं भो ! जिनपुत्राः ! अस्माकं रश्मिसञ्चोदनी । इहायात । सञ्जीभवन्तु भवन्तः ॥

अथ खलु मञ्जुश्रीः कुमारभूतो बोधिसत्त्वो महासत्त्व उत्फुल्लनयनोऽनिमिषनयनो येनासौ रश्म्यवभासः, तेनाभिमुखस्तस्थौ ॥

अथ सा रश्मिः सञ्चोदनी कुसुमावती लोकधातुं महतावभासेनावभास्य भगवतः सङ्कुसुमितराजेन्द्रस्य तथागतस्य त्रिः प्रदक्षिणीकृत्य मञ्जुश्रियस्य बोधिसत्त्वस्य महासत्वस्य मूर्धन्यन्तर्धीयते स्म ॥

अथ मञ्जुश्रीः कुमारभूत उत्थायासनाद् भगवन्तं सङ्कुसुमितराजेन्द्रं तथागतं त्रिः प्रदक्षिणीकृत्य, शिरसा प्रणम्य, दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य, भगवन्तं सङ्कुसुमितराजेन्द्रमेतदवोचत् ॥

समन्वाहृतास्य भगवता शाक्यमुनिना तथागतेनार्हता सम्यक् सम्बुद्धेन । गच्छामो वयं भगवन्नितो सहां लोकधातुं भगवन्तं शाक्यमुनिं द्रष्टुं वन्दितुमुपासितुं सर्वमन्त्रचर्यासाधनौपयिकमण्डलविधानं कल्परहस्यपटविधानरूपसर्वतथागतहृदयगुह्यमुद्राभिषेकं निर्देष्टुं सर्वसत्त्वानां सर्वाशां परिपूरयितुम् ॥

एवमुक्ते भगवान् सङ्कुसुमितराजेन्द्रस्तथागतो मञ्जुश्रियं कुमारभूतमेतदवोचत्—'गच्छ त्वं मञ्जुश्रीः ! कुमार ! यस्येदानीं कालं मन्यसे । अपि त्वस्मद्वचनेन भगवान् शाक्यमुनिरल्पाबाधतामल्पातङ्कतां लघूत्थानतां सन्यासविहारतां प्रष्टव्यः' ॥

अथ भगवान् सङ्कुसुमितराजेन्द्रस्तथागतो मञ्जुश्रियं कुमारभूतमेतदवोचत्— अपि तु कुमार ! शतसहस्रगङ्गानदीसिकतप्रख्यैस्तथागतैरर्हद्भिः सम्यक् सम्बुद्धैस्त्वदीयं मन्त्रचर्यामण्डलकल्परहस्याभिषेकमुद्रापटलविधानहोमजपनियमसर्वाशापारिपूरकसर्वसत्त्वसन्तोपण - ज्योतिरत्नपटलविसरातीतानागतवर्तमानज्ञानराज्यैश्वर्यव्याकरणमन्त्रावर्तनदेशनिष्ठावसानान्तर्धानकालसमयविसरपटलसमस्ताशेषलौकिक - लोकोत्तरसर्वबुद्धबोधिसत्त्वार्यश्रावकप्रत्येकबुद्धबोधिसत्त्वभूमाक्रमणत - श्चर्यानिष्ठं भाषितवन्तः, भाषिष्यन्ते च मयाप्येतर्हि । अनुमोदितुमेव

गच्छ त्वं मञ्जुश्रीः! कुमारभूत! यस्येदानीं कालं मन्यसे । शाक्यमुनिसमीपं सम्मुखम् । इयं धर्मपर्यायं श्रोष्यसि । त्वमपि भाषिष्यसे । भवति चात्र मन्त्रः — नमः सर्वतथागतानामचिन्त्याप्रतिहतशासनानां ओँ र र स्मर । अप्रतिहतशासनकुमाररूपधारिण हूम् हूम् फट् फट् स्वाहा ॥ अयं स कुमार! मञ्जुश्रीः! मूलमन्त्रः । सर्वेषां तथागतानां हृदयः, सर्वैश्च तथागतैर्भाषितः, भाषिष्यन्ते । स त्वमपीदानीं भाषिष्यसे । सहां लोकधातुं गत्वा विस्तर त्रिभागशः सर्वकर्मकरम् । शाक्यमुनिना तथागतेनाभ्यनुज्ञातः । परमहृदयं भवति चात्र ओं वाक्ये द नमः । उपहृदयं चात्र वाक्ये हूम् ॥

अथ खलु मञ्जुश्रीः कुमारभूतो भगवान् सङ्कुसुमितराजेन् तथागतेनाभ्यनुज्ञातः सर्वव्यूहालङ्कारो बोधिसत्त्वचर्यानिष्यन्दबोधिमण्डलसमनुप्रापणं नाम समाधिं समापद्यते । समनन्तरसमापन्नस्य मञ्जुश्रियः कुमारभूतस्य चतुर्दिग्व्यापन्नाग्र अन्तोर्ध्वमधस्तिर्यक् सर्वं सर्वावन्तं दिशं बुद्धैर्भगवद्भिः संपूर्णं तं लोकधातुमभवत् । साधु साधु भो! जिनपुत्र! यत् त्वमिमं समाधिविशेषं समापद्यसे । न शक्यं सर्वश्रावकप्रत्येकबुद्धैर्बोधिसत्त्वैश्च चर्याप्रविष्टैर्दशभूमिप्रतिष्ठितैरपि++सङ्कुसुमितराजेन्द्रस्तथागतस्तैश्च बुद्धैर्भगवद्भिः सार्धं सम्मन्त्र्य इदं मञ्जुश्रियः कुमारभूतस्य परमहृदयं परमगुह्यं सर्वार्थसाधनं मन्त्रं भाषते स्म । एकाक्षरं नाम परमगुह्यं सर्वसत्त्वानामर्थकरं दिव्यमन्त्रैरपि मन्त्रचर्याविशेषैः साधनीयम् ॥

अथ भगवान् सङ्कुसुमितराजेन्द्रस्तथागतो मुहूर्तं तूष्णीमभूत् । सर्वं सर्वावन्तं लोकधातुं बुद्धचक्षुषावलोक्य तांश्च बुद्धान् भगवतः समन्वाहृतं वा मैत्रात्मकेन चेतसा मन्त्रमुदीरयते स्म । नमः सर्वबुद्धानाम् । मन्त्रः । एप मञ्जुश्रीः परमहृदयः सर्वकर्मकरः ॥

अथ मञ्जुश्रीः कुमारभूतस्तस्मात् समाधेर्व्युत्थाय संयथापि नाम बलवान् पुरुषः सम्मिञ्जितं बाहुं प्रसारयेत्, प्रसारितं वा सम्मिञ्जयेदच्छटासङ्घातमात्रो निमेपोन्मेपक्षणमात्रबुद्धिवलवलजवुद्धिर्नामनीतसमाधिविशेपविकुर्वणं नाम समापद्यंत सहां लोकधातुं प्रत्यस्थात् ॥

आगत्य चोपरि गगनतलमहामणिरत्नप्रतिष्ठिते शुद्धावासदेवनिकाये प्रत्यष्ठात्। सर्वं च तं शुद्धावासभवनं महता रश्म्यवभासेनावभास्य ज्योतिरत्नप्रतिमण्डनोद्द्योतनीं नाम समापद्यते स्म। समनन्तरसमापन्नस्य मञ्जुश्रियः कुमारभूतस्यानेकरत्नप्रविभक्तकूटागाररत्नच्छत्रानेकयोजनशतसहस्रविस्तीर्णदिव्यदृश्यमहापट्टकलापोपशोभितविरचितदिव्यपुष्पध्वजपताकमालाकुलरत्नकिङ्किणीजालोपनद्धमधुरसर्वनिर्घोषवैवर्तिकत्ववोधिसत्त्वप्रतिष्ठापनादिव्यं च गन्धमाल्यविलेपनस्रक्चूर्णप्रवर्षं चाभिनिर्ममे भगवतः शाक्यमुनेः पूजाकर्मणे तमाश्चर्याद्भुतप्रातिहार्यं बोधिसत्त्वविकुर्वणं दृष्ट्वा॥

अथ ते शुद्धावासकायिका देवपुत्रा संहृष्टरोमकूपजाता भवनं प्रकम्पमानं दृष्ट्वा, उत्तप्तभिन्नहृदया आहोस्वित् किं ऋद्धेः परिहीयाम इति सत्वरमाणरूपाः उच्चैः क्रोशितुमारब्धाः एवं चाहुः—परित्रायस्व भगवन्! परित्रायस्व शाक्यमुने! ॥

अथ भगवान् सर्वावन्तं शुद्धावासपर्षदमामन्त्रयते स्म। मा भैष्टतु मार्षा मा भैष्टथ। एष स मञ्जुश्रीः कुमारभूतो बोधिसत्त्वो महासत्त्वः सङ्कुसुमिते बुद्धक्षेत्रे सङ्कुसुमितराजस्य तथागतस्य सकाशाद् द्रष्टुं वन्दितुं पर्युपासितुं महतार्थचर्यामन्त्रपदवैपुल्याद्भुतधर्मपदं च निर्दिष्टुमागतः॥

अथ खलु मञ्जुश्रीः कुमारभूतो भगवतः शाक्यमुनेस्त्रिः प्रदक्षिणीकृत्यानिमिषनयनो भगवन्तमवलोक्य चरणयोर्निपत्य इमेभिरक्षरपदप्रत्याहारैर्भगवन्तमभ्यष्टावीत्॥

"नमस्ते मुक्तायाजन्य नमस्ते पुरुषोत्तमः।
नमस्ते पुरुषश्रेष्ठ! सर्वचर्यार्थसाधकः।
नमस्ते पुरुषसिंह! सर्वानर्थनिवारक!।
नमस्तेऽस्तु महावीर! सर्वदुर्गविनाशकः।
नमस्ते पुरुष! पुण्डरीकपुण्यगन्धमनन्तक!।
नमस्ते पुरुषपद्म! त्रिभवपङ्कविशोधक!।
नमस्ते मुक्ताय सर्वदुःखविमोचक!।
नमस्ते शान्ताय सर्वादान्तसुदान्तक!।

नमस्ते सिद्धाय सर्वमन्त्रचर्यार्थसाधक ! ।
नमस्ते मङ्गल्याय सर्वमङ्गलमङ्गल ! ।
नमस्ते बुद्धाय सर्वधर्माववोधने ! ।
नमस्ते तथागताय सर्वधर्मतथागत ! ।
निःप्रपञ्चाकारसमनुप्रविष्टदेशिक ! ।

नमस्ते सर्वज्ञाय सर्वज्ञ ज्ञेयवस्तुसंस्कृतासंस्कृतत्रियानमार्गनिर्वाणप्रतिष्ठापनप्रतिष्ठिताय" इति ।

एभिरक्षरपदप्रत्याहारास्तोत्रपदैर्भगवन्तं संमुखम + + + + + + + + + + + + + + + + + + + + + + + + + + + ....लोकधातूनतिक्रम्य पूर्वोत्तरे दिग्भागे सङ्कुसुमितं नाम बुद्धक्षेत्रमभूत् । तत्र कुसुमावती नाम लोकधातु यत्र स भगवान् सङ्कुसुमितराजेन्द्रस्तथागतो विहरत्यर्हं सम्यक् सम्बुद्धो विद्याचरण + + + + + + + + + + + + + + +

[6]बोदशयत्यादौ कल्याणं, मध्ये कल्याणं, पर्यवसाने कल्याणं स्वार्थं सर्वं जन केवलं परिपूर्णं परिशुद्धं पर्यवदातं बुद्धचर्यं सम्प्रकाशयति स्म ॥

स एतर्हि तिष्ठति ध्रियते यापयति धर्मं च दे + + + + + + + + + + + + + + + + त्राणं लयनं शरणं परायणं क्षेममत्यन्तनिष्ठमत्यन्तपर्यवगानं सर्वसत्त्वानां च भापते स्म । तेनैव भगवता कृताभ्यनुज्ञात इहागतो भगवतः समीपपादमूलम् स च भगवान् सङ्कुसुमितराजेन्द्रस्तथागतो भगवत अल्पाबाधतां लघूत्थानलोवभास्यत्वविहारतां पर्यपृच्छत् । एवं चाह—'आश्चर्यम् ! यत्र हि नाम एवंविधे पञ्चकषाये काले बुद्धो भगवान् शाक्यमुनिरुत्पन्नः सर्वधर्मं देशयति । अनूनपदव्यञ्जनं तृपथापवर्गदेवमनुष्योपपत्तिप्रतिलोभनता । आश्चर्यं तस्य भगवतः शाक्यमुनेर्वीर्यम् । यत्र हि नाम अभव्ये सत्त्वनिकाये त्रिभवसमुद्घातानुवर्त्तिते मार्गेऽत्यन्तयोगक्षेमानुगमे निर्वाणे भक्तं प्रतिष्ठापयति । अपि तु भगवान् बुद्धानां भगवतां चित्तं बुद्धा एव भगवन्तं ज्ञास्यन्ति । किं मया

शक्यमचिन्त्याद्भुतैश्वर्यविकुर्वितानां भगवतां बुद्धविकुर्वितुं ज्ञातुम् । चित्तचरितचर्यानुप्रवेशनिर्हारचेष्टितं ज्ञातुं वा समासनिर्देशतो वा कल्पकोटीनयुतशतसहस्रैरपि वक्तुम् । योऽयं तथागतानां तथागतनिर्हारसमस्तव्यस्ताशेषमूर्त्या संस्कृतधर्मतो द्रष्टव्यः । दर्शनहेयपुराणावलम्बिनां चर्या वक्तुं गुणान् वा कथयितुं तथागत एवात्र भगवान् जानीते; न वयम् ॥

अथ खलु मञ्जुश्रीः कुमारभूतः स्वरिद्धिविकुर्वितनिर्मिते महारत्नपद्मे निषण्णः, भगवन्तं शाक्यमुनिं निरीक्ष्यमाणः ॥

अथ भगवाञ्छाक्यमुनिर्मञ्जुश्रियं कुमारभूतं बोधिसत्त्वं महासत्त्वं विविधकथानुसारे तथागतभूतान् पूर्वप्रश्नपूर्वङ्गमपुरःसरधर्मदेशनानुकूलबोधिसत्त्वचर्यानिर्हारार्थोपसंहितेन ब्राह्मेण स्वरेण कलविङ्करुतरचितगर्जितदुन्दुभिस्वरनिनादितनिर्घोषेण स्वरेण मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म ॥ स्वागतं ते मञ्जुश्रीः ! महासत्त्व चर्यासर्वबुद्धयधिष्ठितनिर्हारसर्वबोधिसत्त्वार्थसम्प्रापकसर्वमन्त्रपदमरहस्याभिषेकमुद्रामण्डलकल्पमभिषेक आयुरारोग्यैश्वर्यसर्वाशापारिपूरकः सर्वसाधनोपयिकतन्त्रज्ञानज्ञेयकालान्तराधानराज्यक्षेत्र अतीतानागतवर्तमानसंक्षेपतः सर्वसत्त्वानां सर्वाशापारिपूरक स्वगुणोद्बोधनमन्त्रचर्यानुवर्त्तितपरसत्त्वप्रीतिकरण अन्तर्द्धानाकाशगमन पादप्रचारिक प्रभावीकरण आकर्षण पातालप्रवेशन आभिचारिक सर्वकामावाप्तिसङ्कुल यक्षयक्षिणी किङ्करपिशाचसर्वभूताकर्षण बालवृद्धतरुणयथास्थितिस्थापकसंक्षेपतः सर्वकर्मकर सर्वमनोरथपरिपूरक आभिचारक शान्तिकपौष्टिकेषु प्रकुर्वाणः, यथा यथा प्रयुज्यमानस्तथा तथा श्राव्यमानबोधिसत्त्वपिटकावतंसकं महाकल्पराजपटलविसरं अस्माभिरनुज्ञातः सर्वबुद्धैश्च भाषन्तं शुद्धसत्त्वे + + + + यधर्मकोशं बहुजनहिताय बहुजनकामाय देवानां च मनुष्याणां च सर्वसत्त्वानुदिश्य ॥

अथ खलु मञ्जुश्रीः कुमारभूतः सर्वबुद्धाधिष्ठानज्योतिरश्मिव्यूहालङ्कारसञ्चोदनीं नाम बोधिसत्त्वसमाधिं समापद्यते । समनन्तर-

समापन्नस्यानेकगङ्गान + + + + + + + ++ + + यावद् + + भुवनं यावच्च अवीचिर्महानरकं ये केचित् सत्त्वा सुदुःखिताः, सर्वे ते दुःखप्रशमनशान्तिं च जग्मुः । सर्वश्रावकप्रत्येकबुद्धबोधिसत्त्वान् बुद्धांश्च भगवतां सञ्चोद्य पुनरेवं सा रश्मिर्मञ्जुश्रियस्य बोधिसत्त्वस्य मूर्धन्यन्तर्धीयते स्म ॥

अत्रान्तरे पूर्वस्यां दिशि ये व्यवस्थिता बुद्धक्षेत्राः, तत्र बुद्धा भगवन्तः सञ्चोदिताः, तेन रश्मिधातुमण्डलीसमुद्द्योतितनिर्हारेण । तद्यथा — ज्योतिस्सौम्यगन्धावभासश्रीर्नाम तथागतः, भैषज्यगुरुवैदूर्यप्रभराजस्तथागतः, समन्तावभासश्रीर्नाम तथागतः, समुद्गतराजो नाम तथागतः, शालेन्द्रराजो नाम तथागतः, लोकेन्द्रराजो नाम तथागतः, अमितायुर्ज्ञानविनिश्चयराजो नाम तथागतः, अनन्तावभासराजेन्द्रो नाम तथागतः, ज्योतिरश्मिराजेन्द्रो नाम तथागतः, एवंप्रमुखा बुद्धा भगवन्तो बोधिसत्त्वगणपरिवृताः अनन्तानन्तेषु च लोकधातुषु तथागतार्हन्तः सम्यक् सम्बुद्धाः सहां लोकधातुं शुद्धावासभवनस्थं च शाक्यमुनिं तथागतामर्हन्तं सम्यक् सम्बुद्धं मञ्जुश्रिया सार्धं कुमारभूतेन बोधिसत्त्वचर्यानिर्देशमन्त्रपदार्थपटलविसरं भाषन्तं ते बुद्धा भगवन्तः सन्निपतेयुः । एवं दक्षिणस्यां पश्चिमस्यामुत्तरस्यां दिक्षु विदिक्षु । इत्यूर्ध्वमधस्तिर्यक् सर्वावन्तं बुद्धक्षेत्रानवभास्य सर्वेषु च बुद्धक्षेत्रेषु सर्वमारभवनानि जिह्मीकृत्य सबोधिसत्त्वगणपरिवृताः सश्रावकसङ्घपुरस्कृताश्च तं शुद्धावासभवनं बुद्धनिकुर्वणबोधिसत्त्वमहात्म्यं च दर्शयितुकामा मन्त्रचर्यानिर्हारसमाधिविशेषपटलविसरतथागतशासनमप्रतिहतं चोद्द्योतयितुकामाः प्रत्यस्थात् ॥ तद्यथा —

सुबाहु, सुरत्न, सुव्रत, सुनेत्र, सुरत, सुधर्म, सर्वार्थसिद्धि, सर्वोद्गत, धर्मोद्गत, रत्नोद्गत, रत्नश्रीः, मेरुश्रीः, अचिन्त्यश्रीः, प्रभाकरश्रीः, प्रभश्रीः, ज्योतिश्रीः, सर्वार्थश्रीः, सर्वरत्नपाणिः, चूडामणिः, मेरुध्वजपाणिः, वैरोचनगर्भः, रत्नगर्भः, ज्ञानगर्भः, सचिन्त्यार्थगर्भः, अचिन्त्यार्थगर्भः, धर्मोद्गतगर्भः, ध्वजकेतुः, सुकेतुः, अनन्तकेतुः,

विमलकेतुः, गगनकेतुः, रत्नकेतुः, गर्जितघोषदुन्दुभिस्वरराजाः, अनन्तावभासज्ञानराजः, सर्वतमोऽन्धकारविधमनराजः, सर्वविकरगबोधिविध्वंसनराजः, सर्वचर्यातिशयज्ञानराजः, लोकेन्द्रराज, अतिशयेन्द्रराज, विधमनराज, निर्धूतराज, आदित्यराज, अभावसमुद्गतराज, स्वभावसमुद्गतराज, अभावस्वभावसमुद्गतराज, अविवक्षितराज, स्वभावपुण्याभः, लोकाभः, अमिताभः, मिताभः, अनन्ताभः, सुनेत्राभः, सुसम्भवाभः, अर्थमात्राभः, अघृष्यः, अमृष्यः, अकूपः, अकनिष्ठः, अमलः, अनलः, द्युति पति मति सुख मुख नेमि निमि केतु ऋक्ष दिविदेव दिव्य नाभि रवन लोकशान्ति उपारिष्ट दुन्दुभिसिद्ध शिव आख्यदिव्य दुष्प्रसह दुर्धर्ष दुरालभ दूरङ्गम दुरालभ दूरस्थित ऊर्ध्वद्रव्यतम खद्योत समहद्योत अद्योत ऋषभ आभ सुमनाय सुमन महादेव सुनिर्मल मलान्त दान्त समि सुचिह्न श्वेतध्वज इमि किमि कनिष्ठ निकर्ष जीव सुजात धूमकेतु ध्वजकेतु श्वेतकेतु सुकेतु वसुकेतु वसव पितामह पितरनिष्ककुरुलोकाख्य समन्ताख्य महाख्य श्रेयसि तेजसि ज्योतिकिरण समन्तकर लोकङ्कर दिवङ्कर दीपङ्कर भूतान्तकर सर्वार्थङ्कर सिद्धङ्कर द्योतिङ्कर अवभासङ्कर दुन्दुभिस्वर रुतस्वर सुस्वर अनन्तस्वर केतुस्वर भूतमुनि कनकमुनि ऋक्च्छन्दः काश्यपशिखि विश्वभुक् विपश्चि शाक्यमुनिश्चेति । एतैश्चान्यैश्च बहुभिर्बुद्धैर्भगवद्भिस्तं शुद्धावासभवनमवभास्य, पद्मासनेषु च स्थित्वा, भूदेवं बोधिसत्त्वगणाश्चाजहारं एवंरूपाः । तद्यथा —

रत्नपाणिः, वज्रपाणिः, सुपाणि, अनन्तपाणि क्षितिपाणि आलोकपाणि सुनिर्मल सुरूप प्रभूतकूट मणिकूट रत्नकूट रत्नहस्ति समन्तहस्ति गन्धहस्ति सुगति विमलगति लोकगति चारुगति अनन्तगति अनन्तकीर्ति विमलकीर्ति गतिकीर्ति अमलकीर्ति कीर्तिकीर्ति नाथ अनाथ नाथभूथ लोकनाथ समन्तनाथ आत्रेय अनन्तत्रेय समन्तत्रेय मैत्रेय सुनेत्रेय नमन्तत्रेय त्वद्धत्रेय सरूलात्रेय विरन्तात्रेय निशरणात्रेय वियानात्रेय विस्फूर्ज सुमनोद्भवर्णवां धर्मेश्वरः, अभावेश्वरः, सम्मतेश्वरः, लोकेश्वरः, अवलोकितेश्वरः, सुलोकितेश्वर विलोकितेश्वर लोकमह सुमह गर्जितेश्वर दुन्दुभिस्वर विततेश्वर विध्व-

रत्नेश्वर सुवक्ष सुमूर्ति सुमहद् यशोवत आदित्यप्रभाव प्रभविष्णुः सो-मेश्वर सोम सौम्य अनन्तश्री लोकश्री गगन गगनाढ्य गगनगं+क्षि-तेश्वर महेश्वर क्षितिक्षितिगर्भ नीवरण सर्वावरण सर्वावरण विष्कम्भि सर्वनीवरणविष्कम्भि समन्तानिर्मथनः समन्तभद्रः भद्रपाणिः सुधनः सुसंहतः रत्नपुण्य सुनभ आकाश आकाशगर्भः सर्वार्थगर्भः सर्वोद्भव अनिवर्ती अनिवर्तित अपायजह अविवर्तित अवैवर्त्तिकसर्वधर्मोपश्वेति । एतैश्चान्यैश्च बोधिसत्त्वैर्महासत्त्वैः सार्धं भगवान् शाक्यमुनिः शुद्धावा-सभवने विहरति स्म ॥

अन्यैरपि बोधिसत्त्वैर्महासत्त्वैः स्त्रीरूपधारिभिः अनन्तचर्यार्थ-लोकनिरहारसकलसत्त्वाशय अनिवर्तनमार्गप्रतिष्ठापनतयाचिन्त्या-विद्यापदमन्त्रधारणी ओषधवेषरूपधारिभिर्नानाविधपक्षिगणयक्षराक्ष-समणिमन्त्ररत्नराजसत्त्व असत्त्वसङ्ख्यातसमनुप्रवेशसत्त्वचर्यानुवर्तिभि-र्यथासयसत्त्वविनयतथानुकारिभिः तत्प्रतिविशिष्टरूपानुवर्तिभिर्विद्या-राजोपदेशयथावबोधधर्मनिर्याततथागताब्जकुलिशसर्वलौकिकलोकोत्त-रसमनुप्रवेशसमयानतिक्रमणीयवचनपथप्रतिष्ठापनत्वरत्नवंशानुपच्छेद-कर्तृभिः तद्यथा—

उष्णीष अत्यद्भुत अत्युन्नत सितातपत्र अनन्तपत्र शतपत्र जयोष्णीष लोकोत्तर विजयोष्णीष अभ्युद्गतोष्णीष कमलरश्मि कनकरश्मि सितरश्मि व्यूढोष्णीष कनकराशि सितराशि तेजोराशि मणिराशि समनन्तराशि विख्यातराशि भूतराशि सत्यराशिं अभा-वस्वभावराशि अवितथराशि एतैश्चान्यैश्चोष्णीषराजैरनन्तधर्मधातुप्र-विष्टैर्यथाशयसत्त्वाभिप्रायपारिपूरकैः सर्वजिनहृदयसमन्तागतैर्न शक्यं कल्पकोटीनियुतशतसहस्रैरपि उष्णीषराज्ञां गणनापर्यन्तं वक्तुम्, अचिन्त्यबलपराक्रमाणां माहात्म्यं वा कथयितुम् । समासनिर्देशतः संक्षेपतश्च कथ्यते । विद्याराज्ञीनां समागमं वक्ष्यते । तद्यथा—

ऊर्णा भ्रूलोचना पद्मा श्रवणः ग्रीवा अभया करुणा मैत्री कृपा प्रज्ञा रश्मि चेतना प्रभा निर्मला धीवरा तथान्याश्च विद्याराज्ञी-भिरनन्तापर्यन्ततथागतमूर्तनिसृष्टाभिः । तद्यथा—

तथागतपोत्रि धर्मचक्र तथागतशयन तथागतावभास तथागतवच-न तथागतोष्ण तथागतोरु तथागतामल तथागतध्वज तथागतकेतु तथा-गतचिह्नश्चेति । एतैश्चान्यैश्च तथागतमन्त्रभाषितैर्विद्याराज्ञराज्ञीकिङ्कर-चेटचेटी दूतदूती यक्षयक्षी सत्त्वासत्त्वैश्च प्रतिविशिष्टव्यूहालङ्कारधर्ममे-घाभिःस्रुतैः समाधिविशेषानिष्यन्दितैरपरिमितकोटीशतसहस्रपरिवारितैः सर्वविद्यागण उपर्युपरि प्रवर्तमानैर्विद्याराज्ञैः । तेऽपि तत्र शुद्धावासभ-वनमधिष्ठितवानभूवम् । अब्जकुले च विद्याराज्ञः। तद्यथा —

भगवान् द्वादशभुजः षड्भुजः चतुर्भुजः हालाहलः अमोघपाशः श्वेतहयग्रीवः सुग्रीव अनन्तग्रीव नीलग्रीव सुग्रीव सुकर्णः श्वेतकर्णः नीलकण्ठः लोककण्ठ विलोकित अवलोकित ईश्वरसहस्ररश्मि मनः मनसः विख्यातमनसः कमलः कमलपाणिः मनोरथः आश्वासकः महसित सुकेश केशान्त नक्षत्र. नक्षत्रराज सौम्य सुगत दमकश्चेति । एतैश्चान्यैश्च विद्यराजैः । अब्जोष्णीषप्रमुखैरनन्तनिर्हारधर्ममेघनिष्य-न्दसमाधिभूतैरनेकशतसहस्रकोटीनियुतविदीपपरिवारितैरनेकैश्च विद्या-राज्ञीभिर्लोकेश्वरमूर्त्तिसमाधिविसृतैः। तद्यथा—

तारा सुतारा नटी भृकुटी अनन्तटी लोकटी भूमिप्रापटी विम-लटी सिता श्वेता महाश्वेता पाण्डरवासिनी लोकवासिनी विमलवा-सिनी अब्जवासिनी दशबलवासिनी यशोवती भोगवती महाभोग-वती उलूका अलोका अमलान्तकरी समन्तान्तकरी दुःखान्तकरी भूतान्तकरी श्रिया महाश्रिया भूपश्रिया अनन्तश्रिया लोकश्रिया विख्यातश्रिया लोकमाता समन्तमाता बुद्धमाता भगिनी भागीरथी सुरथी रथवती नागदन्ता दमनी भूतवती अमिता आवली भोगवली आकर्षणी अद्भुता रश्मी सुरसा सुरवती प्रमोदा द्युतिवती तटी सम-न्ततटी ज्योत्स्ना सोमा सोमावती मायूरी महामायूरी धनवती धन-न्ददा सुरवती लोकवती अर्चिष्मती बृहन्नला बृहन्ता सुघोषा सुनन्दा वसुदा लक्ष्मी लक्ष्मीवती रोगान्तिका सर्वव्याधिचिकित्सनी असमा देवी ख्यातिकरी वशकरी क्षिप्रकरी क्षेमदा मङ्गला मङ्गलावहा चन्द्रा सुचन्द्रा चन्द्रावती चेति । एतैश्चान्यैश्च विद्याराज्ञिभिः पर्णासवरिजा-

ङ्कुलिमानसीप्रमुखैरनन्तनिर्हारधर्मधातुगगनस्वभावैः सत्त्वचर्याविकुर्विताधिष्ठानसञ्जनितमानसैः दूतदूती चेटचेटी किङ्करकिङ्करी यक्षयक्षी राक्षसराक्षसीं पिशाचपिशाची अब्जकुलसमयानुप्रवेशमन्त्रविचारिभिः येन तं शुद्धावासं देवभवनं शुद्धसत्त्वनिश्वस्तं, तेन प्रत्यष्ठात्। प्रतिष्ठिताश्च भगवतः शाक्यमुनेः पूजाकर्मणोऽयुक्तमानसो अभूवंस्थितवन्तः॥

तस्मिन् भगवतः शाक्यमुनेः समीपं वज्रपाणिः बोधिसत्त्वः स्वकं विद्यागणमामन्त्रयते स्म। सन्निपातं ह भवन्तोऽस्मद्विद्यागणपरिवृताः, सक्रोधराजः विद्याराजराज्ञिभिर्महादूतिभिः स्मरणमात्रेणैव सर्वा विद्यागणाः सन्निपतिताः। तद्यथा—

विद्योत्तमः सुविद्य सुविद्ध सुबाहु सुषेण सुरान्तक सुरद सुपूर्ण वज्रसेन वज्रकर वज्रबाहु वज्रहस्त वज्रध्वज वज्रपताक वज्रशिखर वज्रशिख वज्रदंष्ट्र शुद्धवज्र वज्ररोम वज्रसंहत वज्रानन वज्रकवच वज्रग्रीव वज्रनाभि वज्रान्त वज्रपञ्जर वज्रप्राकार वज्रासु वज्रधनुः वज्रशरः वज्रनाराच वज्राङ्क वज्रस्फोट वज्रपाताल वज्रभैरव + + + नेत्र वज्रक्रोध जलान्तश्वर भूतान्तश्वर गन्धनान्तश्वर महाक्रोधान्तश्वर महेश्वरान्तश्वर सर्वविद्यान्तश्वर घोरः सुघोरः क्षेप उपक्षेपः पदनिक्षेपः विनायकान्तक्षेपः सविन्यासक्षेपः उत्कृष्टक्षेप बल महाबल सुम्भ भ्रमर भृङ्गिरिटि क्रोध महाक्रोध सर्वक्रोध अजर अजगर ज्वर शोप नागान्त दण्ड नीलदण्ड अङ्गद रक्ताङ्ग वज्रदण्ड मेध्य महामेध्य काल कालकूट श्वित्ररोम सर्वभूतसंक्षय शूल महाशूल अर्ति महार्ति यम वैवस्वत युगान्तकर कृष्णपक्ष घोरः घोररूपी पट्टिस तोमर गद प्रमथन ग्रसन संसार अरह युगान्तार्क प्राणहर शक्रघ्न द्वेष आमर्ष कुण्डलि सुकुण्डलि अमृतकुण्डलि अनन्तकुण्डलि रत्नकुण्डलि बाहु महाबाहु महारोग दुष्टसर्प वसर्प कुष्ठ उपद्रव भक्षक अतृप्त उच्छुष्यश्चेति। एतैश्चान्यैश्च विद्याराज्ञैर्महाक्रोधैश्च समस्ताशेषसत्त्वदमक उच्चाटनोध्वंसन स्फोटन मारण विनाशयितारः, भक्तानां दातारः, शान्तिक पौष्टिक आभिचारककर्मेषु प्रयोक्तारः, अनेकैश्च विद्याराजकोटीनयुतशतसहस्रपरिवारिताः शाक्यमुनिं भगवन्तं मञ्जुश्रियं कुमा-

रभूतं निध्यायन्तं स्वकं विद्याराजं कुलिशपाणिं नमस्यतामाज्ञामुदीक्षमाणाश्च कुलस्थानं स्थिताः। स्वकस्वकेषु चासनेषु च निषण्णा अभूवन्। भगवतो वज्रपाणेर्या अपि ता महादूत्यो विद्याराज्ञीनियुतसहस्रपरिवाराश्च अपि स्वकं धर्मधातुं गगनस्वभावं निःप्रपं चावलम्ब्य तस्मिन् स्थाने सन्निपतिताः। तद्यथा—

मेखला सुमेखला सिङ्कला वज्राणी वज्रजिह्वा वज्रभ्रू वज्रलोचना वज्रांसा वज्रभ्रुकुटी वज्रश्रवणा वज्रलेखा वज्रसूची वज्रमुस्ती वज्राङ्कुशी वज्रशाटी वज्रासनी वज्रश्रिङ्खला सालवती साला विरटी कामिनी वज्रकामिनी कामवज्रिणी पद्मिका पद्मिनी महापद्मिनी शिखरवासिनी ग्रहिला द्वारवासिनी कामवज्रिणी मनोजवा अतिजवा शीघ्रजवा सुलोचना सुरसवती भ्रमरी भ्रामरी यात्रा सिद्धा अनिला पूरा केशिनी सुकेशा हिण्डिनी तर्जिनी दूती सुदूती मामकी वामनी रूपिणी रूपवती जया विजया अजिता अपराजिता श्रेयसि हासिनी हासवज्रिणी लोकवती यसवती कुलिशवती अदान्ता त्रैलोक्यवशङ्करी दण्डा महादण्डा प्रियवादिनी सौभाग्यवती अर्थवती महानर्था तित्तिरी धवलतित्तिरी धवला सुनिर्मिता सुनिर्मला घण्टा खड्गपट्टिसा सूची जयती अवरा निर्मिता नायिका गुह्यकी विस्रम्भिका मुसला सर्वभूतवशङ्करी चेति। एताश्चान्याश्च महादूत्यः अनेकदूतीगणपरिवारिवारिता अत्रैव महापर्षन्मण्डले सन्निपतेयुः अनेकाश्च धारण्यः समाधिनिष्पन्दपरिभावितमानसोद्भवा दुष्टसत्त्वानिग्रहदण्डमायादयिताः तद्यथा—

वज्रानलप्रमोहनी धारणी मेरुशिखरकूटागारधारिणी रत्नाशिखरकूटागारधरणिन्धरा सुकूटा वहुकूटा पुष्पकूटा दण्डधारिणी निग्रहधारणी आकर्षणधारिणी केयूरा केयूरवती ध्वजाग्रकेयूरा रत्नाग्रकेयूरा लोकाग्रकेयूरा पताग्रकेयूरा विपरिवर्ता लोकावर्ता सहस्रावर्ता विवस्वावर्ता सर्वभूतावर्ता केतुवती रत्नवती मणिरत्नचूडा वोद्धयगा बलवती अनन्तकेतु समन्तकेतु रत्नकेतु विख्यातकेतु सर्वभूतकेतु

अजिरवती अस्वरा सुनिर्मला पण्मुखा विमला लोकाख्या चेति। एताश्चान्याश्चानेकधारणीशतसहस्रकोटीपरिवारिता तत्रैव महापर्षन्मण्डले सन्निपतेयुः। अनन्तबुद्धाधिष्ठानमहाबोधिसत्त्वसमाध्याधिष्ठानं च। अथ बुद्धक्षेत्रविवर्जितप्रत्येकबुद्धा भगवन्तो खड्गविषाणकल्पा वनचारिणश्च सत्त्वानामर्थं कुर्वन्तस्तूष्णीम्भावानधिवासनधर्मनेत्रीसम्प्रकाशयन्तः संसारानुवर्तिन सदा खिन्नमानसा महाकरुणावर्जितसन्तानः केवलचित्तवासनापरिभावितबोधिचित्तपूर्वोद्भावितपरिभावितचेतना एकभूमि द्विभूमि त्रिभूमिर्यावदष्टमी बोधिसत्त्वभूमिनिवर्तितमानसः खिन्नमानसो संसारभयभीरवः, तेऽपि तं महापर्षन्मण्डलं सन्निपतेयुः। तद्यथा —

गन्धमादनः सिमन्तायतन समन्तप्रभ चन्दन काल उपकाल नेमि उपनेमि रिष्ट उपरिष्ट उपारिष्ट पार्श्व सुपार्श्व दुन्दुभि उपदुन्दुभि लोकाख्य लोकप्रभ जयन्त अरेणु रेणु उपरेणु अंश उपांश चिह्न सुचिह्न दिनकर सुकर प्रभावन्त प्रभाकर लोककर विश्रुत सुश्रुत सुकान्त सुधान्त सुदान्त अदन्तान्त भवान्त सितकेतु जिह्मकेतु केतु उपकेतु तथ्य पद्महर पद्मसम्भव स्वयम्भु अद्भुत मनोज मनस महेन्दुकूटाख्य कुम्भसकलाख्य मकर उपकर शान्त शान्तमानस वर्म उपवर्म वैरोचन कुसुम सुलील श्रेयस बहुहरान्तक दुःप्रसह कनक विमलकेतु सोम सुसोम सुषेण सुचीर्ण शुक्र क्रतु इष्ट उपेन्द्र वसुश्चेति। एतैश्चान्यैः प्रत्येकबुद्धकोटीनियुतशतसहस्राचिन्त्यातुल्या प्रणिहितधर्मधातुगगनस्वभावनिःप्रपंचसंस्कृतमध्ययानप्रविष्टनिर्दिष्टप्रतिष्ठितैः सार्धं भगवान् शाक्यमुनिः प्रतिष्ठातुननयप्रतिघापगतैर्विहरति स्म। महाश्रावकसङ्घेन च सार्धमनेकश्रावकशतसहस्रकोटीपरिवारैः। तद्यथा —

महाकाश्यप नदीकाश्यप गयाकाश्यप दुरविक्षोकाश्यप भरद्वाज त्रिण्डोल मौद्गल्यायन महामौद्गल्यायन शारिपुत्र महासारिपुत्र सुभूति महासुभूति गवाम्पति कात्यायन महाकात्यायन उपालि भद्रिक कफिणनन्द आनन्द सुन्दरनन्द लोकभूत अनन्तभूत वर्णक उपवर्णक नन्दिक उपनन्दिक अनिरुद्ध पूर्ण सुपूर्ण उपपूर्ण

तिष्य पुनर्वसु रूद्द रौद्र रौरव कुरु पञ्चिक उपपञ्चिक काल सुकाल देवल राहुल हरित उपहरित ध्यायि नन्दि ध्यायिक उपायि उपयायिक श्रेयसक द्रव्यो मल्लपुत्रः उपद्रव्यः उपेतः खण्डः तिष्य महातिष्य समन्ततिष्य आह्वयनयसाद यसिक धनिक धनवर्ण उपधनिक पिलिन्दवश पिप्पल किम्फल उपफल अनन्तफल सफल कुमार कुमारकाश्यप महोद पोडशवर्तिका नन्द उपनन्द जिह्व जिह्म जितपाश महेष्वास वात्सीक कुरुकुल्ल उपकुरुकुल्ल कोटीकर्ण श्रमण श्रोणीपरान्तक गाङ्गेयक गिरिकर्णिक कोटिकर्णिक वार्पिक जेत सुजेत श्रीगुप्त लोकगुप्त गुरुगुप्त गुरुक घोतीरस सनक डिम्भक उपडिम्भि विसकोटिक अनाथद उपर्तन विवर्तन उन्मत्तक घोत समन्त भद्दलि सुप्रबुद्ध स्वागत उपागत लोहागत दुःखान्त भद्रकल्पिक महाभद्रिक अर्थचर पितामह गतिक पुष्पमाल पुष्पकाशिख उपकाशिक महौपध महोजस्क महोज अनुराधमहोजस्क महोज अनुराध राधक रासिक सुब्रह्म सुशोभन सुलोक समागम मितश्चेति। एतैश्चान्यैश्च मनन्तधर्मधातुविमुक्तिरसरसज्ञैः त्रियानसमवसरणकरणीयसयानसमनुप्राप्तैः संसारपलायिभिः त्रिमोक्षध्यानध्यायिभिः चतुर्ब्राह्मविहार ईर्ष्यापथसम्पन्नैः सुसमाहितैः सूपसम्पन्नैः अनयप्रविष्टनिर्वाणधातुसमवशरणसमतानिःप्रपंचभिः सार्धं तन्महापर्षन्मण्डलं तं च भगवन्तं शाक्यमुनिं त्रिरन्तस्थानवस्थित। दशभूम्यानन्तरं तेऽपि तत्र निषण्णभूवन्। अनेकैश्च महाश्राविकासमवशरणनिर्वाणधातुसमनुप्रविष्टाभिः असंस्कृतयावमानयानावलम्बिभिः शुद्धाभिर्वीतरागाभिः समन्तघोतिसमनुप्राप्ताभिः, दक्षिणीयक्षेत्रगुणाधानविशोधिभिः सत्त्वसारमण्डभूताभिः लोकाग्राधिपतीभिः पूज्यदेवमनुष्यपुण्यक्षेत्रद्विपदचतुष्पदबहुपद अपद सर्वसत्त्वाग्राधिपतीभिः तद्यथा—

यशोधरा यशोदा महाप्रजापती प्रजापती सुजाता नन्दा स्थूलनन्दा सुनन्दा ध्यायिनी सुन्दरी अनन्ता विशाखा मनोरथा जयवती वीरा उपवीरा देवता सुदेवता आश्रिता श्रिया प्रवरा प्रमुदिता प्रियंवदा रोहिणी धृतराष्ट्रा धृता स्वामिका सम्पदा वपुषा

शुद्धा प्रेमा जटा उपजटा समन्तजटा भवान्तिका भावती मनोजवा केशवा विष्णुका विष्णुवती सुमना बहुमता श्रेयसी दुःखान्ता कर्मदा क + + + + + + + + वसुदा धर्मदा नर्मदा ताम्रा सुताम्रा कीर्तिवती मनोवती महस्मिता त्रिभवान्ता त्रिमलान्ता दुःखशायिका निर्वाणा त्रिपर्णा पद्मवर्णा पद्मावती पद्मप्रभा पद्मा पद्मावती त्रिपर्णी सप्तवर्णी उत्पलवर्णा चेति । एताश्चान्याश्च महास्थविष्ठा महाश्राविका भगवतः पादमूलं वन्दनाय उपसङ्क्रान्ताः । एता एव महापर्षन्मण्डलं महाबोधिसत्त्वविकुर्वणं प्रभावयितुकामाः सन्निपतिताः सन्निपण्णा अभूवन् । धर्मश्रवणाय मन्त्रचर्यार्थनिर्हारमुद्योतयितुकामा भूवन् ॥

अथ भगवान् शाक्यमुनिस्तं सर्वावन्तं पर्षन्मण्डलमवलोक्य शुद्धाध्याशयः अभावस्वभावगगनस्वभावत्रिपर्वसमतिक्रमणं सत्त्वधातुं विदित्वा मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । समन्वाहर त्वं मञ्जुश्रीः! सत्त्वार्थचर्यं प्रति यथाशयाभिननन्दनेप्सितकर्मफलश्रद्धासमन्वागममन्त्रचर्यार्थसम्प्रापणं नामामधर्मपदकर्मपदं शान्तिपदं मोक्षपदं कल्पनिर्हारं निर्विकल्पसमताप्रापणं दशतथागतबलसमन्तबलसबलं मारबलाभिवर्द्धनं नाम बोधिसत्त्वसमाधिं भावयथ ॥

अथ मञ्जुश्रीः कुमारभूतः समनन्तरभाषितं भगवता समापद्यते स्म । समनन्तरसमापन्नस्य मञ्जुश्रियः कुमारभूतस्य यथेयं त्रिसाहस्रमहासाहस्रो लोकधातुरनेकलोकधातुशतसहस्रपरमाणुरजःसमां त्रिसाहस्रमहासाहस्रां लोकधातुं सम्प्रकम्प्य महतावभासेनावभास्य च स्वकं शुद्धिबलाधानं दर्शयते स्म । स्वानि च मन्त्रपदानि भाषते स्म । 'नमः समन्तबुद्धानाम् । अभावस्वभावसमुद्गतानाम् । नमः प्रत्येकबुद्धार्यश्रावकाणाम् । नमो बोधिसत्त्वानां दशभूमिप्रतिष्ठितेश्वराणां बोधिसत्त्वानां महासत्त्वानाम् ।

तद्यथा—ॐ खख खाहिखाहि दुष्टसत्त्वदमक! असिमुसलपरशुपाशहस्त! चतुर्भुज! चतुर्मुख! पट्चरण! गच्छ गच्छ महाविघ्नघातक! विकृतानन! सर्वभूतभयङ्कर! अट्टहासनादिने व्याघ्रचर्मनिव-

सन! कुरु कुरु सर्वकर्मां। छिन्द छिन्द सर्वमन्त्रान्। भिन्द भिन्द परमुद्राम्। आकर्षय आकर्षय सर्वमुद्राम्। निर्मथ निर्मथ सर्वदुष्टान्। प्रवेशय प्रवेशय मण्डलमध्ये। वैवस्वतान्तकर! कुरु कुरु मम कार्यम्। दहदह पचपच मा विलम्ब मा विलम्ब समयमनुस्मर हूँ हूँ फट् फट्। स्फोटय स्फोटय सर्वाशापारिपूरक! हे हे भगवन्! किं चिरायसि मम सर्वार्थान् साधय स्वाहा॥

एष भगवतो मञ्जुश्रियस्य महाक्रोधराजा यमान्तको नाम यमराजामपि घातयति। आनयति। किं पुनरन्यसत्त्वम्। समनन्तरभाषिते महाक्रोधराजे भगवतः समीपं सर्वसत्त्वा उपसङ्क्रमन्ते आर्ता भीतास्त्रस्ता उद्विग्नमनसो भिन्नहृदयाः। नान्यच्छरणम्। नान्यत् त्राणम्। नान्यत् परायणम्। वर्जयित्वा तु बुद्धं भगवन्तं मञ्जुश्रियं च कुमारभूतम्॥

अथ ये केचित् पृथिवीचरा जलेचराः खगचराः स्थावरजङ्गमाश्च जरायुजाण्डजसंस्वेदज उपपादुकसत्त्वसङ्ख्याताः; तेऽपि तत्क्षणतन्मुहूर्तेनानन्तापर्यन्तेषु लोकधातुषु स्थिता इत्यूर्ध्वमधस्तिर्यग् दिक्षु विदिक्षु निलीनास्तत्क्षणं महाक्रोधराजेन स्वयमपोह्य नीताः। अयं च क्रोधराजा, अवीतरागस्य पुरतो न जप्तव्यः। यत् कारणं सोऽपि म्रियते शुष्यते वा। समयमधिष्ठाय बुद्धप्रतिमायाग्रतः + + + + + + + वा मञ्जुश्रियो वा कुमारभूतस्याग्रतो जप्तव्यः। अन्यकर्मनिमित्तं वा यत्र वा तत्र वा न पठितव्यः। कारणं महोत्पादमहोत्सन्न आत्मोपघाताय भवतीति। परमकारुणिका हि बुद्धा भगवन्तो बोधिसत्त्वाश्च महासत्त्वाश्च केवलं नु सर्वज्ञज्ञान + + + + + + + सम्प्रतिष्ठापन-अशेषसत्त्वधातुनिर्वाणाभिसम्प्रापणा अशासितशासनः त्रिमात्रसंयोजनः त्रिरत्नवंशानुपच्छेदमन्त्रचर्यादीपनः महाकरुणाप्रभावनिष्यन्देन चेतसा मारबलाभिभवन महाविघ्ननाशन दुष्टराज्ञा निवारण आत्मबलाभिभवन परबलनिवारणस्तोभन पातन नाशन शासन उच्छोषण तोषण स्वमन्त्रचर्याप्रकाशन आयुरारोग्यैश्वर्याभिवर्द्धनतः क्षिप्रकार्यान् साधयतः, महामैत्र्या महाकरुणा महोपेक्षा महामुदितासद्यगतः तन्निमित्तहेतुं सर्वतर्कवितर्कापगतेन चेतसा भाषते स्म॥

अथ ते नागा महानागा यक्षा महायक्षा राक्षसा महाराक्षसाः पिशाचा महापिशाचाः पूतना महापूतनाः कटपूतना महाकटपूतना मारुता महामारुताः कूष्माण्डा महाकूष्माण्डा व्याडा महाव्याडा वेताडा महावेताडा कम्बोजा महाकम्बोजा भगिन्यो महाभगिन्यो डाकिन्यो महाडाकिन्यः चूपका महाचूपका उत्सारका महोत्सारका डिम्फिका महाडिम्फिकाः किम्पका महाकिम्पका रोगा महारोगाः महारोगा अपस्मारा महाअपस्माराः ग्रहा महाग्रहा आकाशमातरा महाकाशमातरः रूपिण्यो महारूपिण्यः क्रन्दना महाक्रन्दनाः छाया महाच्छाया प्रेषका महाप्रेषकाः किङ्करा महाकिङ्करा यक्षिण्यो महायक्षिण्यः पिशाच्यो महापिशाच्यो ज्वरा महाज्वराः चातुर्थका महाचातुर्थकाः नित्यज्वरा विषमज्वरा सातातिका मौहूर्तिका वातिकाः पैत्तिकाः श्लेष्मिकाः सान्निपातिका विद्या महाविद्या सिद्धा महासिद्धा योगिनो महायोगिनः ऋषयो महाऋषयः किङ्करा महाकिङ्करा महोरगा महामहोरगा गन्धर्वा महागन्धर्वा देवा महादेवा मनुष्या महामनुष्या जनपदयो महाजनपदयः सागरा महासागराः नद्यो महानद्यः पर्वता महापर्वताः निधयो महानिधयः पृथिव्या महापृथिव्या वृक्षा महावृक्षाः पक्षिण्यो महापक्षिण्यो राज्ञा महाराज्ञा शक्रा महेन्द्रा वासवा क्रतयो भूता वियति ईशान यमः ब्रह्मा महाब्रह्मा वैवस्वत धनद धृतराष्ट्रः विरूपाक्षः कुबेरः पूर्णभद्रः पञ्चिकः जम्भल सम्भल कूष्मल हारीति हरिकेश हरिहारीति पिङ्गला प्रियङ्कर अर्थङ्कर जालेन्द्र लोकेन्द्र उपेन्द्र गुह्यक महागुह्यक चल चपल जलचर सातत गिरि हेमगिरि महागिरि कूटाक्ष त्रियसिरश्चेति । एतैश्चान्यैश्च महायक्षसेनापतिभिः अनेकयक्षकोटीनियुतशतसहस्रपरिवारितैस्तत्रैव महापर्षन्मण्डले शुद्धावासभवने बोधिसत्वाधिष्ठानेन ऋद्धिबलाधानेन च सन्निपतिता अभूवं, सन्निषण्णाश्च धर्मश्रवणाय ॥

येऽपि ते महाराक्षसराजानः, अनेकराक्षसकोटीनियुतशतसहस्रपरिवाराः आनीता महाक्रोधराजेन । तद्यथा — रावण प्रत्रिण विद्रावण शङ्कुकर्ण कुम्भ कुम्भकर्ण समन्तकर्ण यम घिभीषण

सन! कुरु कुरु सर्वकर्मा। छिन्द छिन्द सर्वमन्त्रान्। भिन्द भिन्द परमुद्राम्। आकर्षय आकर्षय सर्वमुद्राम्। निर्मथ निर्मथ सर्वदुष्टान्। प्रवेशय प्रवेशय मण्डलमध्ये। वैवस्वतान्तकर! कुरु कुरु मम कार्यम्। दहदह पचपच मा विलम्ब मा विलम्ब समयमनुस्मर हूँ हूँ फट् फट्। स्फोटय स्फोटय सर्वाशापारिपूरक! हे हे भगवन्! किं चिरायसि मम सर्वार्थान् साधय स्वाहा॥

एष भगवतो मञ्जुश्रियस्य महाक्रोधराजा यमान्तको नाम यमराजामपि घातयति। आनयति। किं पुनरन्यसत्त्वम्। समनन्तरभाषिते महाक्रोधराजे भगवतः समीपं सर्वसत्त्वा उपसङ्क्रमन्ते आर्ता भीतास्त्रस्ता उद्विग्नमनसो भिन्नहृदयाः। नान्यच्छरणम्। नान्यत् त्राणम्। नान्यत् परायणम्। वर्जयित्वा तु बुद्धं भगवन्तं मञ्जुश्रियं च कुमारभूतम्॥

अथ ये केचित् पृथिवीचरा जलेचराः खगचराः स्थावरजङ्गमाश्च जरायुजाण्डजसंस्वेदज उपपादुकसत्त्वसङ्ख्याताः; तेऽपि तत्क्षणतन्मुहूर्तेनानन्तापर्यन्तेषु लोकधातुषु स्थिता इत्यूर्ध्वमधस्तिर्यग् दिक्षु विदिक्षु निलीनास्तत्क्षणं महाक्रोधराजेन स्वयमपोह्य नीताः। अयं च क्रोधराजा, अवीतरागस्य पुरतो न जप्तव्यः। यत् कारणं सोऽपि म्रियते शुष्यते वा। समयमधिष्ठाय बुद्धप्रतिमायाग्रतः + + + + + + + वा मञ्जुश्रियो वा कुमारभूतस्याग्रतो जप्तव्यः। अन्यकर्मनिमित्तं वा यत्र वा तत्र वा न पठितव्यः। कारणं महोत्पादमहोत्सन्न आत्मोपघाताय भवतीति। परमकारुणिका हि बुद्धा भगवन्तो बोधिसत्त्वाश्च महासत्त्वाश्च केवलं नु सर्वज्ञज्ञान + + + + + + + सम्प्रतिष्ठापन-अशेषसत्त्वधातुनिर्वाणाभिसम्प्रापणा अशासितशासनः त्रिमात्रसंयोजनः त्रिरत्नवंशानुपच्छेदमन्त्रचर्यादीपनः महाकरुणाप्रभावनिष्यन्देन चेतसा मारबलाभिभवन महाविघ्ननाशन दुष्टराज्ञा निवारण आत्मबलाभिभवन परबलनिवारणस्तोभन पातन नाशन शासन उच्छोषण तोषण स्वमन्त्रचर्याप्रकाशन आयुरारोग्यैश्वर्याभिवर्द्धनतः क्षिप्रकार्यान् साधयतः, महामैत्र्या महाकरुणा महोपेक्षा महामुदितासद्यगतः तन्निमित्तहेतुं सर्वतर्कवितर्कापगतेन चेतसा भाषते स्म॥

अथ ते नागा महानागा यक्षा महायक्षा राक्षसा महाराक्षसाः पिशाचा महापिशाचाः पूतना महापूतनाः कटपूतना महाकटपूतना मारुता महामारुताः कूष्माण्डा महाकूष्माण्डा व्याडा महाव्याडा वेताडा महावेताडा कम्बोजा महाकम्बोजा भगिन्यो महाभगिन्यो डाकिन्यो महाडाकिन्यः चूपका महाचूपका उत्सारका महोत्सारका डिम्फिका महाडिम्फिकाः किम्पका महाकिम्पका रोगा महारोगाः महारोगा अपस्मारा महाअपस्माराः ग्रहा महाग्रहा आकाशमातरा महाकाशमातरः रूपिण्यो महारूपिण्यः क्रन्दना महाक्रन्दनाः छाया महाच्छाया प्रेषका महाप्रेषकाः किङ्करा महाकिङ्करा यक्षिण्यो महायक्षिण्यः पिशाच्यो महापिशाच्यो ज्वरा महाज्वराः चातुर्थका महाचातुर्थकाः नित्यज्वरा विषमज्वरा साततिका मौहूर्तिका वातिकाः पैत्तिकाः श्लेष्मिकाः सान्निपातिका विद्या महाविद्या सिद्धा महासिद्धा योगिनो महायोगिनः ऋषयो महाऋषयः किङ्करा महाकिङ्करा महोरगा महामहोरगा गन्धर्वा महागन्धर्वा देवा महादेवा मनुष्या महामनुष्या जनपदयो महाजनपदयः सागरा महासागराः नद्यो महानद्यः पर्वता महापर्वताः निधयो महानिधयः पृथिव्या महापृथिव्या वृक्षा महावृक्षाः पक्षिण्यो महापक्षिण्यो राज्ञा महाराज्ञा शक्रा महेन्द्रा वासवा क्रतयो भूता वियति ईशान यमः ब्रह्मा महाब्रह्मा वैवस्वत धनद धृतराष्ट्रः विरूपाक्षः कुबेरः पूर्णभद्रः पञ्चिकः जम्भल सम्भल कूम्भल हारीति हरिकेश हरिहारीति पिङ्गला प्रियङ्कर अर्थङ्कर जालेन्द्र लोकेन्द्र उपेन्द्र गुह्यक महागुह्यक चल चपल जलचर सातत गिरि हेमगिरि महागिरि कूटाक्ष त्रियसिरश्चेति । एतैश्चान्यैश्च महायक्षसेनापतिभिः अनेकयक्षकोटीनियुतशतसहस्रपरिवारितैस्तत्रैव महापर्षन्मण्डले शुद्धावासभवने बोधिसत्त्वाधिष्ठानेन ऋद्धिबलाधानेन च सन्निपतिता अभूवं, सन्निपण्णाश्च धर्मश्रवणाय ॥

येऽपि ते महाराक्षसराजानः, अनेकराक्षसकोटीनियुतशतसहस्रपरिवाराः आनीता महाक्रोधराजेन । तद्यथा — रावण प्रत्रिण विद्रावण शङ्कुकर्ण कुम्भ कुम्भकर्ण समन्तकर्ण यम विभीषण

घोर सुघोर यक्ष यम घण्ट इन्द्रजित् लोकजिः योधनः सुयोधनः शूलः त्रिशूलः त्रिशिरः अनन्तशिरश्चेति सन्निपतिता भूवं धर्मश्रवणाय ॥

येऽपि ते महापिशाचा अनेककोटीनियुतशतसहस्रपरिवाराः । तद्यथा — पीलु उपपीलु सुपीलु अनन्तपीलु मनोरथ अमनोरथ सुताय प्रसन सुधाम घोर घोररूपीश्चेति सन्निपतिता अभूवं धर्मश्रवणाय ॥

येऽपि ते महानागराजानः, अनेकनागकोटीनियुतशतसहस्रपरिवारा आनीताः क्रोधराजेन, बोधिसत्त्वऋद्धिबलाधानेन च । तद्यथा — नन्द उपनन्द कम्बल उपकम्बल वासुकि अनन्त तक्षक पद्म महापद्म सङ्खपाल सङ्ख सङ्खपाल कर्कोटक कुलिक अकुलिक माण कलशोद कुलिशिक चांपेय मणिनाग मानभञ्ज दुकुर उपदुकुर लकुट महालकुट श्वेत श्वेतभद्र नील नीलाम्बुद क्षीरोद अपलाल सागर उपसागरश्चेति । एतैश्चान्यैश्च महानागराजनैः, अनेकशतसहस्रमहानागपरिवारितैस्तन्महापर्षन्मण्डलं सन्निपतिताः सन्निषण्णा अभूवं धर्मश्रवणाय ॥

येऽपि ते ऋषयो महाऋषयः । तद्यथा — आत्रेय वसिष्ठः गौतम भगीरथः जह्नु अङ्गिरसः अगस्ति पुलस्तिः व्यास कृष्ण कृष्ण गौतम अग्नि आङ्गिरस जामदग्नि आस्तीक मुनिः मुनिवर अश्वरः वैशम्पायन पराशरः परशुः योगेश्वरः पिप्पलः पिप्पलाद वाल्मीकः मार्कण्डश्चेति । एतैश्चान्यैर्महाऋषयै अनेकमहाऋषिशतसहस्रपरिवारास्तत्पर्षन्मण्डलमुपजग्मुः । भगवन्तं शाक्यमुनिं वन्दित्वा सन्निपण्णा भूवं मन्त्रचर्यार्थवोधिसत्त्वपिटकं श्रोतुमनुमोदितुं च ॥

येऽपि ते महोरगराजानः, तेऽपि तत् पर्षन्मण्डलं सम्प्रविष्टा अभूवं सन्निषण्णाः । तद्यथा — भेरुण्ड भूरुण्ड मरुण्ड मारीच दीप प्रदीपाश्चेति ॥

येऽपि ते गरुडराज्ञास्तेऽपि तत् पर्षन्मण्डलं सन्निपतिता अनेकशतसहस्रपरिवाराः । तद्यथा — सुपर्ण श्वेतपर्ण पन्नग पर्णग सु-

जातपक्ष अजातपक्षः मनोजव पन्नगनाशन वैनतेय वैनतेय भरद्वाज शकुन महाशकुन पक्षिराजाश्चेति । तेऽपि तत् पर्षन्मण्डलं सन्निपतेयुः॥

येऽपि ते किन्नरराज्ञः अनेककिन्नरशतसहस्रपरिवाराः तेऽपि तं पर्षन्मण्डलं सन्निपतेयुः । तद्यथा—द्रुम उपद्रुम सुद्रुम अनन्तद्रुम लोकद्रुम लेद्रुम घनोरस्क महोरस्क महोजस्क महोज महर्द्धिक विरुत सुस्वर मनोज्ञ चित्तोन्मादकर उन्नत उपेक्षक करुण अरुणश्चेति । एते चान्ये च महाकिन्नरराजानः अनेककिन्नरशतसहस्रपरिवाराः सन्निपतिता अभूवं धर्मश्रवणाय ॥

एवं ब्रह्मा सहाम्पति महाब्रह्मा आभास्वरः प्रभास्वरः शुद्धाभः पुण्याभः अवृह अतपाः अकनिष्ठा सुकनिष्ठा लोकनिष्ठा आकिञ्चन्या नैवकिञ्चन्या आकाशानन्त्या नैवाकाशानन्त्या सुदृशा सुदर्शना सुनिर्मिता परनिर्मिता शुद्धावासा तुषिता यामा त्रिदशा चातुर्महाराजिका सदामत्ता मालाधारा करोटपाणयः वीणातृतीयकाः पर्वतवासिनः कूटवासिनः शिखरवासिनः अलकवासिनः पुरवासिनः विमानवासिनः अन्तरिक्षचराः भूमिवासिनः वृक्षवासिनः गृहवासिनः । एवं दानवेन्द्राः—प्रह्लाद बलि राहु वेमाचित्ति सुचित्ति क्षेमचित्ति देवचित्ति राहु बाहुप्रमुखाः अनेकदानवकोटीशतसहस्रपरिवाराः विचित्रगतयो विचित्रार्थाः सुरयोधिनोऽसुराः, तेऽपि तत् पर्षन्मण्डलं सन्निपतेयुः । बुद्धाधिष्ठानेन बोधिसत्वविकुर्वणं द्रष्टुं वन्दितुं पर्युपासितुम् ॥

येऽपि ते ग्रहा महाग्रहा लोकार्थकरा अन्तरिक्षचराः । तद्यथा—आदित्य सोम अङ्गारक बुध बृहस्पति शुक्र शनिश्चर राहु कम्प केतु अशनि निर्घात तार ध्वज घोर धूम्र धूम वज्र ऋक्ष वृष्टि उपवृष्टि नष्टार्क निर्नष्ट हशान्त माष्टि ऋष्टि तुष्टि लोकान्त क्षय विनिपात आपात तर्क मस्तक युगान्त श्मशान पिशित रौद्र श्वेत अभिज अभिजत मैत्र शङ्कु त्रिशङ्कु लूथ रौद्रकः ऋतुनाशन वलत्रा घोर अरुण विहसित मार्ष्टि स्कन्द सनत् उपसनत् कुमारक्रीडन हसन प्रहसन नर्तपक नर्तक खज विरूपश्चेति । इत्येते महाग्रहाः तेऽपि तत्

पर्षन्मण्डलमनेकशतसहस्रपरिवृताः बुद्धाधिष्ठानेन तस्मिं शुद्धावासभवने सन्निपतिता अभूवं सन्निषण्णाः ॥

अथ ये नक्षत्राः खगानुचारिणः अनेकनक्षत्रशतसहस्रपरिचारिताः । तद्यथा — अश्विनी भरणी कृत्तिका रोहिणी मृगशिरा आर्द्र पुनर्वसू पुष्य आश्लेषा मघा उभे फल्गुनी हस्ता चित्रा स्वाति विशाखा अनुराधा ज्येष्ठा मूला उभौ आषाढौ श्रवणा धनिष्ठा शतभिषा उभौ भद्रपदौ रेवती देवती प्रभिजा पुनर्णवा ज्योती अङ्गिरसा नक्षत्रिका उभौ फल्गुफल्गुवती लोकप्रवरा प्रवराणिका श्रेयसी लोकमाता ईरा ऊहा वहा अर्थवती असार्था चेति । इत्येते नक्षत्रराज्ञः तस्मिं शुद्धावासभवने अनेकनक्षत्रशतसहस्रपरिवारिताः तास्तस्मिन् महापर्षन्मण्डलसन्निपाते बुद्धाधिष्ठानेन सन्निपतिताः सन्निषण्णा अभूवम् ॥

षट्त्रिंशद् राशयः तद्यथा — मेष वृषभ मिथुन कर्कटक सिंह कन्य तुल वृश्चिक धनु मकर कुम्भ मीन वानर उपकुम्भ भृङ्गार खड्ग कुञ्जर महिष देव मनुष्य शकुन गन्धर्व लोकसत्वजित उग्रतेज ज्योत्स्न छाय पृथिवी तर्म रज उपरज दुःख सुख मोक्ष बोधि प्रत्येक श्रावक नरक विद्याधर महोज महोजस्क तिर्यक्प्रेत असुरपिशित पिशाच यक्षराक्षस सर्वभूमित भूतिक निम्नग ऊर्ध्वग तिर्यग विकसित ध्यानग योगप्रतिष्ठ उत्तम मध्यम अधमश्चेति । इत्येते महाराश्यः अनेकराशिशतसहस्रराशिपरिवारिताः, येन शुद्धावासभवनं, येन च महापर्षत्सन्निपातमण्डलं, तेनोपजग्मुः । उपेत्य भगवतश्चरणयोर्निपत्य स्वकस्वकेषु च स्थानेषु सन्निषण्णा भूवम् ॥

येऽपि ते महायक्षिण्यः, अनेकयक्षिणीशतसहस्रपरिवृताः । तद्यथा — सुलोचना सुभ्रू सुकेशा सुस्वरा सुमती वसुमती चित्राक्षी पूर्णाशा गुह्यका सुगुह्यका मेखला सुमेखला पद्मोच्चा अभया जया विजया रेवतिका केशिनी केशान्ता अनिला मनोहरा मनोवती कुसुमावती कुसुमपुरवासिनी पिङ्गला हारीती वीरमती वीरा सुवीरा सुघोरा घोरवती सुरसुन्दरी सुरसा गुह्योत्तमारी वटवासिनी अशोका अन्धारसुन्दरी आलोकसुन्दरी प्रभावती अतिशयवती रूपवती सुरूपा

असिता सौम्या काणा मेना नन्दिनी उपनन्दिनी लोकान्तरा चेति । इत्येते महायक्षिण्यो अनेकयक्षिणीशतसहस्रपरिवाराः तन्महापर्षन्मण्डलं दूरत एव भगवन्तं शाक्यमुनिं नमस्यन्त्यः स्थिता भूवम् ॥

येऽपि ते महापिशाच्यः, अनेकपिशाचिनीशतसहस्रपरिवृताः, तेऽपि तं भगवन्तं शाक्यमुनिं नमस्यन्त्यः सन्निपतेयुः । तद्यथा— मण्डितिका पांसुपिशाची उल्कापिशाची ज्वालापिशाची भस्मोद्गिरा पिशिताशिनी दुर्धरा भ्रामरी मोहनी तर्जनी रोहिणिका गोवाहिणिका लोकान्तिका भस्मान्तिका पीलुवती वहुलवती वहुल दुर्दान्ता धणा चिह्नितिका धूमान्तिका धूमा सुधूमा चेति । इत्येता महापिशाच्यः, अनेकपिशाचीशतसहस्रपरिवारिताः, तेऽपि तन्महापर्षत्सन्निपातमण्डलं सम्प्रविष्टा भूवम् ॥

येऽपि ते मातरा महामातराः लोकमनुचरन्ति; सत्वविहेठिका वलिमाल्योपहारिश्च । तद्यथा— ब्रह्माणी माहेश्वरी वैष्णवी कौमारी चामुण्डा वाराही ऐन्द्री याम्या आग्नेया वैवस्वती लोकान्तकरी वारुणी ऐशानी वायव्या परप्राणहरा सुखमण्डितिका शकुनी महाशकुनी पूतना कटपूतना स्कन्दा चेति । इत्येते महामातरा अनेकमातरशतसहस्रपरिवाराः; तेऽपि तं महापर्षन्मण्डलं नमो बुद्धायेति वाचमुदीरयन्त्यः स्थिता अभूवम् ॥

एवमनेकशतसहस्रमनुष्या मनुष्यसत्वासत्वयावदीदेवीचिर्महानरकं, यावच्च भगवाग्रं, अत्रान्तरे सर्वगगनतलं स्फुटमभूत् । सत्वनिकाये न च कस्यचित् प्राणिनो विरोधोऽभूत् । बुद्धाधिष्ठानेन च बोधिसत्वसङ्घालङ्कारेण च सर्व एव सत्वा मूर्धोपस्थितं बुद्धं भगवन्तं मञ्जुश्रियं कुमारभूतं सम्पश्यते स्म ॥

अथ भगवान् शाक्यमुनिः सर्वावन्तं लोकधातुं बुद्धचक्षुषा समवलोक्य मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । भाष भाष त्वं शुद्धसत्व! मन्त्रचर्यार्थविनिश्चयसमाधिपटलविसरं वोधिसत्वपिटकं, यस्येदानीं कालं मन्यसे ॥

अथ मञ्जुश्रीः कुमारभूतः भगवता शाक्यमुनिना कृताभ्यनुज्ञातः गगनस्वभावव्यूहालङ्कारं वज्रसंहतकठिनसन्तानव्यूहालङ्कारं नाम समाधिं समापद्यते। समनन्तरसमापन्नस्य मञ्जुश्रियः कुमारभूतस्य तं शुद्धावासभवनं अनेकयोजनशतसहस्रविस्तीर्णं वज्रमयमधितिष्ठते स्म। यत्र ते अनेकयक्षराक्षसगन्धर्वमरुतपिशाचः संक्षेपतः सर्वसत्वधातुर्बोधिसत्वाधिष्ठानेन तस्मिन् विमाने वज्रमणिरत्नप्रख्ये सम्प्रतिष्ठिताः सन्निषण्णा भूवं अन्योन्यमविहेठकाः। अथ मञ्जुश्रीः कुमारभूतस्तन्महापर्षत्सन्निपातं विदित्वा यमान्तकं क्रोधराजमामन्त्रयते स्म। भो भो महाक्रोधराज! सर्वबुद्धबोधिसत्वानिर्घोतः एवं महापर्षत्सन्निपातमण्डलं सर्वसत्वानां च रक्ष रक्ष वशमानय। दुष्टान् दम। सौम्यान् बोधय। अप्रसन्नां प्रसादय। यावदहं स्वमन्त्रचर्यानुवर्त्तनं बोधिसत्वपिटकं वैपुल्यमन्त्रचर्यामण्डलविधानं भाषिष्ये। तावदेतां बहिर्गत्वा रक्षय॥

एवमुक्तस्तु महाक्रोधराजा आज्ञां प्रतीक्ष्य महाविकृतरूपी निर्ययुः सर्वसत्वान् रक्षणाय शासनाय समन्तात् पर्षन्मण्डलं यमान्तकः क्रोधराजा अनेकक्रोधशतसहस्रपरिवारितो समन्तात्तं चतुर्दिक्षु इत्यूर्ध्वमधस्तिर्यग् घोरं च नादं प्रमुञ्चमानः स्थितोऽभूत्॥

अथ ते सर्वाः सौम्याः सुमनस्काः संवृत्ताः आज्ञां नोल्लङ्घयन्ति। एवं च शब्दं शृण्वन्ति। यो ह्येतं समयमतिक्रमेत्। स तत्रास्य स्फुटो मूर्धा अजकस्येव मञ्जरीति। बोधिसत्वाधिष्ठानं च तत्॥

अथ मञ्जुश्रीः कुमारभूतः स्वमन्त्रचर्यार्थधर्मपदं भाषते स्म। एकेन धर्मेण समन्वागतस्य बोधिसत्त्वस्य महासत्त्वस्य मन्त्राः सिद्धिं गच्छेयुः। कतमेनैकेन, यदुत सर्वधर्माणां निःप्रपञ्चो कारतः समनुपश्यता। द्वाभ्यां धर्माभ्यां प्रतिष्ठितस्य बोधिसत्त्वस्य मन्त्राः सिद्धिं गच्छेयुः। कतमाभ्यां द्वाभ्यां, बोधिचित्तापरित्यागिता सर्वसत्त्वसमता च। त्रयाभ्यां धर्माभ्यां स्वमन्त्रचर्यार्थनिर्देशपारिपूरिं गच्छन्ति। कतमाभ्यां त्रयाभ्यां, सर्वसत्त्वापरित्यागिता बोधिसत्त्वशीलसंवरारक्षणतया स्वमन्त्रापरित्यागिता च। चतुर्भिः धर्मैः समन्वागतस्य प्रथम-

चित्तोत्पादिकस्य बोधिसत्त्वस्य मन्त्राः सिद्धिं गच्छेयुः। कतमैश्च-तुर्भिः, स्वमन्त्रापरित्यागिता परमन्त्रानुपच्छेदनता सर्वसत्त्वमैत्र्योपसंह-रणता महाकरुणाभावितचेतनता च। इमैश्चतुर्भिः धर्मैः समन्वागतस्य प्रथमचित्तोत्पादकस्य बोधिसत्त्वस्य मन्त्राः सिद्धिं गच्छेयुः। यं-धर्मा बोधिसत्त्वस्य पिटकसमवशरणता मन्त्रचर्याभिनिर्हारं बोधिपूरिं गच्छेयुः। कतमे पञ्च। विविक्तदेशसेवनता, परसत्त्वाक्षेपणता, लौकि-कमन्त्रानिरीक्षणता, शीलश्रुतचारित्रस्थापनता च। इमे पञ्च धर्माः मन्त्रचर्यार्थपारिपूरिं गच्छेयुः। षट् धर्मा मन्त्रचर्यार्थपारिपूरिं ग-च्छेयुः। कतमे षट्। त्रिरत्नप्रसादानुपच्छेदनता, बोधिसत्त्वप्रसादानु-पच्छेदनता, लौकिकलोकोत्तरमन्त्रानिन्दनता, निःप्रपञ्चधर्मधातुदम्भ नता, गम्भीरपदार्थमहायानसूत्रान्त अप्रतिक्षेपणता, अखिन्नमानसता, मन्त्रचर्यापर्येष्टिः कुशलपक्षे अपरिहानता। इमे षट् धर्मा विद्याचर्याम-न्त्रसिद्धिं समवशरणतां गच्छन्ति। सप्त धर्मा विद्यासाधनकालौपयि-कमन्त्रचर्यानुप्रवेशनतां गच्छन्ति। कतमे सप्त। गम्भीरनयः, प्रज्ञापा-रमिता भावना पठनदेशनस्वाध्यायनलिखनबोधिसत्त्वचर्याविमुक्तिः कालदेशनियमजपहोममौनतपअविलम्बितगतिमतिस्मृतिप्रज्ञाधृति अ-धिवासवतः बोधिसत्त्वसम्भारमहायानधर्मनयसम्प्रवेशननः स्वमन्त्रम-न्त्राकर्षणरक्षणसाधनक्रियाकौशलतः महाकरुणा महामैत्री महोपेक्षा महामुदिता पारमिताभाववतः निःप्रपञ्चसत्त्वधातुधर्मधातुतथतासमव-सरणतः द्वयाकारसर्वज्ञज्ञानपरिगवेषणतः सर्वसत्त्वापरित्यागः हीनया-नास्पृहणतश्च। इमे सप्त धर्मा विद्याविद्यामन्त्रसिद्धिं पारिपूरतां ग-च्छन्ति। कतमे अदृष्टदृष्टादृष्टफलश्रद्धा कौतुकजिज्ञासत अपिचिकि-त्सा अष्टधर्मविद्यामन्त्रचर्यार्थसिद्धिं समवसरणतां गच्छन्ति। बोधि-सत्त्वप्रसादसफलशुद्धिविकुर्वणतः अविपरीतमन्त्रग्रहणगुरुगौरवतः बु-द्धबोधिसत्त्वमन्त्रतन्त्र आचार्योपदेशग्रहण अविसंवादनसर्वस्वपरित्या-गतः सिद्धक्षेत्रस्थानास्थानस्वप्नदर्शनकौशलप्रकाशनतः विगतमात्स-र्यमलमखिलस्त्यानमिद्धवीर्यारम्भसततबुद्धबोधिसत्त्वात्मानानिर्यातनत्वः संक्षेपतः अवाप्तकुशलमूलमहासन्नाहसन्नद्धः सर्वविघ्नान् महर्तुकामः

बोधिमण्डक्रमणमहाभोगप्रतिकांक्षणमहेशाख्ययात्मभावतः महेशाख्यपुद्गलसमवधानाविरहितकल्याणमित्रमञ्जुश्रीकुमारभूतबोधिसत्त्वसमव - धानतश्च । इमे अष्ट धर्मा मन्त्रचर्यार्थसिद्धिं समवशरणतां च गच्छन्ति । संक्षेपतः मार्षा अविरहितबोधिचित्तस्य रत्नत्रयाविमुक्तस्य परमदुःशीलस्यापि अखिन्नमानमानसः सतताभियुक्तस्य मदीयमन्त्रपटलविसर अनन्ताद्भुतबोधिसत्त्वचर्यानिष्यन्दितमानसोद्गतं सिध्यतेति । नान्यथा च गन्तव्यम् । अविकल्पमानसो भूत्वा जिज्ञासनहेतोरपि साधनीयमिति ॥

अथ सा सर्वावती पर्षत् सबुद्धबोधिसत्त्वप्रत्येकबुद्धार्यश्रावकाधिष्ठिता एवं वाचमुदीरयन्तः, साधु साधु भो जिनपुत्र! विचित्रमन्त्रचर्यार्थक्रियाधर्मनयप्रवेशानुवर्तिनी धर्मदेशनासुदेशिता सर्वसत्त्वानामर्थाय अहो कुमारभूत! मञ्जुश्रीः! विचित्रधर्मदेशनानुवर्तिनी मन्त्रचर्यानुकूला सुभाषिता । यो हि कश्चित् महाराज्ञः इमं सन्निपातपरिवर्तं वाचयिष्यति, धारयिष्यति, मनसि करिष्यति, सङ्ग्रामे वाग्रतः हस्तिमारोप्य स्थापयिष्यति, विविधैर्वा पुष्पधूपगन्धविलेपनैः पूजयिष्यति, प्रत्यर्थिकानां प्रत्यमित्राणां वशमानयिष्यामः । परबलसेनाभङ्गं करिष्यामः । पुस्तकलिखितं वा कृत्वा स्वगृहे स्थापयिष्यति, तस्य कुलपुत्रस्य वा कुलदुहितुर्वा महाराज्ञस्य वा महाराज्ञीय वा भिक्षुर्वा भिक्षण्या वा, उपासिकस्य वा उपासिकाया वा, महारक्षां महाभोगतां, दीर्घायुष्मतां, आयुरारोग्यतां, सततभोगाभिवर्धनतां, करिष्यामीति ॥

एवमुक्तस्तु सा सर्वावती पर्षत् तूष्णीमभूत् ॥

महायानमन्त्रचर्यानिर्देश्यमहाकल्पात् मञ्जुश्रीकुमारभूतबोधिसत्त्वविकुर्वणपटलविसरात् मूलकल्पात् प्रथमः सन्निपातपरिवर्तः ॥

---

## अथ द्वितीयः परिवर्तः ।

अथ खलु मञ्जुश्रीः कुमारभूतः सर्वावन्तं पर्षन्मण्डलमवलोक्य सर्वसत्त्वसमयानुप्रवेशावलोकिनीं नाम समाधिं समापद्यते स्म । समनन्तरसमापन्नस्य च मञ्जुश्रियः कुमारभूतस्य नाभिमण्डलप्रदेशाद् रश्मिर्निश्चरन्ति स्म । अनेकरश्मिकोटीनियुतशतसहस्रपरिवारिता समन्तात् सर्वसत्वधातुमवभास्य पुनरेव तं शुद्धावासभवनं अवभास्य स्थिताभूत् ॥

अथ खलु वज्रपाणिर्बोधिसत्वो महासत्वः मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । भाष भाष त्वं भो जिनपुत्र! सर्वसत्वसमयानुप्रवेशनं नाम + + + + + + + + + + + + + + समनुप्रविश्य त्वदीयं मन्त्रगणं सर्वलौकिकलोकोत्तरं च मन्त्रसिद्धिं समनुप्राप्नुवन्ति । एवमुक्त आगुह्यकाधिपतिना यक्षेन्द्रेण मञ्जुश्रीः कुमारभूतः परमगुह्यमण्डलतन्त्रं भाषते स्म । सर्वविघ्नसञ्चोदनं नाम स + + विकुर्वणं विदन्तयति । दक्षिणं च पाणिमुद्यम्य अङ्गुल्याग्रेण पर्षन्मण्डलमाकारयति स्म । तस्मिन्नङ्गुल्यग्रे अनेकविद्याराजकोटीनयुतशतसहस्राणि निश्चेरुः । निश्चरित्वा च सर्वावन्तं शुद्धावासभवनं महतावभासेनावभास्य च स्थिता अभूवम् ॥

अथ मञ्जुश्रीः कुमारभूतः, यमान्तकस्य क्रोधराजस्य हृदयं सर्वकर्मिकं एकवीरं आवाहनविसर्जनशान्तिकपौष्टिक आभिचारुक अन्तर्धानाकाशगमनपातालप्रवेशपादप्रचारिकाकर्षणविद्वेषणवशीकरणसर्वगन्धमाल्यविलेपनप्रदीपस्वमन्त्रतन्त्रेषुप्रदानः संक्षेपतः यथा यथा प्रपद्यते, तथा तथा साध्यमानः अक्षरं नाम महावीर्यं सर्वार्थसाधनं महाक्रोधराजम् । कतमं च तत् । ॐ । आः । हूँ । इदं तन्महाक्रोधस्य हृदयम् । सर्वकर्मिकं सर्वमण्डलेषु सर्वमन्त्रचर्यासु च निर्दिष्टं महासत्त्वेन मञ्जुघोषेण सर्वविघ्नविनाशनम् ॥

अथ मञ्जुश्रीः कुमारभूतः दक्षिणं पाणिमुद्यम्य क्रोधस्य मूर्ध्नि स्थापयामास । एवञ्चाह—"नमस्ते सर्वबुद्धानाम् ।" समन्वाहरन्त

## अथैकादशः पटलविसरः ।

अथ खलु भगवां शाक्यमुनिः पुनरपि शुद्धावासभवनमवलोक्य मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । अस्ति मञ्जुश्रीः ! त्वदीयं मध्यमं पटविधानं मध्यमकर्मोपयिकसाधनविधिः समासतः तां भाषिष्ये । तं शृणु । साधु च सुष्ठु च मनसि कुरु । भाषिष्ये ॥

अथ खलु मञ्जुश्रीः कुमारभूतो भगवन्तमेवमाहुः—'तद् वदतु भगवां लोकानुकम्पको शास्ता सर्वसत्त्वहिते रतः । यस्येदानीं कालं मन्यसे । अस्माकमनुकम्पार्थमनागतानां च जनतामवेक्ष्य ॥

एवमुक्ते भगवां मञ्जुश्रिया कुमारभूतेन भगवानेतदवोचत् । शृणु मञ्जुश्रीः ! आदौ तावत् शीलव्रतशौचाचारनियमजपहोमध्यानविधिं यत्र प्रतिष्ठिता सर्वमन्त्रचर्यासाधनकर्माण्यवन्ध्यानि भवन्ति सफलानि । आशु च सर्वमन्त्रचर्यासाधनकर्मान्यवन्ध्यानि भवन्ति सफलानि । आशु च सर्वमन्त्रप्रयोगानि सिद्धिं गच्छन्ति । कतमं च तत् । भाषिष्येऽहं शृणु कुमार ! ॥

आदौ तावद् विद्याव्रतशीलचर्यासमादानं प्रथमत एव समाददेत् । प्रथमं तावन्मण्डलाचार्योपदेशनसमयमनुप्रविशेत । त्वदीयं [illegible] कुशलं व्यक्तं धार्मिकं सत्यवादिनं महोत्साहं कृतज्ञं दृढसौहृदं नातिवृद्धं नातिबालं निस्पृहं सर्वलाभसत्कारेषु ब्रह्मचारिणं कारुणिकं न लाभमात्रेण भोगहेतोर्वा अनुनयहेतोर्वा न मृषां वदते कः पुनर्वादो स्वल्पमात्रेणैव लाभमोहप्रकारैः दृढप्रतिज्ञा समता सर्वभूतेषु दयावां दानशीलः कृतपुरश्चरणः त्वदीयगुह्यमन्त्रानुजापी पूर्वसेवकृतविद्यः त्वदीयमण्डलसमनुपूर्वप्रविष्टः लोकज्ञः विधिज्ञः समनुग्राहकः कार्यावां विचक्षणः श्रेयसप्रवृत्तः अभीरु अच्छम्भिनममङ्कुभूतः दृढवीर्यः अव्याधितः येन व्याधिना अकर्मशीली महोच्चकुलप्रसूतश्चेति । एभिर्गुणैर्युक्तो मण्डलाचार्या भवति ॥

साधकश्च तत्समः न्यूनो वा किञ्चिदङ्गैः तादृशं मण्डलाचार्यमभ्यर्थ्य प्रार्थयेत् । इच्छाम्याचार्येण महाबोधिसत्त्वस्य कुमारभूत-

स्यार्यमञ्जुश्रियस्य समयमनुप्रविष्टुम् । तद् ददत्वाचार्योऽस्माकमनुकम्पार्थं हितचित्तो दयावां' ।

ततस्तेन मण्डलाचार्येण पूर्वनिर्दिष्टेन विधिना शिष्यां यथापूर्वं परीक्ष्य प्रवेशयेत् । पूर्ववदभिषेकं दत्त्वा, मन्त्रं दद्यात् । यथावत् क्रमशो समयं दर्शयेत् । रहस्यतन्त्रमुद्रामनुकर्माणि च प्रभूतकालेनैव सुपरीक्ष्य आशयं ज्ञात्वा दर्शयेत् । सर्वतन्त्रमन्त्रादिषु कर्माणि नान्येषामिति विधिरेषा प्रकीर्त्तिता ॥

ततः शिष्येण मण्डलाचार्यस्य यथाशक्तितः आचार्यो वा येन तुष्येत, आत्मानं भोगांश्च प्रतिपादयेत् ॥

ततस्तेन मण्डलाचार्येण पुत्रसंज्ञा उपस्थापयितव्या । पुत्रवत् प्रतिपत्तव्यम् । मातुश्च भोगा उपसंहर्तव्या इति ॥

ततस्तेन साधकेन अन्यतमं मन्त्रं गृहीत्वा एकान्तं गत्वा पूर्वनिर्दिष्टे स्थाने पेयालं तैरेव मन्त्रैः आह्वाननविसर्जनप्रदीपगन्धधूपबलिनिवेद्यं मण्डलोक्तेन विधिना विस्तरेण कर्त्तव्यम् । आहूय अर्घ्यमासनं दत्त्वा त्रिसन्ध्या त्रिस्नायी त्रिचैलपरिवर्ती जापं कुर्यात् प्रत्यहं तत्र सन्ध्याकालं नाम रात्र्यन्तात् प्रभृति यावद् युगमात्रादित्योदयम् । अत्रान्तरे प्रथमं सन्ध्यमुच्यते । मध्यन्दिने च आदित्ये उभयान्ते युगमात्रं प्रमाणं व्योम्नि सन्निश्रितं रविमण्डलं मध्यं सन्ध्यमुच्यते । अस्तमनकाले च युगमात्रशेषं त्रितीयं सन्ध्यमुच्यत इति ॥

शीलव्रतसमायुक्तमाचार्यं दक्षपण्डितम् ।
महाकुलोच्चप्रसूतं च दृढवीर्यं तु सर्वतः ॥
मन्त्रतन्त्राभियुक्तं च सर्वकार्येषु दक्षधीः ।
सूक्ष्मो निपुणमन्त्रज्ञः धर्मेश्वातुधरो सदा ॥
महोत्साही च तेजस्वी लोकधर्मानुपेक्षिणः ।
श्राद्धो मुनिवरधर्मोऽस्मिं लौकिकानां तु वर्जिताः ॥
कृतजापी विवेकज्ञो पूर्वसेवानुसेविनः ।
˙˙श्रज्ञो मञ्जुघोषस्य दृष्टप्रत्ययतत्परः ॥

---

लौकिकानां प्रयोगज्ञो मन्त्राणां बुद्धभाषिनाम् ।
कृतरक्षो दृढस्थामो शौचाचाररतः सदा ॥

बुद्धोपदेशितं मार्गमनुवर्त्ती च सर्वतः ।
उद्युक्तो मन्त्रजापेऽस्मि प्रशस्ते जिनवर्णिते ॥

दृष्टकर्मफले नित्यं परलोके तथैव च ॥
भीरुः स्यात् सर्वपापानामणुमात्रं तथैव च ॥

शुचिर्दक्षोन्यनलसः मेधावी प्रियदर्शनः ।
दशबलैः कथिता मन्त्रास्तथैव जिनसूनुभिः ॥

लौकिका ये च मन्त्रा वै वज्रान्तकुलयोरपि ।
तेषां कृतश्रमो नित्यं ग्रन्थशास्त्रार्थधारकाः ॥

अव्याधितो नशक्तिष्टो जराबाल्यविवर्जितः ।
सिद्धमन्त्रो तथारक्षो आशुकारी तु सर्वतः ॥

अदीर्घसूत्री तथा मानी इङ्गितज्ञो विशेषतः ।
ब्रह्मचारि महाप्राज्ञो एकाकीचरसङ्गकृत् ॥

लब्धाभिषेको शूरश्च तन्त्रेऽस्मिन् मञ्जुभाषिते ।
कृतजापान्तकृद्युक्तो कृतविद्यो तथैव च ॥
महानुभावो लोकज्ञो गतितत्त्वानुचिन्तकः ।
श्रेयसायैव प्रयुक्तश्च दाता भूतहिते रतः ॥

तथा विशिष्टो आचार्यो प्रार्थनीयो सदा तु वै ।
लिखितं तेन मन्त्राणां मण्डलं सिद्धिमर्छति ॥
अभिषेकं तु तेनैवं दत्तं भवति महत् फलम् ।
सिद्धिकामस्तु शिष्यैर्वा पूज्योऽसौ मुनिवत् सदा ॥

अलङ्घ्यं तस्य वचनं शिष्यैः कर्तव्य यत्नतः ।
भोगास्तस्य दातव्याः यथाविभवसम्भवाः ॥
स्वल्पमात्रा प्रभूता वा येन वा तुष्टि गच्छति ।
कायजीवितहेत्वर्थं चित्तं देहं यथा पितुः ॥

तथैव शिष्यो धर्मज्ञो आचार्याय ददे धनम् ।
प्राप्नुयाद् यशः सिद्धिं आयुरारोग्यमेव तु ॥

पुष्कलं गतिमाप्नोति शिष्यो पूज्यस्तु तं गुरुम् ।
मन्त्रास्तस्य च सिध्यन्ति विधिमार्गोपदर्शनात् ॥

सेवनाद् भजनाद् तेषां मानना पूजनादपि ।
तुष्यन्ते सर्वबुद्धास्तु तथैव जिनवरात्मजाः ॥

सर्वे देवास्तु तुष्यन्ते सत्क्रिया तु गुरौ सदा ।
एतद् कथितं सर्वं गुरूणां मन्त्रदर्शिनाम् ॥

समयानुप्रवेशिनां पूर्वं प्रथमं वा साधकेन तु ।
जनो वा तत्समो वापि उत्कृष्टो वा भवेद् यदि ॥

नावमन्यो गुरुर्नित्यं मेकाद्वा अधिकोऽपि वा ।
तेनापि तस्य तन्त्रेऽस्मिं उपदेशः सदा तु वै ॥

कर्तव्यो मन्त्रेसिद्धस्मं यथासत्त्वानुदर्शिते ।
न मत्सरो भवेत् तत्र शिष्येऽस्मिं पूर्वनिर्मिते ॥

स्नेहानुवर्तिनी चक्षुः सुप्रीतिप्रितदेहिनाम् ।
तमेव कुर्याच्छिष्यत्वं आचार्या शिष्यहेतवः ॥

अन्योन्यानुवर्तिनी यत्र स्नेहसन्ततिमानिनी ।
स्निग्धसन्तानानुधरा नु मन्त्रं दद्याचु तत्र वै ॥

आचार्यो शिष्यमेवं तु शिष्यो वा गुरुदर्शने ।
उत्सुको भवतः नित्या साध्वसयोगतः उभौ ॥

तेषां नित्यं तु मार्गे वै मन्त्रचर्यानुदर्शने ।
सफलानुवर्तनो मन्त्रज्ञो उभयो पितृपुत्रणो ॥

धृतिं तुष्टिं च लेभे तौ तथा शिष्य गुरुः सदा ।
रक्षणीयो प्रयत्नेन पुत्रो धर्मवत्सलः सदा ॥

अव्यवच्छेदबुद्धानां धर्मता भवति तेषु वै ।
तदभावे ह्यनाथानां दद्यान्मन्त्रं यथोदितम् ॥

दरिद्रेभ्यश्च सत्त्वेभ्यो क्लीवेभ्यो विशेषतः ।
सर्वेभ्योऽपि सत्त्वेभ्यो मन्त्रचर्या विशिष्यते ॥

सर्वकाले व कुर्वीत अधमोत्तममध्यमे ।
सदा सर्वस्मिं धर्मेषु कुर्यानुग्रहहेतुतः ॥

ईप्सितेभ्योऽपि प्रदातव्यं गतियोनिर्विचेष्टिने ।
शिष्येणैव तु तस्मै तु मन्त्रं गृह्य यथागतम् ॥

तेनैवोपदिष्टेन मार्गेणैव नान्यथा ।
सिद्धिकामो यतेत् तस्मिन्नितरेषां परायिके ॥

पितृवत् प्रणम्य शिरसा वैनतो गच्छे यथेष्टतः ।
एकान्तं ततो गत्वा जपेन्मन्त्रं समासतः ॥

भिक्षभैक्षाशवृत्ती तु मौनी त्रिःकालजापिनः ।
पूर्वनिर्दिष्टमेतं स्याद् यथामार्गं प्रवर्तकः ॥

तदानुवृत्ती सेवी च स्थानमायतनानि च ।
महारण्यं पर्वताग्रं तु नदीकूले शुचौ तथा ॥

गोष्ठे महापुरे चापि विविक्ते जनवर्जिते ।
शून्यदेवकुले वृक्षे एकलिङ्गे शिलोच्चये ॥

महोदकतटे रम्ये पुलिने वापि दीपके ।
विविधैः पूर्वनिर्दिष्टैः देशैश्चापि मनोरमैः ॥

एतैश्चान्यैः प्रदेशैस्तु जपेन्मन्त्रं समाहितः ।
सखायैर्लक्षणोपेतैः मन्त्रार्थं नीतितार्किकैः ॥

इङ्गिताकारतत्त्वज्ञैः आत्मसमसादृशैः ।
शूरैर्विजितसङ्ग्रामैः सात्त्विकैश्च सहिष्णुभिः ॥

श्राद्धैर्मन्त्रचर्यायां शासनेऽस्मि जिनोदिते ।
प्रशस्तैर्लक्षणोपेतैः क्षमिभिस्तु सहायकैः ॥

सिध्यन्ते सर्वकर्माणि अयत्नेनैव तस्य तु ।
प्रातरुत्थाय शयनात् स्नात्वा चैव शुचे जले ॥

निःप्राणके जले चैत्र सरिन्महासरोद्भवे ।
उद्घृष्य गात्रं मन्त्रज्ञो मृद्गोमयचूर्णितैः ॥
मन्त्रपूतं ततो कृत्वा जलं चोक्षं सनिर्मलम् ।
स्नायीत जपी युक्तात्मा नातिकालं विलङ्घये ॥
ततोत्थाय तटे स्थित्वा हस्तौ प्रक्षाल्य मृत्तिकैः ।
सप्त सप्त पुनः सप्त वारान्येकविंशति ॥
उपविश्य ततस्तत्र दन्तकाष्ठं समाचरेत् ।
विसर्जयित्वा दन्तधावनं ततो वन्देत तापिनम् ॥
वन्दित्वा लोकनाथं तु पूजां कुर्यान्मनोरमाम् ।
विविधैः स्तोत्रोपहारैस्तु संस्तुत्य पुनः पुनः ॥
सुगन्धपुष्पैस्तथा शास्तु अर्घं दत्त्वा तु जापिनः ।
प्रणम्य शिरसा बुद्धानां तदा तु शिष्यसम्भवां ॥
तेषां लोकनाथानां अग्रतो यापदेशना ।
निवेद्य चाशनो तत्र पटस्याग्रत मध्यमे ॥
कुशविण्डकृतः तत्स्थः निषण्णोपसमाहितः ।
जपं कुर्यात् प्रयत्नेन अक्षसूत्रेण तेन तु ॥
यथालब्धं तु मन्त्रं वै नान्यमन्त्रं तदा जपेत् ।
अतिहीनं च वर्जीत अतिउत्कृष्ट एव वा ॥
मध्यमं मध्यकर्मेषु जपेन्मन्त्रं सदा व्रती ।
अत्युच्चं वर्जयेद् यत्नाद् वचनं चापि चेतरम् ॥
मध्यमं मध्यकर्मेषु प्रशस्तो जिनवर्णितः ।
नात्युच्चं नातिहीनं च मध्यमं तु सदा जपेत् ॥
वचनं श्रेयसाद्युक्तो सर्वबुद्धैस्तु पूर्वकैः ।
न जपे परसामीप्ये परकर्मपथे सदा ॥
गुप्ते चात्मविदे देशे जपेन्मन्त्रं तु मध्यमम् ।
तथा जपे तु प्रयुक्तं स्यात् कश्चिन्मन्त्रार्थसुश्रुतः ।
भूयो जपेत तन्मन्त्रं मध्यगां सिद्धिमिच्छतः ॥

तस्मा जन्तुविगते मन्त्रतत्त्वार्थमुश्रुते ।
विवेके विगतसम्पाते जपेन्मन्त्रं तु जापिनः ॥

चतुर्थे रात्रिभागे तु तदर्धे अर्ध एव तु ।
ताम्रारुणे युगमात्रे च उदिते रविमण्डले ॥

प्रथमं सन्ध्यमेवं तु कथितं मुनिपुङ्गवैः ।
युगमात्रं चतुर्हस्तो मध्यमो परिकीर्तितः ॥

अतो व्योम्ने दिते भानोः मन्त्रजापं तदा त्यजेत् ।
मन्त्रजापं तदा त्यक्त्वा विसर्ज्यार्घं ददौ व्रती ॥

शेषकालं तदायुक्तो कुशलेऽस्मिन् शासने मुनौ ।
सद्धर्मवाचनादीनि प्रज्ञापारमितादयः ॥

पुस्तका दशभूमाख्याः पूज्या वाच्यास्तु वै सदा ।
कालमागम्य तस्मा वै प्रणम्य जिनपुङ्गवां ॥

स्वमन्त्रं मन्त्रनाथं च ततो गच्छेन्न जी[illegible]म् ।
कालचारी तथा युक्तो कालभोजी जितेन्द्रियः ॥

धार्मिको साधकोयुक्तो प्रसन्ने बुद्धशासने ।
प्रविशेद् ग्रामान्तरं मौनी शौचाचाररतो सदा ॥

गृहे तु धार्मिके सत्त्वे प्रविशेद् भिक्षां जपी सदा ।
निष्प्राणोदकसंसिद्धे नाके शुचिसम्मते ॥

सम्यग् दृष्टिसपत्नीके प्रसन्ने बुद्धशासने ।
तथाविधे कुले नित्यं भिक्षार्थी भिक्षमाददेत् ॥

यथा योधः सुसन्नद्धो प्रविशेद् रणसङ्कटम् ।
अरीन् मर्दयते नित्यं रिपुभिर्न च हन्यते ॥

एवं मन्त्री सदा ग्रामं प्रविशेद् भिक्षानुर्जीविनः ।
रञ्जनीयं तथा दृष्ट्वा रूपं शब्दांस्तु वै शुभाम् ॥

रागप्रशमनार्थाय भावयेदशुभा शुभा ।
दृष्ट्वा कलेवरं स्त्रीषु यौवनानारभूषिताम् ॥

संयता ब्रह्मसत्यज्ञा गुरुदेवतपूजकाः ।
मातृपितृभक्तानां स्त्रीषु दुःखं न विद्यते ॥
अनित्यं दुःखतो शून्यं परमात्थानुसेविनाम् ।
गण्डशल्यं तथाभूतं जापिनां स्त्रीकलेवरम् ॥
रागी बालिशदुर्बुद्धिः संसारादपलायितः ।
स्त्रीप्रसक्तो भवेन्नित्यं तस्य सिद्धिर्न विद्यते ॥
न तस्य गतिरुत्कृष्टा न चापि गतिमध्यमा ।
कन्यसा नापि सिद्धिश्च दुःशीलस्येह जापिने ॥
दुःशीलस्य मुनीन्द्रेण मन्त्रसिद्धिर्न चोदिता ।
न चापि मार्गं दिदेशं वै निर्वाणपुरगामिनम् ॥
कुतः सिध्यन्ति मन्त्रा वै बालिशस्येह कुत्सिते ।
न चापि सुगतिस्तस्य दुःशीलस्येह जन्तुनः ॥
न चापि नाकपृष्ठं वै न च सौख्यपरायणः ।
कः पुनः सिद्धिमेवं स्यान्मन्त्राणां जिनभाषिताम् ॥
छिन्नो वा तालवृक्षस्तु मस्तके तु यदा पुनः ।
अभव्ये हरितत्त्वाय अङ्कुराय पुनः क्रायां ॥
एवं मन्त्रसिद्धिस्तु मूढस्येह प्रकीर्तिता ।
दुःशीलो पापकर्मस्तु स्त्रीषु सङ्गी पुनः सदा ।
अकल्याणमित्रसम्पर्की कुतः सिध्यन्ति मन्त्रराट् ॥
तस्मा दान्तो सदा जापी स्त्रीदोषमविचारकः ।
सङ्गं तेषु वर्जितं सिद्धिस्तेषु विधीयते ॥
नान्येषां कथिता सिद्धिः बालिशां स्त्रीषु मूर्छिताम् ।
अव्यग्ररतो धीमां शुचिर्दक्षप्रसङ्गकृत् ॥
कुलीनो दृढशूरश्च सौहृदो प्रियदर्शनः ।
धर्माधर्मविचारज्ञो सिद्धिस्तेषां न दुर्लभा ॥
एवं प्रवृत्तो मन्त्रज्ञो ग्रामं भिक्षार्थमाविशे ।
यथाभिरुचितं गत्वात्र स्थानं पूर्वकल्पितम् ॥

तदेव हस्तावुत्तानौ अङ्गुलीभिः समन्ततः।
प्रफुल्लनिर्मिताकारौ अङ्गुष्ठाङ्गुलिसतृकौ ॥
द्वितीये पर्वतो न्यस्तौ अङ्गुष्ठौ तर्जनि चोभयौ ।
स एषा मुद्रवरा ख्याता सम्बुद्धैस्त्रिदशालया ॥

एषा मुद्रा महामुद्रा अष्टा ते ते समकर्मिकौ ।
तुल्यप्रभा महावीर्या संबुद्धैः सम्प्रकाशिता ॥

षष्टिविम्बरकोट्यस्तु अशीतिः सहमुद्रवैः ।
अतीतैर्मुनिवरासङ्ख्यैर्मुद्रा ह्येते प्रकाशिता ॥

शतमष्टाधिकं प्रोक्तं मुद्राणां त्रिभिसम्भवम् ।
एतैः सर्वैस्तु सर्वाणि मन्त्रकर्मांश्च साधयेत् ॥

सर्वमन्त्रां तथा कर्मा सर्वान्येव प्रसाधयेत् ।
एतन्मुद्रामतं प्रोक्तं सर्वबुद्धैः महर्द्धिकैः ॥

विधिना योजिता ह्येते क्षिप्रमर्थप्रसाधिका ।
इत्युक्त्वा मुनिनां मुख्यः शाक्यसिंहो नरोत्तमः ॥

मञ्जुघोषं तदा वत्रे बोधिसत्त्वं महर्द्धिकः ।
एष मञ्जुश्रियाकल्पे मुद्रासम्भसम्भवः ॥

त्वयैव सम्प्रदत्तोऽयं रक्षार्थं शासने भुवि ।
युगान्ते वर्त्तमाने वै मयैव परिनिर्वृते ॥

रक्षार्थं शासने मह्यं सर्वेदं कथितं मया ।
मुद्राणां लक्षणा ह्युक्तं मन्त्राणां च सविस्तरम् ॥

रहस्यं सर्वलोकानां गुह्यं चापि उदीरितम् ।
एतत्कल्पाधिपे सूत्रे गुणविस्तारविस्तृतम् ॥

अनेकधा च मन्त्राणां गुणवर्णसमोदयम् ।
बहुधा मन्त्रयुक्तिश्च तन्त्रयुक्ति उदाहृता ॥

प्रभावगुणसिद्धान्तं जापिनां हेतुसम्भवम् ।
फलोदयशुभो ह्युक्तः सत्त्वानां गतियोनयः ॥

कुमार ! त्वदीयमन्त्राणां सिद्धिहेतुनियोजिता ।
एवमुक्तस्तु मञ्जुश्रीः कुमारो नगनाह्ययः ॥

मूर्ध्नि नाभिदेशे च संस्पृशेत् शुभवारिणा ।
वारां पञ्चसप्तं वा कुर्यात् सर्वं यथाविधिम् ॥

शौचाचारसम्पन्नो शुचिर्भूत्वा तु जापिनः ।
भिक्षाभाजनमादाय गच्छेत् सलिलालयम् ॥

यत्र प्रतिष्ठिता वारि निम्नगा चोद्भवे तथा ।
नदीप्रस्रवणादिभ्यो भिक्षां प्रक्षालयेत् सदा ॥

ततोत्थाय पुनर्गच्छे विहारमावसथं तु वै ।
पूर्वसन्निश्रितो यत्र वशे तत्र तु तं व्रजेत् ॥

गत्वा तं तु वै देशं न्यसेत् पात्रं तं जपी ।
उपस्पृश्य ततः क्षिप्रं गृह्य पात्रं तथा पुनः ॥
पात्रे मृन्मये पर्णे राजते हेम्न एव वा ।
ताम्रे वल्कले वापि दद्यात् शास्तुर्निवेदनम् ॥

निवेद्यं शास्तुनो दद्यात् स्वमन्त्रं मन्त्रराट् पुनः ।
एकं तिथिमागम्य दुःखितेभ्योऽपि शक्तितः ॥

नातिप्रभूतं दातव्यं निवेद्यं चैव सर्वतः ।
नात्मानुपाया मन्त्रज्ञो कुर्याद् युक्ता तु सर्वतः ॥
कुक्षिमात्रप्रमाणं तु स्थाप्यमानं ददौ सदा ।
न बुभुक्षापिपासार्त्ता शक्तो मन्त्रार्थसाधने ॥

नात्याशी मल्पभोजी वा शक्तो मन्त्रानुवर्तने ।
अत एव जिनेन्द्रेण कथितं सर्वदेहिनाम् ॥

आहारस्थितिसत्त्वानां येन जीवन्ति मानुषाः ।
देवासुरगन्धर्वनागयक्षाश्च किन्नराः ॥

राक्षसाः प्रेतपिशाचाश्च भूतोस्तारकसग्रहाः ।
नासौ संविद्यते कश्चिद् भाजने योऽवहितपेक्षिणः ॥

औदारिकमाकारकवडीकाहारश्च कीर्तिताः ।
सूक्ष्माहारिकसत्त्वा वै इत्युवाच तथागतः ॥

ध्यानाहारिणो दिव्याः रूपावचरचेष्टिता ।
आरूप्याश्च देवा वै समाधिफलभोजिनः ॥

अन्तराभवसत्त्वाश्च गन्धाहाराः प्रकीर्तिताः ।
कामधातौ तथा सत्त्वा विचित्राहारभोजनाः ॥

कामिकोऽसुरगत्यानां कवलिकाहारभोजनाः ।
अत एव जिनेन्द्रैस्तु कथितं धर्महेतुभिः ॥

आहारस्थिति सत्त्वानां सर्वेषां च प्रकीर्तिता ।
जाापनो नित्ययुक्तस्तु मात्रा एव क्षुजक्रिया ॥

शक्तो हि सेवितुं मन्त्रा भोजनेऽस्मिं प्रतिष्ठितः ।
आचारपरिशुद्धस्तु कुशलो ब्रह्मचारिणः ॥

मात्रज्ञता च भक्तेस्मिं सिद्धिस्तस्य न दुर्लभा ।
यथैवाक्षपभ्यज्य शाकटी शकटस्य तु ॥

चिरकालाभिस्थित्यर्थं भारोद्वहनहेतवः ।
तथैव मन्त्री मन्त्रज्ञो आहारं स्थितये ददौ ॥

कलेवरस्य याप्ययाप्यर्थं पोषयेत सदा जपी ।
मन्त्राणां साधनार्थाय बोधिसम्भारकारणा ॥

जपेन्मन्त्रं तथा मर्त्ये लोकानुग्रहकारणात् ।
अत एव मुनिः श्रेष्ठो इत्युवाच महाद्युतिः ॥

काश्यपो नाम नामेन पुरा तस्मिं सदा भुवि ।
श्रेयसार्थं हि भूतानां इदं मन्त्रं प्रभाषत ॥

दुःखिनां सर्वलोकानां दीनां दारिद्र्यखेदिनाम् ।
आयासोपरतां क्लिष्टां तेषामर्थाय भाषितम् ॥

श्रेयसायैव भूतानां संस्कृतानां तथा पुनः ।
आहारार्थं तु भूतानां इदं मन्त्रवरं वदेत् ॥

शृण्वन्तु श्रावकाः सर्वे बोधिसनिश्रिताश्च ये ।
मह्येदं वचनं मन्त्रं गृह्ण त्वं व्याधिनाशनम् ॥

क्षुद्व्याधिपीडिता ये तु ये तु सत्त्वा पिपासिताः ।
सर्वदुःखोपशान्त्यर्थं शृणुध्वं भूमिकाङ्क्षिणः ॥
इत्येवमुक्त्वा मुनिमग्र्ये काश्यपोऽसौ महाद्युतिः ।
श्रावका तुष्टमनसो प्रार्थयामास तं विभुम् ॥

वदस्व मन्त्रं धर्मज्ञो धर्मराजा महामुनिः।
सत्त्वानुकम्पकः अग्रो समयो प्रत्युपस्थितः॥

इत्युक्त्वा मुनिभिः अग्रां मन्त्रं भाषेत विस्तरम्।
कलविङ्करुताघोषा दुन्दुभीमेघनिस्वनः॥

ब्रह्मस्वरो महावीर्यो ब्रह्मणा ह्यग्रणी जिनः।
शृण्वन्तु भूतसङ्घा वै ये केचिदिहागताः॥

अपदा बहुपदा चापि द्विपदा चापि चतुष्पदाः।
संक्षेपतो सर्वसत्त्वार्थं मन्त्रं भाषे सुखोदयम्॥

अतीतानागता सत्त्वा वर्तमाना इहागताः।
संक्षेपतो नु वक्ष्यामि शृणुध्वं भूतकांक्षिणम्॥ इति।

नमः सर्वबुद्धानामप्रतिहतशासनानाम्॥ तद्यथा— "ॐ गगने गगनगञ्जे आनय सर्व लहु लहु समयमनुस्मर आकर्षाणि मा विलम्ब यथेप्सितं मे सम्पादय स्वाहा।" इत्येवमुक्त्वा भगवं काश्यपः तूष्णी अभूत्॥

अत्रान्तरे भगवता काश्यपेन सम्यक्सम्बुद्धेन विद्यामन्त्रपदानि सविस्तराणि सर्वं तं गगनं महार्हभोजनपरिपूर्णमेघं सन्दृश्यते स्म। सर्वं तं त्रिसाहस्रं महासाहस्रलोकधातुं भोजनमेघसञ्छन्नगगनतलं सन्दृश्यते स्म। यथाशयसत्त्वभोजनमभिकांक्षिणं यथाभिरुचितमाहारं तत्तस्मै प्रवर्तते स्म। यथाभिरुचितैश्चाहारैः भोजनकृत्यं क्षुद्दुःखप्रशमनार्थं पिपासितस्य पानं पानीयं चाष्टाङ्गोपेतं वारिधारं तत्रैव मनीषितं निपतति स्म॥

सर्वसत्त्वाश्च तस्मिं समये तस्मिं क्षणे सर्वक्षुद्व्याधिप्रशमनसर्वतृषापनयनं च कृतामभूत्। सा च सर्वावती पर्षत् आश्चर्यप्राप्तो औद्बिल्यप्राप्तो भगवतो भाषितमभिनन्द्य अनुमोद्य भगवतः पादौ शिरसा वन्दित्वा तत्रैवान्तर्हिता। भगवां काश्यपश्च तथागतविहारैः विहारियुरिति मया च भगवता शाक्यमुनिनाप्येतर्हि भाषिता चाभ्यनुमोदिता च॥

अस्मिं कल्पराजोत्तमे सर्वसत्त्वानामर्थाय क्षुत्पिपासापनयनार्थं सर्वमन्त्रजापिनां च विशेषतः पूर्वं तावज्जापिना इमं मन्त्रं साधयितव्यम् । यदि नोत्सहेद् भिक्षामटितुं, पर्वताग्रमभिरुह्य षड् लक्षाणि जपेत् त्रिशुक्लभोजी क्षीराहारो वा । ततो तत्रैव पर्वताग्रे आर्यमञ्जुश्रियस्य मध्यमं पटं प्रतिष्ठाप्य पूर्ववन्महतीं पूजां कृत्वा उदारतरं च बलिं निवेद्यम् । अनेनैव काश्यपसम्यक्सम्बुद्धेर्भाषितेन मन्त्रेण खदिरसमिद्भिरग्निं प्रज्वाल्य औदुम्बरसमिधानां दधिमधुघृताक्तानां सार्द्राणां वितस्तिमात्राणां श्रीफलसमिधानां वा अष्टसहस्रं जुहुयात् ॥

ततोऽर्धरात्रकालसमये महाकृष्णमेघवातमण्डली आगच्छति । न भेतव्यम् । नाप्योत्थाय प्रक्रमितव्यम् । आर्यमञ्जुश्रियाष्टाक्षरहृदयेन आत्मरक्षा कार्या मण्डलबन्धश्च सहायानां च पूर्ववत् । ततो सा कृष्णवातमण्डली अन्तर्धीयते । स्त्रियश्च सर्वालङ्कारभूषिताः प्रभामालिनी दिशाश्चावभास्यमाना साधकस्याग्रतो कुर्वते । उत्तिष्ठ भो महासत्त्व! सिद्धास्मीति । ततः साधकेन गन्धोदकेन जातीकुसुमसन्मिश्रेण अर्घो देयः । ततः सा तत्रैवान्तर्धीयते । तदह एव आत्मपञ्चविंशतिमस्य सहायैर्वा यथाभिरुचितैः कामिकं भोजनं प्रयच्छति । यथेष्टानि चोपकरणानि सन्दधाति । ततः साधकेन विसर्ज्यार्घं दत्त्वा पटं त्रिः प्रदक्षिणीकृत्य पटमादाय सर्वबुद्धबोधिसत्त्वान् प्रणम्य यथेष्टं स्थानं साधनोपयिकं पूर्वनिर्दिष्टं महारण्यं पर्वताग्रं वा निर्मानुषं वा स्थानं गन्तव्यम् ॥

तत्रात्मनः सहायैर्वा उडयं कृत्वा प्रतिवस्तव्यम् । प्रतिवसता च तस्मिं स्थाने आकाशगमनादिकर्माणि कुर्यात् । ततो साधकेन पूर्ववत् कुशविण्डकोपविष्टेन मध्यमं पटं प्रतिष्ठाप्य प्रतिष्ठाप्य पूर्ववत् खदिरकाष्ठैरग्निं प्रज्वाल्य त्रिसन्ध्यं श्वेतपुष्पाणां दधिमधुघृताक्तानां अष्टसहस्रं जुहुयात् दिवसान्येकविंशति ॥

ततोऽर्धरात्रकालसमये होमान्ते आर्यमञ्जुश्रियं साक्षात् पश्यति । ईप्सितं वरं ददाति । आकाशगमनमन्तर्धानबोधिसत्त्वभूमि-

प्रत्येकबुद्धत्वं श्रावकत्वं पञ्चाभिज्ञत्वं वा दीर्घायुष्कत्वं वा महाराज्य-महाभोगतायैर्वा नृपप्रियत्वं वा । आर्यमञ्जुश्रिया सार्धमन्त्रविचरता संक्षेपतो वा यन्मनीषितं तत् सर्वं ददाति । यं वा याचते तमनुप्रयच्छति । सिद्धद्रव्याणि वा सर्वाणि लभते । आकर्षणं च महाराज्यानां च करोति । संक्षेपतो यथा यथा उच्यते तत् सर्वं करोति । प्राक्तनं वा कर्मापराधं वा संशोधयतीत्याह भगवां शाक्यमुनिः ॥

अपरमपि कर्मोपयिकमध्यमसाधनं भवति । आदौ तावत् तथा विशिष्टे स्थाने शुचौ देशे नद्याः पुलिनकूले वा पूर्ववत् सर्वं कृत्वा पश्चान्मुखं पटं प्रतिष्ठाप्य आत्मनश्च पूर्वाभिमुखो भूत्वा कुशविण्डकोपविष्टः पेयालं विस्तरेण कर्तव्यम् । त्रिसन्ध्यं षट् लक्षाणि जपेत् । जपपरिसमाप्ते च कर्णिकारपुष्पाणां शुक्लचन्दनमिश्राणां कुङ्कुममिश्राणां वा शतसहस्राणि जुहुयात् । पूर्ववत् तथैवाग्निं प्रज्वाल्य होमपर्यवसाने च पटप्रकम्पने मन्त्रित्वं पटरश्म्यवभासे निश्चरिते च रश्मौ राज्यं पटसमन्तज्वालमालाकुले चतुर्महाराजकायिकराज्यत्वं वाक्निश्चरणे पटे त्रयः त्रिदशेश्वरत्वं शक्रत्वं पटधर्मदेशननिश्चरणे बोधिसत्त्वत्रिभूमेश्वरत्वं पटवाहुमूर्ध्नि स्पर्शने पञ्चाभिज्ञासप्तभूमिमनुप्रापणदशबलनियतमनुपूर्वप्रापणमिति ॥

अथ साधकेन भगवंकाश्यपभाषितेन मन्त्रे साधिते क्षुत्पिपासाप्रतिघातार्थमनुप्राप्ते तेनैव विधिना तेनैवोपकरणेन मन्त्रचर्यार्थीसाधनोपयिके धर्मे समनुष्ठेयम् । नान्यथा सिद्धिरिति ॥

एवमनुपूर्वमन्त्रचर्यामनुवृत्तिः समन्तादनुपूर्व्या नियतं सिद्ध्यति । द्रव्योपकरणोपध्यापि शेषाणि मणिरत्नानि यथापूर्वनिर्दिष्टानीति ॥

मन्त्रज्ञो मन्त्रजापी च विधिवान्ध्यानमानसः ।
तस्मिं देशे तदा मन्त्री शुचिजश्चैतदोदनम् ॥

भुक्त्वा तु तुष्टमनसो परिपुष्टेन्द्रियः सदा ।
गृह्य तं पात्रशेषं तु सरिद्गच्छे शुभोदके ॥

एकान्ते स्थापयित्वा तु तिर्यंभ्यो प्रदां तदा ।
तिर्यंभ्यो तु दत्वा वै पात्रं प्रक्षाल्य यत्नतः ॥

मृन्मयं तु पुनः पाकं ततः कुर्वत यत्नतः ।
शेपपात्रं तु कुर्वीत निस्नेहं निरामिपम् ॥

गन्धं चैव सन्त्याज्य शेपपात्रं मुनिर्वरः ।
यस्मिन् पात्रे अटे भिक्षां न जग्धे तत्र भोजनम् ॥

न भक्षे तत्र भक्षाणि फलद्रव्याणि तु सदा ।
न भुञ्जेत् पद्मपत्रेण न चापि कुवलयोद्भवैः ॥

सौगन्धिकेपु वर्जीत न भुञ्जे तत्र मन्त्रिणः ।
कौमुदा ये च पत्रा वै प्लक्षोदुम्बरसम्भवा ॥

न चापि वटपत्रैस्तु कर्णशाकोगौल्मिणाम् ।
न चापि आम्रपत्रेपु तथा पालाशमुद्भवैः ॥

शालपत्रैः शिरीपैश्च वोधिवृक्षसमुद्भवैः ।
यत्रासौ भगवां बुद्धः शाक्यसिंहो निपण्णवां ॥

तं वृक्षं वर्जयेद् यत्नात् तत्काष्ठं चापि न खनेत् ।
नागकेसरवृक्षेपु न कुर्यात्पत्रशातनम् ॥

नापि भुञ्जे कदा कस्मिं सर्वे ते वर्जिता बुधैः ।
नापि लङ्घेत् कदा मोहा मुनीनां पर्णशालिनाम् ॥

समयाद् भ्रश्यते मन्त्री तेपां पर्णपु भोजने ।
अन्यपर्णैर्न भुञ्जीत भोजनं तत्र मन्त्रिणः ॥

मृन्मये ताम्रनिर्दिष्टैः तथा रूप्यैः सातमुद्भवैः ।
स्फटिकैः शैलमयैर्नित्यं तथा भोजनमाददे ॥

न भुञ्जे पर्णपृष्ठैस्तु तथा हस्ततले तथा ।
निवेद्यसम्भवा ये पर्णा मारारेर्दशवलात्मजां ॥

प्रत्येकखड्गिणां ये च तथा श्रावकपुङ्गलाम् ।
वर्जये तं जपी पर्णं पद्भ्यां चैव न लङ्घयेत् ॥

विविधां भक्षपूपां तु तथा पानं च भोजनम् ।
न मन्त्री आददे यत्नात् सर्वं चैव निवेदितम् ॥

जिनानां जिनचाराणां च तथा श्रावकपुङ्गलाम् ।
रत्नत्रयेऽपि दत्तं वै तं जापी वर्जयेत् सदा ॥

मन्त्रास्तस्य न सिद्ध्यन्ते स्वल्पमात्रापि देहिनाम् ।
कः पुनः श्रेयसा दिव्यं सर्वमङ्गलसम्मताम् ॥
पौष्टिकं शान्तिकं चैव सर्वाशापरिपूरिणम् ।
न सिद्ध्यन्ति तदा तस्य निवेद्य बलिभोजिनः ॥

शुचिनो दक्षशीलस्य घृणिनो धार्मिणस्तथा ।
सिद्ध्यन्ति मन्त्राः सर्वत्र शौचाचाररतस्य वै ॥
अग्र सर्वेषु दत्त्वाग्रं न भुङ्क्ते तत्र जापिनः ।
अन्यमन्नं न भुञ्जीत भुञ्जीतान्येभ्यो प्रतिपादितम् ॥
भोजनं स्वल्पमात्रं तु स्वदत्तं चापि आददे ।
य एव प्रवृत्तो मन्त्रज्ञो तस्य सिद्धि करे स्थिता ॥
अनेन विधिना तं जापी भोजनं आददेद् व्रती ।
मुनिभिः सम्प्रशस्तं तु सर्वमन्त्रेषु साधने ॥
विधिदृष्टां समासेन सर्वभोजनकर्मसु ।
अतः परं प्रवक्ष्यामि मन्त्रं सर्वशोधने ॥

उपस्पृश्य ततो जापी इदं मन्त्रं पठेत् सदा ।
सप्तवारां ततो मन्त्री जपित्वा कायशोधनम् ॥
शृणु तस्यार्थविस्तारं भूतसङ्घानुदेवता ।
सर्वकायं परामृश्य इदं मन्त्रं वदेन्मुनी ॥
नमः सर्वबुद्धानामप्रतिहतशासनानाम् । तद्यथा —

"ॐ सर्वकिल्बिषनाशनि ! नाशय नाशय सर्वदुष्टप्रयुक्तां समयमनुस्मर हूँ जः स्वाहा ॥" अनेन मन्त्रेण भिक्षोदनं यं वा अन्यं परिभुङ्क्ते स मन्त्राभिमन्त्रितं कृत्वा परिभोक्तव्यः । भुक्त्वा चोपस्पृश्य पूर्ववत् मूर्ध्नप्रति सर्वं कायं परामृज्य ततो विश्रान्तव्यम् । विश्राम्य च मुहूर्तं अर्धार्धेहयामं वा, ततः पटमभिवन्द्य सर्वबुद्धानां सद्धर्मपुस्तकां वाचयेत् । आर्यप्रज्ञापारमित आर्यचन्द्रप्रदीपसमाधिं आर्यदशभूमकः आर्यसुवर्णप्रभासोत्तमः आर्यमहामायूरी आर्यरत्न-

केतुधारिणीम् । एषामन्यतमान्यतमं वाचयेद् युगमात्रसूर्यप्रमाणतालम् । ततो परिनाम्य यथापरिशक्तितश्च वाचयित्वा पुस्तकामुत्सार्य शुचिवस्त्रप्रच्छन्नां वा कृत्वा सद्धर्मं प्रणम्य ततो स्नानायमन्त्रतेरे नदीकूलं महाह्रदं वा गत्वा निष्प्राणकां मृत्तिकां गृह्य सप्तमन्त्राभिमन्त्रितां कृत्वा अनेन मन्त्रेण जलं क्षिपेत् । कतमेन ॥

नमः समन्तबुद्धानामप्रतिहतशासनानाम् । तद्यथा — "ॐ सर्वदुष्टां स्तम्भय हूँ इन्दीवरधारिणे कुमारक्रीडरूपधारिणे बन्ध बन्ध समयमनुस्मर स्फट् स्फट् स्वाहा ।" अनेन तु रक्षां कृत्वा दिशावन्धं च सहायानां च मण्डलबन्धं तुण्डबन्धं सर्वदुष्टप्रदुष्टानां सर्वाकर्षणं च शुक्रबन्धं सप्तजप्तेन सूत्रेण कटिप्रदेशावबद्धेन सर्वतश्च पर्यटेत् । जपकाले च सर्वस्मिं सर्वकालस्नानकाले च दुष्टविघ्नविनाशनमुप्रशमनार्थमस्य मन्त्रस्य लक्षमेकं जपेत् । ततः सर्वकर्माणि करोति । पञ्चशिखमहामुद्रोपेतं न्यसेत् सर्वकर्मेषु । सर्वां करोति नान्यथा भवतीति ॥

ततः साधकेन मृद्गोमयचूर्णादीं गृह्य स्नायीत यथासुखम् । निष्प्राणकेनोदकेन स्नातव्यम् । सर्वत्र च सर्वकर्मेसु निष्प्राणकेनैव कुर्यात् । ततो स्नात्वा मृद्गोमयानुलेपनैरन्यैर्वा सुगन्धगन्धिभिश्चोपकरणाविशेषैः नापि सलिले खेटमूत्रपुरीषादीनुत्सृजेत् । सलिलपीकधारां वा नोत्सृजे । नापि क्रीडेत् करुणायमानः सर्वसत्त्वानामात्मनश्च प्रत्यवेक्ष्य अनात्मशून्यदुःखोपरुद्धवेदनाभिनुन्नं रूर्णमिव मातृविप्रयोगदुःखितसत्त्वो । एवं साधनरहितो मन्त्रज्ञो हि तथाविधं शतनपतनविकिरणविध्वंसनादिभिः दुःखोपधानैरुपरुद्ध्यमानं संसारार्णवगहनस्थमात्मानं पश्येत् । अलयनमत्राणमशरण अदीनमनसमात्मानमवेक्ष्य । ध्यायीत कण्ठमात्रमुदकस्थो नाभिमात्रमुदकस्थितो वा तत्रैव तु जलमध्ये चित्तैकाग्रतामुपस्थाप्य ॥

प्रथमं तावन्महापद्मविटपं महापद्मपुष्पोपेतं महापद्मपत्रोपशोभितं चारुदर्शनरत्नमयं वैदूर्यकृतगण्डं मरकतपत्रं पद्मकेसरं स्फटिकसहस्रपत्रं अतिविकसितं तदा न जातस्फटिकपद्मरागपुष्पोपशोभितं

तत्रस्थं सिंहासनं रत्नमयमनेकरत्नोपशोभितं दुष्यपुगमतिच्छन्नं तत्रस्थं बुद्धं भगवन्तं ध्यायीत धर्मं देशयमानं कनकावदातं समन्तज्वालमालिनं ध्याय प्रभामण्डलमण्डितं महाप्रमाणं व्योम्निरिव उल्लिखमानं पर्यङ्कोपनिपण्णम्। दक्षिणतश्च आर्यमञ्जुश्रीः सर्वालङ्कारवरोपेतं पद्मासनस्थं चामरग्राही भगवतः स्थितको नो निपण्णः रक्तगौराङ्गः पिङ्गकुङ्कुमवर्णो वा वामतश्च आर्यावलोकितेश्वरः शरत्काण्डगौरः चमरव्यग्रहस्तः। एवमष्टौ बोधिसत्त्वाः आर्यमैत्रेयः समन्तभद्रः क्षितिगर्भः गगनगञ्जः सर्वनीवरणविष्कम्भी अपायजह आर्यवज्रपाणि सुधनश्चेत्येते दश बोधिसत्त्वाः दक्षिणतो प्रत्येकबुद्धाः अष्टौ ध्यायीत। चन्दनः गन्धमादनः केतुः सुकेतु सितकेतु ऋष्टउपारिष्टनेमिश्चेति। अष्टौ महाश्रावकाः तत्रैव स्थाने। तद्यथा — आर्यमहामौद्गल्यायन शारिपुत्र गवाम्पति पिण्डोल भरद्वाज पिलिन्दवत्सः आर्यराहुलः महाकाश्यप आर्यानन्दश्चेति। इत्येषां महाश्रावकाणां समीपे अनन्तं भिक्षुसङ्घं ध्यायीत। प्रत्येकबुद्धानां समीपे अनन्तां प्रत्येकबुद्धां ध्यायीत। महाबोधिसत्त्वानां चाष्टासु स्थानेषु अनन्तं बोधिसत्त्वसङ्घं ध्यायीत॥

एवं शस्तं नभस्तलं महापर्षन्मण्डलोपेतं ध्यायीत। आत्मनश्च नाभिमात्रोदकस्थो नानाविधैः पुष्पैः दिव्यमानुष्यकैः मान्दारवमहामान्दारव पद्ममहापद्मधातुःकारिकइन्दीवरकुसुमैश्च नानाविधैः महाप्रमाणैः महाकूटस्थैः पुष्पपुटैः भगवतः पूजां कुर्या। सर्वश्रावकप्रत्येकबुद्धबोधिसत्त्वानां चूर्णच्छत्रध्वजपताकैः दिव्यमानुष्यकैः प्रभूतैः प्रदीपकोटीनयुतशतसहस्रैश्च पूजां कुर्यान्मनोरमाम्॥

एवं च बलिधूपनिवेद्यादिसर्वपूजोपस्थानान्युपकरणानि दिव्यमानुष्यकान्युपहर्तव्यानि। भगवतश्च शाक्यमुने ऊर्णकोशाद्रश्मिमभिनिश्चरन्तं चात्मानमवभासयमानं सर्वासां ध्यायीत। समनन्तरध्यानगतस्य जापिनः ब्राह्मपुण्यफलावाप्तिः नियतं बोधिपरायणो भवतीति॥

इत्येवमादयो ध्यानाः कथिता लोकपुङ्गवैः।
श्रेयसः सर्वभूतानां हितार्थं चैव मन्त्रिणाम्॥

आदिमुख्यो तदा ध्यानो हितार्थं सर्वमन्त्रिणाम् ।
कथयामास सत्त्वेभ्यो मुनिः श्रेष्ठोऽथ सत्तमः ॥

मण्डलाकारतद्वेपप्रथमे मुनिभाषिते ।
द्वितीयं मण्डलं चापि तृतीयं मन्त्रमतः परम् ॥

प्रथमे उत्तमा सिद्धिः मध्यमे तु तथा परम् ।
कन्यसे क्षुद्रसिद्धिस्तु निगम्य मुनिपुङ्गवः ॥

पटाकारं तथा ध्यानं ज्येष्ठमध्यमकन्यसाम् ।
समासेन तु तद्ध्यानं सर्वकिल्बिषनाशनम् ॥

नातःपरं प्रपश्येत ध्यानाकारमनीषिणः ।
सिद्ध्यान्ति तस्य मन्त्रा वै ध्यानेऽस्मिं सुप्रतिष्ठिताः ॥

यथेष्टं विधिनाख्यातं ध्यानं ध्यात्वा तु जापिनः ।
विसर्ज्य तत्र वै मन्त्रं अर्घं दत्त्वा यथासुखम् ॥

उत्तीर्य तस्माज्जलौघात्तु ततो गच्छेद् यथासुखम् ।
स्थानं पूर्वनिर्दिष्टं विधिदृष्टं सुसंयतम् ॥

जपेन्मन्त्रं तदा मन्त्री पूर्वकर्म यथोदिते ।
विसर्ज्य मन्त्रं वै तंत्र आहूता याश्च देवताः ॥

ततो निकृत्वा रक्षा सहायानां वा तथैव च ।
कुशलो कर्मतत्त्वज्ञो विधिकर्मरतो मतः ॥

विविधैः स्तोत्रोपहारैस्तु संस्तुत्वा अग्रपुङ्गलम् ।
स्वमन्त्रं मन्त्रनाथं च श्रावकां प्रत्येकखड्गिणा ॥

बोधिसत्त्वां महासत्त्वां त्रैलोक्यानुग्रहक्षमां ।
ततोत्थाय पुनस्तस्मादासनान्मन्त्रजापिनः ॥

दूरादावसथाद् गत्वा वहिर्व्रातान्तवर्जिताम् ।
विसृजेच्छदसिङ्घाणं मूत्रप्रस्रवणं तथा ॥

दिवा उदङ्मुखं चैव रात्रौ दक्षिणामुखर्म् ।
न तत्र चिन्तयेदर्थां मन्त्रजापी कदाचन ॥

न जपेत्तत्र मन्त्रं वै स्वकर्मकुलभाषितम् ।
प्रशस्ता गतिचिह्नाद्यैः उपविष्टो तदा शुचि ॥
उपस्पृश्य जले शुद्धे शुचिवस्त्रान्तगालिते ।
प्रक्षाल्य चरणौ जानोर्मृत्तिकैः सप्त एव तु ॥
प्रश्रुतो सप्त गृह्णीयात् + + + + + + + + + ।
पुरीषस्रावणे त्रिंशत् उभयान्ते करे उभौ ।
खेटच्छोरणे चैव सिङ्घाणे द्वयं तथा ॥
उपस्पृश्य ततो यत्ना दूराद्वास्था शुचि ।
शब्दमात्रं तथा गत्वा अध्वाग्न्यदिपुक्षेपणा ॥
ततो परे यथेष्टं तु दक्षिणान्तां दिशां वहिः ।
भ्रभ्रकेदारमीपर्ये सिकतास्तीर्णे तथैव च ॥
नदीवर्जां तु पारं चैत्यंजेदवस्करदाशुचिम् ।
प्रच्छन्ने रहसि विश्रब्धो प्रान्ते जनविवर्जिते ॥
तदा भवे तु बिन्मन्त्री कुर्यात् पूतिच्छोरणम् ।
न मन्त्रजापी कालज्ञो कुर्याद् वेगविधारणम् ॥
यथेष्टं ततो गत्वा देशं वै. शुचिं प्रान्ते यथाविधि ।
कुर्दिः प्रस्रवणं कृत्वा तस्मिंम देशे यथासुखम् ॥
अरण्ये वा रहसिच्छन्ने गुप्ते वा चैव भूतले ।
मौनी सङ्गवर्जीत कुर्यात् प्रस्रवणं सदा ॥
विगते मूत्रपुरीषे तु कुर्यात् शौचं सदा व्रती ।
सुकुमारां सुस्पर्शपिष्टां तु मृत्तिकां प्राणवर्जिताम् ॥
गृह्य तिस्रं तथा चैकं गुदौ सदा उभयान्ते च करौ तथा ।
गृह्य पूर्वं तु निर्दिष्टमन्त्रिणा च सदा शुचि ॥
पादौ प्रक्षाल्य यत्नेन दक्षिणं तु ततः परम् ।
अन्योन्यनैवं संश्लिष्य पादा चैव सदा जपी ॥
विस्तरः कथितं पूर्वं शौचं मन्त्रजापिनाम् ।
गन्धनिर्लेपशौचं तु कथितं शुचिभिः पुरा ॥

एतत् संक्षेपतो ह्युक्तं शौचं मन्त्रजातिनाम् ।
गन्धनिर्लेपतो शौचं शुचिरेव सदा भवेत् ॥
दृश्यते सर्वतन्त्रेऽस्मिन इत्युवाच मुनिप्रभुः ।
उपस्पृश्य ततो जापी सिद्धकर्मरतो यतिः ॥
विधिना पूर्वमुक्तेन अन्तः शुद्धेन मानसा ।
शौचं पञ्चविधं प्रोक्तं सर्वतन्त्रेषु मन्त्रिणाम् ॥
कायशौचो तथा पा + + ध्यानश्चैव कीर्त्यते ।
चतुर्थं सत्यशौचं तु आपः पञ्चम उच्यते ॥
सत्यधर्मा जितक्रोधो तन्त्रज्ञः शास्त्रदर्शिनः ।
सूक्ष्मतत्त्वार्थकुशलाः मन्त्रज्ञः कर्मशालिनः ॥
हेतुदध्यात्मकुशलाः सिद्धिस्तेषु न दुर्लभा ।
न भाषेद्वितथा पूजा सत्यधर्मविवर्जिनाम् ॥
क्रूरां क्रूरतरां चैव सर्वसत्यविवर्जिताम् ।
विद्वेषणीं सरोषां कर्कशां मर्मघट्टनीम् ॥
सत्यधर्मविहीनां तु परसत्त्वानुपीडनीम् ।
पिशुनां क्लिष्टचित्तां च सर्वधर्मविवर्जिताम् ॥
हिंसात्मकां तथा नित्यं कुशीलां धर्मचारिणीम् ।
मन्त्रजापी सदावर्ज्या ग्राम्यधर्मं तथैव च ॥
मिथ्यासं वक्रोधं वै परलोकातिभीरुणा ।
गर्हितं सर्वबुद्धैस्तु बोधिसत्त्वैस्तु धीमतैः ॥
प्रत्येकखड्गिभिर्नित्यं श्रावकैश्च सदा पुनः ।
मृषावादं तथा लोके सिद्धिकामार्थिनां भुवि ॥
नरका घोरतरं याति मृषावादोपभाषिणः ।
पुनस्तिर्यग्भ्यो तथा प्रेते यमलोके सदा पुनः ॥
वसते तत्रैव नित्यं मृषावादोपजीविनः ।
तपने दुर्पनिघोरे कालसूत्र प्रतापने ॥

सञ्जीवेऽसिपत्रे च तथैव शाल्मलीवने ।
बहुकल्पां वसेत् तत्र मृषावादी तु जन्तुनः ॥
कुतस्तस्य तु सिद्ध्यन्ते मन्त्रा वै मिथ्यभाषिणः ।
उद्वेजयति भूतानि मिथ्यावाचेन मोहितः ।
ततोऽसौ मूढकर्मा वै मन्त्रसिद्धिमपश्ययम् ॥
एवंच वदते वाचां नास्ति सिद्धिस्तु मन्त्रिणाम् ।
कुतस्तस्य भवेत् सिद्धिः बहुकल्पा न कोटिभिः ॥
प्रतिक्षिप्त येन बुद्धानां शासनं तु महीतले ।
ततोऽसौ पद्यते घोरे अविद्यां तु महाभये ॥
सञ्जीवे कालसूत्रे च नरके च प्रतापने ।
महाकल्पं वसेत् तत्र सद्धर्मो मे विलोपनात् ॥
निरये घोरतमसे पच्यन्ते बालिशा जनाः ।
सद्धर्मोवमन्यं तु अन्धेन तमसा वृता ॥
अज्ञाना बालभावाद्वा मूढा मिथ्याभिमानिनः ।
पतन्ति नरके घोरे विद्याराजावमन्य वै ॥
तस्मात् पापं न कुर्वीत मिथ्याकार्यं च गर्हितम् ।
सद्धर्मं चावमन्यं वै मिथ्यादृष्टिश्च गर्हिताः ॥
तस्मात् श्राद्धो सदा भूत्वा सेवेन्मन्त्रविधिं सदा ।
सत्यवादी च मन्त्रज्ञो सत्वानां च सदा हितः ।
भजेत मन्त्रं मन्त्रज्ञो ध्रुवं सिद्धिस्तु तस्य वै ॥
करोति विविधां कर्मा उत्कृष्टाधममध्यमाम् ।
क्रिया हि कुरुते कर्म नाक्रिया हि हितं सदा ॥
क्रियाकर्मसमायुक्तो सिद्धिस्तस्य सदा भवेत् ।
क्रियार्थसर्वमर्थत्वात् कर्ममर्थसदाक्रिया ॥
अक्रियार्थं क्रियार्थं च क्रियाकर्म च युज्यते ।
सफलं चैव क्रिया यस्य क्रियां चैव सदा कुरु ॥

कृत्यं कर्मफलं चैवं कृत्यकर्मफलं सदा ।
अफलं फलतां यान्ति फलं चैव सदाफलम् ॥
अफला सफलाश्चैव सर्वे चैव फलोद्भवाः ।
संयोगात् साध्यते मन्त्रं संयोगो मन्त्रसाधकः ।
असंयोगवियोगश्च वियोगो संयोगसा" ..: ॥
साध्यसाधनभावस्तु सिद्धिस्तेषु न सिद्ध्यते ।
सिद्धिद्रव्यास्तु सर्वत्र विरुद्धाः सिद्धिहेतवः ॥
अप्रसिद्धा सिद्धमन्त्राणां मन्त्राः साधनकारणाः ।
कर्तुरीप्सिततमं कर्म कर्मरिप्सु क्रियाभवः ॥
अकर्म सर्वकर्मेषु न कुर्यात् कर्महेतवः ।
मन्त्रतन्त्रार्थयुक्तश्च सकलं कर्ममारभेत् ॥
आरब्धं आरभेत् कर्म अकर्मां चैव नारभेत् ।
अनारम्भक्रिया मन्त्रा न सिध्यन्ते सर्वदेहिनाम्
पुरा गीतं मुनिभिः श्रेष्ठैः सर्वसद्धर्मभाषिभिः ।
समयं जिनपुत्राणां मन्त्रवादे तु दर्शितम् ॥
साधकः सर्वमन्त्रज्ञो कल्पराजे इहापरे ।
देशितं मन्त्ररूपेण मार्गं बोधिकारणम् ॥
सिध्यन्ति मन्त्राः सर्वे मे यत्र युक्ति सदा भवेत् ।
सोऽचिरेणैव कालेन सिद्धिं गच्छेन्मनीषिताम् ॥
शिवार्थं सर्वभूतानां सम्बुद्धैस्तु म + + + ।
+ + + + + रूपेण निर्वाणपुरगामिनाम् ॥
बोधिमार्गं तथा नित्यं सर्वकर्मार्थपूरकम् ।
बुद्धत्वं प्रथमं स्थानं निष्ठं तस्य परायणम् ॥
अनाभोगे तथा सिद्धिः प्राप्नुयात् सफलानिह ।
विचित्रकर्मधर्मज्ञा मन्त्राणां करणं भवेत् ॥
शीलध्यानविमोक्षाणां प्राप्तिरेषा समासतः ।
कथिता जिनमुख्यैस्तु सिद्धिः सूर्वार्थसाधना ॥

पुष्कलान् प्राप्नुयादर्थां उत्तमां गतिनिश्रयाम् ।
यक्षाध्यक्ष तथा नित्यं अधमा राज्यकारणा ॥

नृसुरासुरलोकानां प्राप्नुयात् सर्वमन्त्रिणः ।
आधिपत्यं तथा तेषां कुरुते सफलां क्रियाम् ॥

शौचाचारसमायुक्तो शीलध्यानरतः सदा ।
जपेन्मन्त्रं ततो मन्त्री सर्वमन्त्रेषु भाषिताम् ॥

चित्रां कुरुते कर्मां तथा चोत्तममध्यमान् ।
कन्यसांश्चैव कुर्वीत भूतिमाकाङ्क्ष मन्त्रिणः ॥

कन्यसे भोगवृद्धिस्तु मध्यमे चोर्ध्वदेहिनाम् ।
उत्कृष्टं चोत्तमेनैव सम्प्राप्नोति जापिनः ॥

जपान्ते विश्रमेन्मन्त्री यावत् कालमुदीक्षयेत् ।
साधनं तत्र कुर्वीत प्राप्तकाले तु जापिनः ॥

सिध्यन्ति सर्वकर्माणि तथापि तत्र नित्यं जापी पापक्षयाच्च पुंसाम् ।
करोति मन्त्री विधिपूर्वकर्म यत्तत् कृतं कर्मपरम्परासु ॥

सिद्धिः स्थिता तस्य भवे कदाद्वा समग्रतां यात्र लभेत पुंसः ।
जपेत मन्त्रं पुन मन्त्रजापी पापक्षयार्थं तत कर्मनाशना ॥

सिध्यन्तु मन्त्रास्तु तथोत्तमानि ये मध्यमा कन्यसलोकपूजिता ।
जपेन पापं क्षपयन्त्यशेषं यत्तत् कृतं जन्मपरम्परासु ॥

नश्यन्ति पापा तथ सर्वदेहिनां करोति चित्रां त्रिविधाङ्गभूषणाम् ।
मनोरमां सर्वगुणानुशालिनां यक्षे समावासनृपत्वनित्यम् ॥
सर्वार्थसिद्धिं समवाप्नुवन्ति मन्त्रं जपित्वा तु तथागतानामिति ॥

बोधिसत्त्वपिटकावतंसकान्महायानवैपुल्यसूत्राद् आर्यमञ्जुश्रीमूलकल्पाद्
एकादशमपटलविसराच्चतुर्थः साधनोपयिककर्मस्थानजपनियम-
होमध्यानशौचाचारसर्वकर्मविधिसाधनपटलविसरः
समाप्त इति ।

## अथ द्वादशः पटलविसरः ।

अथ खलु भगवांश्छाक्यमुनिः पुनरपि सर्वावन्तं शुद्धावासभवनमवलोक्य मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । शृणु त्वं मञ्जुश्रीः! त्वदीयं विद्यामन्त्रानुसारिणां सकलसत्त्वार्थसम्प्रयुक्तानां सत्त्वानाम् । येन जाप्यन्ते मन्त्राः येन वा जाप्यन्ते अक्षसूत्रविधिं सर्वतन्त्रेषु सामान्यसाधनोपयिकसर्वमन्त्राणाम् । तं शृणु साधु च सुष्ठु च मनसि कुरु । भाषिष्ये ॥

एवमुक्ते मञ्जुश्रीः कुमारभूतो भगवन्तमेतदवोचत् । साधु भगवां! तद् वदतु अस्माकमनुकम्पार्थं सर्वमन्त्रचर्यानुसमयप्रविष्टानां सत्त्वानामर्थाय सर्वसत्त्वानां च ॥

एवमुक्ते मञ्जुश्रिया कुमारभूतेन भगवानस्यैतदवोचत् । शृणु त्वं मञ्जुश्रीः! भाषिष्ये विस्तरविभागशो; येन सर्वमन्त्रचर्याभियुक्ताः सत्त्वाः सर्वार्थां साधयन्ति । कतमं च तत् ॥

आदौ तावन्मन्त्रं भवति । नमः समन्तबुद्धानामचिन्त्याद्भुतरूपिणाम् । तद्यथा—ॐ कुरु कुरु सर्वार्थां साधय साधय सर्वदुष्टविमोहनि! गगनावलम्बे! विशोधय स्वाहा ।

अनेन मन्त्रेण सर्वाक्षसूत्रेषु कर्माणि कुर्यात् । शोधनवेधनगृह्णनविरेचनादीनि कर्माणि कुर्यात् प्रथममक्षसूत्रेषु वृक्षं चाभिमन्त्रयेत् ।

सप्तत्रिंशतिवाराणि कृतरक्षो व्रती तदा ।
एकरात्रं स्वपे तत्र स्वप्ने चैव स पश्यति ॥

अमनुष्यं रूपसम्पन्नं विरूपं वा चिरकालयम् ।
ब्रुवते तस्य सौमित्री गृह्यमर्थयथावनः ॥

ततोऽसौ साधको गच्छेत् प्रातरुत्थाय तं तरुम् ।
चापि पश्यते स्वप्नं विरूपं वा महोत्कटम् ॥

वर्जयेत् तं तरुं मन्त्री अन्यत्रं वाथ गच्छेय ।
प्रथमं रुद्रमक्षं तु इन्द्रमेक्षमतः परम् ॥

पुत्रञ्जीवकमिष्टं वा अन्यं वा फलसम्भवः ।
वृक्षारोहसुसम्पन्नैः सहायैश्चापि मारुहेत् ॥
सहायानामभावेन स्वयं वा आरुहेज्जपी ।
ऊर्ध्वशाखाफलस्था + + + + + + + + + + ॥
+ + + + + + तस्मिं ऊर्ध्वशाखाविनिर्गतः ।
ऊर्ध्वशाखां फलं गृह्य ऊर्ध्वकर्म प्रयोजयेत् ॥
ऊर्ध्वे उत्तमा सिद्धिः कथितं ह्यग्रपुङ्गलैः ।
मध्यमे मध्यमा सिद्धिः कन्यसे ह्यधमेवतु ॥
फलं तेषु समादाय अकुप्सां प्राणिभिः सदा ।
पश्चिमे शाखिनां प्राप्य सिध्यन्ते द्रव्यहेतवः ॥
उत्तरे यक्षयोन्यादीं आनयेद्देवतां सह ।
कृत्यमाकर्षः ख्यातो सर्वभूतार्थशान्तये ॥
देवतासुरगन्धर्वा किन्नरामथ राक्षसा ।
विधे सुकुरुते कर्म सर्वभूतार्थपुष्टये ॥
सफलां कुरुते कर्मां अशेषां भुवि चेष्टिताम् ।
पूर्वायां दिशि ये शाखा तत्रस्था फलसम्भवा ॥
तेषु कुर्यात् सदा यत्नाद् दीर्घायुष्यार्थहेतवः ।
करोति विविधाकारां यत्र सिद्धिः फलैः सदा ॥
या तु दक्षिणतो गच्छेत् शाखा पर्णानुशालिनी ।
तं जपी वर्जयेद् यस्मात् सत्त्वानां प्राणहारिणी ॥
दक्षिणास्तशाखासु फला ये तु समुच्छ्रिता ।
अक्षैः तैः समं जप्याः शत्रूणां पापनाशनम् ॥
तं जापी वर्जयेद् यत्नाद् बहुपुण्यानुहेतवः ।
अधःशाखावलम्बस्था फला ये तु प्रकीर्तिता ॥
गच्छेद् रसातलं तैस्तु दानवानां च योषिताम् ।
तैः फलैः अधमत्रं न ग्रहीता सम्प्रकीर्तिता ॥

अधो या यां तु निलयाः पातालं तेन तं व्रजेत् ।
प्रविश्य तत्र वै दिव्यं सौख्यमासाद्य जापिनः ॥
आसुरीभिः समासक्तो तिष्ठेत् कल्पं वसेच्चसौ ।
गृह्य अक्षफलं सर्वां ततो अवतरेज्जपी ॥
कृतरक्षो सहायैस्तु ततो गच्छेद् यथासुखम् ।
गत्वा तु दूरतः स्थानं शुचौ देशे तथा नित्यम् ॥
तिष्ठेत्तत्र तु मन्त्री शोधयेमक्षमुद्भवाम् ।
गृह्य अक्षफलद्युक्तो संशोध्यं वाथ सर्वतः ॥
संशोध्य सर्वतः अक्षां ग्रथयेन्मन्त्रशालिनः ।
शुसप्तरष्ट एकं वा त्रारां ते एकविंशति ॥
शोधयेन्मत्रसत्त्वज्ञो पूर्वमन्त्रेण तुः सदा ।
सप्तजप्तेथमष्टैर्वा ततो शुद्धिः समिष्यते ॥
कन्याकर्तितसूत्रेण पद्मनालासमुत्थितैः ।
त्रिगुणैः पञ्चभिर्युक्तो कुर्याद् वर्त्तितकं व्रती ॥
तं ग्रन्थेन्मत्रंतत्त्वज्ञो फलां सूक्ष्मां सुवर्तुलाम् ।
अच्छिद्रां प्राणकैर्नित्यं अव्यङ्गां वाप्यकुत्सिताम् ॥
शोभनां चारुवर्णांस्तु अच्छिद्रामस्फुटितां तथा ।
रुद्राक्षं सुतजीवं वा इन्द्राक्षफलमेव तु ॥
अरिष्टां शोभनां नित्यं अव्यङ्गां फलसम्मताम् ।
ग्रथेन्मन्त्री सदा युक्तो अक्षमालां तु यत्नतः ॥
सौवर्णमथ रूप्यं वा माणिक्यं स्फाटिकं समम् ।
शङ्खं सुसारं चैव मौक्तं वापि विधीयते ॥
प्रवालैर्विविधा माला कुर्यादक्षमालिकाम् ।
अन्यरत्नांश्च वै दिव्यान् कुर्यात् शुभमालिकाम् ॥
पार्थिवैर्नर्तुलैर्गुलिकैर्ग्रथेत सूत्रे समाहितः ।

कुशाग्रग्रथिकां चैव कुर्याद् यत्नानुजापिनः।
शताष्टं पञ्चविंशं वा पञ्चाशं चैव मध्यमाम्॥

एतत्प्रमाणमालां तु ग्रथेन्मन्त्री समाहितः।
सहस्रं साष्टकं चैव कुर्यान्मालां तु ज्येष्ठिकाम्॥

एतच्चतुर्विधां मालां ग्रथितं नित्यमन्त्रिभिः।
ततो ग्रथितुमाला वै त्रिमात्रां द्विक एव वा॥

पुष्पलोहमयैः कटकैः सौवर्णैः रजतैस्तथा।
ततो ताम्रमयैर्वापि ग्रथेन्मालां समासतः॥

ततोऽन्ते पाशकं कृत्वा न्यसेत् तदानुपूर्वतः।
वेष्टयेत् तं तृसन्ध्यन्ताद् यथा वद्धोऽवतिष्ठति॥

परिस्फुटं तु ततो कृत्वा मण्डलाकारदर्शनम्।
सर्वभोगतथाकारं परिवेष्ट्याभिभूषितम्॥

मुक्ताहारसमाकारो कण्ठिकाकारनिर्मितः।
स्नात्वा शुभे अम्भे सरिते वापि निर्मले॥

स्नात्वा च यथापूर्वं उत्तिष्ठे सलिलालयात्।
उपस्पृश्य यथायुक्त्या गृह्यमक्षाणुमन्त्रितम्॥

प्रक्षाल्य पञ्चगव्यैस्तु तथा मृत्तिकचूर्णिकैः।
प्रक्षाल्य शुभे अम्भे सुगन्धैश्चानुलेपनैः॥

प्रशस्तैर्वर्णकैश्चापि श्वेतचन्दनकुङ्कुमैः।
प्रक्षाल्य यत्नतो तस्मात् ततो गच्छेदुदयं तथा॥

यथास्थानं तु गत्वा वै यत्रासौ पटमध्यमः।
जिनश्रेष्ठो मुनिर्मुख्यो शाक्यसिंहो नरोत्तमः॥

शास्तुविम्बे तथा नित्यं भुवि धातुवरे जिने।
स + + + + + + + + + + + समीपतः॥

[illegible]

अहोरात्रोपितो भूत्वा ददौ मालां मुनिसत्तमे ।
कृतजापी तथा पूर्वं प्रमाणेनैव तत्समः ॥
परिजप्य ततो मालां रात्रौ तत्रैव संन्यसेत् ।
स्वपेत् तत्रैव मन्त्रज्ञः कुशसंस्तरणे भुवि ॥
स्वप्ने यत्रसौ पश्य शोभनां स्वप्नदर्शनाम् ।
सफलां स्वप्ननिर्दिष्टां सिद्धिस्तस्य विधीयते ॥
बुद्धश्रावकखड्गीणां स्वप्ने यत्र दृश्यते ।
सफलं सिद्ध्यते मन्त्री ध्रुवं तस्य विधिक्रिया ॥
कुमाररूपिणं बालं विचित्रं चारुदर्शनम् ।
स्वप्ने यत्रसौ दृष्ट्वा मालां दद्या तथैव च ॥
अमोघं तस्य सिद्ध्यन्ते मन्त्रा सर्वार्थसाधका ॥ इति ।

बोधिसत्त्वपिटकावतंसकान्महायानवैपुल्यसूत्राद्
आर्यमञ्जुश्रियमूलकल्पाद् मध्यम-
पटविधानविसराद् द्वादशमः
अक्षसूत्रविधिपटलविसरः
परिसमाप्त इति ॥

अथ अष्टोदशः पटलविसरः।

अथ खलु भगवां शाक्यमुनिः पुनरपि पुनरपि शुद्धावासभवनमवलोक्य मञ्जुश्रियं कुमारभूतमामन्त्रयतेस्म। अस्ति मञ्जुश्रीः! त्वदीयं मन्त्रपटलसमस्तविन्यस्तविशेषविधिना होमकर्मणि प्रयुक्तस्य विद्यासाधकस्य अग्न्योपचर्याविशेषविधानतः। यत्र प्रतिष्ठिता सर्वविद्याचर्यानियुक्ता सत्त्वा प्रयुज्यन्ते। कतमं च तत्॥

रहस्यविद्यामन्त्रपदानि। तद्यथा — "ॐ उत्तिष्ठ हरिपिङ्गल! लोहिताक्ष! देहि ददापय। हूँ फट् फट् सर्वविघ्नां विनाशय स्वाहा।" एष सः मञ्जुश्रीः! परमाग्निहृदयं सर्वकर्मकरं सर्वकामदम्॥

आदौ तावत् साधकेन अनेनाग्निहृदयेन सकृज्जप्तं घृताहुतित्रयं अग्नौ होतव्यम्। अग्निराह्वानितो भवति। तथाप्रयुक्तस्य शान्तिकपौष्टिकरौद्रकर्मेषु त्रिधा समिधाकाष्ठानि भवन्ति॥

अशोककाष्ठं शान्त्यर्थे सार्द्रं चैव विशिष्यते।
वितस्तिहस्तमात्रं वा त्र्यङ्गुलं वापि चोच्छ्रतम्॥

स्निग्धाकारप्रशस्तं तु विधिरेषा विधीयते।
अकोटरं असुषिरं वापि शुकपत्रनिभं तथा॥

हरितं शुक्लवर्णं वा कृष्णवर्णं विवर्जयेत्।
कृमिभिर्न च भक्षितं वर्ज्यमकोटरं वापि सन्दधेत्॥

अन्यवर्णा प्रकृष्टास्तु अधर्मश्चैव वर्जिता।
नातिशुष्का न चार्द्रापि न च दग्धं समारभे॥

अपूतिं अवक्रं चैव अत्युच्चं चापि वर्जयेत्।
अग्निकुण्डं तथा कृत्वा चतुःकोणं समन्ततः॥

अधश्चैव खनेद्यत्नाच्चतुर्हस्तं प्रमाणतः।
त्रिहस्तं द्वे तु हस्तानि एकहस्तं तथैव च॥

चतुरश्रं चापि यत्नेन कुर्याच्चापाकृतिं तथा ।
वज्राकारसङ्काशं उभयाग्रं त्रिसूचिकम् ॥

कुर्यादाग्निकुण्डेऽस्मिन् द्विहस्ता तिर्यञ्च तत् ।
शुचौ देशे परामृष्टे नदीकूले तथा वरे ॥

एकस्थावरदेशे च श्मशाने शून्यवेश्मनि ।
कु + द्धोमं सुसंरब्धो पर्वताग्रे तथैव च ॥

शून्यदेवकुले नित्यं महारण्ये तथैव च ।
यानि साधनदेशानि कथितान्यग्रपुद्गलैः ॥

एतानि स्थानान्युक्तानि होमकर्मेति सर्वतः ।
कुशविण्डकोपविष्टेन स्थित्वा हस्तमात्रं ततः ॥

कुर्यात् तत्र मन्त्रज्ञो होमकर्म विशेषतः ।
क्षिप्रमेभिः स्थितं सिद्धिः स्थानेष्वेव न संशयः ॥

प्राङ्मुखो उदङ्मुखो वापि कुर्यात् शान्तिकपौष्टिके ।
दक्षिणेन तु रौद्राणि तानि मन्त्री तु वर्जयेत् ॥

प्राङ्मुखे शान्तिका सिद्धिः पौष्टिके चापि उदङ्मुखा ।
एभिर्मन्त्री सदाकालं मन्त्रजापं तु मारभेत् ॥

विल्वाम्रप्लक्षन्यग्रोधैः कुर्यात् कर्माणि पौष्टिकम् ।
आभिचारुककाष्ठानि शुष्ककट्वाम्लतीक्ष्णकाः ॥

तानि सर्वाणि वर्जीत निषिद्धा मुनिभिः सदा ।
शान्तिके पौष्टिके कर्म सार्द्रकाष्ठा प्रशस्यते ॥

रौद्रकर्म तथा कर्मा वर्जिता मुनिभिः सदा ।
तेषामभावे समिधानां काष्ठं तेषां तु कल्पयेत् ॥

समन्ता कुशसंस्तीर्णं उभयाग्रं तु कल्पयेत् ।
हरितैः स्निग्धसङ्काशैर्मयूरग्रीवसन्निभैः ॥

तथाविधैः कुशैर्नित्यं कुर्यात् शान्तिकपौष्टिकम् ।
मरकताकाशसङ्काशैस्तथा शुष्कैः त्रिणैः सदा ॥

कुर्यात् पावककर्माणि निपिद्धा जिनवरैरिह ।
निर्मले चाम्भसो शुद्धे कृमिभिर्वर्जिते सदा ॥

ततोऽभ्युक्ष्य समन्ता नै कुर्याचापि प्रदक्षिणम् ।
ज्वालयेद्व वह्नि युक्तात्मा उपस्पृश्य यथाविधि ॥

शुचिना तृणमूलेन कुर्यादुल्कां प्रमाणतः ।
मुष्टिमात्रं ततो कृत्वा ज्वालयेद् वह्नि यत्नतः ॥

न चापि मुखवातेन वस्त्रान्तेन वा सदा ।
निवासनप्रावरणाभ्यां वर्जिता नान्यमम्बरे ॥

न चापि हस्तवातेन उपहन्याभिरतेन वा ।
शुचिव्यजनेन तथा वस्त्रे पर्णे चापि प्रवातये ॥

समीरिते कृते वह्नौ एभिरुद्भूतमारुते ।
ज्वालयेदधिमन्त्रज्ञो होमार्थी सुसमाहितः ॥

त्रीन्वारां ततोऽभ्युक्षे कृत्वा वा अपसव्यकम् ।
आहुतित्रयं ततो दद्या आज्ये गव्ये तु तत्र वै ॥

ततो कुर्यात् प्रणामं वै सर्वबुद्धानतायिनाम् ।
स्वमन्त्रमन्त्रनाथं च ततो वन्दे यथेप्टतः ॥

अग्निहृदये ततो मन्त्रे जप्ते जप्तेन वै सदा ।
आह्वयेद् वह्नियुक्तात्मा पुष्पैरेव सुगन्धिभिः ॥

आह्वयाति नित्यं मन्त्रज्ञो स्थानं दद्याद् विचक्षणः ।
आसनं स्थानं दत्वा तु तेन मन्त्रेण नान्यथै ॥

दधिप्लुतमाज्यमिश्रं तु मध्वाक्तं समिधां त्रयम् ।
जुहुयादग्निपूजार्थं मन्त्रकर्मण सर्वतः ॥

उभयस्थं तदा कुर्यात् समिधानां द्रव्यमिश्रितम् ।
आज्यमध्वक्तसंयुक्तां दध्यमिश्रे तथैव च ॥

सहस्रं लक्षमात्रं वा शताष्टं चापि कल्पयेत् ।
गुह्यमन्त्री तथा मन्त्रं सकृज्जप्त्वा क्षिपेत् शिखौ ॥

ज्वालामालिने वह्नौ एकज्वाले तथैव च ।
शान्तिकर्मणि जुहुयात् निर्धूमे चापि पौष्टिकम् ॥
सधूमे रौद्रकर्माणि गर्हिते जिनवर्णिते ।
होमकर्मप्रयुक्तस्तु अग्नौ वर्णो भवेद्यदि ॥
शान्तिके सितवर्णस्तु शस्तं जिनवरैः सदा ।
सिद्ध्यन्ति तत्र मन्त्रा वै सितेऽग्नौ जुह्वतो यदि ॥
रक्तवर्णे तथा नित्यं पौष्टिकात् सिद्धिमिष्यते ।
कृष्णे वा धूमवर्णे च कपिले चापि पापिकम् ॥
इत्येषा त्रिविधा सिद्धिः त्रिधा वर्णप्रवर्तिता ।
अन्यवर्णाभ्रवर्णा वा विविधाकारवर्णिता ॥
न [illegible] मन्त्राणां पुनरपीह यदीरितं ।
यादृशं वर्णसङ्काशं विविधाकारवर्णनम् ॥
शान्ति [illegible] कृत्वा न पुनः कर्म समारभेत् ।
भूयोऽपि कृतजापस्तु मन्त्रसिद्धिर्भवेद् यदि ॥
पुनर्होमं प्रवर्तीत विधिदृष्टेन कर्मणा ।
विसर्ज्याह्वानना चैव वह्निं मन्त्रमुदीरयेत् ॥
पूर्वप्रकल्पितेनापि मण्डलेऽस्मिन् यथाविधि ।
तेनैव कुर्याद्धोमं वै विसर्जनाह्वाननकर्मणाम् ॥
सर्वकर्माणि तेनैव कुर्यात् तत्रैव कर्मणि ।
अग्निचर्या तथारूपं पटस्याग्रत मारभेत् ॥
सिद्ध्यन्ति तत्र मन्त्रा वै पूर्वमुक्तं तथागतैः ।
जिनवर्णितकर्माणि कुर्यान्न च तत्र वै सर्वतः ॥
नान्यकर्माणि कुर्वीत पापकानि विशेषतः ।
गर्हिता जिनवरैर्येद्ध विरुद्धा लोककुत्सिताम् ॥
उत्तिष्ठ चक्रवर्तित्वो बोधिसत्त्वोऽथ भूमिपः ।
पञ्चाभिज्ञं तथा लाभे देवत्वं वाथ सिद्ध्यति ॥

पटेऽस्मिन् नित्ययुक्तज्ञो होमकर्मविशारदः ।
पातालाधिपत्यं वा अन्तरीक्षचरामथ ॥
भौम्यदेवयक्षत्वं यक्षीमाकर्षणे सदा ।
राज्ये आधिपत्ये वा विषयेऽस्मिं ग्राम एव वा ॥
विद्याधरमसुरत्वं सर्वसत्त्ववशानुगे ।
आकर्षणे च भूतानां महासत्त्वां महात्मनाम् ॥
बोधिसत्त्वां महासत्त्वां दशभूमिसमाश्रिताम् ।
आनयेद्धोमकर्मेण किं पुनर्मानुषं भुवि ॥ मिं
सेनापत्यं तथा लोके ऐश्वर्ये च विशेषतः ।
सर्वभूतसमावश्यं नृपतत्वं तथापि च ॥
वश्यार्थं सर्वभूतानां नृपतेर्वापि समं भुवि ।
सर्वकर्मान् तथा नित्यं कुर्याद्धोमेन सर्वतः ॥
सर्वतो सर्वयुक्तात्मा सर्वकर्म समाश्रयेत् ।
नियतं सिद्ध्यते तस्य कर्म श्रेयोऽर्थमुत्तमम् ॥
मध्यमाश्चैव सिद्ध्यन्ते कर्मा कन्यस एव वा ।
सर्वद्रव्याणि तत्रैव सिद्धिमुक्ता त्रिधा पुनः ॥
दृश्यते सफला सिद्धिः होमकर्मे प्रवर्तिते ।
मुद्रा पञ्चशिखां बध्वा मन्त्रां चैव केशिनीम् ॥
कुर्यात् सर्वकर्माणि आत्मरक्षाविधानुधीः ।
होमकर्मे प्रवृत्तस्तु पठेन्मन्त्रमिमं ततः ॥
सप्तजप्ताष्टजप्तं वा कर्मेऽस्मिं इदं सदा ।

"नमः सर्वबुद्धबोधिसत्त्वानामप्रतिहतशासनानाम् । तद्यथा —
ॐ ज्वल तिष्ठ हूँ रु रु विश्वसम्भव सम्भवे स्वाहा ।"

अनेन मन्त्रप्रयोगेण जपं काष्ठं पुनः पुनः ।
द्विजप्तं सप्तजप्तं वा जुहुयादग्नौ स मन्त्रवित् ॥
पुष्पधूपगन्धं वा सर्वं चैव समन्ततः ।
वारिणा मन्त्रजप्तेन अनेनैव तु प्रोक्षयेत् ॥

ततो सर्वकर्माणि आरभेद् विधिहेतुना ।
पूर्वप्रयोगेणैव कर्त्तव्यो सर्वकर्मसु ॥

पूर्वपञ्चशिखां बध्वा महामुद्रां यशस्विनीम् ।
कृतरक्षो ततो भूत्वा केशिन्या चैव सदा जपी ॥

आरभेत् सर्वकर्माणि सिद्धिहेतो विशारदाः ।
शकुना यदि दृश्यन्ते शब्दा चैव शुभा सदा ॥

सफलास्तस्य मन्त्रा वै वरदाने यथेप्सतः ।
आदिकर्मेषु प्रयुक्तस्तु प्रवृत्ता मन्त्रहेतुना ॥

सफला सकला चैव सिद्धिस्तेषु विधीयते ।
जयशब्द पटहो वा दुन्दुभीनां च निस्वनम् ॥

सिद्धिः सर्वत्र युक्ता होमकर्मे समाश्रितः ।
अन्या वा शकुना श्रेष्ठा पक्षिणानां वा शुभा रुताः ॥

विविधाकारनिर्घोषा शब्दार्था जिनवर्णिताः ।
प्रशस्ता दिव्या मङ्गल्या दिव्या मनोज्ञा विविधा रुताः ॥

छत्रध्वजपताकाश्च योषिताचाप्यलङ्कृताः ।
पूर्णकुम्भं तथा अर्घदर्शनं सिद्धिहेतवः ॥

अनेकाकारवर्णा वा प्रशस्ता लोकपूजिता ।
तेषां दर्शन सिध्यन्ते मन्त्रा विविधगोचरा ॥ इति ।

बोधिसत्त्वपिटकावतंसकान्महायानवैपुल्यसूत्राद्
आर्यमञ्जुश्रीमूलकल्पात् त्रयोदशम-
पटलविसरः परिसमाप्तमिति ॥

---

## अथ चतुर्दशः पटलविसरः ।

अथ खलु भगवांश्छाक्यमुनिः पुनरपि शुद्धावासभवनमवलोक्य मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । अस्ति मञ्जुश्रीः ! त्वदीयविद्यारहस्यसाधनोपायिकसर्वमन्त्राणां समनुज्ञः तथागतधर्मकोशविसृतधर्ममेघानुप्रविष्टगगनस्वभावसर्वमन्त्राणां लौकिकलोकोत्तराणां प्रभुः ज्येष्ठतमः, यथा कुमारः सर्वसत्त्वानाम् । तथागतो अत्र आख्यायते ज्येष्ठतमः श्रेष्ठो देवमनुष्याणां पुरुषऋषभः बुद्धो भगवां । एवं हि कुमार ! सर्वमन्त्राणामयं विद्याराजा अग्रमाख्यायते श्रेष्ठतमः पूर्वनिर्दिष्टं तथागतैः अनभिलाप्यैर्गङ्गानदीसिकतपुण्यैर्बुद्धैर्भगवद्भिः रत्नकेतोस्तथागतस्य परमहृदयं परमगुह्यं सर्वमङ्गलसम्मतसर्वबुद्धसंस्तुतमशस्तं सर्वबुद्धसत्त्वसमाश्वासकं सर्वपापप्रणाशकं सर्वकामदं सर्वाशापरिपूरकम् । कतमं च तत् ॥

अत्रान्तरे भगवतः शाक्यमुनेः ऊर्णाकोशात् सर्वबुद्धसञ्चोदनी नाम रश्मिः निश्चरति स्म । येयं दशदिक्षूर्ध्वमधः सर्वावन्तं बुद्धक्षेत्राण्यवभास्य सर्वसत्त्वां मनांसि चाह्लाद्य उपरि भगवतः शाक्यमुनेः उष्णीषा अन्तर्धीयते स्म ॥

उष्णीषाच्च भगवतः समन्तज्वालार्चितमूर्तिः अनवलोकनीयो सर्वसत्त्वैः दुर्धर्षः महाप्रभावसमुद्गतः प्रभामण्डलालङ्कृतदेहः विविधाकाररूपी महाचक्रवर्तिरूपी विद्याराजा एकाक्षरो नाम निश्चरति स्म । निश्चरित्वा सर्वं गगनतलमवभास्य सर्वविद्याराजपरिवृतः अनेकविद्याकोटीनयुतशतसहस्रपुरस्कृतः पूज्यमानो सर्वलोकोत्तरैः विद्याचक्रवर्त्तिराजानैः अभिष्टूयमानो सर्वमन्त्रैः प्रभाव्यमानो सर्वबुद्धबोधिसत्त्वैः दशभूमिप्रतिलब्धैः महात्माभिः सर्वगगनतलमापूर्य दिव्यरत्नोपशोभितमहामणिरत्नालङ्कृतदेहः चारुरूपी प्रभास्वरतरः विविधरूपनिर्माणकोटीनयुतशतसहस्रमुत्सृजमानः एकाक्षरं शब्दमुदीरयमानः महारश्मिजालं प्रमुञ्चमानः अन्तरिक्षे स्थितोऽभूत् भगवतः शाक्यमुनेरुपरिष्टात् सम्मुखमवलोकयमानः सर्वावन्तं शुद्धावासभवनं महापर्षन्मण्डलञ्चावभासयमानः ॥

अथ भगवांश्छाक्यमुनिः एकाक्षरं विद्याचक्रवर्त्तिनं सर्वतथागतहृदयं रत्नकेतुर्नाम तथागतस्य परमहृदयपरमगुह्यतमं सर्वतथागतैर्भगवतः रत्नकेतोः सन्निविष्टं सालेन्द्रराज अमिताभ दुःप्रसह सुनेत्र सुकेतु पुष्पेन्द्र सुपिनान्तलोकमुनिः कनकाग्रैस्तथागतैर्भाषितं चानुभ्यमोदितं च सर्वैश्चातीतैः सम्यक् सम्बुद्धैः लपितं चानुमन्यं च। कतमं च तत्। तद्यथा—'भ्रूं'।

एष स मञ्जुश्रीः परमहृदयः सर्वतथागतानां असर्वगुणां विद्याचक्रवर्तिनः एकाक्षरं नाम महापवित्रम्। अनेन साध्यमानः सर्वमन्त्रा सिद्ध्यन्ते। त्वदीयं ये कुमारकल्पराजवरे सर्वमन्त्रानुकूलं परमरहस्य अग्रः समज्ञः सर्वकर्मावरणविशोधकः अवश्यं तावत् साध + + + + + + + + कर्माणि सर्वमन्त्रेषु अस्मिं कुमार! त्वदीयकल्पराजे सर्वलौकिकलोकोत्तराणि च मन्त्रतन्त्राणि साधयितव्यानि ॥

अनेन कृतरक्षः, अधृष्यो भवति सर्वभूतानामिति। सर्वविघ्नैश्च लौकिकलोकोत्तरैर्नाभिभूयत इति ॥

समन्तरभाषिते च भगवता शाक्यमुनिना सर्वोऽपि त्रिसाहस्रमहासाहस्रो लोकधातुः षड्विकारं प्रकम्पिता अभूवं। सर्वाणि च बुद्धक्षेत्राणि अवभासितानि सर्वेश्च बुद्धा भगवन्तः सन्निपतिता भवेयुः ॥

तस्मिं पर्षन्मण्डले शुद्धावासभवनोपनिषण्ण सर्वे च बोधिसत्त्वा दशभूमिप्रतिलब्धा अवैवर्तिका ह्यनुत्तरायां सम्यक् सम्बोधौ सर्वेश्रावकप्रत्येकबुद्धाश्च सर्वसत्त्वा महर्द्धिका विद्याराजरश्मिसञ्चोदिता आगच्छेयुर्वशीभूताः। अन्ये च सत्त्वा बहवः अनन्तापर्यन्तलोकधातुव्यवस्थिता नरकतिर्यक्प्रेतदुःखगतिसन्निश्रिताः तेन महता रश्म्यवभासेन स्पृष्टा अवभासिता दुःखगतिप्रत्युद्वेदनारात्रस्थः सुखह्लादितमनसः नियतं त्रियायानसन्निश्रिता भवेयुरिति ॥

अथ भगवांश्छाक्यमुनिः तं महापर्षन्मण्डलमवलोक्य मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म।

शृणु मञ्जुश्रीः! इमं विद्याराजं महर्द्धिकमेकवीरं सर्वकर्मिकं सर्वविद्याराजचक्रवर्तिनं सर्वसत्त्वानामाशापारिपूरकं सर्वकल्पविस्तरे त्वदीयमन्त्रतन्त्रकल्पविस्तरसमनुप्रविष्टं सर्वमन्त्राणां साधकः साधारणभूतं महेशाख्य महोत्साहसत्त्वसाधकविशेषप्रज्ञोपायकौशलसर्वबोधिमार्गसंशोधकनिर्वाणप्रतिष्ठापनाक्रमणबोधिमण्डनिपदनाक्रमणकुशलसम्भारभूतं अस्यैव समासतः कल्पविस्तरं पटविधानमण्डलं संसाधनोपयिकं पूर्वमन्त्रचर्यानुचरितं यत्र प्रतिष्ठिताः सत्त्वाः साधयिष्यन्ति महाचक्रवर्तिनं विद्याराजं महद्धनं सर्वमन्त्राणां परमेश्वरं प्रभङ्करं सर्वाशापारिपूरकं विनायकं सर्वजगद्धितं बुद्धमिव साक्षात् मत्युपस्थितं स्वयम्भुवं उत्तमोत्तिष्ठमध्यमकन्यससर्वकर्मिकम् ।

क्षेमङ्करं शिवं शान्तं सर्वपापप्रनाशनम् ।
देवानामपि तं देवं मुनीनां मुनिपुङ्गवम् ॥

बुद्धमादित्यतं बद्धं विशुद्धं लोकविश्रुतम् ।
सर्वधर्मस्वभावज्ञं भूतकोटिरनाविलम् ॥

वक्ष्ये कल्पवरं तस्य शृणुध्वं भूतिकांक्षिणाम् ।
आदौ तावत् पटो दिव्ये विकेशे श्लेषवर्जिते ॥

नवे शुक्ले विशेषेण सदशे चैवमालिखेत् ।
द्विहस्तमात्रप्रमाणेन हस्तमात्रं न तिर्यक् ॥

तथाविधे शुभे चैव निर्मले चारुदर्शने ।
सिते सौम्ये तथा शुक्ले सुव्रते पिच्चिवर्जिते ॥

शङ्खारापकरे शुक्लं पटे चैव दुकूलके ।
आतस्ये वाल्कलै चैव शुद्धे तन्तुविवर्जिते ॥

क्रिमानिलअसम्भूते जन्तूनां चानुपापने ।
अकौशेये तथा चान्ये यत्किञ्चित् साधुवर्णिते ॥

तादृशे च पटे श्रेष्ठे कुर्यादालेख्यमालयम् ।
शास्तुबिम्बमालिख्य प्रभामण्डलमालिनम् ॥

हेमवर्णं तदालिख्य ज्वालामालिनं विदुम् ।
एकाकिनं गुहालीनं पर्वतस्थं महायसम् ॥

रत्नमालावनद्धं वै कुर्यात्पट्टवितानकम् ।
उपरिष्टादुभौ देवौ धार्यमाणौ नु मालिखेत् ॥

पर्वतस्योपरिष्टा वै कुर्याद् रत्नमालकाम् ।
समन्ततश्च वितानस्य मुक्ताहारार्द्धभूषितम् ॥

उपरिष्टाच्छैलराजस्य सर्वमालिख्य यत्नतः ।
अधश्चैव तथा शैले महोदधिसमप्लुतम् ॥

पटान्ते चैव पुष्पाणि समन्ताच्चैवमालिखेत् ।
नागकेसरपुन्नागवकुलं चैव यूथिकाम् ॥

मालतीकुसुमं चैव प्रियङ्गुकुरवकं सदा ।
इन्दीवरं च सौगन्धी पुण्डरीकमतःपरम् ॥

विविधानि पुष्पजातीनि तथान्यां गन्धमाश्रिताम् ।
एतेषामेव पुष्पाणि + + + + + + + + + ॥

+ + चैव पूजार्थं दद्युः शास्तुर्मनोरमम् ।
पूर्वनिर्दिष्टविधिना पटे ज्येष्ठे तथा पटे ॥

सूत्रं तन्तुवायं च तथा चित्रकरं मतम् ।
प्रातिहारकपक्षे च आलिखेच्छुद्धतमेऽहनि ॥

तथाप्रवृत्ते च काले च जापे चैव विधीयते ।
सर्वं सर्वमेवास्य पूर्वमुक्तं समाचरेत् ॥

रङ्गोज्ज्वलं विचित्राढ्यं शास्तुबिम्बं समालिखेत् ।
अनेकाकारसम्पन्नं कर्णिकारसमप्रभम् ॥

चम्पकाभासमाभासं आलिखेद्धेमवर्णितम् ।
एभिराकारसम्पन्नं मुनिमालिख्य रत्नजम् ॥

रत्नकेतुं महाभागं श्रेष्ठं वै मुनिपुङ्गवम् ।
सर्वधर्मवशिमाप्तं बुद्धरत्नं तमालिखेत् ॥

रत्नपर्वतमासीनं गुहारत्नोपशोभितम् ।
पर्यङ्कोपरिविष्टं तु दत्तधर्मानुदेशनम् ॥
ईषिस्मितमुखं वीरं ध्यानालम्बनचेतसः ।
गुहाबहिः समालिख्य अधश्चैव समन्ततः ॥
पटान्तकोणे सन्निविष्टं साधकं जानुकर्पूरम् ।
धूपव्यग्रकरं चैव ईषित्कायावनामितम् ॥
उत्तरासङ्गिनं कुर्याद् यथावेषानुलिङ्गिनम् ।
दक्षिणे भगवतस्याधः महोदधितलादपि ॥
आलिखेन्नित्ययुक्तात्मा मन्त्रिणं श्रेयसार्थिनम् ।
एतत् पटविधानं तु कथितं लोकपूजितैः ॥
मण्डलं तस्य देवस्य साम्प्रतं तु प्रवक्ष्यते ।
युक्तमन्त्रस्तदा मन्त्री तस्मिन् काले सुमन्त्रावित् ॥
कृतसेवः सदामन्त्रे अभ्यस्ता जापसम्पदे ।
अभिषिक्तस्तदा मन्त्रे कल्पेऽस्मिन् मञ्जुभाणिते ॥
मण्डलाचारसम्पन्ने नित्यं चाभिषेञ्चिते ।
अभिषिक्तः सर्वमन्त्राणां मण्डलेऽस्मिं विशारदः ॥
युक्तिमन्तः सदा तन्त्रे आत्मरक्षे हिते मतः ।
सहायांश्चैव रक्षघ्नैः सुपरीक्ष्य महाद्युतिः ॥
आचार्यः सुसंरब्धः आरब्धाव्रतसेविनः ।
महाप्रज्ञोऽथ सुस्निग्धः श्रीमान् कारुणिकः सदा ॥
सहायानां च सर्वेषां तथा लक्षणमादिशेत् ।
एकद्वौ त्रयो वापि तथाचाष्टमथापराम् ॥
कुर्याच्छिष्यां सुसम्पन्नां प्रभूतांश्चापि वर्जयेत् ।
पूर्वदृष्टविधानं तु मण्डलेऽस्मिं सदा चरेत् ॥
प्रथमा ये तु निर्दिष्टा मण्डला दशवलोदिता ।
मञ्जुघोषस्य नान्यं तु आलिखे नान्यकर्मणा ॥

प्रमाणं तु प्रवक्ष्यामि मण्डलस्य महाद्युते: ।
चतुर्हस्तं द्विहस्तं वा तथाचाष्टमत:परम् ॥

शुचौ देशे नदीकूले पर्वताग्रे विशेषत: ।
पञ्चरङ्गिकचूर्णन पूर्वदृष्टेन कर्मणा ॥

चतुरश्रं चतुर्द्वारं चतुस्तोरणभूषितम् ।
चतु:कोणं समं दिव्यं दिव्याचारसमप्रभम् ॥

रङ्गोज्ज्वलं विचित्रं च चारुवर्ण सुशोभनम् ।
ससुगन्धं सुरूपं च सुसहाय: समारभेत् ॥

मौनी व्रतसमाचार: अष्टाङ्गोपसेविन: ।
अक्लिष्टचित्तो मात्रज्ञ: धार्मिकोऽथ जपी सदा ॥

अपापकर्मसमारब्ध: शान्तिकपौष्टिक ।
मध्यस्था ते ततो विज्य आलिखेत् शास्तु वर्णिभि: ॥

प्रथमं सर्व तं लेख्यं नानारत्नविभूषितम् ।
गुहासीनं महातेजं रत्नकेतुं तथागतम् ॥

पर्यङ्कोपविष्टं तु धर्मचक्रानुवर्तकम् ।
पटे यथैव तत् सर्वं आलिखेच्छास्तुपूजितम् ॥

त्रिपङ्क्तिभिस्तथा रेखै: मुद्रैश्चाप्यलङ्कृतम् ।
कुर्यात् सञ्छादितां सर्वा पङ्क्तिश्चैव समन्तत: ॥

अव्यस्तां समस्तां च अनाकुलिततद्गताम् ।
तेषां तु मध्ये कुर्वीत चक्रवर्ती महाप्रभुम् ॥

उदितादित्यसङ्काशं कुमाराकारमर्चिषम् ।
आलिखेद् यत्नमास्थाय महाचक्रानुवर्तिनम् ॥

महाराजसमाकारं मुकुटालङ्कारभूषितम् ।
किरीटिनं महासत्त्वं सर्वालङ्कारभूषितम् ॥

चारुपट्टार्द्धसंवीतं चित्रपट्टानिवासिनम् ।
स्रग्विणं सौम्यवर्णाभं माल्याम्बरविभूषितम् ॥

जिघ्रन्तो दक्षिणेनैव करेण वकुलमालकम्।
ईषिस्मितमुखं देवं महावीर्यं प्रभविष्णुवम्॥
सुरूपं चारुरूपं वै बालवृद्धविवर्जितम्।
वामहस्तसदाचक्रं दीप्तमालिन परामृष्यन्तम्॥

तदालेख्यं अर्द्धपर्यङ्क सुनिविष्टमर्द्धेन भुजसंनिश्रितम्।
आलिखेद् दिव्यवर्णाभं सुरूपं रूपमाश्रितम्॥

निषण्णं रत्नखण्डेऽस्मिन् सर्वतानो महाद्युतेः।
श्रेयसः सर्वमन्त्राणां प्रवृत्तो वरदः सदा॥

ज्वलन्तं वृक्षिराकारं । । मण्डलशोभिनम्।
[illegible]लामालोपज्य ज्वलते वायुमीरितः॥

एवं मन्त्रप्रयोगैस्तु ज्वाल्यन्ते मानुषं भुवि।
तथाविधं महावीर्यं सर्वमन्त्रप्रसाधकम्॥

पश्येद् यो हि स धर्मात्मा मुच्यते सर्वकिल्विषात्।
पश्चानन्तर्यकारीपि दुःशीलो मन्दमेधमः॥

सर्वपापप्रशान्ता वै मुच्यते दर्शनाद् विभोः।
मण्डलं दृष्टमात्रं तु देवदेवस्य चक्रिणे॥

तत्क्षणा मुच्यते पापा येऽन्ये परिकीर्तिताः।
ततः पूर्वद्वारं संशोध्य मन्त्रेणैव समं विभोः॥

परिक्षिप्तं तोरणैः सर्वं कदल्याभिश्चोपशोभितम्।
परिस्फुटं मण्डलं कृत्वा अशेषं चारुरूपिणम्॥

वलिं धूपं प्रदीपं च गन्धमाल्यं सदाशुभम्।
पूर्वेणैव विधानेन कुर्यात् सर्वमादरात्॥

मध्यस्थं पूर्णकुम्भं तु चक्रिणस्याग्रतो न्यसेत्।
तत्कुम्भं विजयेत्वाख्या मन्त्रज्ञस्तं न चालयेत्॥

तथाग्निकुण्डं पूर्वं तु विधिदृष्टेन कर्मणा।
होमकर्मसमारम्भो विभुमन्त्रेण नान्य वै॥

होमं चाष्टसहस्रं तु खदिरेन्धनवह्निना ।
पालाशं चापि श्रीकण्ठं बिल्वोदुम्बरचाक्षकम् ॥
अपामार्गं तथा जुहुयात् सर्वकर्मेषु यत्नतः ।
तिलं वा आज्यसंपृक्तं दग्धगन्धसमप्लुतम् ॥
जुहुयात् सर्वकर्मेषु सहस्रं साष्टकं सदा ।
त्रिसन्ध्यं पूर्वनिर्दिष्टं स्नानं चेलावधारणम् ॥
त्रिशूलं शुभनक्षत्रं कथितं च मनीषिभिः ।
पूर्वनिर्दिष्टकर्माणि जापं होमं तथापरम् ॥
कुर्यान्मन्त्रयुक्तेन चक्रवर्तिकुलेन वा ।
एकाक्षरेणेव सर्वाणि कुर्यात् सर्वकर्मसु ॥
महाप्रभावार्थयुक्तोऽसौ एकवीर सदापरम् ।
आचरेत् सर्वमन्त्राणां कल्पं तेषु सदा जपी ॥
सिद्ध्यन्ते सर्वकल्पानि लौकिका लोकसम्मता ।
लोकोत्तराश्च महावीर्या विद्याराजाश्च महातपाः ॥
सिद्ध्यन्ते सर्वमन्त्रा वै अस्मिन् कल्पे तु तान्यतः ।
मुनिभिः कथितं ये वै मन्त्रं तथा दशबलात्मजैः ॥
शक्राद्यैर्लोकपालैस्तु विष्णुरीशानब्रह्मणैः ।
चन्द्रसूर्यैस्तथान्यैर्वा यक्षेन्द्रैराक्षसैस्तथा ॥
महोरगैः किन्नरैश्चापि तथा ऋषिवरैर्भुवि ।
गरुडैर्मातरैर्लोकैः तथान्यैः सत्त्वसंज्ञिभिः ॥
भाषिता ये तु मन्त्रा वै सिद्धिं गच्छन्ति ते इह ।
आकृष्टाः सर्वमन्त्राणां प्रणेता सर्वकर्मणाम् ॥
वशिता सर्वमन्त्राणां प्रणेता सर्वकर्मणाम् ।
वशिता सर्वभूतानां तन्त्रमन्त्रसविस्तराम् ॥
एष एकाक्षरो मन्त्रः करोति सर्वमन्त्रिणाम् ।
सफलं जप्तमात्रस्तु आकृष्टा सर्वदेवताम् ॥

वशिता सर्वकल्पानांश्चर्मी एकाक्षरो महाम् ।
करोति विविधाकारां विचित्रां साधुवर्णिताम् ॥
लौकिकां लोकमन्त्रा तु [illegible] प्रयोजितः ।
परिस्फुटं तु पटं कृत्वा अशेषं चारुदर्शनम् ॥

शुचौ देशे नदीकूले पर्वताग्रे च तं न्यसेत् ।
पूर्वकर्मप्रयोगेण कुर्यात् पश्चान्मुखं सदा ॥

साधकः प्राङ्मुखो भूत्वा विधिदृष्टेन कर्मणा ।
दर्भविण्डोपविष्टस्तु कुर्याज्जपमनाकुलम् ॥

नोच्चशब्दो न मृदुः नापि चित्तपरस्य तु ।
रूपयं सर्वभूतानां क्षिप्रसिद्धिर्भवेदिह ॥

मैत्रचित्तः सदा लोके दुःखितां कृपणां सदा ।
अनाथां दीनमनसां व्यसनार्त्तां सुदुर्बलाम् ॥

पतितां संसारघोरेऽस्मिं कृपाविष्टोऽथ सिद्ध्यति ।
पटस्याग्रत यत्नेन महापूजां न्यसेत् सदा ॥

मानसीं मानुषींश्चापि क्रियां हृदयमुद्भवाम् ।
चिन्तयेत् कुर्याद्वापि जिनेन्द्रविश्वपटस्य तु ॥

तत्रैवाग्निकुण्डं कुर्या तत्त्वविधानतः ।
सुग[illegible]को ह्यग्नि ज[illegible]यात्तत्र माहुतिः ॥

श्वेतचन्दनकर्पूरं कुङ्कुमं मिश्र[illegible]
शताष्टं आहुतिं जुहं षड्भी द[illegible]नतु ॥

खदिरे प्लक्षन्यग्रोधे पालाशे चापि नित्यशः ।
एषा समुद्भवे काष्ठे ज्वालयेद् वह्निमूर्जितः ॥

एषामभावे काष्ठानामन्यं काष्ठं समाहरेत् ।
पिचुमर्दं कद[illegible] च [illegible] ॥

सर्वकण्टकिनः [illegible] ।
एकाक्षरेणैव मन्त्रेण कुर्या[illegible]म् ॥

आशु सिद्धिर्भवेत् तस्य पापं कर्म समाचरेत् ।
सर्वमन्त्रधरा ह्यत्र सकर्मा कल्पविस्तरा ॥

प्रयोक्तव्या निर्विकल्पेन सिद्धिं गच्छन्ति ते सदा ।
आकृष्यन्ते तदा मन्त्रा वरदा चैव भवन्ति ह ॥

पलाशोदुम्बरसमिधानां प्लक्षन्यग्रोध एव वा ।
घृताक्तानां दध्नसंयुक्तां मध्वोपेतां समाहिताम् ॥

जुहुयात् सर्वतो मन्त्री राज्यकामो महीतले ।
देवीं राज्यमाकांक्षं जुहुयात् कुङ्कुमचन्दनम् ॥

विद्याधराणां देवानां आधिपत्यमकांक्षयम् ।
जुहुयात् पद्मलक्षाणि षट्त्रिंशत् सकेसराम् ॥

होमान्ते वै तत्र कुर्वीत अर्घ्यं शास्तुनिवेदनम् ।
समन्ता ज्वलते तत्र पटश्रेष्ठो जिनाङ्कितः ॥

तं च स्पृष्टमात्रं तु उत्पतेद् ब्रह्ममालयम् ।
अकनिष्ठा यावदेवास्तु यावाच्चापातालसश्रयम् ॥

अत्रान्तरे सर्वसिद्धानां राजासौ भवते सदा ।
विद्रापयति भूतानि महावीर्यो दृढव्रतः ॥

क्रमः विद्याधराणां सदा राजा भविता कर्मसाधने ।
पुनश्च कल्पमात्रं तु स जीवेद् दीर्घमध्वनम् ॥

च्युतस्तस्मिं महाकाले नियतो बोधिपरायणः ।
अपरं कर्मनिर्लेप कथितं संक्षेपविस्तरम् ॥

श्वेतपद्मां समाहृत्य श्वेतचन्दनसंयुताम् ।
जुहुयाच्छतलक्षाणि रत्नकेतुं स पश्यति ॥

दृष्ट्वा तं जिनं श्रेष्ठं पञ्चाभिज्ञो भवेत् तदा ।
महाकल्पं चिरं जीवेद् बुद्धस्यानुचरो भवेत् ॥

पश्यते च तदा बुद्धां अनन्तां दिशि संस्थिताम् ।
तेषां पूजयेन्नित्यं तथैरेव च संवसेत् ॥

रत्नावती नाम धात्वैक यत्रासौ भगवां वसेत् ।
मुनिः श्रेष्ठो वरः अग्रो रत्नकेतुस्तथागतः ॥

तत्रासौ वसते नित्यं मन्त्रपूतो न संशयः ।
अपरं कर्ममिष्टं च कथितं ह्यग्रपुङ्गलैः ॥

नागकेसरकर्पूरं चन्दनं कुङ्कुमं समम् ।
एकीकृत्य तदा मन्त्री जुहुयाल्लक्षाष्टसप्तति ॥

होमावसाने तदा देव आयातीह सचक्रिणः ।
तुष्टो वरदो नित्यं मूर्ध्नि स्पृशति साधकम् ॥

स्पृष्टमात्रस्तदा मन्त्री सप्तभूम्याधिपो भवेत् ।
जिनानामौरसः पुत्रो बोधिसत्त्वः स उच्यते ॥

नियतं बोधिनिष्ठस्तु व्याकृतोऽसौ भविष्यति ।
ततः प्रभृति यत्किञ्चिद् ज्ञानं ज्ञेयं जिनात्मजम् ॥

जानाति सर्वमन्त्राणां गतिमाहात्ममूर्जितम् ।
पञ्चाभिज्ञो भवेत् तास्मिन् दृष्टमात्रेण मन्त्रराट् ॥

करोति त्रिविधाकारामात्मभात्रं सदा यदा ।
सर्वाकारवरोपेतां पूजाकर्मि सदा रतः ॥

भवते तत्क्षणादेव उद्युक्तो बोधिकर्मणि ।
क्षणमात्रे तदा लोकां बुद्धक्षेलां स गच्छति ॥

लोकधातुसहस्राणि अण्डा हिण्डन्ति सर्वतः ।
बुद्धानां बोधिसत्त्वानां पश्यन्ते चरितां तदा ॥

धर्मं शृणोति तत्तेषां पूजां कर्मे समुद्यतः ।
अपरं कर्ममस्तीह चक्रवर्तिजिनोद्भवे ॥

प्रदीपलक्षणं दद्याच्छुचिर्यतिंघृतः समे ।
सौवर्णे भाजने रौप्ये ताम्रे मृत्तिकमेऽपि वा ॥

ते तु प्रज्वालिते दीपे पुरुषैर्लक्षप्रमाणिभिः ।
गणमात्रसंन्यस्ते शतसाहस्रनाविकैः ॥

स्त्रीवर्जैः पुरुषैश्चापि प्रदीपहस्तैः समन्ततः ।
पटं शास्तु बिम्बाख्ये दद्यात् पूजा च कर्मणि ॥

समं सर्वप्रवृत्तास्तु मन्त्रे कैकसमन्त्रिते ।
दद्याच्छास्तुनो मन्त्रैस्तत्क्षणाद् सिद्धिमादिशेत् ॥

समन्ताद् गर्जितनिर्घोषं दुन्दुभीनां च निःस्वनम् ।
देवसङ्घा ह्यनेकां वै साधुकारं प्रमुञ्चयेत् ॥

बुद्धा बोधिसत्त्वाश्च गगनस्थं तस्थुरे तदा ।
साधु साधु त्वया प्राज्ञ ! सुकृतं कर्म कारितम् ॥

न पश्यसि पुनर्दुःखं संसारार्णवसंप्लुतम् ।
क्षेमे शिवे च निर्वाणे अभये बुद्धत्वमाश्रितः ॥

मार्गे शुभे च विमले अष्टाङ्गे साधुचेष्टिते ।
प्रपन्नस्त्वं मन्त्ररूपेण चक्रिमेकाक्षराक्षिते ॥

अपरं कर्ममेवास्ति उत्तमां गतिनिश्चितः ।
महाप्रभावार्थविज्ञातं सर्वबुद्धैः सम्प्रकाशितम् ॥

गृह्य निम्बमयं काष्ठं कुर्याद् वज्रं त्रिशूचिकम् ।
उभयाग्रं मध्यपार्श्वे तु कुर्यात् कुलिशसम्भवम् ॥

मन्त्रपूतं ततः कृत्वा पटस्याग्रतः कन्यसे ।
परामृश्य ततो मन्त्री जपेन्मन्त्रां समाहितः ॥

लक्षषोडशकाष्ठं च समाप्ते सिद्धिरिष्यते ।
एकज्वाली ततो वज्रः समन्तात् प्रज्वलते हि सः ॥

उज्जहार ततोऽचिन्त्यमूर्ध्वसंक्रमते हि सः ।
ब्रह्मलोकं ततो याति अन्यां वा देवसम्मितिम् ॥

आकाशेन ततो गच्छे सर्वसिद्धेषु अग्रणीः ।
कुरुते आधिपत्यं वै सिद्धविद्याधरादिषु ॥

चक्रवर्त्तिस्ततो राजा भवते देवसन्निधौ ।
करोति विविधाकारं आत्मभावविचेष्टितम् ॥

दश चान्तरकल्पानि चिरं तिष्ठन्न चालयेत् ।
सौख्यभागी सदा पूज्यः सुरूपो रूपवां सदा ॥

बोधिचित्तो समाचारो जन्मदुःखविवर्जितः ।
भवते सुरसिद्धस्तु सर्वपापविवर्जितः ॥

च्युतस्तस्माद् भवेन्मर्त्यो वहुसौख्यपरायणः ।
गतिं सर्वां विचेरुस्थः भवते वोधिपरायणः ॥

अनन्ता विविधा कर्मा वहुलोकार्थपूजितम् ।
पठ्यन्ते मन्त्रराजेऽस्मिं सकल्पाकल्पविस्तरात् ॥

भौम्याधिपत्यं शक्रत्वं चक्रवर्त्तित्वं च वा पुनः ।
विद्याधराणां तथा देवां कुरुते चाधिचेष्टितम् ॥

अनेकाकाररूपं वा + + + यदिहोच्यते ।
सर्वसिद्धिमवाप्नोति सुप्रयुक्तस्तु मन्त्रिणा ॥

रात्रौ पर्यङ्कमारुह्य + + अचिन्त्यं जपतो व्रती ।
प्रभाते सिद्धिमायाति पञ्चाभिज्ञो भवेज्जपी ॥

श्मशाने शवमाक्रम्य निश्चलो तं जपेद् व्रती ।
एकाक्षरं महार्थं तु प्रभाते सिद्धिमिष्यते ॥

श्मशानस्थो यदि यप्येत विद्याराजमहर्द्धिकः ।
षण्मासैः सिद्धिमायाति यथेष्टं कुरुते फलम् ॥

यत्र वा तत्र वा स्थाने जप्यमानो महर्द्धिकः ।
तत्रस्थः सिधिमायाति सुप्रयुक्तस्तु मन्त्रिभिः ॥

सितं छत्रं तथा खड्गं मणिपादुककुण्डलम् ।
हारकेयूर पटकं + + + चाङ्गुलीयकम् ॥

कटिसूत्रं तथा वस्त्रं दण्डकाष्ठकमण्डलुम् ।
यज्ञोपवीतमुष्णीषं कवचं चापि चर्मिणम् ॥

अजिनं कमलं चैव अक्षसूत्रं च पादुके ।
सर्वे ते भूपणाश्रेष्ठा लोकेऽस्मिं समताग्रुभौ ॥

सुरैर्मर्त्यैस्तथा चान्यैः + + + भूषणानि इ ।
सर्वे सिद्धिमायान्ति पटस्याग्रत जापिने ॥

सर्वद्रव्यं तथा धातुं भूषणं मणयोऽपि च ।
अनेकप्रहरणाः सर्वे विन्यस्ता पटमग्रते ॥

सकृज्जप्ताथ संशुद्धा लक्षमष्टौ भिमन्त्रिता ।
ज्वलते सर्वसंयुक्ता उत्तिष्ठे स्पृशनाज्जपी ॥

सत्त्वप्रकृतयो वापि विविधाकाररूपिणः ।
भूषणाः प्रहरणाश्चापि मृन्मया वा स्वभाविका ॥

सुरूपचेष्टप्रकृतयः नानापक्षिगणादपि ।
सर्वभूतास्तु ये ख्याता कृत्रिमा वा ह्यकृत्रिमा ॥

सत्त्वसंज्ञाथ निःसंज्ञा सिद्ध्यन्ते मन्त्रपूजिता ।
विविधद्रव्यविन्यस्ता विविधा भा.... रिता ॥

+ + + + + + वापि गतियोनिसुपूजिता ।
विन्यस्ता पटमग्रेऽस्मिं पूर्वदृष्टविधानतः ॥

आमृष्य तं जपेन्मन्त्री षड् लक्षाणि च सप्त च ।
जपान्ते ज्वलिते तेषु सिद्धिं प्राप्नोति पुष्कलाम् ॥

स्पृष्टमात्रेषु तत्तेषां उत्पतेत्तु चतुर्दिशम् ।
चिरं जीवेच्चिरं सौख्यं प्राप्नोतीह दिवौकसाम् ॥

यथा यथा प्रयुज्येते विद्याराजमहर्द्धिकः ।
तथा तथा च तुष्येत वरदो च भवेत् सदा ॥

अन्यकर्मप्रवृत्तास्तु कर्मभिः कल्पविस्तरैः ।
तैरेव सिद्ध्यन्ते क्षिप्रं विद्याराजमहर्द्धिकः ॥

शुचिना शुचिचित्तेन शुचिकर्मसदारतः ।
शुचौ देशेऽथ मन्त्रज्ञः शुचिसिद्धि समृच्छति ॥

तत्कर्म तत्फलं विन्द्यादाधिकादाधिकं भवेत् ।
मध्ये मध्यमकर्मं तु कन्यसं तु मतः परम् ॥

कर्मा प्रभूतमर्थं दत्वा करोति भूतचेष्टितम् ।
असाधितः कर्मसिद्धिस्तु फलं दद्यात्पमात्रकम् ॥

नित्यं च जापमात्रेण महाभोगोऽथ महाबलः ।
राज्ञा प्रियत्वमन्त्रित्वं करोति जपिनः सदा ॥

पापं प्रणश्यते तस्य सकृज्जप्तस्तु मन्त्रराट् ।
द्विजप्तः सप्तजप्तो वा आत्मरक्षा भवेन्महां ॥

सहायानां सर्वतो रक्षा अष्टजप्तः करोति सः ।
वस्त्राणामभिमन्त्रीत उभौ मन्त्री तदा पुनः ॥

मुच्यते सर्वरोगाणां उभौ वस्त्राभिमन्त्रितौ ।
स्पर्शनं तेषु मन्त्रेषु ज्वरं नश्यति देहिनाम् ॥

मुखं चाभिमन्त्रितः अक्षणी वा चापि यत्नतः ।
क्रुद्धस्य नश्यते क्रुद्धो दृष्टमात्रस्तु मन्त्रिभिः ॥

ये च भूतगणा दुष्टा हिंसका पापकर्मिणः ।
मुखं तेषु निरीक्षेत त्रिंशज्जप्तेन मन्त्रराट् ॥

हस्तं चाभिमन्त्रीत स्वकं चैव पुनः पुनः ।
तेषां प्रहारमावर्ज्यामुच्यते सर्वदेहिनाम् ॥

बालानां नित्यकुर्वीत स्नपनं पानभोजनम् ।
षष्टिजप्तवरे मन्त्रे उत्कृष्टे देवपूजिते ॥

त्यजन्ते सर्वदुष्टास्तु क्रव्यादा मानरा ग्रहाः ।
मन्त्रभीतास्तु नश्यन्ते त्यजन्ते बालिशान् सदा ॥

एवम्प्रकारान्यनेकानि कर्मां चैव महीतले ।
मानुषाणां तथा चक्रे क्षिप्रं चैव सदा न्यसेत् ॥

सरिस्थता ये तु भूता वै विविधा स्थावरजङ्गमाः ।
सविषा निर्विषाश्चैव नश्यन्ते मन्त्रदीरिता ॥

ये केचिद् विविधा दुःखा या काचित् सत्त्ववेदना ।
विन्यस्ता मन्त्रराजेन शान्तिमाशु प्रयच्छति ॥

विविधायासदुःखानि महानार्यैपुसर्गिणः ।
नश्यन्ते क्षिप्रमेवं तु मन्त्रजप्तेन पस्कृतम् ॥
कुर्याद्धोमकर्माणि गन्धगन्धाज्यमिश्रितम् ।
नीलोत्पलं सुगन्धं वै सहस्रं चाष्ट पूजितम् ॥
शान्तिं तिलेन भूतानि प्रजग्मुः स्वस्थतां जनः ।
एवम्प्रकारान्यनेकानि बहुकल्पसमुद्भवाम् ॥
सर्वां करोति क्षिप्रं वै सुप्रयुक्तस्तु मन्त्रिभिः ।
जपमात्रेण कुर्वीत अरीणां क्रोधनाशनम् ॥
अनेकमन्त्रार्थयुक्तानां कल्पानां बहुविस्तराम् ।
विधिर्दृष्टा भवेत् तेषां तेषु सिद्धिरिहोच्यते ॥
अवश्यं क्षुद्रकर्माणि मन्त्रजप्तो करोति ह ।
सर्वान्येव तु जप्तेन क्षिप्रमर्थकरः सदा ॥
वश्यार्थं सर्वभूतानां त्रिसन्ध्यं जपमिष्यते ।
होमकर्म च कुर्वीत मालत्याः कुसुमैः सदा ॥
श्वेतचन्दनकर्पूरकुङ्कुमाच्च विधीयते ।
वरजापिने मन्त्रः सफलां कुरुते सदा ॥
मनीषितान्साधयेदर्थां नित्यहोमेन जापिनम् ।
कर्पूरादिभि युक्तैस्तु नित्यहोमं प्रकल्पितम् ॥
साधयेद् विविधां कर्मां यथेष्टपरिकल्पिताम् ।
अल्पादल्पतरं कर्म प्रभूता भूतिमुद्भवम् ॥
मध्ये मध्यकर्माणि सदा सिद्धिरुदाहृता ।
तस्मात् सर्वेषु कर्मेषु कुर्याद्धोमं विशेषतः ॥ इति ।

बोधिसत्त्वपिटकावतंसकान्महायानवैपुल्यसूत्रात् आर्यमञ्जुश्रिय-
मूलकल्पात् चतुर्दशमः मन्त्रविधिपटलविधानमण्डल-
साधनोपयिकविसरः परिसमाप्त इति ॥

## अथ पञ्चदशः पटलविसरः ।

अथ खलु वज्रपाणिर्बोधिसत्त्वो महायक्षसेनापतिः पर्षन्मध्ये सन्नि-
पतितोऽभूत् । सन्निषण्णः स उत्थायासनाद् भगवन्तं त्रिः प्रदक्षिणी-
कृत्य, भगवतश्चरणयोर्निपत्य, भगवन्तमेतदवोचत् । "साधु साधु
भगवं ! सुदेशितं, सुप्रकाशितं परमगुह्यभाषितं विद्यामन्त्रप्रयोगमहा-
धर्ममेघनिनिसृतं सर्वतथागतहृदयं महाविद्याराजचक्रवर्तिनमहाकल्प-
विस्तरसर्वथापारिपूर्णं सफलं सप्रसादकरोऽभिप्रायनिष्ठतरं क्रियाभेद-
संख्यजपहोमनियमचर्यानुवर्तिनां सर्वं स्वप्नकर्मप्रलयजानितहेतुनि-
मित्तमहाद्भुतदर्शनलाक्रमणकुशलसर्वमण्डलाक्रमणनियतपरायणम् ।
तत् साधु भगवां वदतु शास्ता मन्त्रसाधनानुकूलानि स्वप्नसन्दर्श-
नकालनिमित्तम्; येन विद्यासाधकानुवर्तिनः सत्त्वाः सिद्धिनिमित्तं
कर्म आरभेयुः, सफलाश्च सर्वविद्याः कर्मनियितानि भवन्ति" रिति ॥

एवमुक्ते भगवां शाक्यमुनिः वज्रपाणिं बोधिसत्त्वमेतदवोचत् ।
साधु साधुस्त्वं यक्षेश ! बहुजनहिताय त्वं प्रतिपन्नः बहुजनसुखाय
लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय सर्वविद्या-
साधकानामर्थाय । तं शृणु, साधु च सुष्ठु च मनसि कुरु, भाषि-
ष्येऽहं ते ॥

आदौ तावत् पूर्वकर्मारम्भं सर्वकर्मेषु निःशङ्कं स्थानं गत्वा,
पर्वताग्रे नदीकूले वा गुहा च नरकेषु वा, शुचौ देशे उडयं कृत्वा,
पटे प्रतिष्ठाप्य महती पूजां कृत्वा, तेनैव विधिना पूर्ववत् सर्वकर्मेषु
शुक्लपक्षे प्रातिहारपक्षे वा अवश्यं शुभेऽहनि रात्रौ प्रथमे यामे श्वेत-
चन्दनकर्पूरकुङ्कुमं चेकीकृत्य, खादिरकाष्ठैरग्निं प्रज्वाल्य, पटस्या-
ग्रतश्चतुर्हस्तप्रमाणमाग्रथितः आहुतिं सहस्राष्टं जुहुयान्निर्धूमे विगत-
ज्वाले चाङ्गारे तद होमान्ते पद्मपुष्पाष्टसहस्रं जुहुयात् । श्वेतचन्दना-
भ्यक्ताम् । होमान्ते च भद्रपीठं मुद्रां बध्वा आसनं दद्यात् स्वमन्त्रस्य
स्वमन्त्रेणैव । अनेन मन्त्रेण तु होमं कुर्यात् । "नमः समन्तबुद्धानामप्रति-
हतशासनानाम् । तद्यथा — ॐ कुमाररूपिण दर्शय दर्शयमात्मनो भूति
समनुज्ञातय स्वप्नं मे निवेद यथाभूतम् । हूँ हूँ फट् फट् स्वाहा ।"

अनेन मन्त्रेण कृतरक्षो होमकर्मणि सर्वान्यस्मिं कर्म कुर्यात् । ततो भयाग्रां कुशां संस्तीर्य कुशविण्डकशिरोपधानपूर्वशिरः पटस्याग्रतो नातिदूरे नात्यासन्ने स्वपेत् प्रथमं यामं जागरिकायोगमनुयुक्तः सर्वबुद्धबोधिसत्त्वानां प्रणम्य पापं च प्रतिदेश्य आत्मानं निर्यातयेत् सर्वबुद्धानाम् । ततो निद्रां वशमागच्छेत् यथा सुखमिति ॥

प्रथमे यामे तु ये स्वप्ना तां विदुः श्लेष्मसम्भवाम् ।
द्वितीये पित्तमुत्थानाद् गर्हिता लोकसम्भवा ॥
तृतीये वातिकं विन्द्याच्चतुर्थे सत्यसम्भवाम् ।
श्लेष्मिके स्वप्नमुख्ये तु ईदृशां पश्य वै सदा ॥
मणिकूटां मुक्ताहारांश्च समन्ततः प्रभूताम् ।
अम्भराशिं वृत्तुतं चात्मानं स पश्यति ॥
समन्तात् सरिता कीर्णं महोदधिसमप्लुतम् ।
तत्रस्थो मात्मदेहस्थो पश्ये चैव यत्र वै ॥
तत्र तं देशमाकीर्णं पुष्करिण्यो समन्ततः ।
प्लवं चोद्पानं च पानागारं च वेश्मनम् ॥
उदकोघैरुह्यमानं तु पश्येच्चैव समन्ततः ।
हिमालयं तथाद्रिं वा स्फटिकस्थं महानदम् ॥
नगं शैलं च राजं च स्फटिकाभिः समं चितम् ।
मुक्ताजालसञ्छन्नं मुक्ताराशिं च पश्यति ॥
महावर्षं जलौघं च पश्यतेऽसौ कहावहः ।
श्वेतं सितं छत्रं पाण्डरं वापि भूषणम् ॥
कुञ्जरं शुक्लरूपं वा कफिने स्वप्नमुच्यते ।
सितं चामरपुरुषं वा अम्बरं वापि दर्शनम् ॥
स्पर्शनं सैन्धवादीनां लवणानां च सर्वतः ।
कर्पासं क्षौमपट्टं वा लोहरूप्यं तथागुरुम् ॥
स्पर्शने ग्रसने चैव श्लेष्मिके स्वप्नमिष्यते ।
माषाध्मातकाश्चैव तिलपिष्टा गुडोदना ॥

विविधा मापभक्षास्तु कफिने स्वप्नमिष्यते ।
स्वस्तिकापूपिका चान्ये कृसरा पायसा परे ॥

तेषां भक्षणा स्वप्ने श्लेष्मिकस्य विधीयते ।
शष्कुल्या पर्पटा खाद्या विविधा सूपजातयः ॥

स्पर्शनाद् भक्षणाश्चैव स्वप्ने श्लेष्माघबृंहणम् ।
अनेकप्रकारपूर्वास्तु खाद्यभोज्यानुसम्मता ॥

भक्षणास्पर्शनात्तेषां कफिने स्वप्नचेष्टितम् ।
आशनं सयनं यानं वाहनं सत्त्वसम्भवम् ॥

स्पर्शनारोहणाचैव प्रथमे यामे तु दर्शनम् ।
स्वप्ना यदि दृश्येरं कफिने सर्वमुच्यते ॥

एवम्प्रकारा ये स्वप्ना जलसम्भवचेष्टिता ।
विविधा वा खाद्यभोज्यानां श्लेष्मिकानां च दर्शनम् ॥

तेषां स्वप्ने दृष्ट्वा वै श्लेष्मिकानां तु चेष्टितम् ।
अचिन्त्या ह्यन्येका कथिता स्वप्ना लोकनायकैः ॥

पैत्तिकस्य तु स्वप्नानि द्वितीययामे हि देहिनाम् ।
ज्वलन्तमग्निरूपं वा नानारत्नसमुद्भवाम् ॥

अग्निदाहं महोल्कं वा ज्वलन्तं सर्वतो दिशः ।
स्वप्ने पश्यते जन्तुः पित्तसम्मूर्च्छितो नरो ॥

पद्मराग तथा रत्नं अन्यं वा रक्तसम्भवम् ।
स्वप्ने दर्शनं विन्द्या पैत्तिकस्य तु देहिनः ॥

अग्निसंसेवनाद्वापि स्पर्शनाद् भक्षणादपि ।
विविधां पीतवर्णानां स्वप्ने पित्तमूर्च्छितैः ॥

तपन्तं नित्यमादित्यं आतपं कटुकं सदा ।
स्वप्ने यानि पश्येत पित्तान्तदेहमूर्च्छितः ॥

हेमवर्णं तदाकाशं पीतवर्णं महीतलम् ।
स्वप्ने योऽभिपश्येत पित्तग्लान्यसम्भवा ॥

समन्ताज्ज्वलितं वह्निं द्योतमानं नभस्तलम् ।
पश्यते स्वप्नकालेऽस्मिन् पित्ताक्रान्तो हि देहिनः ॥

हेमवर्णं तदा भूमिं पर्वतं वा शिलोच्चयम् ।
महानागं तथा यानं सर्वं हेममयं सदा ॥

पश्यते नित्यस्वप्नस्थो पित्तवेगाभिमूर्च्छितः ।
सर्वं हेममयं भाण्डं यानं भूषणवाहनम् ॥

आसनं शयनं चापि जातरूपसमुद्भवम् ।
स्पर्शनारोहणाच्चैव पैत्तिकं स्वप्नदर्शनम् ॥

पीतमाल्याम्बरसंवीतः पीतवस्त्रोपशोभिनः ।
पीतनिर्भासगन्धाढ्यो पीतयज्ञोपवीतिनः ॥

पीताकारं च आत्मानं स्वप्ने योऽभिपश्यति ।
पित्तमूर्च्छासमुत्थानाद् द्वितीये यामे तु दर्शनात् ॥

एवम्प्रकारा विविधा या येभ्यः स्वप्नानुवर्णिताः ।
विविधा पीतनिर्भासा स्वप्ना पित्तसमुद्भवा ॥

मध्यमे यामनिर्दिष्टा पित्तकान्तानु देहिनाम् ।
अनेकाकाररूपास्तु पीताभाससमुद्भवाः ॥

कथिता लोकमुख्यैस्तु स्वप्नाः पित्तसमुद्भवाः ।
वातिका ये तु स्वप्ना वै तृतीये यामे तु कथ्यते ।

प्रभास्वरा समन्ताद्वै दिशः सर्वा तु दृश्यते ।
आकाशगमनं चापि तिर्यं चापि नभस्तले ॥

समन्ता भ्रमते नित्यं आकाशे च नभस्तलम् ।
वातिकं स्वप्नमित्युक्तं ईदृशं तु विधीयते ॥

प्लवनं लङ्घनं चैव तरूणां चाभिरोहणम् ।
पठनं सर्वशास्त्राणां मन्त्राणां च निक्षेपनः ॥

भाषणं जल्पनं चापि प्रभूतं चापि वाचिकैः ।
रोहणं कण्टकवृक्षाणां ग्रहणं चाभिनिवारणम् ॥

कट्वम्लं सर्वखाद्यानां भक्षणं चापि वातिके ।
वातसङ्घप्रमुख्यानां फलानां वातिकोपिताम् ॥
तेषां तु भक्षणे स्वप्ने निर्दिष्टा वातसम्भवा ।
भक्षाहारविशेषाणां द्रव्याणां च वातलम् ॥
क्षिप्तचित्ता तथा जन्तु स्पर्शनाद् भक्षणादपि ।
भृत्यता सर्वभूतानां दर्शनाच्चापि आत्मनाम् ॥
स्वप्ने यो हि पश्येत तादृशं वातिकं विदुः ।
विविधाकारचेष्टां तु त्रिविधलिङ्गभाषिता ॥
विविधाघोरभाषास्तु वातिके स्वप्नदर्शने ।
एवमादीनि स्वप्नानि कथिता लोकपुङ्गवैः ॥
त्रिधा प्रयोगाच्च युक्तानि रागद्वेषमोहिनाम् ।
रागिणां विन्द्याच्छ्लेष्मजं पैत्तिकं द्वेषमुद्भवम् ॥
मोहजं वातिकं चापि व्यतिमिश्रं त्रिमिश्रितः ।
स्वप्नोपघातं रागाख्यं ग्राम्यधर्मं तु दर्शनम् ॥
स्त्रीषु सङ्गया भवेत् तत्र स्वप्ने शृङ्गारसमुद्भवे ।
द्वेषिणां कलहशीलाख्यं स्वप्ने पित्तसमुद्भवे ॥
मोहजं स्तिमिताकारं स्मृतिनष्टोपदर्शनं ।
व्यतिमिश्रेण संयुक्तोऽस्तु स्वप्ना दृश्यन्ति वै सदा ॥
तस्मात् सर्वप्रकारेण स्वप्नाख्यं समन्वर्जितम् ।
क्रियाकालसमश्चैव निर्दिष्टस्तत्त्वदर्शिभिः ॥
श्लेष्मिकाणां कथिता सत्त्वा वर्णवन्तः प्रियंवदा ।
दीर्घायुषोऽथ दुर्मेधा स्निग्धवर्णा विशारदा ॥
गौराः मांसुवृत्ताश्च स्त्रीषु सङ्गे सदा रताः ।
धर्मिष्ठा नित्यशूराश्च बहुगानाभिरताः सदाः ॥
नक्षत्रे जातिनिर्दिष्टः मत्सरास्यादभिक्षिते ।
महीपाला तथा चान्ये सेनापत्यार्थसंस्थिते ॥

जायते भोगवत्याश्च यथाकर्मोपजीविनः ।
स्वकर्मफलनिर्दिष्टं न मन्त्रं कर्मवर्जितम् ॥

न कर्म मन्त्रमुख्यं तु कथितं लोकनायकैः ।
तस्मात् श्लेष्मिके सत्त्वे सिद्धिरुक्ता महीतले ॥

भूम्याधिपत्यं महाभोगे सिद्धिमायातु तस्य तु ।
आहारां श्लेष्मिकां सर्वां नातिसेवी भवेज्जपी ॥

अत्यर्थं सेविता ह्येते स्वप्ना शुद्ध्यार्थसम्भवा ।
ता न सेवे तदा मन्त्री मिथ्यार्था तु वर्णितः ॥

नापि स्वपे तदा काले युक्तिमन्तो विचक्षणः ।
पैत्तिकस्या तु सत्त्वस्य कथ्यते चरितं सदा ॥

द्वेपाकारक्रुद्धं तु कृष्णवर्णोऽथ दुर्बलः ।
क्रूरः कूरकर्मा तु सदा वक्रो विधीयते ॥

शूरः साहसिको नित्यं बलबुद्धिसमन्वितः ।
बह्वभाष्ये बहुमित्रा बहुशास्त्रसमाधिगः ॥

धार्मिकः स्थिरकर्मान्तः द्वेपमुत्थानवर्णितः ।
मनस्वी बहुशत्रुश्च जायते द्वेपलक्षितः ॥

शूर द्वेपी च बहार्थी लोकज्ञो प्रियदर्शनः ।
निर्मुक्तो निःस्पृहश्चापि भीरो दुःसहः सदा ॥

मानी मत्सरः क्रुद्धः क्षीप्र कान्तो सदा भवेत् ।
महोत्साही दृढमन्त्री च महाभोगोऽथ जायते ॥

आक्रम्य चरते सत्त्वां यथाकर्मानुलब्धिनाम् ।
नित्यं तस्य सिद्ध्यन्ते मन्त्राः प्राणोपरोधिनः ॥

क्षिप्रं साधयते ह्यर्थां दारुणां मुनिवर्जिताम् ।
सत्त्वोपघाताः यः कर्माः सिद्ध्यन्ते तस्य देहिनः ॥

त्रिविधप्रयोगास्तु ये कर्माः प्रयुक्ता सर्वमन्त्रिणाम्
आदरा ते सिद्ध्यन्ते नान्यसत्त्वेषु कर्मसु ॥

द्वेषिका ये तु मन्त्रा वै परसत्त्वानुपीडिनः ।
परमन्त्रा तथा च्छिन्दे क्रोधसत्त्वस्य सिद्ध्यति ॥

परद्रव्यापहारार्थं परप्राणोपरोधिनः ।
सिद्ध्यन्ते क्रोधमन्त्रास्तु नान्यमन्त्रेषु योजयेत् ॥

कुरुते चाधिपत्यं वै एष सत्त्वोऽथ द्वेषजः ।
कृष्णवर्णोऽथ श्यामो वा गौरो वाथ मिश्रितः ॥

जायते क्रोधनो मर्त्यो हेमवर्णविवर्जितः ।
रूक्षवर्णोऽथ धूम्रो वा कपिलो वा जायते नरः ॥

शूरः क्रूरः तथा लुब्धः वृश्चिकाराशिमुद्भवः ।
अङ्गारग्रहक्षेत्रस्थः श्लेष्मणाय बृहस्पतेः ॥

जायते ह्यल्पभोजी स्यात् कटुंम्लरससेविनः ।
आयुष्यं तस्य दीर्घं तु स्मृतिमन्त्रोऽथ जायते ॥

नातिकस्य तु वक्ष्येऽहं चरितं गत्वचेष्टितम् ।
विवर्णो रूक्षवर्णस्तु प्रमाणो नातिदुर्बलः ॥

नष्टबुद्धिः सदा प्राज्ञो ह्यनस्थिरो ह्यनवस्थितः ।
गात्रकम्पं भ्रमिश्चापि छर्दिं प्रश्रवनं बहुः ॥

बह्वासी नित्यभोजी न बहाना नो भवे हि सः ।
विरुद्धः सर्वलोकानां बहुमित्रोऽथ जायते ॥

दुःशीलो दुःखितश्चापि जायतोऽसौ महीतले ।
अन्तर्द्धानिकमन्त्रा वै तस्य सिद्धिमुदाहृतम् ॥

वातप्रकोपना ये भक्षास्ते तस्यानुवर्तिनः ।
तं न सेवेत् सदा जापी कर्मसिद्धिमकांक्षयम् ॥

मोहामुद्भवमेषां तु सत्त्वानां वातकोपिनाम् ।
मोहजा कथिता ह्येते मूढमन्त्रप्रसाधिता ॥

नित्यं तेषु मूढानां मोहानां सिद्धिरिष्यते ।
नक्षत्रे जलजाराशौ ग्रहसत्यार्थमीक्षिते ॥

नाचरेच्छुभकर्माणि वातिके सत्त्वमूर्छिते ।
वश्याकर्षणभूतानां मोहनं जम्भनं तथा ॥

वातिकेष्वपि सत्त्वेषु मोहजैः पापमुद्भवैः ।
कथिता लक्षणा ह्येते स्वप्नानां सत्यदर्शना ॥

मुनिभिर्वर्णिता ह्येते पुरा सर्वार्थसाधका ।
मेषो वृषो मिथुनश्च कर्कटः सिंह एव तु ॥

तुला कन्या तथा वृश्चीश्च धनुर्मकर एव तु ।
कुम्भमीना गजः दिव्यं वानरमसुर एव तु ॥

सिद्धगन्धर्वयक्षाद्या मनुजानां ये प्रकीर्तिता ।
राशयो बहुसत्त्वानां कथिता ह्यग्रपुङ्गवैः ॥

बहुप्रकारा विचित्रार्था विविधा कर्मवर्णिता ।
तेषु सर्वेषु कर्म च फलन्ति गुणविस्तराः ॥

न कर्मगुणनिर्मुक्तं पठ्यते खलु देहिनाम् ।
गुणे च कर्मसंयुक्तः करोति पुनरुद्भवम् ॥

गुणं धर्मार्थसंयुक्तं सिद्धिमन्त्रेषु जायते ।
जापी गुणतत्त्वज्ञः कर्मबन्धगुणागुणम् ॥

न हितां कुरुते कर्म यद् गुणेष्वपि सत्क्रियाम् ।
क्रिया हि कुरुते कर्म न क्रिया गुणवर्जिता ॥

क्रियाकर्मगुणां चैव संयुक्तः साधयिष्यति ।
विधिपूर्वं क्रिया कर्म उक्तं दशबलैः पुरा ॥

क्रिया कर्मगुणा ह्येते द्रष्टा सत्त्वोपचेष्टिता ।
विविधा स्वप्नरूपास्तु दृश्यन्ते कर्मसुद्भवाः ॥

तस्मात् स्वप्ननिमित्तेन प्रयोज्याः कर्मविस्तराः ।
विधाकारचित्राश्च मनोज्ञाः प्रियदर्शनाः ॥

विघ्नरूपाः अरूपाश्च दृश्यन्ते स्वप्नहेतवः ।
महोत्साहा महावीर्या सिद्धिमाकांक्षिणो नराः ॥

उत्तमाधममध्येषु सिद्धिस्तेषु प्रकल्प्यते ।
रौद्राः क्रूरकर्मास्तु स्वप्ना सद्यफला सदा ॥

उत्तमा शुभकर्मासु चिरकालेषु सिद्धये ।
लौकिका लोकमुख्यानां गुणोत्पादनसम्भवाः ॥

दृश्यन्ते विविधाः स्वप्ना जापिनां मन्त्रसिद्धये ।
असिद्ध्यर्थं तु मन्त्राणां निद्रा तन्द्री प्रकल्प्यते ॥

विघ्नघातनमन्त्रं तु तस्मिं काले प्रकल्प्यते ।
युक्तिरूपा तदा मन्त्रा जापिनां तं प्रयोजयेत् ॥

षड्भुजोऽथ महाक्रोधः षण्मुखश्चैव प्रकल्पितै ।
चतुरक्षरो महामन्त्रः कुमार मूर्तिनिसृतः ॥

घोररूपा महाघोरो वराहाकारसम्भवः ।
सर्वविघ्नविनाशार्थं कालरात्रं तदेव राट् ॥
व्याघ्रचर्मनिवस्तस्तु सर्पाभोगविलम्बितः ।
असिहस्तो महासत्त्वः कृतान्तरूपी महोजसः ॥

निर्घृणः सर्वविघ्नेषु विनायकानां प्राणहन्तकृत् ।
शृण्वन्तु सर्वभूता वै मन्त्रं तन्त्रे सुदारुणम् ॥

नाशको दुष्टसत्त्वानां सर्वविघ्नोपहारिकः ।
साधकः सर्वमन्त्राणां देवसङ्घा शृणोथ मे ॥

नमः समन्तबुद्धानामप्रतिहतशासनानाम् । तद्यथा—'हे हे
हाक्रोध! षण्मुख! षट्चरण! सर्वविघ्नघातक! हूँ हूँ । किं चिराय-
सि विनायक! जीवितान्तकर! दुःस्वप्नं मे नाशय । लङ्घ लङ्घ ।
मयमनुस्मर फट् फट् स्वाहा ॥

समनन्तरभाषितोऽयं महाक्रोधराजा सर्वविघ्नविनायकाः भा-
ीः भीताः भिन्नहृदयाः त्रस्तमनसो भगवन्तं शाक्यमुनिं, मञ्जुश्रियं
ुमारभूतं नमस्कारं कुर्वते स्म । समये च तस्थुः ॥

अथ भगवां शाक्यमुनिः सर्वं तं शुद्धावासभवनमवलोक्य, तं च महापर्षन्मण्डलं, एवमाह — भो भो देवसङ्घाः! अयं क्रोधराजा सर्वलौकिकलोकोत्तराणां मन्त्राणां साध्यमानानां यो हि दुष्टसत्त्वः जापिनं विहेठयेत्, तस्यायं क्रोधराजा सकुलं दमयिष्यति। शोषयिष्यति। न च प्राणोपरोधं करिष्यति। परिताप्य परिशोष्य व्यवस्थायां स्थापयिष्यति। जापिनस्य रक्षावरणगुप्तये स्थास्यति। अनुबृंहयिष्यति। यो ह्येवं समयमतिक्रमेत् क्रोधराजेन कृतरक्षं साधकं विहेठयेत् ॥

सप्तधास्य स्फुटेन्मूर्धा अर्जकस्येव मञ्जरी।
इत्येवमुक्त्वा मुनिश्रेष्ठो मञ्जुघोषं तदाब्रवीत् ॥

कुमार! त्वदीयमन्त्राणां सकलार्थार्थविस्तराम्।
मन्त्रतन्त्रार्थयुक्तानां साधकानां विशेषतः ॥

क्रोधराट् कथितं तन्त्रे सर्वविघ्नप्रनाशनम्।
लोकनाथैः पुरा ह्येतत् तथैव सन्नियोजितम् ॥

दुष्टविघ्नविनाशाय अरीणां क्रोधनाशनम्।
जापिनां सततं ह्येतां क्लिशासु पठयेत्सदा ॥

एष रक्षार्थसत्त्वानां दुःखमानां च नाशनम्।
कथितं लोकमुख्यैस्तु सर्वमन्त्रार्थसाधने ॥

अतः परं प्रवक्ष्यामि पुरुषाणां लक्षणं शुभम्।
येषु मन्त्राणि सिद्ध्यन्ते उत्तमाधममध्यमा ॥

तेजस्वी च मनस्वी च कनकाभो महोदरः।
विशालाक्षोऽथ सुस्निग्धो मन्दरागी क्रोधवर्जितः ॥

रक्तान्तनयन प्रियाभाषी उत्तमं तस्य सिद्ध्यति।
तनुत्वचोऽथ श्यामाभो तन्वङ्गो नातिदीर्घकः ॥

महोत्साही महोजस्कः सन्तुष्टो सर्वतः शुभः।
उत्कृष्टो योनितः शुद्धः अल्पेच्छेथ दुर्बलः ॥

तस्य सिद्धिर्ध्रुवा श्रेष्ठा दृश्यते सर्वकर्मसु।
अहीनाङ्गोऽथ सर्वत्र पूर्वश्यामो महोजसः ॥

अक्लिष्टचित्तो मनस्वी च ब्रह्मचारी सदा शुचि ।
+ वासाभिरतो नित्यं लोकज्ञो धर्मशाली च ॥

बहुमित्रो सदा त्यागी मात्रा च नरतो सदा ।
शुचिनः दक्षशीलश्च शौचाचाररतः सदा ॥

सत्यवादी घृणी चैव उत्तमा तस्य सिध्यति ।
अव्यङ्गगुणविस्तारः कुलीनो धार्मिकः सदा ॥

मातृपितृभक्तश्च ब्राह्मणातिथिपूजकः ।
अतिकारुणिको धीरस्तस्यापि सिद्धिरुत्तमा ॥

श्यामावदातः स्निग्धश्च अल्पभाषी सदा शुचिः ।
मृष्टान्नभोजनाकांक्षी शुचिदाराभिगामिनः ॥

लोकज्ञो बहुमतः सत्त्वस्तस्यापि सिद्धिमुत्तमा ।
नातिह्रस्वो न चोत्कृष्टः भिन्नाञ्जनमूर्धजः ॥

स्निग्धलोचनवर्णश्च शुचिः स्नानाभिरतः सदा ।
रत्नत्रये च प्रसन्नोऽभूत् तस्यापि सिद्धिमुत्तमा ॥

उत्कृष्टकर्मप्रयुक्ता च सात्त्वानामाशयतज्ञिनः ।
सहिष्णुः प्रियवाक्यश्च प्रसन्नो जिनसूनुना ॥

लोकोत्तरी तदा सिद्धिः सफला तस्य सिध्यते ।
महासत्त्वो महावीर्यः महौजस्को महाज्ञानी ॥

महाभोगी च मन्त्रज्ञः सर्वतन्त्रेषु तत्त्वविन ।
वर्णतः क्षत्रियो ह्यग्रो ब्राह्मणो वा मनस्विनः ॥

स्त्रीषु सेवी सदा रागी कनकाभोऽथ वर्णनः ।
दृश्यते प्रांशुगौरश्च तुङ्गनासो महाभुज ॥

प्रलम्बबाहु शूरश्च महाराज्याभिकांक्षिणः ।
प्रसन्नो जिनपुत्राणां स्याख्यादेविपूजकः ॥

रत्नत्रये च भक्तश्च बोधिचित्तविभूषितः ।
अतिकारुणिको धीरः क्वचिद् रोषो महोजः क्वचित् ॥

महाभोगी महात्यागी महोजस्को दुरासदः ।
स्त्रीषु वल्लभशूरश्च तस्यापि सिद्धिरुत्तमा ॥
अतिमानरतः शूरः स्त्रीषु सक्तो सदा पुनः ।
कनकाभः स्वल्पभोजश्च विस्तीर्णः कठिनः शुचिः ॥
घृणी कारुणिकः दक्षो लोकज्ञः बहुमतो गुणैः ।
मन्त्रजापी सदा भक्तः जिनेन्द्राणां प्रभङ्करम् ॥
तेषु श्रावकपुत्राणां खड्गिनां च सदा पुनः ।
प्रभविष्णुर्लोकमुख्यश्च वर्णतः द्वितीये शुभे ॥
अव्यङ्गः सर्वतः अङ्गैः क्रूरः साहसिकः सदा ।
त्यागशीलो जितामित्रो धर्माधर्मविचारकः ॥
नातिस्थूलो नातिकृशो नातिदीर्घो न ह्रस्वकः ।
मध्यमो मनुजः श्रेष्ठः सिद्धिस्तस्यापि उत्तमा ॥
आताम्रनखसुस्निग्धः रक्तपाणितलः शुचिः ।
चरणान्तं रक्ततः स्निग्धश्चक्रस्वस्तिकभूषितः ॥
ध्वजतोरणमत्स्याश्च पताका पद्मसुत्पलाः ।
दृश्यन्ते पाणिचरणयोः मनुजो लक्षलक्षणैः ॥
तादृशः पुरुषः श्रेष्ठः अग्रसिद्धिस्तु कल्प्यते ।
शुक्लदंष्ट्रो अग्रुपिरस्तुङ्गः शिखरिणः समाः ॥
तुङ्गनासो विशालाख्यः संहतभ्रूचिबुके शुभः ।
गोपक्ष्मलो रुचिरस्तु कृष्णदृक् तारकाश्चितः ॥
ललाटं यस्य विस्तीर्णं छत्राकारशिरः शुभः ।
उष्णीषाकारशिरश्चैव कर्णौ शोभनतः शुभौ ॥
सिंहाकारहनुः सदा अधरौ पक्वबिम्बसमप्रभौ ।
पद्मपत्ररक्ताभा जिह्वा यस्य दृश्यते तालुकाचाभिरक्तिका ॥
ग्रीवा कम्बुसदृशा पीनस्कन्धा समुद्गता ।
कक्षवक्षः शुभः श्रेष्ठः विस्तीर्णोरस्तथैव च ॥

स्वल्पतो नाभिदेशश्च विस्तीर्णकठिनः शुभः ।
गम्भीरप्रदक्षिणा नाभी शिराजाल अकुर्वता ॥

प्रलम्बबाहुर्महाभुजः कर्त्रिसिंहादिचिह्नितः ।
ऊरू चास्य वर्तुलकौ कोर्परौ स्वरतवर्जितौ ॥

एणेयजङ्घः सुसम्पन्नवर्तुलाश्च प्रकीर्तिताः ।
चरणौ मांसलोपेतौ अङ्गुलीभिः समुन्नतौ ॥

रक्तौ रक्तनखौ स्निग्धौ उन्नतौ मांसशोभितौ ।
अथ शिरो महीतलाचर्णौ शोभनौ प्रियदर्शनौ ॥

अश्लिष्टौ वर्णतः शुद्धौ प्रशस्तौ लोकनिह्नितौ ।
उपरिष्टात्तु तेषां वै शिराजाल अनुन्नतौ ॥

पुरीषप्रस्रवणौ मार्गौ गम्भीरावर्तदक्षिणौ ।
प्रशस्तौ स्वल्पतरौ नित्यं वृषणौ वर्तुलौ शुभौ ॥

अवश्यौ अखण्डौ च अनेकशैव कीर्तिते ।
अङ्गजाते यदा शुद्ध्या रागान्ते च समाश्रितः ॥

स्वप्नकाले चाहारे तृष्याणां खाद्यभोजनैः ।
प्रश्रुतो वर्णतो नीलो रक्तो वा यदि दृश्यते ॥

प्रभूतस्रावी स्निग्धश्च शुभलक्षणलक्षितैः ।
तथाविधेथे सत्त्वाढ्ये उत्तमा सिद्धिरिष्यते ॥

तृपुरीषी षण्मूत्री च शौचाचाररतः शुचिः ।
शयते यो हि यामान्ते प्रातरुत्थानि जन्तवः ॥

तस्य शुद्धि सदा श्रेष्ठा दृश्यते सर्वकार्मिका ।
फलां विविधाकारां सम्पदा बहु वा पुनः ॥

अनुभोक्ता भवेन्मध्यैर्लक्षणैरभिलक्षितः ।
नक्षत्रैश्च तथा जातः पुष्ये रेवतिफल्गुनैः ॥

मघासु अनुराधायां चित्रारोहिणिकृत्तिकैः ।
जनकः तेषु दृश्यस्थः समर्थो ग्रहचिह्नितः ॥

प्रभातकाले यो जातः सिद्धिस्तेषु प्रदृश्यते ।
मध्याह्ने प्रातरश्चापि अत्रान्ते च शुचिग्रहाः ॥
शुक्रः सोमशुक्राश्च पीतको बुधः बृहस्पति ।
सामर्थ्यकार्यसिद्धयर्थं निरीक्ष्यन्ते सर्वजन्तूनाम् ॥
अत्रान्तरे च ये जाता मनुजः शुभकर्मिणः ।
तेषां सिद्धयन्त्ययत्नेन मन्त्राः सर्वार्थसाधने ॥
मध्याह्नापरतेनैव रवायास्तगने सदा ।
अत्रान्तरे सदा क्रूराः ग्रहाः पश्यन्ति देहिनाम् ॥
आदित्याङ्गारकः क्रूराः केतुराहुशनिश्चरः ।
ये च ग्रहमुख्यास्तु कम्पनिर्घातउल्किनः ॥
तारा घोरतमश्चैव कृष्णारिष्टसमस्तथा ।
कालमारकुरुः रौद्रो दृश्यते तस्मि कालतः ॥
आदित्योदयकाले च बुधः पश्यति मेदिनीम् ।
युगमात्रे रथत्युचे पश्यतेऽसौ बृहस्पतिः ॥
शुक्रः परेण धनाध्यक्षो पश्यतेऽसौ युगे रवौ ।
मध्याह्नादापूर्यते चन्द्रः दर्शनं चन्द्रदेहिनाम् ॥
बुधकाले भवेद् राज्यं बृहस्पतौ अर्थभोगकृत् ।
शुक्रे धननिष्पत्तिः महाराज्यं भोगसम्पदम् ॥
दीर्घायुष्मं तथा चन्द्रे ऐश्वर्यं चापि साफलम् ।
मध्यन्दिने तथा भानौ मध्यदृष्टिसमोदिता ॥
मध्याह्ने निगते नित्यं आदित्यो दिशमीक्षते ।
युगमात्रे ह्यसिता नोचे केतुरेवमुदाहृताः ॥
राहुः शनैश्चरश्चैव तमकालयुगान्तकः ।
ततः परेण ह्रस्यायां निष्टरिष्टोल्ककम्पकः ॥
[illegible] ।
योऽसौ ग्रहमुख्यस्तु वालदारकवर्णिनः रूपिणः ॥

शक्तिहस्तो महाक्रूरः अङ्गारस्येव दर्शने
ततो युगान्तापिने भानो शुभानां ग्रहानरः ॥
आदित्यदर्शनाज्जातः क्रूरः साहसिको भवेत् ।
सत्यकाङ्गारके जातः क्रुद्धलुब्धोऽभिमानिनः ॥
केतुरिष्टातिधूम्राणां जनयन्ते व्याधिसम्भवा ।
दरिद्रा व्याधिनो लुब्धा मूर्खाश्चैव जना सदा ॥
कालस्तमकम्पानां उल्किकां ग्रहकुत्सिताम् ।
कम्पनिर्घाततारणामशनिश्चैव प्रतापिन ॥
वज्रोरिष्टतथाचान्यां ऋक्षादीनां प्रकम्पने ।
राहुदर्शनघोरस्तु दृश्यते सर्वजन्तुनाम् ॥
दरिद्रानाथदुःशीला पापचौरनरा सदा ।
जायन्ते दुःखिता मर्त्या जना व्याधिमाणया ।
कुष्ठिनो बहुरोगाश्च काणखञ्जसदाकुला ॥
षण्ढपण्डेऽनपत्याश्च दुर्भगाः स्त्रीषु कुत्सिता ।
नरा नार्यस्तथा चान्ये दर्शनाग्रहकुत्सिताम् ॥
जायन्ते बहुधा लोकां जातकेष्वेव जातका ।
शुक्लपीतग्रहाः श्रेष्ठा तेषु जातिशुभोदयाः ॥
वर्णतः शुक्लपीताभाः प्रशस्ता जिनवर्णिताः ।
चत्वारो ग्रहमुख्यास्तु शुक्रचन्द्रगुरुर्बुधः ॥
तेषां दर्शनसिद्ध्यर्थं जापिना सर्वमर्थम् ।
बालिशानां च सत्त्वानां जातिरेव सदा शुभा ॥
सर्वसम्पत्सदा विप्राः कथिता लोकपुङ्गवैः ।
क्षणमात्रं तथोन्मेषनिमेषं चापि अच्छटम् ॥
एषां संक्षेपतो जाति कथिता लोकपुङ्गवैः ।
[illegible]
उदयन्ते तथा नित्यं एतत्कालं नु तत्त्वतः ।
श्रेयसा पापका ह्येते भ्रमन्ते चक्रवत् सदा ॥

शुभाशुभकरा तेऽत्र मन्त्रं एकयत् सदा ।
ते देवलोकसमाख्याता नु + + + + + + ॥
एतेषां कचित् किञ्चित् पापबुद्धिस्तु जायते ।
शुभाशुभफलासत्त्वाज्जायन्ते बहुधा पुनः ॥
स एषां दर्शनमित्याहुर्ग्रहाणां कर्मभोजिनाम् ।
सत्त्वानां सत्वरमायान्ति शीघ्रगामित्वसत्वराः ॥
दृश्यादृश्यं क्षणान्मेषमच्छटां त्वरिता गतिः ।
ततः कालं प्रकल्प्येते + + + + + + + + ॥
एतत्कालप्रमाणं तु दर्शितमग्रबुद्धिभिः ।
अतः परं प्रवक्ष्यामि नियते जातके सदा ॥
मुहूर्त्ता द्वादशाश्चैव कालं कालं यानुहेतवः ।
अपात्रं चैव वक्ष्यन्ते सिद्धिहेतुर्न वा पुनः ॥
शकुनं चैव लोकानां दृष्टयादृष्टय पुनः पुनः ।
राष्ट्रभङ्गं च दुर्भिक्षं + + + नृपतेः शुभम् ॥
कालाकालं तदा मार्यः शिवं चक्रे सदा जन ।
केतुकम्पोऽथ निर्घातमुल्कं चैव सधूमिनम् ॥
नक्षत्रवारताराणां चरितं च शुभाशुभम् ।
चरितं सर्वभूतानां शिवाशिवविचेष्टितम् ॥
क्रव्यादां मातरांश्चैव रौद्रसत्त्वोपघातिनाम् ।
दुष्टसत्त्वां तथा वक्ष्ये चरितं पिशिताशिनाम् ॥
प्रसन्नाना देवता यत्र रत्नधर्माग्रबुद्धिनाम् ।
शुभकर्मसदायुक्तां मैत्रचित्तदयालवाम् ॥
साधुचेष्टार्थबुद्धीनां परपूर्त्तिसमाश्रिताम् ।
आकृष्टा मन्त्रमुख्यैभिः ओषध्याहारहेतुनाम् ॥
विस्तरं चरितं वक्ष्ये लक्षणं यत्र आश्रिताः ।
परदेह समाश्रित्य तिष्ठन्ते मानुषा स्मृता ॥

देवा पुनस्तमित्याहुरगुग मानहेतुना ।
द्विविधा तेऽपि तत्रस्था पार्थिवा सुरासुरा ॥
तेऽपि तत्र द्विधा यान्ति क्रूर साधारणा पुनः ।
तेऽपि तत्र द्विधा यान्ति शुभाशुभगतिपञ्चकम् ॥
तत्रस्था त्रिविधा यान्ति त्रिंशत्रिंशदसङ्ख्यकम् ।
अकनिष्ठा यावदेवेन्द्रा यामासङ्ख्यमभूपकाः ॥
अपर्यन्तं याव धातूनां लोकानां च शुभाशुभम् ।
या वां संसारिका सत्त्वा यात्रां चार्यश्रावकाः ॥
बुद्धप्रत्येकबुद्धानां तदौरसां च मुनुनाम् ।
बोधिसत्त्वां महासत्त्वां दशभूमिप्रतिष्ठिनाम् ॥
सर्वसत्वा तथा नित्यं सत्त्वयोनिसमाश्रिताम् ।
सर्वबालिसजन्तूनां गतियोनिसमाश्रिताम् ॥
विनिर्मुक्तानां संसाराद्दे बुद्धानां सर्वार्याम् ।
सर्वतो नित्यं लक्षणं चरितं सदा ॥
वाचामिङ्गिततत्त्वं तु तेषां वक्ष्ये सविस्तरम् ।
आकृष्टा सर्वभूतास्तु मन्त्रतन्त्रसयुक्तिभिः ॥
आविष्टाकृष्टमन्त्रज्ञो परदेहसमाश्रिनाम् ।
कुशलैः कुशलकर्मज्ञैरगमरैः सजापिभिः ॥
अमूढचरितैः सर्वैर्निग्रहानुग्रहक्षमैः ।
आकृष्टा भूतला लोके मानुष्ये मन्त्रजापिभिः ॥
तेषां सिद्धिनिमित्तं तु सर्वं वक्ष्ये तु तत्त्वतः ।
तेषां देहानुरोधार्थं मानुषाणां सदारुजाम् ॥
नित्यमत्यन्तधर्मार्थं मोक्षार्थं तु प्रकल्प्यते ।
निग्रहं तेषु दुष्टानां विशुद्धानां तु पूजना ॥
निग्रहानुग्रहं चैव मन्त्रतन्त्रं प्रकल्प्यते ।
वातः श्लेष्मपित्तानां विनिधात्र त्रिधा क्रिया ॥

तेषां तु प्रकल्पयेच्छान्ति त्रिविधैव क्रमो मतः ।
तत्र मन्त्रैः सदा कुर्यान्मानुषाणां चिकित्सितम् ॥

महाभूतविकल्पस्तु भूतो भूताधिकः स्मृतः ।
अभिभूतं तथाभूतैरधिभूतः स उच्यते ॥

अधिभूतो यदा जन्तुरस्वास्थ्यं जनयेत् तदा ।
भूतं भूतप्रकारं तु द्विविधं तु प्रकल्प्यते ॥

सत्वभूतस्तथा नित्यमसत्वश्चैव प्रकल्प्यते ।
पित्तश्लेष्म तथा वायुर्ये चान्ये + + + + + ॥

चत्वारश्च महाभूताः पञ्चममाकाशमिष्यते ।
आपस्तेजो समायुक्तं पृथिवी वायुसमायुता ॥

असत्वसङ्ख्यमित्याहुर्बुद्धिमन्तः सदा पुनः ।
लोकाग्राधिपति ह्यग्रः इत्युवाच महाद्युतिः ॥

असत्वसङ्ख्यं ह्यमानुष्यं + + + + + + + + ।
मानुषं सत्वमित्याहुरग्रधीर्वदतां वरः ॥

अमानुषं मानुषं वापि सत्वसङ्ख्यं सदैवतम् ।
सत्वानां श्रेयसार्थं तु सार्वज्ञं वचनं पुनः ॥

अतीतानागतैर्बुद्धैः प्रत्युत्पन्नैस्तथैव च ।
भाषितं कर्ममेवं तु शुभाशुभफलोदयम् ॥

केवलं वचनं बुद्धानामवश्यं कर्म करोति ।
तन्निमित्तं गोत्रसामान्यात् सिद्धिरेव प्रदृश्यते ॥

सार्वज्ञं ज्ञानमित्याहुः क्षेमं शान्तं सदा शुचिम् ।
निष्ठं शुद्धनैरात्म्यं परमार्थं मोक्षमिष्यते ॥

सदेव वर्त्म सत्त्वेषु इदं सूत्रमुदाहृतम् ।
तत्र मन्त्रसदोपध्या अशेषं वचनं जगे ॥

भूतं भविष्यमत्यन्तं सर्वशास्त्रसुपूजितम् ।
लोकाग्र्यं धर्मनैरात्म्यं सदाशान्तशिवं पदम ॥

एतत् सार्वज्ञवचनं निष्ठं तस्य परं पदम् ।
केवलं तु प्रकल्प्येते सर्वज्ञज्ञानमुद्भवम् ॥

प्रभावं सर्वबुद्धानां बोधिसत्त्वानां च धीमताम् ।
मन्त्राणां सर्वकर्मेषु सिद्धिः सर्वत्र दर्शिता ॥

अत एव मुनीन्द्रेण कल्पराजः प्रभाषितः ।
अनेन वर्त्मना गच्छन्मन्त्ररूपेण देहिनाम् ॥

निर्वाणपुरमाप्नोति शान्तनिर्जरसम्पदम् ।
अशोकं विरजं क्षेमं बोधिनिष्ठं सदाशिवम् ॥

य एष सर्वबुद्धानां शासनं मन्त्रजापिनाम् ।
कथिते भूतले तत्रमक्षेपं मन्त्रजापिनाम् ॥

सर्वं ज्ञानज्ञेयं च कर्महेतुनिबन्धनम् ।
सर्वमेतं तु मन्त्रार्थं त्रिविधा बोधिनिम्नगा ॥

अशेषज्ञानं तु बुद्धानामिह कल्पे प्रदर्शितम् ।
सत्त्वानां च हितार्थाय सर्वलोकेषु प्रवर्तितम् ॥

ये ह्यस्ति कल्पराजेऽस्मिन्नान्यकल्पेषु दृश्यते ।
योऽन्यकल्पेषु कथितं मुनिपुत्रैस्तु मुनिवरैः ॥

ते ह्यस्ति सर्वमन्त्राणां कल्पं विस्तरमेव तु ।
अत एव जिनेन्द्रेण कथितं सर्वदेहिनाम् ॥

महीतले च त्रिलोकेऽस्मिं न सो नि + + + + ।
योऽस्मिन् कल्पराजेन्द्रे नानीतो न वशीकृतः ॥

अस्तंगते मुनिचन्द्रे शून्ये भूतलमण्डले ।
इह कल्पे स्थिते लोके शासनार्थं करिष्यति ॥

कुमारः सर्वभूतानां मञ्जुघोषः सदा शुभः ।
बुद्धकृत्यं तथा लोके शासनेऽस्मिन् करिष्यति ॥

प्रभावं कल्पराजस्य चिरकालाभिलापिणाम् ।
श्रुत्वा सकृदधिमुच्यन्ते तेषु सिद्धिः सदा भवेत् ॥

अवन्ध्यं सर्वभूतानां वचनेदं सदा शुभम् ।
मन्त्रिणां सर्वभूतेषु जापहोम सदा रतास् ॥

त्र्यद्विकेषु ज्ञानेषु ज्ञानं यत्र प्रवर्तते ।
स एव प्रवर्तते अस्मिं कल्पराजे वरोत्तमे ॥

मन्त्रप्रतिष्ठा बुद्धानां शासनं स इहोदितम् ।
निर्विकल्पस्तु तं मन्त्रं विकल्पेऽस्मिं तदिहोच्यते ॥

करोति सर्वसत्त्वानामर्थानर्थं शुभाशुभम् ।
गतिबुद्धिस्तथा सत्त्वं लोकानां च शिवाशिवम् ॥

स एष प्रपञ्च्यते कल्पे निःप्रपञ्चास्तथागता ।
लोकातीता स्वसम्बुद्धा लोकहेतोरिहोच्यते ॥

अधिकं सर्वधर्माणां लोकधर्मा ह्यतिक्रमा ।
करोति विविधां कर्मा विचित्रां लोकपूजिताम् ॥

मन्त्रराट् कर्मसंयुक्तः सत्त्वराशेस्तथा हितः ।
कुमारो मञ्जुघोषस्तु बुद्धकृत्यं करोति सः ॥

तस्यार्थे गुणनिष्पत्तिलोकाधानं शुभाशुभम् ।
अध्येष्टाहं प्रवक्ता वै नाध्येष्टा धर्ममुच्यते ॥

केवलं सर्वसत्त्वानां हितार्थं बुद्धभाषितम् ।
अतीतैः सर्वबुद्धैस्तु भाषितं तु प्रवक्ष्यते ॥

बुद्धवंशमविच्छिन्नं भविष्यत्यधिमुच्यते ।
ते सर्वज्ञज्ञानबुद्धत्वमन्त्रिणां सर्वकर्मसु ॥

सर्वज्ञज्ञानप्रवृत्तं तु कर्ममेकं प्रशस्यते ।
पूर्वकर्म स्वकं लोके तदधुना परिभुज्यते ॥

तस्मात् कर्म प्रकुर्वीत इह जन्मसु दुःकरम् ।
मन्त्राः सिद्ध्यन्त्ययत्नेन कर्मबन्ध इहापि तम् ॥

जन्मे सिद्धिः स्यादिह कर्मोऽपि दृश्यते ।
तस्मात् सर्वबुद्धैस्तु कर्मगेकं प्रशंसितम् ॥

विधियुक्तं तु तत् कर्म क्षिप्रं सिद्धि इहापि तत् ।
भ्रमन्ति सत्त्वा विधिहीना वालिशास्तु प्रमोहिताः ॥
तस्मात् सर्वप्रकारेण कर्म एकं प्रशंसितम् ।
विधिं कर्मसमायुक्तं संयुक्तः साधयिष्यति ॥
विधिहीनं तथा कर्म सुचिरेणापि न सिद्ध्यति ।
न हि ध्यानैर्विना मोक्षं न मोक्षं ध्यानवर्जितम् ॥
तस्माद्ध्यानं च मोक्षं च संयुक्ते बोधिमुच्यते ॥ इति ।

आर्यमञ्जुश्रियमूलकल्पाद् बोधिसत्त्वपिटकावतंसका-
न्महायानवैपुल्यसूत्रात् *त्रयोदशमः सर्वकर्मक्रियार्थः
पटलविसरः परिसमाप्त इति ।

---

* त्रयोदशस्य चतुर्दशस्य च पूर्वं संख्यातत्वाद्, इह त्रयोदश इति अनन्तरप-
टलविसरे चतुर्दश इति तदनुसारि उत्तरोत्तरसंख्यानं चादर्शग्रन्थे दृश्यमानं लेखकप्रमादाग-
तमिति प्रतिभाति ।

अथ षोडशः पटलविसरः ।

अथ खलु भगवां शाक्यमुनिः पुनरपि शुद्धावासभवनमवलोक्य, मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । शृणु मञ्जुश्रीः! त्वदीये सर्वार्थक्रियाकर्मपटलनिमरं पूर्वनिर्दिष्टं पर्षन्मण्डलमध्ये सविस्तरं वक्ष्येऽहम् ।

पृष्टोऽयं यक्षराजेन वज्रहस्तेन धीमता ।
सर्वमन्त्रार्थयुक्तानां स्वप्नानां च शुभाशुभम् ॥
अत प्रसङ्गेन सर्वेदं कथितं मन्त्रजापिनाम् ।
यक्षराट् तुष्टमनसो मूर्ध्नि कृत्वा तु अञ्जलिम् ॥

प्रणम्य शिरसा शास्तुरभ्युवाच गिरां मुदा ।
अनुग्रहार्थं तु लोकानां कथितं ह्यग्रबुद्धिना ॥

ममैवमनुकम्पार्थं सत्त्वानां च सुखोदया ।
जापिनां सर्वमन्त्राणां स्वप्नानां च शुभाशुभम् ॥

चरितं गुणविस्तारं सत्त्वाधिष्ठनिकृष्टिनाम् ।
उत्तमां गति योनिभ्यो हेतुज्ञानविचेष्टितम् ॥
अतीतानागतं ज्ञानं वर्तमानं शुभाशुभम् ।
सर्वं सर्वगतं ज्ञानं सर्वज्ञज्ञानचेष्टितम् ॥

अनाभास्यमनालम्भ्यं निःप्रपञ्चं प्रपञ्चितम् ।
मन्त्राकारवरोपेतं शिवं शान्तिमुदीरितम् ॥

प्रभावं सर्वबुद्धानां वर्णितं ह्यग्रबुद्धिना ।
सर्वमन्त्रार्थयुक्तानां जापिनां च विशेषतः ॥

कर्म कर्मफलं सर्वं क्रियाकालं तथैव च ।
पात्रं स्थानं तथा वेषं स्वप्नप्रसङ्गे प्रचोदितम् ॥

यक्षराण्मुनिवरं श्रेष्ठं सप्तमन्त्रतथागतम् ।
भद्रकल्पे तु ये बुद्धाः सप्तमोऽयं शाक्यपुङ्गवः ॥

शाक्यसिंहो जितामित्रः सप्तमोऽयं प्रकल्पितः ।
युगाधमेऽभिसम्बुद्धो लोकनाथो प्रभङ्करः ॥

महावीर्यो महाप्राज्ञो महास्थामोदितो मुनिः ।
वज्रपाणिस्तु तं यक्षो बोधिसत्त्वो नमस्य तम् ॥

स्वकेषु आसने तस्थुस्तूष्णीम्भूतोऽथ बुद्धिमान् ।
मञ्जुश्रियोऽथ महाप्राज्ञः पृष्टोऽसौ मुनिना तदा ॥
अध्येषयति तं बुद्धं कन्यसं मुनिसत्तमम् ।
साधु भगवां सम्बुद्धः कर्मज्ञान सविस्तरम् ॥
जातकं + + + + + + + + + + सदा शुभम् ।
चरितं बहुसत्त्वानां कर्मज्ञानसहेतुकम् ॥
निर्विष्टाविष्टचेष्टानां श्रेयसार्थार्थयुक्तिनाम् ।
जापिनां सिद्धिनिमित्तानि साध्यसाध्यविकल्पिताम् ॥
भूतिकामा तथा लोके ऐश्वर्याभोगकाङ्क्षिणाम् ।
राज्यहेतुप्रकृष्टानां सिद्धिधारणकामिनाम् ॥
सर्वं सर्वगतं ज्ञानं संक्षेपेण प्रकाशतु ।
इत्युवाच मुनिः श्रेष्ठो अध्येष्टो जिनसूनुना ॥
कलविङ्करुतो धीमान् दिव्यदुन्दुभिनादिनः ।
ब्रह्मस्वरो महावीर्यपर्जन्यो घोषनिःस्वनः ॥
बुद्धवाचोदितः शुद्धो वाचे गाथां सशमो मुनिः ।
कुमार! परार्थगतानां सिद्धिमजायत लोकहितानाम् ।
सि सर्वहिते जगति प्रणितारो शुद्धयतु तिष्ठतु मोक्षविहूनाम् ॥
यथाक्षयवीर्यवां हि तच्चित्ता मद्मन्त्ररता स तदानरता ये ।
द्धिभवे सद तेषु जनेषु नान्य कथञ्चन सिद्धिमुपेष्ये ॥
त्रवरे सद तुष्टिरता ये शासनि चक्रधरे तथा मञ्जुधरे वा
र्त्यिमार प्रवर्त्तयि चक्रं सोऽपि ह चक्रधरो इह युक्तः ॥
वा दिव्यमनोरम यस्या वालिशजन्तु विवर्जितनित्या ।
व्यमनोरमकर्णसुखा च प्रेमणीया मधुरा अनुकूला ॥
त्तप्रह्लादनसौख्यप्रदा च मञ्जुरिति समुदीरय बुद्धा ।
स्य न शक्यमभावमजानं तेऽपि तथागतज्ञानविशेषैः ॥
सुताथ च भूमिप्रविष्टा दिव्यप्रकृष्टदशतथागतसङ्ख्या ।
ऽपि सुरेश्वरलोकविशिष्टा दिव्यप्रभावमजानमशक्या ॥

रूप्य अरूप्या तथा अभूमा कामिकदिव्यं नृजा मनुजा वा।
योगिन सिद्धिं गता अथ लोके सर्वविशिष्ट तथा नरमुख्या ॥

सत्त्वमसौ न स विद्यति कश्चिद् यो प्रतिजानि तु तस्य श्रिया मे।
एष सिरिपरिकल्पिततुल्यं मञ्जुसिरीति प्रतिजानि तु बुद्धाः ॥

मञ्जुश्रियं परिकल्पिततुल्यं नाममियं तथ पूर्वजिनेभिः।
एष कृता तव संज्ञितकल्पे दिव्य अनागतबुद्धमतीतैः ॥

नामश्रुणि पर्यस्तव शुद्धो नास्य मनो भवि एकमनो वा।
तस्य मिमं शिवशान्ति भवेयं बोधिवरा भवि अग्रविशिष्टा ॥

मन्त्र अशेष तु सिद्ध भवेयां उत्तमयोनि गति लेभे।
उत्तमिधर्मि समाश्रयि नित्य विघ्नविवर्जित सिद्धि भवेया ॥

ईप्सितमन्त्र प्रसाधयि सर्वां क्षिप्र स गच्छति बोधि ह मञ्जुम्।
लप्स्यति बोधिगतो मुनिमुख्यः गत्व निषीदति सत्त्वहितार्थम् ॥

बुद्धयि बोधिप्रवर्तयि चक्रं एष गुणो कथितो जिनमुख्यैः।
मञ्जुरिति शिरीं त्वायि संस्मरि नामं अचिन्त्यगुणाः कथिता जिन-
[मुख्यैः ॥

दर्शतु नित्यप्रभाव त्वदीयं पूर्वकसर्वगतैर्जिनमुख्यैः।
कल्पभणे या न शक्यमसङ्ख्यैः मन्त्रशता तव शुद्धकुमार! ॥

मञ्जुश्रियं तव मन्त्रचर्यं भाषित सर्वमशेषकबुद्धैः।
एष कुमार थ सर्वगता वै शासन तुभ्य रतोत्तम वीराः ।'

शुद्धावासनिषण्णजना वै सत्त्वमशेषत ईहय सत्ता।
न क्रमिमन्त्र त्वदीय कदाचिं नापि कथञ्चिह ये तव मन्त्रम् ॥ इति।

आर्यमञ्जुश्रीमूलकल्पान्महायानवैपुल्यसूत्रात्
चतुर्दशमः गाथापटलनिर्देशविसरः
परिसमाप्तमिति।

## अथ सप्तदशः पटलविसरः ।

अथ खलु भगवांश्छाक्यमुनिः सर्वतथागतविकुर्वितं नाम समाधिं समापद्यते स्म । समनन्तरसमापन्नस्य भगवतः शाक्यमुनेः ऊर्णाकोशाद् रश्मयो निश्चरंति स्म । नीलपीतावदातमाञ्जिष्ठस्फटिकवर्णाः । सर्वं चेदं बुधक्षेत्रमवभास्य, सर्वलोकधात्वन्तराणि चालोकयित्वा, सर्वग्रहनक्षत्रांश्च मुहूर्तमात्रेण जिह्मीकृत्याकृष्ट्वा । आकृष्टा च स्वकस्वका स्थानानि सन्नियोज्य तत् पर्षन्मण्डलं बुद्धाधिष्ठानेनाकृष्य च, तत्रैव भगवतः शाक्यमुनेरूर्णाकोशान्तर्धीयते स्म । सर्वे च ग्रहनक्षत्रतारकाः ज्योतिषोरुपरुध्यमाना आर्ता भीता भगवन्तं शाक्यमुनिं प्रजग्मुः । कृताञ्जलयश्च तस्थुरे प्रकम्पयमाना मुहुर्मुहुश्च धरणितले प्रपतनमानाः ॥

अथ भगवांश्छाक्यमुनिः सर्वेषां ग्रहनक्षत्रतारकाज्योतिषाणां च बालिशोपजानितबुद्धीनां च देहिनामनुग्रहार्थं वाचमुदीरयते स्म । शृण्वन्तु भवन्तो मार्षाः! देवसङ्घा समानुपाः! कर्म एव सत्वानां विभजते लोकवैचित्र्यम् । यश्च बुधानां भगवतां वज्रकायशरीरतामभिनिष्पत्तिर्यश्च ससुरासुरस्य लोकस्य भ्रमत्संसाराटवीकान्तारप्रविष्टस्य लोकस्य विचित्रशरीरतामभिनिष्पत्तिः सर्वेदं कर्मजं शुभाशुभं निवन्धनम् । न तत्र कर्ता कारकः ईश्वरः प्रधानो वा पुरुषा साङ्ख्यापसृष्टो वा प्रवर्तते किञ्चिद् वर्जयित्वा तु कर्मजं सर्वकर्मप्रत्ययजनितो हेतुमपेक्षते । स च हेतुप्रत्ययमपेक्षते । एवं प्रतीत्यसमुत्पत्तिप्रत्ययान्तोऽन्यमुपश्लिष्यते श्लेष्माणां च भूताभिनिष्पत्तिमहाभूतां जनयते । ते च महाभूता स्कन्धान्तरमनादिगतिकात् प्रतिपद्यन्ते । प्रपन्नाश्च गतिदेशान्तरं विस्तरविभागशोऽभ्युपपद्यन्ते । कालान्तरोपरोधविलोमताज्ञानवह्निमीरिता कर्मोपरचितवासना अशेषमपि निर्दहन्ते । त्रियायानसमता निःप्रपञ्चतां समतिनिर्हरन्ते । महायानदीर्घकालोपरचितकर्म स्वकं मध्यकालप्रत्येकखड्गिनां स्वयम्भु ज्ञानं प्रवर्तते । परघोषानुप्रवृत्तिश्रवश्रावकानां ह्रस्वकालाचिराधिराज्यं तेनात्यप्रवृत्तिधर्मान्तर बुद्धिरेव प्रवर्तते वालिशानां विमोहिताम् ॥

अथ च पुनर्विचित्रकर्मजनितोऽयं लोकसन्निवेशदेशवेपोपरतः शिवं निर्जरसम्पदमशोकाविरजकर्मलोकसिद्धिमपेक्षते । विमलं मार्गविनिर्मुक्तमष्टाङ्गोपेतसुशीतलं कर्म एव कुरुते कर्म नान्यं कर्मापेक्षते ॥

कर्माकर्मविनिर्मुक्तो निःप्रपञ्चः स तिष्ठति ।
त्रिधा यानप्रवृत्तस्तु नान्यं शान्तिमजायते ॥

त्रिविधैव भवेन्मन्त्रं त्रिधा कर्म प्रकीर्त्तिता ।
त्रिविधः फलनिष्पत्तिस्त्रिविधैव विचारणा ॥

विपरीतं त्रिधा कर्म त्रिविधैव प्रदृश्यते ।
कुशलं तत् त्रिविधं प्रोक्तं पुनस्तत्रे प्रदृश्यते ॥

पुनरेव त्रिधं गोत्रं मन्त्राणामास्पदं शान्तम् ।
शान्तं निर्वाणगोत्रं तु बुद्धानां शुद्धमानसाम् ॥

तदेव कर्म प्रत्यंशं मन्त्राङ्गे प्रकीर्तितः ।
ज्योतिषाङ्गं तथा लोके सिधिहेतोः प्रकल्पितम् ॥

तदेव अंशं कर्म वै प्रत्ययांशे प्रवर्तते ।
यथा हि शालीं व्रीहीणामङ्कुरेण विभाव्यते ॥

तथा हि सिद्धद्रव्याणां लक्षणेन विभाव्यते ।
यथा हि शुक्लो वर्णस्तु व्यवहारेण प्रकल्प्यते ॥

तथाहि ज्योतिषयुक्तीनां व्यवहार्थे प्रकल्प्यते ।
सर्वतः सर्वयुक्तीनां कर्म एवं प्रशंसितम् ॥

न तत् कर्म विना चिह्नैः कचिद् देहः संस्थितः ।
चिह्नैश्च चरितैश्चापि जातकैर्गोत्रमाश्रितैः ॥

विविधैः शकुनैर्नित्यं तत् कर्म चोपलभ्यते ।
न कचिद् विग्रही कर्म अन्तलीनोऽन्यलक्ष्यते ॥

ज्वरितः सर्वतो जन्तुर्विकारैश्चोपलक्ष्यते ।
एवं देहे समाश्रित्य कर्म दृश्यति देहिनाम् ॥

शुभाशुभफलाचिह्नजातकास्तु प्रकीर्त्तिताः ।
त्रिविधा शकुनयः सत्त्वा त्रिविधा कर्मसुद्भवा ॥

बलकालं तथा यात्रा विविधा प्राणिनां रुतां।
शुभाशुभफला + + + + + + + + + सदा॥

सिद्ध्यसिद्धिनिमित्तं तु प्रत्ययार्थमवेक्षते।
निमित्तं चरितं चिह्नं प्रत्ययेति प्रकल्पितम्॥

तस्मात् सर्वप्रयत्नेन प्रत्ययं तु अपेक्षते।
यज्जापिना सता मन्त्रे सिद्धिहेतोरपेक्षयेत्॥

कर्मस्वकान्यतानि अव्यङ्गानि लक्षयेत्।
अलक्षितं तु सर्वं वै विघ्नकर्मैः सुदारुणैः॥

तस्मात् सर्वाण्येतानि अङ्गानीति मुनेर्वचः।
सालेन्द्रराजः सर्वज्ञो बोधिमण्डे समाविशेत्॥

मन्त्रं उदीरयामास सर्वविघ्नप्रनाशनम्।
दुःस्वप्नं दुर्निमित्तं तु दुःसहं च विनाशनम्॥

तस्य बोधिगतं चित्तं सर्वज्ञस्य महात्मने।
मारेण दुष्टचित्तेन कृतो विघ्नो महाभयोः॥

अनिमित्तं तेन दृष्टं वै तरोर्मूले महाभयम्।
अनिमित्तात् तस्य जायन्ते अनेकाकारभीषणाः॥

तस्य पुण्यबलाधाना चिरकालाभिलापिणा।
तेन मन्त्रवर्ण तस्य बलासौ भग्नाशो नमुचिस्तदा॥

ऋद्धिमन्तो महावीर्या संवृतोऽसौ महाद्युतिः।
तस्य मन्त्रप्रभावेन लिप्से बोधिमुत्तमाम्॥

स एव वक्ष्यते मन्त्रः दुर्निमित्तोपघातनम्।
दुःस्वप्नं दुःसहं चैव दुष्टसत्त्वनिवारणम्॥

शृण्वन्तु देवसङ्घा वै ग्रहनक्षत्रज्योतिषाम्।
मन्त्रराट् भाषितः पूर्वं शालेन्द्रेण जिनेन वै।
निग्रहार्थं च दुष्टानां ग्रहनक्षत्रतारकाम्।
भूतां चैव सर्वेषां सौम्यचित्तां प्रबोधनाम्॥

शृण्वन्तु भूतगणाः सर्वे ये केचित् पृथिवीचराः ।
अपदा वहुपदा वापि द्विपदा वापि चतुःपदा ॥
सर्वे संक्षेपतः सत्त्वा ये केचित् त्रिषु स्थावराः ।
नमः समन्तबुद्धानामप्रतिहतशासनानम् ॥

"ॐ ख ख खाहि खाहि । हुम् हुम् । ज्वल ज्वल । प्रज्वल प्रज्वल । तिष्ठ तिष्ठ । ष्णीः फट् फट् स्वाहा ।"

एष बुद्धाद्ध्युषितो मन्त्रः ज्वालोष्णीषेति प्रकीर्तितः ।
यानि कर्मसहस्राणि अशीति नव पञ्च च ॥
करोति विविधां कर्मां सर्वमङ्गलसम्मतः ।
दुःस्वप्नान् दुर्निमित्तांस्तु सकृज्जापेन नाशयेत् ॥
करोति अपरां कर्मां सर्वमन्त्रेषु स्वामिनः ।
वशिता सर्वसत्त्वानां बुद्धोऽयं प्रभवो गुरुः ॥
स्मरणादस्य मन्त्रस्य सर्वे विघ्नाः प्रणश्यिरे ।
देवातिदेवसम्बुद्ध इत्युक्त्वा मुनिसत्तमः ॥
मुहूर्तं तस्थुरे तूष्णीं यावत् कालमुदीक्षयेत् ।
तस्थुरे देवसङ्घाश्च शुद्धावासोपरिस्तदा ॥
सर्वेषां देवमुख्यानां नक्षत्रग्रहतारकाम् ।
समयं जग्मु ते भीता उष्णीषो मन्त्रभाषिताः ॥
तुल्यवीर्यो महावीर्य उष्णीषाख्यो महाप्रभाः ।
शतपञ्चचतुष्कां वा सप्ताष्टा नवतिस्तथा ॥
द्विषष्टि पञ्चसप्तान्या उष्णीषेन्द्राः प्रकीर्तिताः ।
एतत् सङ्ख्यमसङ्ख्येया राजानो मूर्धजा शुभा ॥
तेष तुल्यो अयं मन्त्रः जिनमूर्धजजा इति ।

आर्यमञ्जुश्रियमूलकल्पाद् बोधिसत्त्वपिटकावतंसकात्
महायानवैपुल्यसूत्रात् पञ्चदशमः
कर्मस्वकप्रत्ययपटलविसरः परिसमाप्त इति ।

---

## अथाष्टादशः पटलविसरः ।

अथ भगवां शाक्यमुनिः पुनरपि शुद्धावासभवनमवलोक्य तं च पर्षन्मण्डलं मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । अस्ति मञ्जुश्रीः! त्वदीयमन्त्रचर्याभियुक्तस्य बोधिसत्त्वचर्यापरिपूरणार्थाभिप्रायस्य बोधिसत्त्वस्य महासत्त्वस्य क्रियाकालक्रमणयोगानुकूलयोगचर्यानुकूलनक्षत्रव्यवहारानुवर्तनकर्मं सर्वमन्त्रचर्यार्थसाधनोपयिकपटलविसरम् । भाषिष्ये, तं शृणु, साधु च सुष्ठु च मनसि कुरु ॥

एवमुक्ते भगवता मञ्जुश्रीः कुमारभूतो भगवन्तमेतदवोचत् । आश्चर्यं भगवं! यावद् भाषितं परमेणानुग्रहेणानुगृहीता बोधिसत्त्वा महासत्त्वा सर्वबोधिसत्त्वचर्यानुवर्तिनां सर्वमन्त्रचर्यार्थपरिपूरकाणां सत्त्वानाम् । तद्वदतु भगवानस्माकमनुकम्पार्थम् ॥

एवमुक्तो मञ्जुश्रीः कुमारभूतः कृताञ्जलिपुटो भगवन्तमवलोकयमानः ताः तूष्णीमेवमवस्थितोऽभूत् ॥

अथ खलु भगवां शाक्यमुनिर्लोकानुग्रहकाम्यया ।
वज्रेन्द्रवचनं श्रेष्ठं हितार्थं सर्वदेहिनाम् ॥

इदं भोः! भद्रमुखाः! श्रेष्ठं नक्षत्रं हिताहितं ।
सर्वमन्त्रार्थचर्यायां युक्तायुक्ताः समाहिताः ॥

सिद्धमर्थं तथापूर्णमनुकूलं चापि कथ्यते ।
सिद्धिहेतोस्तथा मन्त्री मन्त्रं तन्त्रोपलक्षयेत् ॥

शुचेऽहानि शुचौ देशे शौचाचाररते सदा ।
प्रशस्ते तिथिनक्षत्रे शुक्लपक्षे सदा शुचिः ॥

स्नातो ध्यायी व्रती मन्त्री मन्त्रतन्त्रार्थकोविदः ।
होम जाप तथा सिद्धिं कुर्यात् कर्म सविस्तरम् ॥

रेवती फल्गुनी चित्रा मघा पुष्यार्थसाधिका ।
अनूराधा तथा ज्येष्ठा मूला चापि वर्णिता ॥

आषाढावुभौ भाद्रपदौ सदा सिद्ध्यर्थं श्रवणा ।
सिद्ध्यर्थं श्रवणा श्रेष्ठा धनिष्ठा चापि वर्णिता ॥

सिद्धिहेतोस्तथा मन्त्री रोहिण्या मृगशिरास्तथा ।
अश्विन्यौ पुनर्वसूयुक्ते नक्षत्रौ स्वातिरेवतौ ॥

प्रशस्ता गणिता ह्येते विद्यासाधनतत्पराः ।
एतेषामिन्दुवारं तु विधिरेवमुदाहृतम् ॥

शैत्यैः शान्तिकं शेषकाले ततो विद्यापुण्यर्थं चापि तत्परम् ।
मध्याह्ने दिनकरे कर्म चन्द्रे चापि गर्हितम् ॥

अर्धरात्रे स्थिते चन्द्रे कुर्यात् कर्माभिचारुकम् ।
तृतीये याममनुप्राप्ते पुष्टिहेतोः समारभेत् ॥

पुष्ट्यर्थं साधयेन्मन्त्रं भोगहेतोस्तदा नृपु ।
उदयन्तं भास्करं विन्द्यात् सर्वकर्मेषु युक्तितः ॥

रक्ताभावे तथा भानोः कुर्यात् कर्माभिचारुकम् ।
शेषकाले ततो विन्द्यात् पूर्वाह्णे रविमण्डले ॥

युगमात्रोत्थिते तथा नित्यं कुर्याच्छान्तिककर्मणि ।
ततो द्विहस्तितो ज्ञेयं प्रमाणे चैव गभस्तिने ॥

कुर्याच्छान्तिककर्माणि शान्तिकेष्वपि योजिते ।
मन्त्रमुद्रैस्तथाश्रेष्ठैर्जिनाब्जकुलसम्भवैः ॥

मध्याह्ने सवितरि प्राप्ते कुर्यादाभिचारुकम् ।
अतःपरेण आकृष्येद् वश्यार्थं च योजितम् ॥

युगमात्रावनते भानौ अपराह्णोपगते तथा ।
कुर्यात् सर्वकर्माणि क्षुद्रार्थे च योजिताः ॥

ततः परेण काले ते सूर्ये धानमते तदा ।
वश्याकर्षणसर्वाणि कुर्यात् कर्माणि धीमतः ॥

अस्तं याते तदा भानौ रक्ताकारसमप्रभे ।
कुर्यात् तानि कर्माणि रक्ताभाससमोदिताम् ॥
कान्तकामाः सदा कुर्यात् कर्मेश्चापि रागिभिः ।
कुलत्रयेऽपि शान्त्यं कथितं कर्म निन्दितम् ॥

कन्यार्थी कारयेत् क्षिप्रं कर्णकाल्लसमोदितम् ।
प्रथमे यामे तदा कर्म साधयेत् सत्त्वयोजितः ॥

अतः परेण सर्वत्र सर्वकर्माणि कारयेत् ।
अर्धरात्रे तदा चन्द्रा ग्रहः पश्येद् वसुन्धराम् ॥

प्रविशेत् पश्चिमां देशां तस्मिन् काले समोदिताम् ।
ततः परेण ग्रहः पश्ये सूर्या सनराधिपाम् ॥

प्रसवे दक्षिणां देशां सिद्धचर्थी मन्त्रयोजितः ।
मर्त्येऽपि लभते क्षिप्रं कार्यसिद्धिं तु पुष्कलाम् ॥

अजापी जापिनश्चापि + + + लभते फलम् ।
यथेष्टां कुरुते सिद्धिं जापिनस्यापि धीमते ॥

तृतीये यामे सदा गच्छेद् दिशं चापि यत्नतः ।
दक्षिणपश्चिमान्मध्ये व्रजेत् तत्र फलोद्भवी ॥

उदयन्ते तथा भानौ प्रभवोदुत्तरां दिशम् ।
ततः परेण कालान्ते युगमात्रोत्थिते रवौ ॥

गच्छद् विदिशं तन्त्रज्ञः सिद्धिकामफलोद्भवाम् ।
पश्चिमोत्तरयोर्मध्यं स देशः परिकीर्तितः ॥

अजापी जापिनस्यापि युक्तिरुक्ता तथागतैः ।
निर्दिष्टां कार्यनिष्पत्तौ सिद्धमन्त्रस्य वा तदा ॥

मध्याह्ने पूर्वतो गच्छेद् दिशांश्चैव सर्वतः ।
ततः परेण कर्माणि + + + + + कारयेत् ॥

अर्धरात्रे तदा चन्द्रो ग्रहः पश्येद् वसुन्धराम् ।
कालान्ते विदिशान्ते मुनि + + + + बोधिना ॥

पूर्वमुत्तरयोर्मध्ये सदृशः सिद्धि लिप्सताम् ।
ततः परेण दिशः प्रोक्ताः पूर्वदक्षिणयोः सदा ॥

कथितः कालभेदश्च दिशश्चैव विदिक्षु वा ।
अपराह्णे तथा भानोः प्रविशे दैत्यमालयम् ॥

सुरङ्गेषु च सर्वेषु सत्त्वेषु क्रूपत्रासिषु ।
सर्वथा श्रीमुखेष्वेव सर्वत्र पातालोद्भवत्रासिनाम् ॥
ततः परेण यामान्ते रक्ताङ्गे ग्रहमण्डले ।
प्रविशेद् यक्षयोनीनां निलयांश्चैव सुकश्मलाम् ॥
व्रजेत् परिगृह्यां क्षिप्रकालेष्वेव नियोजितम् ।
उत्तिष्ठन्तं साधयेन्मन्त्रं प्रसादाश्रयसम्भवाम् ॥
आरुरुक्ष पुराग्रं वै असिद्धिः सिद्धिरेव वा ।
आरुरोह स्वकावासं प्रासादाग्रं तु मानवी ॥
सिद्ध्यन्ते चिन्तिता तस्य कालेष्वेव सुयोजिताः ।
मन्त्रसिद्धिः सदा तस्य मन्त्रतन्त्रविशारदैः ॥
दिशे गमनेनैव सिद्धिमात्रां समुच्यते ।
अमन्त्री मानवः क्षिप्रं लभते फलमग्रजाम् ॥
ईप्सितां साधयेदर्थां ग्राम्यांश्चैव च मानुषाम् ।
काला निगमतः प्रोक्तं दिशांश्चैव समन्ततः ॥
प्रसवेत् सर्वतो मन्त्री कालेष्वेह देशेषु च ।
अश्विनी भरणिसंयुक्ता कृत्तिका मृगशिरास्तथा ॥
एतेष्वेव हि सर्वत्र नक्षत्रेष्वेव योजिता ।
शान्तिकं कर्म निर्दिष्टं फलहेतुसमोदयम् ॥
रोहिण्यां साधयेदर्थां पुष्टिकामः सदा जापी ।
आर्द्रायां कारयेत् कर्म वश्याकर्षणहेतुभिः ॥
पुनर्वस्वो तथा पुष्ये साधयेद्धनसम्पदाम् ।
विचित्राभरणवस्त्रांश्च अञ्जनं समनःशिलाम् ॥
रोचनां गैरिकांश्चैव आज्यं चैव सुपूजितम् ।
वश्याकर्षणमेधां च पुष्येषु च नियोजयेत् ॥
आश्लेषायां तथा कर्मा आकृष्टाप्रहरणादयम् ।
मघासु कुर्यात् तथा कर्म राज्यमर्थाभिवार्धनम् ॥

फल्गुन्यावुभौ श्रेष्ठौ आरुरोह स्ववाहनम् ।
विचित्राणि कर्माणि हस्तेनैव विधीयते ॥

स्वात्यां विशाखयोः कुर्याद् द्रव्यकर्मसमुद्भवम् ।
अनुराधा तथा ज्येष्ठा उभौ नक्षत्रयोजितौ ॥

सिद्धिकामः सदा कुर्याद् राज्यकामस्तथा सदा ।
सौम्यार्थसम्पदांश्चापि विविधां योनिजां पराम् ॥

साधयेद् धननिष्पत्तिं नक्षत्रेष्वेव योजिताः ।
उभौ ह्यषाढौ तथा मोक्तौ जन्तुकर्मसु योजयेत् ॥

धातुजेष्वपि सर्वत्र दृश्यते सिद्धिरानन्ते ।
मूले मूलकर्माणि ओषध्यां विविधोद्भवाम् ॥

साधयेन्मन्त्रतन्त्रज्ञो मूलनक्षत्रयोजिताम् ।
श्रवणेष्वेव सर्वत्र कुर्याच्छ्रावणवर्णिताम् ॥

निर्वाणप्रापकं धर्मं प्रव्रज्यां चापि योजयेन् ।
धनिष्ठेषु सदा कुर्याद् धूपपुष्करिसाधनाम् ॥

वृक्षां वाहनां चैव वस्त्रांश्चैव विधानवित् ।
कुर्यात् शतभिषक् कर्म हिंसाप्राणिषु निर्दयाम् ॥

प्राणापरोधसत्त्वेषु कुत्सितां तां विवर्जयेत् ।
उभौ भद्रपदौ श्रेष्ठौ भूम्यागर्भनिवाप्तौ ॥

सम्पदा कुरुते क्षिप्रं कर्मेष्वेव हि योजितौ ।
सेनापत्यार्थसाधने + + + + + + + ॥

राज्ये धननिष्पत्तिभूषणाभरणादिषु ।
नानाधातुगणांश्चैव + + + + यथेप्सिताम् ॥

साधयेन्मन्त्रतन्त्रज्ञ उभौ नक्षत्रयोजितौ ।
रेवत्यां साधयेद् द्रव्यं नानाधातुसमुद्भवाम् ॥

साधयेन्मन्त्रकर्माणि नानारत्नसमुद्भवम् ।
सर्वोदकानि सर्वाणि साधयेन्मन्त्रवित् सदा ॥

अश्विन्यश्च भरण्यश्च कृत्तिकानां तथांशकम् ।
एतदङ्गारके प्रोक्तं क्षेत्रं चैव नभस्तले ॥
तस्या वार तथा कीर्त्तिं सौम्या साधयेच तदा महीम् ।
कृत्तिकं त्र्यंशकं विन्द्याद् रोहिणीमृगशिरो परौ ॥
एतद् भार्गवे विन्द्यात् क्षेत्रं चैव नभस्तले ।
मृगशिरांशं तथा चैवं आर्द्रायां च सुयोजिताः ॥
पुनर्वसुश्च तदा विन्द्याच्छान्त्यर्थं क्षेत्रमुद्भवम् ।
पुष्याङ्गं तथाश्लेषं मघं चैव निबोधितम् ॥
एतद् भानोः सदा क्षेत्रं कुर्यादाभिचारुकम् ।
फल्गुन्या तु उभौ साङ्गौ ग्रहचिह्नितचिह्नितौ ॥
इन्दुवारं तथा विन्द्यात् क्षेत्रं तस्य निशाकरे ।
हस्तचित्रौ तथा सांशौ कुर्यात् कर्मातिमानितम् ॥
बुधस्थाने तु उद्दिष्टः सर्वकर्मप्रसाधकः ।
स्वात्या विशाखसंयुक्ता सांशा वापि कीर्तिता ॥
द्वितीयं क्षेत्रनिर्दिष्टं दिवाकरस्य न संशयः ।
अनुराधाज्येष्ठसांशौ तौ निर्दिष्टौ पृथिवीसुतौ ॥
द्वितीयमङ्गारकक्षेत्रं वृश्चिकातसमुद्भवः ।
सर्वधर्मार्थसंयुक्तः कर्मयुक्तार्थसाधयेत् ॥
वर्जयेद् धीमतो हिंसां प्राणहिंसाभिचारुकाम् ।
साधयेद् विविधानर्थां कर्माश्चैव सुपुष्कलाम् ॥
मूलाषाढौ तथा प्रोक्तौ उभौ सांशत्रिकोद्भवौ ।
एतद् बृहस्पतेः क्षेत्रं नभःस्थं दृश्यते भुवि ॥
साधयेत् कर्म युक्तात्मा विधानाच निवारकाम् ।
महाभोगार्थसम्पत्ती सफलांश्चैव फलोद्भवाम् ॥
धन्विनि राशिनिर्दिष्टो कुर्यात् सर्वसम्पदाम् ।
श्रवणा धनिष्ठनिर्दिष्टा शतभिषां सममोदिता ॥

एतत् शनिश्चरक्षेत्रं द्वितीयं कथितं पुरा ।
राश्यमकरानिर्दिष्टा सर्वानर्थनिवारकः ॥
तत्रस्थो यदि कर्माणि आरभेत विचक्षण ।
सिद्ध्यत्ययत्नान्मन्त्रज्ञस्तस्मिं काले प्रयोजिता ॥

राश्यः कुम्भनिर्दिष्टा प्रोक्ता मुनिभिः पुरा ।
उभौ भद्रपदौ प्रख्यौ रेवती च यशस्विनी ॥
अङ्गहीना तथा पूर्वा शुभेन्द्रग्रहचिह्निताः ।
प्रशस्ताः शोभनाः सर्वे तत् क्षेत्रं गुरवे + दा ॥
मीनराशिसमासेन कथितं लोकचिह्नितैः ।
ग्रहः प्रधान सर्वत्र तिर्यङ् मुक्ता सर्वकर्मसु ॥
सप्तैते कथिता ह्यग्रमानुपाणां गणागमे ।
अनन्ता ग्रहमुख्यास्तु अनन्ता ग्रहकुत्सिताः ॥
मध्यस्था कथिता ह्येते मानुपाणां हिताहिता । इति ।
तेषां सत्त्वप्रयोगेषु निर्दिष्टा मन्त्रजापिनाम् ॥

सत्त्वासत्त्वं तथा कालं नियमं चैव कीर्तितम् ।
नाग्रहो धर्मसंयुक्तं न कर्मा ग्रहचिह्नितम् ॥
संयोगग्रहनक्षत्रो मन्त्रसिद्धिमुदाहृता ।
न सिद्धिः कालमिति ज्ञेया नासिद्धिः कालमुच्यते ॥
सिद्ध्यसिद्धावुभावेतौ सङ्गाकालतः क्रमा ।
विपरीतरता धर्मा न धर्मा धर्मचारिणः ॥
धर्मकर्मसमायोगा संयुक्तः साधयिष्यति ।
न दैवात् कर्ममुक्तस्तु सिद्धिर्न सिद्धिर्दैवमुद्भवा ॥
तत्कर्मश्च सिद्धिश्च दैवमेव नियोजयेत् ।
न दैवात् कर्ममुक्तस्तु दैवं कर्ममितःपरम् ॥
कर्मकं तु मतः प्रोक्तं सिद्धिनिर्दिष्टहेतुना ।
ग्रहा कर्ममुक्तास्तु नक्षत्राश्च सुपूजिताः ॥

तस्मात् कर्म समं तेषां कर्मार्थं सिद्धिरिष्यते ।
कथिता गणना ह्येते कर्म एव सदेरितम् ॥
न ग्रहा राशयो योनिरक्षताश्च सुपूजिताः ।
कर्म एष सदा विन्द्याद् विधिमुक्ता समोदिता ॥
फलोद्भवं च सदा कर्म युक्तिर्मन्त्रेषु भाषिता ।
तस्माद् युक्तितः कर्म न ग्रहो नापि राश्यजा ॥
नक्षत्राणां तिथीनां च गतियोनि समासतः ।
कालप्रमाणनियमश्च न परं कर्मयोः सदा ॥
तस्मात् तन्त्रवित् सैव धर्म एव नियोजयेत् ।
अनन्तग्रहाणां लोके राशयो विविधा परे ॥
तिथयो गणिता सङ्ख्ये क्षेत्रश्चैव नियोक्तृभिः ।
तस्मात् संक्षेपतो वक्ष्ये कथ्यमानं निबोधताम् ॥
मेषो वृषो मिथुनश्च कर्कटश्च सुयोजितः ।
सिंहकन्यतुलं चैव वृश्चिकधन्विनौ परौ ॥
मकरः कुम्भ इति ज्ञेयौ मीनवानरयोऽपरे ।
मानुषो देवराशिश्च अपरो गरुडापरौ ॥
यक्षराक्षसाराश्यो तिर्यक्प्रेतशुभौ परे ।
नरका राशिनिर्दिष्टा अनन्ता गतियोनिजा ॥
निर्दिष्टा राशयः सर्वे नानाधातुसमुद्भवाः ।
असङ्ख्येया मुनिभिः प्रोक्ता राशयो बहुधा परे ॥
तेषां गतिचिह्नानि सत्त्वयोनिसमाश्रयम् ।
कथितं कथयिष्येऽह अनन्तां नक्षत्रां ग्रहाम् ॥
क्षेत्रा च बहुधा प्रोक्ता नानाग्रहनिषेविता । इति ।

बोधिसत्त्वपिटकावतंसकान्महायानवैपुल्यसूत्रा-
दार्यमञ्जुश्रियमूलकल्पात् षोडशपटल-
विसराद् द्वितीयो ग्रहनक्षत्रलक्षण-
क्षेत्रज्योतिषज्ञानपरिवर्त-
पटलविसरः ।

---

अथ एकोनत्रिंशः पटलविसरः।

अथ खलु भगवांच्छाक्यमुनिः पुनरपि शुद्धावासभवनमवलोक्य मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म ॥

अस्ति मञ्जुश्रीः! तृतीयमपि ज्योतिषज्ञाननियमपरिवर्तं भाषिष्ये पूर्वकैः सम्यक् सम्बुद्धैर्भाषितं चाभ्यनुमोदितं च त्वदीयमन्त्रतन्त्रार्थकल्पितम्। शृणु साधु च सुष्ठु च मनसि कुरु ॥

एवमुक्ते भगवता शाक्यमुनिना मञ्जुश्रीः कुमारभूतो बोधिसत्त्वो महासत्त्वः उत्थायासनादेकांशमुत्तरासङ्गं कृत्वा, दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य, येन भगवां, तेनाञ्जलिं प्रगृह्य, भगवन्तमेतदवोचत्। तत् साधु भगवां भाषतु ज्योतिषज्ञानपटलविसरम्। तद् भविष्यति सत्त्वानामर्थाय हिताय सुखाय। देवमनुष्याणां सर्वमन्त्रचर्यानुप्रविष्टानां च सत्त्वानामनुत्तरायां सम्यक् सम्बोधौ, अभिप्रस्थितानां च, उपायकौशल्यमन्त्रचर्या सुखेन साधयिष्यन्ति। सर्वसत्त्वानुकूलं योगविधानकर्मानुकूलं कालनियमानिष्यन्दितकर्मस्वकतां नक्षत्रवारग्रहयोनिक्षेत्रराशिसमोदयाम्। तद् भविष्यति सुखसाधनोपायं मन्त्रानुवर्तनं सुखविपाकं तद् भविष्यति ते बोधिसत्त्वानां विष्पन्दितविकुर्वण ऋद्ध्यधिष्ठानम् ॥

एवमुक्ते मञ्जुश्रिया कुमारभूतेन अथ भगवां मञ्जुश्रियं कुमारभूतमेतदवोचत्। साधु साधु मञ्जुश्रीः! यस्तथागतमेतमर्थं परिपृच्छसे। तेन हि शृणु साधु च सुष्ठु च मनसि कुरु। भाषिष्ये सर्वसत्त्वानामर्थाय ॥

एवमुक्ते मञ्जुश्रीः कुमारभूतो भगवतश्चरणयोर्निपत्य, निषण्णो धर्मश्रवणाय ॥

अथ भगवां सर्वावन्तं शुद्धावासभवनमाभया स्फुरित्वा, सर्वबुद्धावलोकनश्रेतनीं नाम समाधिं समापद्यते स्म। समनन्तरसमापन्नस्य भगवतः कायान्नीलपीतावदातमाञ्जिष्ठस्फटिकवर्णादयो रश्मयो निश्चरन्ति स्म। निर्गत्य च सत्त्वानां बुद्धक्षेत्रां अवभास्य, सर्वाणि च

ग्रहनक्षत्रयोनिं समाश्रयराशितारां भवनान्यवभास्य, गगनतलगतां नरकातिर्यक्प्रेतदेवभवनमनुष्यसर्वसत्त्वभवनानि चावभास्य सर्वदुःखानि च प्रतिप्रश्रभ्य सर्वगत्यानां पुनर्गत्वं भगवतः शाक्यमुनेः कायेऽन्तर्द्धीयते स्म ॥

अथ भगवांञ्छाक्यमुनिस्तस्मात् समाधेर्व्युत्थाय सर्वां तां नक्षत्रग्रहराशिदेवसङ्घानामन्त्रयते स्म । शृण्वन्तु भवन्तः सर्वनक्षत्रदेवसङ्घाः ! यो ह्यस्मिन् धर्मविनये मन्त्रचर्यायां समनुप्रविष्ट इह कल्पविसरे तत् साधयेत् सर्वमन्त्राणां सर्वद्रव्यकर्मविधानादिषु, न भवद्भिस्तत्र विघ्नं कर्तव्यं सर्वैरेव सन्निपतितैः रक्षाविधानसान्निध्यं कथयितव्यम् । यो ह्येनं समयमतिक्रमेत्, तस्य यमान्तकः क्रोधराजा सर्वनक्षत्रग्रहाणां तत्क्षणादेवमपर्यन्तलोकधातुस्थितानां ससुतानां सबान्धवां सपार्षदानानयति स्म, दमयति स्म, समनुशासयति स्म, भगवतः समीपमुपनामयति स्म, सर्वेषां च मूर्धनि स्थित्वा पादेनाक्रम्य विविधानि क्रूरकर्मऋद्धिप्रातिहार्याणि दर्शयति स्म, बुद्धाधिष्ठानेन प्राणैर्वियोजयति स्म, समये च स्थापयति स्म, विकृतरूपमात्मानं दर्शयति स्म, अन्ते सर्वभूतयक्षराक्षसनक्षत्रग्रहराशयो निसत्त्वगरुडमरुतमहोरगगणा सर्वैर्भीतास्त्रस्ताः, थरथरायमानाः, महाविक्रोशं कुर्वाणः भगवतः पादयोर्निपत्य प्रकम्प्यमाना एवमाहुः — "परित्रायस्व भगवं ! परित्रायस्व । सुगत अनाथाः स्म, अत्राणाः स्म, महाक्रोधराज भयभीता जीवितं नो भगवां समनुप्रयच्छास्माकम्" इत्येनमुक्त्वा तूष्णीम्भूताः प्रवेपमानगात्राः ॥

अथ भगवांञ्छाक्यमुनिः । तां नक्षत्रग्रहसङ्घातांश्च यक्षराक्षसप्रेतपिशाचमानरगणानामन्त्रयते स्म । मा भैष्ट्र मार्षाः ! मा भैष्ट्र मार्षाः ! नास्ति तथागतानामन्तिक उपसङ्क्रान्तानां भयं वा मरणं वा । सर्वदुःखा निवार्या हि मार्षाः ! बुद्धं शरणं गच्छेद्, त्रिपदानामग्र्यं धर्मं शरणं गच्छेद्, विरागाणामग्र्यं सङ्घं शरणं गच्छेद्, गणानामग्र्यं न तस्य भवति लोमहर्षम् । वाञ्छन्ति तत्त्वां वाकः पुनर्वादो मृत्युभयं सर्वभयदुःखेभ्यो मुक्त एव द्रष्टव्यः । सर्वसांसारिकं भयं न

कदाचिद् विद्यते । दुःखोपशमं शान्तिं निज्वरं सन्नियतं बोधिपरायणं पदमवाप्नुयादिति ॥

अथ तत्क्षणादेव भगवता तेषां सर्वदुःखानि कृत्वा प्रतिप्रश्रब्धानीति यथान्तरतश्च सोमराजा भगवतश्चरणयोर्निपत्य, मञ्जुश्रियस्य कुमारभूतस्य समीपे संनिषण्णो धर्मश्रवणाय ॥

सर्वे च ते ग्रहनक्षत्रगणाः सर्वदुःखानि च प्रतिप्रश्रभ्यन्ते स्म । सर्वेश्च चेतवो प्रशान्ता निषण्णाश्च धर्मश्रवणाय स्वस्थीभूता एकाग्रमनसो भगवन्तं व्यवलोकमाना निस्पर्गोत्फुल्लनयना + द्विलमनसश्च संवृत्ता अभूवं ॥

अथ भगवता लोकानुकम्पार्थं तथा तथा धर्मदेशना कृता चतुरार्यसत्त्वसम्प्रयुक्ता यथा यथा तैः सत्त्वैः कैश्चित् सत्यानि दृष्टानि कैश्चिदर्हत्वं कृतम्, कैश्चित् प्रत्येकबोधः, कैश्चिदनुत्तरायां सम्यक् सम्बोधोचितान्युत्पादितानि, सर्वे च नियताव्याकृतानुत्तरायां सम्यक् सम्बोधो, सर्वैश्च पिथितान्यपापदुर्गतिविनिपाततानि देवमनुष्योपपत्तौ द्वाराण्युत्पादितानि, स्वर्गार्गलमपावृतम् । सर्वे च समयमधितिष्ठन्ति ॥

अथ भगवांश्छाक्यमुनिस्तेषामनुशयं ज्ञात्वा, विनयकालसमयमनन्तरमे र तेषां विनीतां सत्त्वां ज्ञात्वा, धर्मं भाषते स्म ॥

अरिदुःखसमाक्रान्तं दोषजं त्रिविधाश्रयम् ।
अभावो देवगणाः सर्वे पूज्यन्ते शासने इह ॥
आरभध्वं परं वीर्यं बोधिसोपानहेतुकम् ।
प्राप्नुयादेव सङ्घाताः शान्तनिज्वरमालयम् ॥
अशोकं विरजं क्षेमं निर्वाणं वापि नैष्ठिकम् ।
निर्मलं गगनतुल्याख्यं अभावं तु स्वभाविकम् ॥
परं प्राप्स्यथानिन्दितं दिव्यं सुजुष्टमनावृतम् ।
अनित्यदुःखशून्यार्थमनात्मं तु समोदितम् ॥
भावयन्तो दिवा सर्वे प्राप्स्यन्ते च नैष्ठिकमिति ।
मन्त्रतन्त्राभिधानेन चर्या चैव सुखोदया ॥
कथिता जिनवरैः श्रेष्ठा मन्त्रसिद्धिरुदाहृता ।
उपायं सत्त्वानां अग्रे नियोगेनैव धीमतैः ॥

कथिता मन्त्रसिद्धिस्तु फलकाले समोदये ।
विचित्रं कर्मणां जाति विचित्रैव योजिता ॥
विचित्रा कर्मतः सिद्धिर्विचित्रं कर्मयोनिजम् ।
विचित्रा चित्ररूपेण मन्त्रैरेभिर्नियोजिता ॥
विचित्रार्थाः कर्मविस्तरा विचित्रं कर्म उच्यते ।
कर्म चिन्त्या तथा चित्रं अचिन्त्यं चापि चिन्तितम् ॥

तस्मात् प्रारम्भन्मन्त्री मन्त्रचित्रेषु पुष्कलाम् ।
राशयः कथिताश्चित्रा तेषु जाता नरा सदा ॥
सदेवासुरमुख्यास्तु विविधा प्राणिविहङ्गमा ।
तेषां च यानि चिह्नानि तानि सिद्धिषु योजयेत् ॥
मेषराशौ तथा जातः मनुजा वा दिवौकसा ।
बहुपत्न्यो बहुभाष्यो सुरूपश्चापि जायते ॥
वणिक् शीली तथा शूरः मनुजः स्त्रीषु वर्णितः ।
वक्रो लुब्धचित्तश्च भूपतिर्गृहसेविनः ॥

तत्रस्थश्चन्द्रमा प्रोक्तः सर्वकर्म प्रयोजयेत् ।
आदित्यो यदि दृश्येत मेषराशिसमाश्रितः ॥
तत्र कर्म सदा सिद्धि क्रूरकर्मसुयोजिताम् ।
यानं गमनं चैव आसनं शयनं सदा ॥
न भजेत् तन्त्रमन्त्रज्ञो विरुद्धा सर्वयोगिभिः ।
तत्र जातः सदा मर्त्यो मन्त्रं देयाभिचारुकम् ॥
वृषराशौ तदा जातो मनुजो भोगवान्सदा ।
स्त्रीषु कान्तः सदा लुब्धः धर्माधर्मविचारकः ॥
ग्राम्यसेवी सदाध्यक्षो देवराज्ञानि बोधताम् ।
तत्रस्थश्चन्द्रमा जातो धार्मिकोऽसौ सुरेश्वरः ॥
भवेत् तस्य चित्तं वै राज्यमाश्रयता सदा ।
तस्य मन्त्रा सदा देया चैत्या जिनभाषितः ॥

तेन चन्द्रार्थयुक्तेनराश्रयोऽर्थनिबोधिनाः।
गमनागमनं कर्म स्मशुकर्म च युक्तिमाम्॥

आचरेद् ग्रहकर्माणि न कुर्यात्शाभिनाक्रम।
सर्वकर्मसमुद्योगं मन्त्रसिद्धिसुखोदयम्॥

आलिखेन्मण्डलादीनां बुद्धनिम्बांश्च कारयेत।
सिद्धद्रव्यसुराश्रेष्टा साध्यमाना दिवौकसा॥

सिध्यन्ते मन्त्रिभिर्युक्ता नक्षत्रेष्वेव रिसिषु।
मिथुनायां यदा जातो मानुषोऽथ दिवौकसः॥

तेषां च गतिचिह्नानि सिद्धिकालं निबोधनाम्।
आढ्यो उद्युक्तचित्तश्च शठो मूर्खोऽथ जायते॥
तत्रस्थो यदि विख्यातः नक्षत्रा निशि भूषणम्।
ततः कान्तो भवेन्मर्त्यो बन्धूनां वल्लभः सदा॥

धनाढ्यो युक्तिमन्तश्च महेशाख्योऽथ जायते।
शेषै ग्रहैः क्रूरैस्तु विविधैश्चापि कत्सितैः॥

जायते धूर्त्तरोगार्त्तः व्याधिभिश्च सदाकुलः।
नेदद्युस्तस्य मन्त्रा वै शान्तिकं पौष्टिकं परम्॥

क्षुद्रां कश्मलांश्चैव क्रव्यादां पिशिताशिनाम्।
क्रूरैं ग्रहमुख्यैस्तु दर्शनाश्च भवेत् सदा॥

एतेषां मन्त्रसिध्यर्थं क्रूरकर्मेषु योजये।
निषिद्धं गमनं तत्र अग्रपञ्चविवर्जितम्॥

गमनागमनयोस्तत्र न सिद्धिः सर्वकर्मसु।
क्षुद्रकर्म तथा तेषां द्रष्टः सर्वतो जाना॥

सिताख्यौ ग्रहमुख्यौ तौ पातकौ द्वे परेऽपरौ।
चतुर्था ग्रहमुख्यानां दर्शनं श्रेयसोत्तमम्॥

उभौ रक्तौ उभौ कृष्णौ दर्शनं क्रूरकर्मिणाम्।
सितौ शुक्रेन्दुमुख्यौ तौ पीतकौ बुधबृहस्पतौ॥

अर्काङ्गारकश्चैव रक्तौ तौ दिशि भूमिजौ ।
षण्डो राहो तथा कृष्णौ विचित्रा शेषका ग्रहाः ॥

नानाग्रहगृहा प्रोक्ता विचित्रा धातुसुभूपिताः ।
विचित्राकृतयः केचिद् विचित्रप्रहरणोद्यता ॥

नानाधातुगणाध्यक्षा ,नानाऋषिपुरातनै ।
शेष्यन्ते ग्रहाणां सर्वे अप्सराभिश्च किन्नरैः ॥

गगनस्था वर्णतो याता गतियोनिविदिता ।
अन्तरीक्षचराः सर्वे नक्षत्रैः सहचारिणः ॥

व्योम्नि धानसमायाता विचित्रा गतिचेष्टिता ।
महर्द्धिका प्रभावतः गत्या रूपक्षेपसमाश्रयात् ॥

कथिता मुनिवरैः सर्वैः मन्त्रार्थयोजिताः ।
चतुर्थेऽहनि संयुक्ताश्चतुःसत्त्वनियोजिताः ॥

चत्वारो ग्रहवरा प्रोक्ता सितो पीतोऽर्थसाधकाः ।
शेषाः क्रूरकर्मसु रक्तौ कृष्णौ च योजितौ ॥

नाचरेत् सर्वकर्माणि शान्तिकानि विशेषतः ।
कृष्णरक्तौ ग्रहौ ह्येतौ तिथौ चापि चतुर्दशी ॥

नाचरेत् सर्वकार्याणि क्षुद्रकर्माणि साधयेत् ।
मानुषे साधयेदर्थां गणनामे शुभोदयाम् ॥

तैरेव कारयेत् क्षिप्रं आसनं शयनं सदा ।
मन्दिरं च विशेद्धीमां सर्वदुर्गाणि कारयेत् ॥

कर्कटराशिजातस्थो दृश्यते मनुजाः शुभः ।
शास्ता च भवेत् क्षिप्रं राजानश्चक्रवर्तिनः ।

भव [illegible] जन्मिनो बोधो पूर्वकर्मसमुद्भवैः ।
शुक्रेन्द्रग्रहमुख्यानां दर्शनं चैव जायताम् ॥

शुभेऽहनि शुभे देशे बोधिसत्त्व अजायत ।
पुष्यनक्षत्रयोगेन जायन्ते मरुपूजिता ॥

बुद्धास्त्रैलोक्यगुरवोऽन्येऽपि महर्द्धिकाः।
राज्यकर्त्ता निकृन्ता च बहुप्राणिनराधिपाः॥

जायन्ते विविधा लोके शन्यर्काङ्गारचिह्निनाः।
केचिज्जनभूयिष्ठा मर्त्या कर्मपरायणा॥

जायन्ते विविधाचारा पुण्ये जातापि ते सदा।
तस्मात् कर्मफलं विद्धि गतिमात्मानचेष्टिता॥

केवलं तु सदाचारा ग्रहकर्मनियोजिता।
लोकधर्मानपेक्षेह निर्दिशन्ति तथा जिनाः॥

कर्म लोकवैचित्र्यं लोकधातुसमाधिजम्।
भाजनं सर्वलोकानामाश्रयोद्भवसम्भवम्॥

विचित्रं कथितं लोके सुराः! श्रेष्ठां निबोधताम्।
कर्मजं हि पुरा प्यासी कथयामास वत्सलः॥

सत्त्वसाधारणा धीमां बोधिसत्त्वो महर्द्धिकः।
मञ्जुघोषस्तदा वव्रे सत्त्वानां हितकाम्यया॥

कर्मजं कथितं सर्वं मन्त्रतन्त्रसविस्तरम्।
एषो वः सुराः सर्वे धर्मो ह्येकेन यः सदा॥

कर्कटो राशिजातस्य दद्यान्मन्त्रं तु पौष्टिकम्।
ततः परेण सिंहस्य राशिर्दृश्यति मानवाम्॥

सिंहजातो भवेन्मर्त्य अशून् लुब्ध एव तु।
स्त्रीशठो मांसभोजी स्याद् गिरिकन्दरवासिनः॥

सेनापत्य तथा नित्यं कारयेच्च वसुन्धराम्।
महीपालो महाध्यक्षः क्रूरकर्मा सदा शुचिः॥

कृतघ्नः कृतमन्त्रश्च पापकर्मसदारतः।
मित्रद्रोही सदा लुब्धः शठश्चैवमजायत॥

ग्रहैश्चापि सदा दृष्टा सितैः पीतैश्च धीमतैः।
जायते धार्मिकस्तत्र कृष्णैश्चापि शठः स्मृतः॥

तत्र कर्म समुद्दिष्टं पौष्टिकं सिद्धिलिप्सिताम् ।
उत्तिष्ठं खेचरं चापि अतिमानसमोद्गतम् ॥
नान्यं कर्म समुद्देतं समानं चापि वर्जयेत् ।
ततः परेण सिंहस्य कन्यराशिरिति स्मृतः ॥
तत्र जातो भवेद्धूर्तस्तस्करः कृपणः शठः ।
स्त्रीपु कान्तः सदा लुब्धः क्रूरः साहसिकः सदा ॥
मूर्खः परदारी च स्तब्धो मानोन्नतः सदा ।
शुभनक्षत्रचारेण शुभदृष्टिग्रहोदितैः ॥
पीतशुक्लैर्ग्रहैर्दृष्टा जायन्ते च महाधनाः ।
शुद्धमन्त्रः सदा धीमान् शुचिवृत्तिसमाश्रये ॥
सम्भूता मन्त्रतन्त्राश्च साधयेत महीतले ।
क्षिप्रमर्थकरा ये तु पुष्ट्यर्था ये तु कीर्तिता ॥
साधयेन्मन्त्रवित् सर्वा जिनाब्जीकुलयोरपि ।
जिनेन्द्रमुख्या ये मन्त्रा बहुधा चापि कीर्तिता ॥
साधयेन्मन्त्रवित् सर्वा गरुडर्थेऽपि च जातिषु ।
ततः परेण भवेद् राशिः तुलानामनि कीर्तिता ॥
प्रसिद्धां कर्मभूयिष्ठां तन्नासेवेत् तदाश्रिताम् ।
तुलायां जायते धीमान्मन्त्रसिद्धिषु योजितः ॥
न कारयेत् साधनां सर्वा उत्तिष्ठं भूनिबन्धनाम् ।
सर्वमन्त्रपरिवृद्ध्यर्थं गतियोनिषु आचरेत् ॥
धूर्तः कृपणो लुब्धः मत्सरी चैव जायते ।
तुलायां राशिजातस्थो दृश्यते च सदा रतः ॥
तं कुर्यात् सदा मन्त्री तस्मिन् राशौ समासृतः ।
यं न चाचक्षते लोके भूमिरर्थार्थसम्पदाम् ॥
ग्रहमुख्ये सदा जातो पीतैः शुक्लैश्च सर्वतः ।
न भजेन्मन्त्रसिद्धिं च यन्त्ररक्षार्थसम्पदे ॥

क्षणमात्रे तथा सर्वं साधयन्तं नियोजिनैः ।
शुभैर्ग्रहैर्यदा दृष्टः पीतैः शुक्लैश्च सर्वतः ॥

महात्मा जायते शूरः धार्मिकोऽथ नराधिपः ।
क्रूरतरैर्ग्रहैर्दृष्टः शन्यर्काङ्गारसिंहजैः ॥

तुलाया जातराश्यर्थः मत्सरो भवते पुमां ।
बहुरोगो दरिद्रश्च व्याधिरोगार्तसमुद्भवम् ॥

प्रचण्डः सर्वकर्मेषु क्रूरः साहसिकः सदा ।
न भजेच्छान्तिकर्माणि जिनतत्त्वाङ्गभाषितम् ॥

रौद्रं कुरुते कर्मा वज्रिणे समुदयोदिताम् ।
आभिचारुककर्माणि नानायुद्धकृतानि तु ॥

तस्मि राशौ सदा तत्र कुले तत्र समुद्भवे ।
कुत्सिता जिनवरैः कर्म सिद्धिमायाति तत्र तु ॥

प्रधानगुणविस्तारं प्रभावं चापि वर्जयेत् ।
प्रवासगमनं चैव नाचरेद्दिशि माथुजम् ॥

मन्दरं वाहनं चापि सत्त्वधातुकृताकृतम् ।
नाचरेत् सर्वकर्माणि तस्मि राशौ दिवाकरे ॥

वृश्चिकात्तु समुत्पादे सत्त्वयोनि समाश्रयेत् ।
भवते लिङ्गवैचित्र्यं कथ्यमानं निबोधताम् ॥

तीव्रः साहसिकः क्रूरो दुर्धर्षो मानदर्पितः ।
वक्रो लुब्धस्तथा मर्त्यो जायते वसुधातले ॥

प्राज्ञो धार्मिको विद्वान् वक्रश्चैव दुरासदः ।
स्त्रीषु कान्तो भवेन्मर्त्यः कृतज्ञो दृढपराक्रमः ॥

तन्त्रमन्त्रसदोद्युक्तः सेवायां गुरुपूजकः ।
दर्शनं ग्रहमुख्यानां शुक्रचन्द्रबुधो गुरुः ॥

प्रशस्तं श्रेयसं लक्ष्यं आयुरारोग्यवर्द्धनम् ।
तेषां दर्शनसिद्ध्यर्थं मन्त्रिणामूर्ध्वसाधने ॥

शन्यर्काङ्गारको राहुः पश्यति तं नरं यदा ।
क्रूरः साहसिको वक्रो जायते रौद्रकर्मकृत् ॥

तेषां च वज्रिणे मन्त्राः सिद्ध्यन्ते क्रूरकर्मिणाम् ।
नागच्छेत् सर्वतो मर्त्या दिनेष्वेव मुकुलितैः ॥

ततः परेण धन्वाख्यं राशिमुक्तं तथागतैः ।
जायन्ते बहुधा मर्त्या गतिदेशसमाश्रयात् ॥

अन्ते च शोभनाः सर्वे बाल्या दुःखभागिनः ।
यथाविभागनिर्देशा आयुषः परिकीर्तिताः ॥

तथा धनार्थनिष्पत्तिं वाचिष्ये अर्थसम्पदाम् ।
स्वयोनिं नाशयेन्नित्यं परयोनिं विवर्द्धयेत् ॥

बहपत्यो बहुभाष्य बहुरागरतिप्रियः ।
असंयतो भवेन्मर्त्यः धनूराशिसमाश्रयात् ॥

प्रभुः श्रीमां सदा दक्षो धार्मिको वापि जायते ।
दर्शनं यदि मुख्यानां ग्रहाणां सितपीतकाम् ॥

तेषामाचरेन्मन्त्रा नानाप्रहरणोद्भवाम् ।
नानाशस्त्रफला वापि वस्त्रभूषणवाहना ॥

नानाधातुकृतांश्चैव नानाधातुफलोद्भवाम् ।
सिद्ध्यन्ते तस्य मन्त्रं वै मुनिजुष्टाङ्गसम्भवा ॥

ततः परेण कर्माणि सर्वद्रव्यैस्तु कारयेत् ।
प्रसवेत् सर्वतो मन्त्री गतिदेशनिरत्ययाम् ॥

स्वालयं वाहनं चापि स्वसुतां च निवेशनम् ।
भेषजं सर्वमिष्टं तु महार्थं चोर्ध्वगामिनम् ॥

सिद्धयं तस्य मुक्तात्मा क्षिप्रमेव करे स्थिता ।
ततः परेण राश्यायां मकरस्थो दृश्यते सम ॥

तेषु जातः सदा मर्त्यः लिङ्गैरेतैर्हि लक्षयेत् ।
मातृभक्तो पितृभक्तश्च ख्यातो बहुमतः प्रभुः ॥

दुःसहः सर्वदुःखानामाढ्योऽपि धनसञ्चकः ।
कृपणो लुब्धचित्तश्च शठश्चैवमजायत ॥
शुक्लेन्द्रग्रहदृष्टानां सर्वसम्पत्ति जायते ।
कृष्णरक्तग्रहा ये तु क्रूरकर्मा तु पूर्ववत् ॥
नागच्छेत् तत्र मन्त्रज्ञः विदिशां चैव सर्वतः ।
दुष्टां साधयेत् कर्मा अनिष्टं चैव वर्जयेत् ॥
वमनगमनं चैव उत्तरां दिशिमाश्रयेत् ।
महासमुद्रार्थगतां द्रव्यां नौयानमाविशेत् ॥
प्राप्नुयात् सम्पदां तत्र निम्नमाध्यक्षदेशजम् ।
ततः परेण कुम्भेति मकरात् समुदितात् परः ॥
कुम्भराशिसमाख्येया सत्त्वजाताश्रया सदा ।
बहुधा बहुलिङ्गास्तु कथिता ते नरोत्तमैः ॥
विचित्रा चित्ररूपास्तु वर्णजातिसमाश्रयात् ।
श्यामवर्णो विशालाक्षो जायन्ते बहुमता नराः ॥
मैथुनाशक्तवस्ते तु ग्राम्यधर्मार्थचिन्तकाः ।
कृतज्ञा धार्मिका प्रोक्ता मन्त्रजाः कुम्भराशयः ॥
शुक्लपीता ग्रहा दृष्टा लोकेऽस्मिन् सम्प्रपूजिताः ।
कृष्णरक्ता ग्रहा ये तु दृष्टजातिसमोदया ॥
व्यङ्गा कृपणयो मूर्खा चपलाः तस्करावहा ।
बहुरोगा दरिद्राश्च जायन्ते मानवा सदा ॥
तेषां न कारयेत् कर्म उत्तमं मुनिपूजितम ।
अङ्गार्थसम्भवा येन दद्युः सर्वकर्मसु ॥
न गच्छेत् प्राप्य तीरान्तं अतो नैवापि वर्णितम् ।
कुर्यात् वज्रकुले कर्म मन्त्रसिद्धिलिलिप्सया ॥
क्रूरं क्रूरकर्मान्तं स्फट्हुङ्कारभूषितम् ।
मन्त्रं साधयेच्चात्र क्रोधराजसुयोजितम् ॥

सिद्ध्यन्ते पापकर्मास्तु रौद्रकर्मासु योजिता ।
ततः परेण मीनेति राशिरुक्ता तथागतैः ॥

तत्रस्था मानवाः सर्वे दृश्यन्ते बहुलिङ्गिनः ।
मीनराशिसमाजाता रूपाण्येतानि समुद्भवैः ॥

प्रभुर्मानधीः श्रीमां भोगसम्पच्छतान्वितः ।
प्रभवः सर्वलोकानां जायतेऽसौ महीतले ॥

क्षिप्रमर्थकरो धीमां नराधिपोऽथ अजायत ।
शुक्रेन्दुदर्शनाज्जातः भवेल्लोके नरोत्तमः ॥

दर्शनाद् बुधजीवानां धनाढ्योऽथमजायत ।
प्रांशुमूर्त्तिर्विशालाक्षः स्त्रीषु कान्तो भवेत् सदा ॥

बहुमित्रो नराध्यक्षः कुटिलश्चैवमजायत ।
बहुमित्रोऽथ शुक्रश्च जायते मित्रवत्सलः ॥

ततः परेण क्रूरो वै ग्रहमुख्यो दिवाकरः ।
पश्यते यद्यसौ मर्त्यां शनिराहुश्च भूमिजा ॥

तदा कष्टमिति ध्वजः क्रूरश्चैव जायते ।
पूर्ववत् कथिता ह्येते ग्रहाः कृष्णान्तशुक्लयोः ।
कुर्यात् सर्वकर्माणि मीनराशिसमाश्रयाः ।
तत्रस्थश्चन्द्रमां पश्येत् सर्वांश्चैव साधयेत् ॥

अतः परेण राशीनां गजमानुपमानुषाम् ।
गन्धर्वा राक्षसा गरुडाश्चापि पन्नगाः ॥

तेषां स्वरूपतो जातिगतिदेशमचिह्नितः ।
मना उद्भवस्तेषां लिङ्गैरेतैस्तु लक्षयेत् ॥

यथा सत्त्वप्रकृतिश्च तथा लिङ्गं विभाष्यते ।
स्वमन्त्रा भाषिता ह्येतैः तेषां चैव नियोजयेत् ॥

राशयः कथिता लोके द्वादशैव गणोद्भवाः ।
गणिता ग्रहमुख्यैस्तु नक्षत्रैस्तु नियोजिताः ॥

संक्षेपात् कथिता ह्येते कथ्यमानातिविस्तरा ।
मानुषाणां तदा चक्रे नक्षत्रे ग्रहमण्डलैः ॥

अत ऊर्ध्वं तु देवानां ऋषीणां च महर्द्धिकम् ।
ज्ञानं प्रवर्त्तते तत्र एतन्मानुषचेष्टितम् ॥

अचिन्त्या बुद्धधर्माणां ज्ञानदृष्टि नरोत्तमाम् ।
साधयेत् सर्वमन्त्रज्ञः राशिजातौ समुद्भवा ॥

+ रनक्षत्रां तिथयो नित्यं शुक्लपक्षे समाचरेत् ।
सिद्धिस्तेषु सदा प्रोक्ता कृष्णे कृष्णकर्मिणाम् ॥

ग्रहैः सितैः पीतैः द्विनैश्चैव समाचरेत ।
शुक्लपूर्णिमना चन्द्रे पौर्णमास्येषु योजयेत ॥

प्रतिपच्छुक्लपक्षे तु तृतीयं चैव रोचयेत् ।
पञ्चमी सप्तमी चैव दशम्येकादशोद्भवाम् ॥

त्रयोदश्यां तथा शुक्ले सर्वकर्माणि आचरेत् ।
पुष्टयर्थं शान्तियोगं च गमनागमनं शुभाशुभम् ॥

आलिख्या मन्त्रतन्त्रस्थं नृत्यगीतरतैः सदा ।
भूषणं यानमायासं क्षुरकर्म च धीमता ॥

प्रोक्ताः सर्वतो विद्वां सर्वेश्चापि श्रीमतैः ।
भोगसम्पत्सदासिद्धिरिष्टजनसमागमम् ॥

निर्दिष्टं मुनिमुख्यैस्तु अन्य अन्यकर्माणि अन्यतः ।
धनार्थिभिः श्रीमतैः क्षिप्रं कुर्यान्मन्त्रार्थसाधनम् ॥

+ + + + + + + + चन्द्रशुक्रगुरुर्बुधैः ।
वारैर्ग्रहवरैर्दिव्यैः सुपूजितैः शुचिमङ्गलैः ॥

तिथियुक्तैः समासेन निर्दिष्टैश्चापि भाजयेत् ।
घोरैर्घोररूपैस्तु ग्रहैर्मन्त्रैस्तिथिभिः सदा ॥

आचरेद् रौद्रकर्माणि कृष्णे कृष्णकर्मिणाम् ।
गतिदेशसमासं च युक्तिमन्त्रार्थसाधने ॥

ग्रहा राश्यर्थनक्षत्रा तिथयश्च समोदिता ।
कर्मसिद्धिप्रभात्रं च नियमं सर्वकर्मसु ॥ इति ।

बोधिसत्त्वपिटकावतसंकान्महायानवैपुल्यसूत्राद् आर्यमञ्जु-
श्रियमूलकल्पात् सप्तदशमः पटलविसरात्
तृतीयो ज्योतिषज्ञानपटलविसरः
परिसमाप्त इति ।

---

# अथ विंशः पटलविसरः ।

अथ खलु भगवां शाक्यमुनिः पुनरपि शुद्धावासभवनमवलोक्य मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । अस्ति मञ्जुश्रीस्त्वदीयकल्पान्तरे सर्वभयोत्पादनिमित्तनिर्घातगतानि आश्चर्यनिमित्तलिङ्गानि कथयन्ति शुभाशुभं सुभिक्षदुर्भिक्षपरराष्ट्रागमनं अनावृष्टिमतिवृष्टिं सत्त्वानां सूचयन्ति महासाधनादिषु यो विघ्नं कारयन्ति ततो साधकेन च मन्तव्यं साध्यासाध्यानि च तस्मिं देशे कर्तव्यमकर्तव्येति ज्ञातव्यम् । ततो यदि न शोभनानि निमित्तानि भवन्ति तस्माद् देशादपक्रम्य अन्यत्र गत्वा साधयितव्यानि ॥

अथ चेच्छोभनानि निमित्तानि भवन्ति । तस्मिन्नेव देश साधयितव्यानि । तत्रैव च स्थातव्यम् । एवं ज्ञात्वा साधकेन मन्त्रचर्याभियुक्तेन कर्तव्यमकर्तव्यमिति मन्त्रचर्यायां निमित्तानि ज्ञात्वा शुभाशुभं बोद्धव्यमिति ॥

अथ खलु मञ्जुश्रीः कुमारभूतो भगवतः पादयोर्निपत्य पुनरप्येवमाह — तत् साधु भगवां देशयतु निमित्तज्ञानपरिवर्तविसरम् । तद् भविष्यति सर्वसत्त्वानां हिताय सुखाय सर्वमन्त्रचर्याभियुक्तानां बोधिसत्त्वानां महासत्त्वानां शुभाशुभफलोदयनिमित्तलिङ्गानि । यस्ते सर्वसत्वा मन्त्रचर्यानुप्रविष्टा साध्यासाध्यं कालनिमित्तं ज्ञात्वा स्थातव्यं, प्रक्रमितव्यमिति पश्यन्ते ॥

एवमुक्ते भगवां शाक्यमुनिः मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । तेन हि मञ्जुश्रीः ! शृणु साधु च सुष्ठु च मनसि कुरु भाषिष्येऽहं ते ॥

आदौ तावद् भवेल्लिङ्गमुत्पातानां समोदयम् ।
महद् भयमनादिस्थममानुषाणां तु चेष्टितम् ॥

सर्वे च ग्रहनक्षत्राः कूश्माण्डा ग्रहराक्षसाः ।
मातरा देवताश्चैव सर्वे प्रेता महर्द्धिकाः ॥

दर्शयन्ति तदा लिङ्गं महोत्पातानां च सम्भवे ।
आदिमन्तं ततो मध्यं अशुभं चैव ते तदा ॥

भूमिस्थितिर्नाशकं च कथयन्ति विविधाश्रयात् ।
सर्वमानुषसत्त्वेषु भूतलेऽस्मिन्निबोधताम् ॥

कबन्धा विविधाश्चापि पक्षिणश्च समाकुलाः ।
दृश्यन्ते सर्वतो लोके तस्माद् देशादपक्रमेत् ॥

रात्रौ शक्रायुधं दृष्ट्वा धनुश्चापि विशेषतः ।
शरनाराचपाशाश्च विविधा प्रहरणोद्भवाः ॥

दृश्यन्ते गगनाद् रात्रौ तस्माद् देशादपक्रमेत् ।
चन्द्रबिम्बे यदाकाशे दृश्यन्ते विकृतरूपिणः ॥

कबन्धा पुत्तलाश्चैव नृत्यन्ता गगनालये ।
सुषिरं छिद्रमित्याहुर्दृश्यते शशिमण्डले ॥

पुरुषा उच्चनीचाश्च युध्यन्तां शशिमण्डले ।
दृश्येयुर्मानुषे लोके तस्माद् देशादपक्रमेत् ॥

विविधा प्राणहराश्चापि नानाभूतगणास्तथा ।
नृत्यमानाश्च युद्ध्येयुस्तस्माद् देशादपक्रमेत् ॥

मण्डलाकारसङ्काशं दृश्यस्थः शशिमण्डलम् ।
तादृशं तु ततो दृष्ट्वा तस्माद् देशादपक्रमेत् ॥

युद्ध्यन्तां सर्वसङ्घाश्च दृश्यन्ते शशिमण्डले ।
एकस्तत्र पतेत् क्षिप्रं यस्य यो दिशिमाश्रितः ॥

तं देवदिशिमित्याहुः भूपतिर्मृयते ध्रुवम् ।
तादृशं दृष्ट्वा सत्त्वाख्यं विविधाकारसम्भवम् ॥

अचिरात् तत्र भयात् क्षिप्रं तस्माद् देशादपक्रमेत् ।
शरनाराचशक्तिश्च दृष्ट्वा तत्र निशाकरे ॥

तस्करोपद्रवं क्षिप्रं शस्त्रसम्पातजं भयम् ।
दृष्ट्वा विकृतरूपास्तु नानासत्त्वसमाश्रयाम् ॥

रात्रौ भूतले चन्द्रे तस्माद् देशादपक्रमेत् ।
कृष्णवर्णा विहङ्गास्तु शुक्ला चैव सपीतलाः ॥

रक्ताश्चैव तथा धूम्राः श्मशानविकृताश्रया ।
ते वै विवर्णवर्णाभा दृश्यन्ते भवने सदा ॥

तादृशं लक्षणं दृष्ट्वा तस्मात् देशादपक्रमेत् ।
शुक्ला पक्षा भवेत् कृष्णा कृष्णापक्षा तथा सिता ॥

दृश्यन्ते विकृतरूपाणि विकृतानि महीतले ।
तादृशं लक्षणं दृष्ट्वा तस्मात् देशादपक्रमेत् ॥

मृगक्रोष्टुकगणाः सर्वे ग्रामेऽपि गिरिपालयम् ।
श्वापदा व्यालिनो धूर्ता लोकेऽत्रोपद्रवतस्कराः ॥

भवेयुर्भयकृतं तेषां दुर्भिक्षं नापि वर्णितम् ।
विविधा भूतगणाश्चापि दृश्यन्ते तु महीतले ॥

विकृताविकृतरूपिण्यः यक्षराक्षसकिन्नराः ।
दिवा रात्रौ तथा नित्यं दृश्यन्ते च महीतले ॥

तादृशं लक्षणं दृष्ट्वा तस्माद् देशादपक्रमेत् ।
नरनारीकुमारांश्च क्रन्देयुर्भृशं भूतले ॥

रात्रौ दिवा तथा नित्यं व्याधिस्तत्र महागमः ।
उरगा विकृतबीभत्सा दृश्यन्ते वसुधातले ॥

गृहे रथ्ये तथा भिन्ध्या मन्दिरे वृक्षसान्निध्यौ ।
सर्वतो व्याप्य तिष्ठन्ते भवेत् तत्र महाभयम् ॥

महामार्योपसर्गं च विषविस्फोटमूर्च्छनम् ।
दुर्भिक्षं राष्ट्रभङ्गं च भवेत् तत्र जनागमे ॥

विकृताविकृतबीभत्सा पक्षिश्वानक्रोष्टुका ।
ऊर्ध्वतुण्डा महानादं रुवन्ति विकृतानना ॥

अर्धरात्रौ तु मध्याह्ने उभे सन्ध्ये च कुत्सिता ।
भवेन्महाभयं क्षिप्रं परचक्रागमागमम् ॥

दुर्भिक्षमतिवृष्टिश्च भवेत तत्र गमागमः ।
मासमेकेन सप्ताहान्महादुःखोपपीडिताः ॥

अन्योन्यं भूतले वासा मानुषा तस्कराग्निना ।
महाशस्त्रभयं तत्र तस्माद् देशादपक्रमेत् ॥
गगनस्था सर्वतो मेघा दृश्यन्ते च नानारूपधरा ।
स्फुटाकाराथ रौद्राश्च तीव्रगर्जननादिनः ॥
सप्तस्फुटा द्विश्चतुर्धा च दृश्यन्ते उग्गाश्रयाः ।
सुघोरा घोररूपाश्च दृश्यन्ते गगनाश्रया ॥
तादृशं लक्षणं दृष्ट्वा अचिरात् तत्र महाभयम् ।
महामार्योपद्रवं च ज्वरो व्याधिः रोगाश्चैव महाभयाः ॥
सद्यः प्राणहराः क्षिप्रं विषाः स्थावरजङ्गमाः ।
उत्सृजन्ति तदा मेघां तदा वृष्टिं च दारुणम् ॥
नश्यते भूतयस्तत्र अन्योन्या निरपेक्षिणः ।
तादृशं लक्षणं दृष्ट्वा तस्माद् देशादपक्रमेत् ॥
महाप्रपातदुर्भिक्षमुल्कापातां समन्ततः ।
धूमकेतोश्च निर्घातां दिशादाहां कथयिष्यामि ते ॥
शृणु प्रपातं दृश्यस्थं उल्किनां चैव जायते ।
रात्रौ दिवा समन्ता वै उल्कापातो भवेद् यदि ॥
महाभयमनारोग्यं ज्ञात्वा मन्त्री व्रजेत् ततः ।
महोल्काज्वलमानाया दिशं गच्छेत वै सदा ॥
तादृशं नृपतीनां भङ्गः यतो वक्रं ततो भयम् ।
विदिशां पतते उल्कां समन्ताद्वै निशि सर्वदा ॥
तत्र देशे महाव्याधिः दुर्भिक्षनृपघातनम् ।
दिवारात्रौ यदा उल्का पतते वै समन्ततः ॥
तादृशं च भवेन्मृत्युर्नृपतीनां च मन्त्रिणाम् ।
तं बुद्ध्वा मन्त्रजापी स्याद् ज्ञात्वा तस्माद्देशादपक्रमेत् ॥
उल्किनः प्रपते युद्धाद् यतो पुच्छस्ततो भयम् ।
अन्या वा दृश्यते भङ्गो नृपतीनां रणसङ्कटे ॥

महाक्षोभं तदा चक्रे महोल्का ग्रहचिह्निते ।
समन्तात् पतते क्षिप्रं तस्माद् देशादपक्रमेत् ॥
यादृशं उल्कपातेऽस्य आश्रयात पतते यदा ।
तां दिशं व्याधिदुर्भिक्षं राष्ट्रभङ्गं च जायते ।
गमनागमनयोर्मृत्युस्तारकाणां तदाश्रयात् ।
योऽयं नक्षत्रजातस्तः तस्य मृत्युभयं भवेत् ॥
द्विरात्रान्नश्यते जन्तुर्नक्षत्रा पतते भुवि ।
नराधिपानां च सर्वेषामपि एव विधिर्भवेत् ॥
योऽयं पश्यते देवः दृष्टं + स्वेदमाकुलम् ।
रात्रौ दर्शनेऽस्वप्यं प्रतिमायां दिवा तदा ॥
तस्य मृत्युभयं विन्द्यान्मासैः षड्भिस्तदा स्मृतः ।
प्रतिमा चलिता यस्य देवतास्तस्य जन्तुनः ॥
हसते रुदते चैव तं देशं वर्जयेत् सदा ।
प्रतिमा पतते चैव निर्गच्छेत वा स्वरूपतमना ॥
तस्य भङ्गं भवेत् क्षिप्रं मृत्युश्चैव नराधिपे ।
कुर्वन्ति विविधाकारं लिङ्गं विविधरूपिणाम् ॥
प्रतिमा यदि दृश्यन्ते देवायतनमन्दिरे ।
तादृशं तु ततो दृष्ट्वा तस्माद् देशादपक्रमेत् ॥
समन्तात् सर्वतो यत्रा पश्येयुः प्रतिमा सदा ।
विकृतरूपबीभत्सां नानाविकृतमाश्रिताम् ॥
स्वयं वा पश्यते मन्त्री अन्यैर्वा दृश्यते भुवि ।
तादृशं लक्षणं दृष्ट्वा तस्माद् देशादपक्रमेत् ॥
अर्धरात्रे तथा यामे तृतीयेऽर्धे यदि दृश्यते ।
तारकाणां महावृष्टिं तस्माद् देशादपक्रमेत् ॥
चतुर्थभागे तथा रात्रौ तारका क्षिप्रगामिनः ।
खद्योत इव गच्छन्ति तं देशं सर्वतो न भजेत् ॥

वसुधातलेन गच्छन्ति तस्मिं देशे ततो व्रजेत् ।
यत्र संशयते वृष्टि यत्र गच्छन्ति तारकाः ॥

तं देशं मा विशेत् क्षिप्रं यत्र वृष्टि महद् भयम् ।
तं देशं नश्यते क्षिप्रं परचक्रसमागमम् ॥

दुर्भिक्षं शस्त्रसम्पातं तं विन्द्याद् देशमाकुलम् ।
चोरोरगव्यालानां म्लेच्छधूर्तसमागमम् ॥

तं देशं नराधिपा नित्यं प्रयसेत् सर्वतो दिशम् ।
विलुप्तराज्यो विभ्रष्टपरचक्रसमाश्रितः ॥

वर्षा अष्ट एकं च तं देशं तत्र लेभिरे पुनः ।
प्राप्नुयात् तदा राज्यं देशादागमनं पुनः ॥

ज्ञात्वा दुपक्रमात् सर्वा विक्रियां क्रिययोजिताम् ।
क्रियाकालं समासेन तं जापी आरभेत् सदा ॥

उल्कापात महान्तो वै दृश्यते यदि मिश्रितम् ।
समन्तान्नित्यकालं च तस्माद् देशादपक्रमेत् ॥

उल्किनो बहुधाकारा दृश्यन्ते विविधाश्रया ।
विचित्रा चित्ररूपिण्यः यक्षिण्यश्च महर्द्धिकाः ॥

ज्वलन्तां वक्रदेशाभ्यां क्रव्यादांश्च पिशाचिकाः ।
तस्मात् परीक्षयेदुल्कां लिङ्गैरेभिः समोदिताम् ॥

अतिदीर्घं तथा ह्रस्वो मध्याश्चैव प्रकीर्तिता ।
चतुर्हस्ता द्विहस्ता वा हस्तमात्रप्रमाणतः ॥

दृश्यन्ते भूतले मर्त्यैराश्रयन्ते महोदया ।
महाप्राणा स्वरूपाश्च देवतैपा महार्द्धिका ॥

विचित्राकाररूपास्तु दूतास्ते च दिवौकसाम् ।
देवासुरेऽथ सङ्ग्रामे वर्तमाने महद्भये ॥

शक्रमाज्ञामिह क्षिप्रं गच्छन्तेऽथ भूतले ।
जम्बूद्वीपगतां मर्त्यां नराध्यक्षां नराधिपाम् ॥

पश्यन्ते सर्वलोकांश्च धर्माधर्मविचारकान् ।
मातृज्ञा पितृभक्ताश्च कुले ज्येष्ठापचायका ॥

महामन्त्रधरा सर्वे जापिनो यद्यजाम्बूद्वीपगता नराः ।
तदा देवा महोत्सवापि जायन्ते तदा दैत्यां कुर्वन्ते च पराभवम् ॥

धर्मिष्ठा भूतले मर्त्या जाम्बूद्वीपनिवासिनः ।
महोत्साहं तदा काले तृदशाध्यक्षोऽथ वासवः ॥

तदा भग्नवतोत्साहा असुरा भिन्नमानसा ।
अभिमानं लभेतां येन पाताले तेन ताः ॥

प्रविशन्ते स्वपुरं तत्र भिन्नमाना कृतव्यथाः ।
महाप्रमोदं तदा देवा लेभिरे तृदशेश्वराः ॥

तदा जम्बूद्वीपेऽथ सर्वत्र सुभिक्षमारोग्यते जनाः ।
स्वस्था च सर्वतो जग्मुः नरनारी गतव्यथा ॥

तस्मात् सर्वप्रकारेण बुद्धेः भक्तिः कृशे जनाः ।
धर्मसङ्घे च भूयिष्ठे गतद्वन्द्वे निरामये ॥

पूजां कुरुथ मर्त्यातो लालिलिप्साः सर्वसम्पदाम् ।
मन्त्रचर्यां तदा चक्रे नत्रे वानां शुभोदया ॥

दशकर्म यथालोकां सम्प्रतिष्ठा निरोपगाम् ।
कुरुध्वं जनसम्पातां त्रिधा शुद्धेन मानसाः ॥

विरतिः प्राणिवधे नित्यं अदत्तं वापि नाचरेत् ।
न भजेदङ्गनादन्यां अगम्यापरिवर्जिताम् । जपेत् ॥

सन्तुष्टिः स्वेन धर्मेण सङ्कुरुध्व जनराजगाः ।
मृषावादं न भाषेत विपाकं यद्दुःखदम् ॥

नाभाषेत् कर्कशां वाणीं परेषाम्वार्थदुःखदाम् ।
यत्किञ्चित् क्लेशसंयुक्तां वाचादर्थविवर्जिताम् ॥

शून्या धर्मार्थसंयुक्तामभिन्नां नाचरेत् सदा ।
पैशुन्यं वर्जयेन्नित्यं वचनं परभेदकं ॥

क्लिष्टचित्तस्य सर्वत्र निषिद्धं मुनिपुङ्गवैः ।
अभिध्यं नाचरेत् कर्म परसत्त्वोपकारिणः ॥

यो यस्य सदा स्मृतं न कुर्याद् द्वेषसमुत्थितम् ।
व्यापादं वर्जयेत् कर्म सत्त्वद्वेषमनास्पदम् ॥

उपघातं परसत्त्वस्य न कुर्यात् सर्वतो जनाः ।
मिथ्यादृष्टिं न कुर्यान्तां सर्वधर्मविनाशिनीम् ॥

नास्ति दत्तं हुतं चैव न चेष्टमन्त्रसाधने ।
न सिध्यन्ते तथा मन्त्राः सर्वतन्त्रार्थकल्पिताः ॥

न बुद्धानां सुखोत्पत्तिः न शान्तं निर्वाणमिष्यते ।
न चापि चर्या तथा बोधो प्रत्येकार्थसम्भवाम् ॥

न चार्हत्वं भुवि लोकेऽस्मिं नापि धर्मेषु जायते ।
स्वभावैषा विविधा लोके अर्थाद[illegible]शातथा ॥

एवमाद्यां अनेकांश्च विविधाकार[illegible]क्षिता ।
न तां भजेत् सदा मन्त्री पापदृष्टिसमुद्भवाम् ॥

दशकर्म यथा प्रोक्ता विरत्या स्वर्गोपगा स्मृताः ।
भावना चैव फलं तेषां निर्वाणामर्थसम्भवाम् ॥

अनिष्टा तु भवे लोके तदा सुराणां पराजयम् ।
दैत्यानां वर्धते मानः अतिदर्पार्थसम्भवाम् ॥

जनालये तदा सर्वे जम्बूद्वीपनिवासिनः ।
बाध्यन्ते व्याधिभिः क्षिप्रं अन्योन्यां तेऽपि मूर्छिता ॥

जनाध्यक्षास्तदा सर्वे अन्योन्यापराधिनः ।
क्षिप्रं नश्यन्ति ते सर्वे मुनिधर्मार्थवर्जिताः ॥

समरे क्रुद्धचित्तानां शस्त्रसम्पातमृत्यवः ।
न ते भेजे देवमुख्यानां तर्जन्यापत्रनालये ॥

बुद्धं धर्मं तथा सङ्घं न पूजेदशुभा नृपा ।
न मन्त्रां जप्तु ते क्षिप्रं ते नृपा तस्थुरे सदा ॥

विनश्यन्ते तदा लोका विविधायासमूर्छिताः ।
ततस्ते दैत्यवराः क्षिप्रं सुसंरब्धा रुरोह तम् ॥

सुमेरुपर्वतमूर्धानमाविशन्ते जनसत्तमाः ।
परिषण्डो तदा मेरो विभजेन्मन्दिरा शुभीं ॥

समन्ताद्वनविध्वस्तं दिवौकसां कारयन्ति ते ।
विविधा रथवरै रूढा नानाभरणभूपिता ॥

नानाप्रहरणा दद्युः पुरः श्रेष्ठां पराजयाम् ।
ततस्ते खरं भेजे अप्सराणां भज जग्रहे ॥

ईश्वराः प्रभवः सर्वे असुरास्ते बलदयिता ।
जग्राह सुरकन्यां वै सुधा चैव च भोजनम् ॥

ततस्ते सुरवराः श्रेष्ठाः प्रविष्टाः नगरोत्तमम् ।
मेरुमूर्ध्नि ततो गत्वा नगरं दर्शनाश्रयम् ॥

शक्रानुयाता सर्वे वै पिशिता द्वारपुरोत्तमे ।
न तु माया पुरी भीतिः उपजग्मु मुदाश्रयम् ।'

निवर्त्य तत्र वै सर्वे स्वालयं जग्मु ते सुरा'
यदेका मन्त्रसिद्धिस्तु निवशेजन्युमाश्रयम् ॥

जप्तमन्त्रोऽपि वा मर्त्यः निवसं तत्र आलये ।
तत्र देशे न चार्तानि न दुर्भिक्षं न शत्रवः ॥

न रोगा नापि भयं विन्द्याज्जप्तमन्त्रे स्थिते भुवि ।
न चास्या दस्यवः सर्वे शक्नुवन्तीह हिंसितुम् ॥

न चार्तिमृत्यवस्तत्र अमर्यादा प्रवर्तते ।
न रुजा व्याधिसम्मूर्छा ज्वररोगापहारिणः ॥

विभ्यन्ते भूतले तस्मिं जप्तमन्त्रो यदाश्रयः ।
येऽत्र मन्त्रवरा ह्युक्ता जिनेन्द्रकुल + द्भवा ॥

अब्जाके तु तथा मन्त्रा मन्त्रिणं मन्त्रपूजिताः ।
तत्र मन्त्रवरां मन्त्री जह्जापमहर्द्धिकाम् ॥

तदा ते सुरवरा श्रेष्ठा असुराणां तु पराजयः ।
एवमुक्ता गुणा तत्र दृश्यते भूतले तदा ॥

तार्किका विविधाकारा कथयन्तीह महीतले ।
ग्रहमेषो इति श्रुत्वा ....रा..सिरा ॥

गीतं ऋषिवरैर्ज्ञानमुक्तिकानां ग्रहचिह्नितम् ।
निर्दिष्टं तत्र निर्देशः निघातस्य प्रवक्ष्यते ॥

उल्कापाते यदा लोके निर्घातो भुवि मण्डले ।
मघुन्नगर्जना कस्माच्छ्रूयते च महीतले ॥

भृशं चुचुक्षुत्र ...शं निश्शिरभि . षाग्नैः ।
अतुल्यशब्दनिर्घोष ...दां नाणि ....ताम् ॥

श्रूयते गर्जं च क्षिप्रं महामेघनचः श्रूयते ।
षष्ठ्यचमथमष्टम्यां त्रयोदश्यामथ श्रूयते ॥

कृष्णपक्षे तथा नित्यं द्वादश्यां तु चतुर्दशी ।
नक्षत्रैरेभि संयुक्ता नाशेश्चापि ग्रहोत्तमैः ॥

अश्विन्यां कृत्तिकानां च भरण्यां यातं निबोधताम् ।
पूर्वभद्रपदे चैव आर्द्रामघाश्लेषसंयुक्ते ॥

. . . . . . . . . ग्रहैर्याणि सुपूजिते ।
अन्यर्काङ्गारकैः क्रूरैः भूम्या निपतते यदा ॥

अत्रपोदकर्मा क्रूरं शब्दो निघात उच्यते ।
महद् भयं तत्र देशे वै दुर्भिक्षं मारणान्तिकम् ॥

परचक्रभयं विन्द्यात्नानाव्याधिगहृत्तगम् ।
निर्घातं पतते चोर्ध्वा नक्षत्रैरभि कीर्तितैः ॥

चौरैरशुभैश्चापि ग्रहैः कृष्णरक्तकैः ।
तत्र देशे नृपो भृशं हन्यते अस्त्रिभिः सदा ॥

तस्मिं काले रौद्रे च कर्माणि तत्र देशे यदा जपेत् ।
विविधा व्याधयस्तत्र अर्थनाशश्च दृश्यते ॥

मृत्युस्तत्र भवेद् व्याधिभिर्दीर्घैरपि निश्चितैः ।
अनावृष्टि सदाकाले द्वादशाब्दानि निर्दिशेत ॥

पश्चिमां दिशमाश्रित्य शब्दो भवते नभात् ।
निर्घातं मृत्युसङ्कीर्णं दुर्गमं मृत्युकर्मभिः ॥

मध्याह्ने तु तदा काले मृताप्यस्तमितेऽपि वा ।
उदयन्तं भास्करं यो मध्याह्नैः प्रातर्वेतम ॥

त्रिःसन्ध्यात् कुत्सितः शब्दः शेषकाले तु तुष्टये ।
अर्धरात्रे यदा शब्दः निर्घातस्य महद् भयम् ॥

शुभां पुरवरां तत्र काश्यमन्त् नृपोत्तमा ।
नानाम्लेच्छगणा भूमौ तस्कराश्चापि ये ॥

परद्रव्योपकारार्थं कुर्वन्तीह महीतले ।
शेषकाले भवेच्छब्दः निर्घातस्य सुपुष्कलम् ॥

मन्त्रिमुख्यो भवेत् तत्र बहुव्याधिसमाकुलम् ।
बहुव्याधितत्वं च नृपाणामस्य निश्चितम् ॥

पत्नी वा हन्यते तस्य मन्त्रिमुख्यस्य हन्यतः ।
सर्वे सौल्किकास्तत्र नानाजातिसमाश्रिताः ॥

हन्यन्ते मृत्युना तेऽपि तथा जीवकरोत्तमा ।
प्रकृष्टा वणिजा मुख्या निरुक्ता सर्वतो नृपाः ॥

मध्याह्नपरिमित्याहुः ऋषिभूता रवे तदा ।
निर्घातमतुले शब्दं यदा शृण्वन्ति ते जनाः ॥

व्याधिभिर्व्यस्तमर्त्यैश्च पतन्तीह महीतले ।
अन्यथा तुमुलं शब्दो यदि शुश्राव मानवाः ॥

अकस्मात् सर्वतो नित्यं नृपस्तत्र न जीवते ।
दक्षिणां दिशमाश्रित्य निर्घातो पततेऽशुभः ॥

विद्युद्योर्ध्वं तथा ग्रामनिगमं तं निर्निर्दिशेत् ।
पूर्वायां दिशिमाश्रित्य शकुनः यदि नादिते ॥

निर्घातस्य भवेत् तत्र प्राच्याध्यक्षो विनश्यति ।
हिमाद्रिकुक्षिसन्निविष्टा जनास्तत्र निवासिनः ॥

शुश्राव शब्दं महाभैरवे ग्रहे चिह्निते ।
तस्मिं देशे जनाध्यक्षो विनश्यन्ते म्लेच्छतस्कराः ॥

वत्से वत्साश्च ये मुख्या नेपालोऽधिपतिस्तदा ।
हन्यन्ते शत्रुभिः क्षिप्रं नानाद्वीपनिवासिनः ॥

विदिक्षु भैरवं नादे ऊर्ध्वमुत्तरतो भवेत् ।
कामरूपेश्वरो हन्या गौडाध्यक्षेण सर्वदा ॥

लौहित्यात् परतो ये वै जराध्यक्षाथ जीविना ।
कलशाह्वा चर्मरङ्गाश्च समोतघ्राश्च वङ्गकाः ॥

नृपांश्च विविधां हन्या सशब्दे भैरवा ग्रहे ।
पूर्वदक्षिणतो भागे यदि शब्दो महद् भयम् ॥

कलिङ्गा कोसलाश्चैव सामुद्रा म्लेच्छवासिनः ।
हन्यन्ते शस्त्रिभिः क्रूरैः तदाध्यक्षाश्च नृपा चराः ॥

पूर्वपश्चिमतो भागे यदा शब्दो महान् भवेत् ।
मेघगर्जनवत् क्रूरो दिवारात्रौ महाम्बुदे ॥

तं निर्घातमिति वोद्यि देवसङ्घा निबोधताम् ।
शुभाशुभं तदा चक्रे मानुषाणां जनोत्तमाः ॥

यदा शुभे च नक्षत्रे लग्ने चापि शुभोत्तमे ।
तिथिश्रेष्ठे सिते चापि शब्दो शुश्राव मेदिनीम् ॥

शुभो सुभिक्षमारोग्यं सम्पत् क्रीडाय साधनम् ।
सिद्धमन्त्रस्तु जायेत वरदा जापिनां सदा ॥

तदा काले भवेत् सिद्धिः सर्वकर्मसु योजिता ।
क्रूरैर्ग्रहैश्चापि विन्द्यात् शुभैश्चापि फलोदया ॥

कर्मसिद्धिर्भवेत् तत्र सर्वकर्मसु योजिता ।
निर्घाता बहुधा प्रोक्ता क्ष्मातलेऽस्मिन निबोधता ॥

केचित् प्राणहराः सद्यः केचित् सत्यफलोदया ।
सर्वार्थसाधना केचिच्छब्दा गम्भीरनादिनः ॥
तं च शब्दं श्रुयात् क्षिप्रं देवसङ्घा निबोधताम् ।
धीरो गम्भीरयुक्तश्च स्तनितं चापि गर्जिते ॥
दीर्घदुन्दुभयो यद्वत् तच्छब्दसम्मुखावहम् ।
स शब्दो भैरवः क्रूरो यथानिर्दिष्टकारकः ॥
उल्कापातसमे काले भूमिकम्पान्न जायते ।
शब्दं क्रूरनिर्घोषं निर्दिशं चापि योजयेत् ॥
महद् भयं तदा विन्द्यात् सर्वनिर्देशभामिमाम् ।
सत्त्वाघातं ततो विन्द्याद् दुर्भिक्षं व्यधिसम्भवम् ॥
अमानुषं च तदा चक्रे मायोपद्रवादिकम् ।
भूपालां तदा मृत्युर्दिवसैस्त्रिंशत्रिंशतिः ॥
यथोद्दिष्टकराः सर्वे शब्दा रौद्रनिनादिते ।
भूमिकम्पं तु निर्दिक्ष्ये कथ्यमानं निबोधत ॥
नक्षत्रेष्वेव कम्पा ये + । । + । । + + ।
तिथिभिः सर्वत्र योज्यं स्यान्नक्षत्रं चापि युक्ततराम् ॥
निर्घाते यथा सर्वं कर्मेष्वेव योजयेत् ।
अश्विन्यां चलिता भूमिर्दुर्भिक्षं चापि निर्दिशेत् ॥
भरण्यां कृत्तिकां चैव उभौ कम्पौ सुखोदयौ ।
रोहिण्यां मृगशिरः कम्पो जायते अर्थसम्पदः ॥
आर्द्रः पुनर्वसुश्चैव नक्षत्रा परिचिह्नितौ ।
एषु कम्पेद् यथा पृथ्वी तत्र देशे महद्भयम् ॥
मध्यदेशा विनश्यन्ते तद्देशाश्च नराधिपाः ।
पुष्ये यदि कम्प्येत मूर्वी भूतलवासिनीम् ॥
तत्र देशे शिवं शान्तिं सुभिक्षमारोग्यं विनिर्दिशेत् ।
आश्लेषायां चलते क्षिप्रं कृत्स्ना चैव वसुन्धरा ॥

तत्र देशे समाकीर्णं म्लेच्छतस्करगोत्रिभिः ।
मघासु चलिता भूमिः सर्वेष्वेव न संशयः ॥
अङ्गदेशे विनश्यन्ते मागधा नागनिम्नगाः ।
मागधा जनपदाः सर्वे पीड्यन्ते व्याधितस्करैः ॥
उभौ फल्गुननक्षत्रे क्षमाकम्पो यदि जायते ।
हिमाद्रिकुक्षिसन्निविष्टा गङ्गासागरनन्दा ॥
हन्यन्ते व्याधिभिः क्षिप्रं वृजिशैथिल्यनाशिना ।
वैशाल्यामधिपाः सर्वे हन्यन्ते अर्तिभिस्तदा ॥
विविधा म्लेच्छमुख्यास्तु हिमाद्रेः सानुसम्भवाः ।
निवस्ताः कुक्षिमध्ये वै नितम्बेष्वेव द्रोणयः ॥
म्लेच्छाध्यक्षनरा मुख्या हन्यन्तेऽग्निभिः सदा ।
हस्तचित्रौ यदा भूमिश्चलते सन्ध्ययोर्यदा ॥
म्लेच्छतस्करनराध्यक्षा हन्यन्ते शस्त्रिभिः सदा ।
स्वात्या विशाखयुगया वै नक्षत्रेणैव योजिता ॥
चलते मेदिनी कृत्स्ना हन्यन्ते वणिजा परे ।
वणिजाध्यक्षनराः श्रेष्ठा मुख्याश्चैव शृङ्गिनः ॥
व्याधिभिः शस्त्रपातैर्विनश्यन्ते नक्तचारिणः ।
अनुराधे ज्येष्ठनिश्रयाने नक्षत्रेणैव सर्वदा ॥
भ्रमते वसुमती कृत्स्ना नश्यते चापि शासनम् ।
यदा उत्तरनिराभ्यां पर्वता विगता भवा ॥
क्ष्मातलं कम्पते पूर्वं उभौ सार्पे तदा परे ।
भवेत् तत्र भयं क्षिप्रं दुर्भिक्षं चापि निन्दितम् ॥
मरणं द्विजसैः पद्मिर्महाब्राह्मणस्य भवेत् तदा ।
नश्यन्ते पुरवरा क्षिप्रं मध्यदेशेषु ते जनाः ॥
ईषच्च चलिता भूमिरनुराधायां शुभावहा ।
सस्यनिष्पत्तिं सर्वेन पश्चा यदि जायते ॥

मूलाषाढमिति ज्ञेयं नक्षत्रेष्वेव कम्पते ।
पूर्वे उत्तराषाढे तथा दुःखसमोदये ॥
व्याधिदुर्भिक्ष सर्वत्र तस्करादिभि पीड्यते ।
मेदिनी सर्वतो ज्ञेया यदि कम्पो भवेद् दिवा॥
श्रवणासु चलिता भूमिर्धनिष्ठेष्वेव सर्वतः ।
सुभिक्षमायुरारोग्यं दुर्भिक्षैश्चापि वर्जिता ॥
मेदिनी सस्यसम्पन्ना यदि कम्पो भवेन्मिश्रम् ।
शतभिषे भद्रपदे चापि यदि कम्पेत मेदिनी ॥
दुर्भिक्षं राष्ट्रभङ्गं वै दृश्यते तत्र आस्पदे ।
हन्यते तस्करे मर्त्या दुर्भिक्षं चापि कुत्सितम् ॥
भवन्ति भूतले मर्त्या अर्धरात्रे निशि कम्पते ।
उत्तरासु च सर्वासु रेवत्यासु च कीर्त्तिता ॥
उभौ नक्षत्रौ सर्वत्र रेवती भद्रपदस्तथा ।
एतेष्वेव हि सर्वत्र यदा कम्प अजायत॥
नक्षत्रेष्वेव पूर्वोक्तकम्पो दृष्टः सुखावहः ।
एते कम्पा समाख्याता निर्घाता वरचिह्निता ॥
उल्कापातसमे काले त्रिदोषा जन्तुपीडना ।
निर्घाते च यदा पूर्वं निर्दिष्टं विस्तरान्वितम् ॥
गुहास्तत्रैव कर्तव्या सर्वे चैव दिशाद्वये ।
सरवः कम्पनिर्दिष्टः साल्कोकश्चापि गुग्वान्वितम् ॥
सिद्धिकाले तदा सर्वे दृश्यन्ते मन्त्रजापिनाम् ।
योगिनां च तथा सिद्धि अभिक्षां तु सम्भवे ॥
बोधिसत्त्वानां तथा जाते बुद्धबोधिं च प्राप्तये ।
प्रभावा ऋषिमुख्यानां ऋद्ध्या वर्जितचेतसाम् ॥
सुरश्रेष्ठस्तदा काले आगमं चापि कीर्तयेत् ।
सालोका सरवा मूर्ती घोषनिःस्वनगर्जनाम् ॥

कम्पमुत्पद्यते क्षिप्रं एतेष्वेव च कारणैः ।
निःशब्दा च निरालोका यदा कम्पेत मेदिनी ॥
नारकाणां तु सत्त्वानां चलितानां तु निर्दिशेत् ।
दुःखं बहुविधैः खिन्ना मया कायाति भीषणा ॥
तेषां च कर्मजं दुःखं पश्यमाप्नुत्ति दृश्यते ।
कथितां कर्मनिर्घोषां तं जनान्नृपिसत्तमा ॥
निबोध्यमखिलं सर्वं भारंगध्य मुखेच्छया ।
केतुना दृश्यते सर्वं गगनस्थं तु कीर्तयेत् ॥
रात्रौ दिवा च कथ्येते दृश्यन्ते चोत्तरा नभे ।
मध्याह्नि सर्वत्र दृश्यते दीर्घतो ध्रुवा ॥
धूम्रवर्णा महारश्मा धूमायन्तं महद् भयम् ।
यदेव देशमाश्रित्य धूमयेत नभस्तलम् ॥
तदेव देशे नृपो ह्यग्रो हन्यते व्याधिभिर्ध्रुवम् ।
यदेव ग्रहमाश्रित्य वारं नक्षत्रमुज्ज्वला ॥
दृश्यते धूम्ररेखायाः गगने चापि उज्ज्वलम् ।
तदेव राशिनक्षत्रं ग्रहं चैव सुलक्षयेत् ॥
तदेव हन्यते जन्तुः शस्त्रिभिर्व्याधिभिस्तदा ।
यस्मात् तु दृश्यते रेखा धूम्रवर्णा महद्भया ॥
तं देशं नाशयेन् क्षिप्रं ग्रहः क्रूरा न संशयः ।
स्निग्धा च नीलसङ्काशा धूम्ररेखामजायत ॥
तच्छिवं शान्तिकं विन्द्यादायुरारोग्यवर्धनम् ।
रूक्षवर्णा विवर्णा वा धूम्रवर्णा तु निन्दिता ॥
प्रशस्ता शुक्लसङ्काशा चतुरश्मिसमुद्भवा ।
सौम्या कीर्तिता नित्यं शुभवर्णफलप्रदा ॥
कीर्तिता पुष्पलक्ष्मीकं तं विन्द्याद् यत्र सा तिथाः ।
हिमपुञ्जनिभा शुभ्रा स्निग्धस्फटिकसन्निभा ॥

सोमसौम्य विज्ञेया रूक्षवर्णसमप्रभा ।
कल्याणं चार्थनिष्पत्तिं दुःखनिर्वाणते दृशम् ॥

+ + + + + + + यस्मिन् देशे समोदिता ।
नक्षत्रे वापि युक्तेऽग्रे तल्ले तारकमण्डले ॥

निर्गते नभसि विख्याते दृश्यते यं महीतले ।
सर्वा समन्तादायुरारोग्यं जाता ये तारकाश्रयाः ॥

प्रभविष्णु भवेत् तत्र सुखी धर्मचरः प्रभुः ।
श्रेष्ठो जायते मर्त्यः तस्मै नक्षत्रमाश्रयेत् ॥

ग्रहे वा शुचिते प्रोक्ता सर्वदुःखनिवारणी ।
रेखा च दृश्यते यत्र तं विन्द्यात् सुखसमर्पितम् ॥

प्रहृष्टरूपसम्पन्नस्निग्धाकारभूषितम् ।
रेखा नभस्तले याता धूमायन्ती महद्भया ॥

ततोऽन्यश्रेयसि युक्ता प्रशस्ता वापि नभस्तले ।
शिवं सुभिक्षमारोग्यं तं देशं विदुर्बुधाः ॥

धार्मिकं तत्र भूयिष्ठं धूमकेतोरजायते ।
सिता स्फटिकसङ्काशा प्रभाः सत्त्वेषु सर्वतः ॥

एकशः श्रीमतो ख्याताः तारकेऽस्मिन नभस्तले ।
ततः स्फटिकसङ्काशा रश्म्या चापि मूर्तिजः ॥

प्रभवः श्रीमतः ख्यातः तस्मिन् नक्षत्रमाश्रयेत् ।
केनवो बहुधा युक्ता सहस्रौ द्वौ त्रयोऽथ वा ॥

त्रिंशमेकं च बहुधा नानाकर्मफलोदया ।
केचिच्छ्रेष्ठा तथा मध्या केचिद्धर्मपरान्मुखाः ॥

उदयन्तं तदा केचिन्महद्भयसुदारुणा ।
स्निग्धाकारसमा ज्ञेया स्फटिकाकारसमप्रभा ॥

स्निग्धा शोभना ज्ञेया स्फटिकाकारसमप्रभा ।
स्निग्धा शोभना ज्ञेया चारुवर्णाल्पभोगता ॥

केचित् तिर्यगः क्रूरा उत्तरा दक्षिणा परा ।
श्रेयसा चैव भूतानां उदयन्ते शशिसमप्रभा ॥

महाप्राणा विकृतास्तु अतिदीर्घा नृपनाशना ।
मध्ये उदिता ह्येते प्राच्यात्रास्थितरश्मिजाः ॥

पूर्वपश्चिमतो याता पूर्वदेशाधिपतिं हनेत् ।
पूर्वपश्चिमतो याता पश्चाद् देशा नृपतिं हनेत् ॥

समन्ताद् रश्मिजातायाः समन्ताद् दुर्भिक्षमादिशेत् ।
विदिक्षा ह्युदिता ह्येते म्लेच्छमत्यन्तगणाधिक्का ॥

निहनेत् सर्वतो याता तस्मिं स्थाने समादिशेत् ।
धूम्रवर्णा विवर्णास्तु रूक्षवर्णा महाभयाः ॥

प्रभवः सर्वतो याता सर्वप्राणिषु आदिशेत् ।
दिवा सर्वतो नित्यं मध्याह्ने यदि दृश्यते यदा ॥

महद् दुःखं महोत्पातं नृपतीनां तदा विशेत् ।
यत्र तिर्यग्गता रेखा यत्र स्थिते समोदितां ॥

तत्रस्था नृपतिं हन्ति यस्मिं देशे समागता ।
दिवा विदिक्षु निर्दिष्टा महाव्याधिसमागमम् ॥

तस्करोपद्रवां मृत्युं तस्मिं स्थाने समादिशेत् ।
नीलवर्णं यदाकाशे दिवा पश्येत केतवम् ॥

विविधायासदुःखैस्तु विविधोपद्रवभूमिपा ।
समन्तात् कथिता ह्येते महादुःखभयानकाः ॥

यातिरौद्रा दिवाह्युक्ता रात्रौ केचित् शुभोदया ।
रक्तवर्णं यदा पश्येत् केतुश्चन्द्रसमाश्रितम् ॥

रुधिराक्तां महीं क्षिप्रं शस्त्रसम्पातितं तदा ।
पृथिव्यां क्षिप्रमसृक + + रात्र्यवसुन्धराम् ॥

बहुसत्त्वोपघाताय बहुदुःखनिराश्रयम् ।
जायन्ते जनपदास्तत्र यस्मिं स्थाने समादिशेत् ॥

पीता च पीतनिर्भासा दृश्यते व्योम्नि मूर्तिना ।
हरिद्राकारसङ्काशा हरितालसमप्रभा ॥
हेमवर्णा यदाकाशे केतवो उदयन्ति वै ।
तत्र विद्यान्महद् दुःखं सर्वसत्त्वेषु लक्षणम् ॥
महामारिगताध्यक्षो जनास्त्वेत्र निबोधिता ।
द्वादशाब्दं तथा हन्ति अनावृष्ट्योपद्रवादिषु ॥
अतिकृष्णा रौद्रमित्याहुरतिधूम्रास्तु वर्जिता ।
अतसीपुष्पसङ्काशा पावकोच्छिष्टवर्जिता ॥
महामेघसमाकारा नीलकज्जलवर्णिता ।
वराहाकार तथा केचित् परपुष्टसमप्रभा ॥
दृश्यन्ते गगना घोरा तस्माद् देशादपक्रमेत् ।
महाक्रूरा तथा रौद्रा दृश्यन्ते क्रूरकर्मिणः ॥
महादुःखं महाघोरं मार्योपसृष्टिरेव वा ।
महादुर्भिक्षमित्याहुस्तस्मिं देशे भयानकम् ॥
ओड्रपुष्पसमाकारं रक्तभास्करविद्रिषम् ।
असृग्वर्णं यदा पश्येदुदितं केतुनभस्तलम् ॥
सर्वत्र व्याधितद्वेगं बहुसत्त्वोपरोधिनम् ।
नृपतीनां तदा मृत्युस्तत्क्षणादेवमादिशेत् ॥
अकस्मात् पश्यते यो हि नरो वा यदि वा स्त्रियः ।
तस्य मृत्यु समादिष्टं सप्ताहाभ्यन्तरेण तु ॥
द्विरात्रैस्त्रिभिर्वापि दिवसैः शस्त्रिभिर्हन्यते ।
तदा दिवा वा यदि वा पश्येदकस्मान्निशिरेव वा ॥
तस्य मृत्यु समादिष्टा तत्क्षणादेव भूतले ।
विषेण हन्यते जन्तुः शस्त्रिभिर्वा न संशयः ॥
शुक्ला स्निग्धवर्णाश्च निशिरेव सुखोदया ।
अन्यथा दर्शनं नेष्टं विविधाकाररूपिणाम् ॥

स्वकायपरकाये वा यदि केतुसमाश्रिता ।
रात्रौ चापि दिवा चापि सद्यः प्राणहराः स्मृता ॥

शुक्लवर्णां यदा पश्ये शशिगोक्षीरसमप्रभाम् ।
हिमकुन्दसमाकारां नानारत्नसमप्रभाम् ॥

तस्य राज्यं समाख्यातं सिद्धिर्वा मन्त्रजापिने ।
एते केतवो दृष्टा शरीरे मन्दिरेऽपि वा ॥

स्वसैन्यपरसैन्ये वा यत्रस्थं तत्र फलप्रदम् ।
तमाहुः कीर्तितां श्रेष्ठां नानाचित्रसमप्रभाम् ॥

दृश्यन्ते सर्वतो मर्त्यैः वह्नार्थाग्रहाः स्मृताः ।
सर्वतः कथिता मर्त्यैर्विग्रहे मन्दिरेऽपि वा ॥

केतवः सिद्धकायानां सर्वेष्टाः सफलाः स्मृताः ।
अन्यथा कुत्सिताः सर्वे बहुदुःखभयप्रदाः ॥

सर्वे वै कथिता ह्येते केतवो ग्रहचिह्निताः ।
पूर्ववत् कथितं सर्वं तिथिनक्षत्रराशिजाः ॥

विविधैर्वारयोगैस्तु ग्रहैश्चापि महर्द्धिकाः ।
पूर्ववत् सर्वमित्येषां कथिताः सर्वतः लोके ॥

तदा सर्वे ते संज्ञिनो केचिच्चारुसमप्रभा ।
चित्रा कचित्ततः शुभ्रः स्निग्धो वर्णतः शुभः ॥

सुनेत्रो नेत्रनामः शशिकुन्दसमप्रभः ।
सुभ्रू सुनयनश्चैव रुग्मवर्णः सहेमजः ॥

सर्वे सिता विचित्राश्च नानानामसमोदिताः ।
पञ्चवर्णानामपि तेषां केतूनां निबोधिता ॥

नानावर्णरूपाणां तत्संज्ञाश्च प्रयोजयेत् ।
नानाविकृतिनो येऽपि येऽपि घोराः सुदारुणाः ॥

ये मया कथिता पूर्वं तत्संज्ञाश्च सर्वतः ।
एवमाद्याधिका प्रोक्ता केतवो बहुरूपिणः ॥

स्वकायपरकाये वा यदि केतुसमाश्रिता ।
रात्रौ चापि दिवा चापि सद्यः प्राणहराः स्मृता ॥

शुक्लवर्णां यदा पश्ये शशिगोक्षीरसमप्रभाम् ।
हिमकुन्दसमाकारां नानारत्नसमप्रभाम् ॥

तस्य राज्यं समाख्यातं सिद्धिर्वा मन्त्रजापिने ।
एते केतवो इष्टा शरीरे मन्दिरेऽपि वा ॥

स्वसैन्यपरसैन्ये वा यत्रस्थं तत्र फलप्रदम् ।
तमाहुः कीर्तितां श्रेष्ठां नानाचित्रसमप्रभाम् ॥

दृश्यन्ते सर्वतो मर्त्यैः बह्वार्थावहाः स्मृताः ।
सर्वतः कथिता मर्त्यैर्विग्रहे मन्दिरेऽपि वा ॥

केतवः सिद्धकायानां सर्वेष्टाः सफलाः स्मृताः ।
अन्यथा कुत्सिताः सर्वे बहुदुःखभयप्रदाः ॥

सर्वे वै कथिता ह्येते केतवो ग्रहचिह्निताः ।
पूर्ववत् कथितं सर्वं तिथिनक्षत्रराशिजाः ॥

विविधैर्वारयोगैस्तु ग्रहैश्चापि महर्द्धिकाः ।
पूर्ववत् सर्वमित्येषां कथिताः सर्वतः लोके ॥

तदा सर्वे ते संज्ञिनो केचिच्चारुसमप्रभा ।
चित्रा कचित्ततः शुभ्रः स्निग्धो वर्णतः शुभः ॥

सुनेत्रो नेत्रनामः शशिकुन्दसमप्रभः ।
सुभ्रू सुनयनश्चैव रुग्मवर्णः सहेमजः ॥

सर्वे सिता विचित्राश्च नानानामसमोदिताः ।
षड्वर्णानामपि तेषां केतूनां निबोधिता ॥

नानावर्णरूपाणां तत्संज्ञाश्च प्रयोजयेत् ।
नानाविकृतिनो येऽपि येऽपि घोराः सुदारुणाः ॥

ये मया कथिता पूर्वं तत्संज्ञाश्च सर्वतः ।
एवमाद्याधिका प्रोक्ता केतवो बहुरूपिणः ॥

मानुषाणां तदा चक्रे शुभाशुभफलोदयाः ।
विग्रहा ग्रहमुख्यानां दृश्यते च समन्ततः ॥
देवासुरे च युद्धे वै दर्शयन्ति तदात्मनाम् ।
महाप्रभावा महेशाख्या दिव्या दिव्ययोनयः ॥
सिताः शुभोदयाः सर्वे देवपर्षसमाश्रिताः ।
विकृताविकृतरूपास्तु कुत्सिता विकृतवर्णिनः ॥
सर्वे वै असुरपक्षे तु क्रूरकर्मान्तचारिणा ।
यदा देवासुरे युद्धे वर्तमाने महद्भये ॥
असुराः पराजिता देवैः केतवः सूचयन्ति ते ।
दर्शने भू(त)ले मर्त्ये प्रदद्युः सर्वतो नभः ॥
सिताः शुभफला नित्यमिष्टाश्चैव सुरप्रिया ।
दर्शयन्ति तदात्मानं देवपक्षसमाश्रिताः ॥
मर्त्यानां तदा क्षिप्रं सुभिक्षमारोग्यविनिर्दिशेत् ।
असुरैर्निर्जिता देवा यदा काले भवन्ति वै ॥
तदा विकृवर्णास्तु क्रूरकर्मनियोजिता ।
असुराणां तदा पक्षे केतव उदयन्ति वै ॥
तदा सर्वतः क्रूरा वाता वायन्ति जन्तुनाम् ।
महावृष्टिमनावृष्टिनागाश्चैव क्रूरिणः ॥
मुमोच विषजां तोयं बहुव्याधिसमाकुलम् ।
मानुषाणां तदा चक्रे विषविस्फोटमूर्च्छनम् ॥
विविधा राक्षसा चैव दैत्ययक्षसमाश्रिता ।
कुर्वन्ति मानुषां हिंसामतिदारुणविघ्नकाम् ॥
प्राणापरोधिनं दुःखं कुर्वन्तीह महीतले ।
अश्मवृष्टिं तदाकाशे प्रपतेद् भूतले तदा ॥
महावाताः प्रवायन्ति तस्मिं काले तु भीषणाः ।
प्रचण्डा वायवो वान्ति बहुसत्त्वापकारिणः ॥

नानातिर्यगता प्राणा सस्यनाशं प्रचक्रिरे ।
वहुभूतगणाः क्रूरा कुर्वन्तीह च भूतले ॥
मानुषाणां तदा विघ्नं चक्रिरे प्राणोपरोधिनाम ।
एवम्प्रकारा ह्यनेकाश्च वहुविघ्नसमाश्रया ॥
नानातिर्यग्गताश्चैव चण्डाः श्वापदमोरगाः ।
विविधा नागयोनिस्था सत्त्वानामपकारका ॥
प्राणोपरोधिनं कुर्वन्ति विविधा म्लेच्छतस्करा ।
कपिला भासतो वर्णा वाता क्रूराश्च अग्निजाः ॥
वायन्ति विविधा लोके यदा देवपराजयेत् ।
अधर्मिष्ठा तदा मर्त्या जाम्बूद्वीपगता सदा ॥
तदा ते देवपक्षास्तु हीयन्ते दैत्ययोनिभिः ।
यदा धर्मव्रतः सत्त्वा भूतलेऽस्मिं समागता ॥
बुद्धधर्मरताः श्रेष्ठा सङ्घे चैव सदा वरा ।
मातृपितृभक्ताश्च सत्यसत्त्वा जपे रता ॥
तदा ते सर्वतो देवा निर्जिजे दैत्ययोनिजम् ।
तदा सस्यफलसम्पन्ना वहुपूर्णा वसुन्धरा ॥
दीर्घकालायुषो मर्त्या वहुसङ्घयपरायणा ।
धार्मिका नृपतयः सर्वे सुखदाः सौख्यपरायणाः ॥
तदा तासु सुखा सैत्या ह्लादिनो व्याधिनाशकाः ।
भवेयुः सर्वे ते लोके सुखकारणशीतलाः ॥
ातिशीता न चोष्णा वै ऋतवः सुखदा सदा ।
नानापक्षिगणाश्चैव कूजयेन्मधुरं सदा ॥
बहुपुष्पफलाढ्या तु तरवः सर्वतो शुभा ।
सर्वे व्याधिविनिर्मुक्ता जन्तवो भूनिवासिनः ॥
न चोद्वेगं तदा चक्रे नृपनिर्धार्मिको भवेत् ।
वहुधान्यमुखाश्चैव नानारत्नधमान्दरान् ॥

पश्यते सर्वयोन्यांस्तु जम्बूद्वीपगता नराः ।
फलाढ्या तरवो नित्यं बहुक्षीराश्च धेनवः ॥

धर्मायतनशत्राश्च कूपवाप्य समन्ततः ।
कुर्वन्ते न जनाः सर्वे जम्बूद्वीपगता नराः ॥

बहुधा बहुविधाश्चैव प्राणिधर्मरतः स्थिताः ।
समन्तात् सर्वतो तेषां यस्य पूर्णा वसुन्धरा ॥

विपरीता तदन्यथा तेषां भ्रष्टमर्यादचेष्टिताम् ।
कर्मे युगाधमे काले अन्यथा फलमादिशेत् ॥

निःफलं सफलं चैव + + + + + + + + ।
विकृतं हेतुजं कर्म अशुभा चैव कामयेत् ॥ इति ।

बोधिसत्त्वपिटकावतंसकान्महायानवैपुल्यसूत्राद्
आर्यमञ्जुश्रियमूलकल्पाच्चतुर्थो
निमित्तज्ञानमहोत्पादपटलपरिवर्तः
परिसमाप्त इति ।

---

## अथ एकत्रिंशः पटलविसरः ।

अथ खलु भगवांश्छाक्यमुनिः पुनरपि शुद्धावासभवनमवलोक्य मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । अस्ति मञ्जुश्रीः! त्वदीये कल्पविसरे सर्वसाधनोपयिके मन्त्रचर्याभियुक्तस्य साधनकाले सर्वमन्त्राणां सर्वकल्पविस्तरेषु राहुरागमनमसुराणामधिपतेः सर्वग्रहानायकस्य ग्रहसंज्ञा चन्द्रदिवाकरादिषु नक्षत्रयोगेन दृश्यन्ते । तं शृणु साधु च सुष्ठु च मनसि कुरु ते भाषिष्ये ॥

एवमुक्ते भगवता शाक्यमुनिना सम्यक् सम्बुद्धेन मञ्जुश्रीः कुमारभूतः उत्तरासङ्गं कृत्वा भगवतास्त्रिःप्रदक्षिणीकृत्य दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवां तेनाञ्जलिं प्रगृह्य भगवतश्चरणयोर्निपत्य पुनरेवोत्थाय भगवन्तमनिमिषं व्यवलोकयमानः उत्फुल्लनयनो भूत्वा हृष्टतुष्टो भगवन्तमेवमाह — तत् साधु भगवां निर्दिशतु राहोरागमनम्; यत्र सत्त्वानां मन्त्रचर्याभियुक्तानां सिद्धिकालं भवेयुरिति सर्वसत्त्वानां च सुखोदयं शुभाशुभनिमित्तं वा; तं निर्दिशतु भगवां । यस्येदानीं कालं मन्यसे ॥

अथ खलु भगवांश्छाक्यमुनिः मञ्जुश्रियस्य कुमारभूतस्य साधुकारमदात् । साधु मञ्जुश्रीः ! यस्त्वं तथागतमेतमर्थं परिप्रश्नसे सर्वसत्त्वानां च हितायोद्युक्तः । तेन हि मञ्जुश्रीः! शृणु भाषिष्ये । सर्वसत्त्वानां निर्दिशश्चेति ॥

आदौ ताव ग्रहैः क्रूरैः राहोश्चन्द्रमण्डले ।
आगमोदिते काले यथावन्तं निबोधिता ॥
यदा देवासुरं युद्धं वर्तते च महद् भयम् ।
तदासौ दैत्यराजा वै दानवेन्द्रो महर्द्धिकः ॥
महाभयः प्रमाणा वै समन्तादुच्छ्रितो महां ।
+ + + + + + + + सुमेरोरधिको भवेत् ॥
महाप्रमाणः क्रूरोऽसौ अतिदर्पातिदर्पितः ।
प्रभविष्णुर्ग्रहो मुख्यो यदा भेजे सुरालयम् ॥

तत: पाणिना परामृश्य सुमेरुं देवगाम्मितिम् ।
अप्सरां प्रेक्षते दैत्यः यदा काले नभस्तलम् ॥

तदा चन्द्रमसपूर्णः करे वामे स दैत्यराट् ।
नानामणयस्तस्य करे कङ्कनतां गता ॥

तदा भुवि लोकेऽस्मिं ग्रहभूतेति कथ्यते ।
यदा पद्मरागेऽस्मिं अर्चिर्भवति रक्तका ॥

तदा तार्किका मानवा आहुः आग्नेयं मण्डलं विभोः ।
यदा तु नीलरक्तेऽस्मिं प्रभा नीलतां व्रजेत् ॥

तदा नीलमिति ज्ञेयं शशिने भास्करेऽपि वा ।
माऐन्द्रमिति कथ्यते तार्किका भुवि मानवा ॥

वायव्यमण्डलमित्याहुस्तार्किका एव ते तदा ।
विविधा रत्नमालेभ्यो विविधा रत्नसम्भवा ॥

विविधं तार्किके शास्त्रे विविधा गतियोनिजाः ।
विविधैव क्रिया तेषां विविधा फलसम्पदा ॥

सम्यग् ज्ञानविहीनानां वालिशानामियं क्रिया।
तस्मात् तथागतं ज्ञानं सम्यक् तेन नियोजयेत् ॥

असुरस्य तदा दृष्टिः अज्ञानेष्वेव दिवौकसाम् ।
रथं सम्पूर्णयामास शशिनस्य महात्मने ॥

यदा काले भुवि मर्त्यानां राहोरागमनं भुवि ।
शशिमण्डलमाक्रम्य यदा तिष्ठति स ग्रहः ॥

तदा महद् भयं विन्यान्नक्षत्रेष्वेव निवोभताम् ।
अश्विन्येव यदा युक्तः शशिने भास्करमण्डलौ ॥

उभौ तौ युग्मतः ग्रासं दिवा रात्रौ च कथ्यते ।
अश्विन्यागमनं नित्यं दुर्भिक्षं तं विदुर्बुधाः ॥

भरण्यां तु यदा चन्द्रं रवेर्वा मण्डलाश्रयेत् ।
विविधा सस्यानिःष्पत्तिः सुभिक्षं चापि निर्दिशेत् ॥

कृत्तिकासु यदा चन्द्रः राहुना ग्रस्यते ध्रुवम् ।
रात्रौ वा यदि प्रभाते वा यामान्ते निन्दितं हितम् ॥

तदा विन्द्या महद् दुःखं व्याधिसम्भवमेव वा ।
मध्यदेशेषु नान्यत्र भवेन्नक्षत्रमादिभिः ॥

जनपदेष्वेव वक्तव्यो नृपैर्वोधिविविधोद्भवैः ।
मृगशिरासु यदा चन्द्रः भास्करो वा नभस्तले ॥

राहुणा ग्रस्तपूर्वौ तौ अस्तं यातौ महर्द्धिकौ ।
पूर्वदेशे नरा यातु व्याधिभिर्हन्यते तदा ॥

नृपाध्यक्षा गतायुष्या तत्र देशे विनिर्दिशेत् ।
आर्द्रायां पुनर्वसुश्चैव ग्रस्तौ च शशिभास्करौ ॥

रुधिराक्ता महीं सर्वां म्लेच्छदेशेषु कीर्तयेत् ।
अन्योन्यहतविध्वस्ता हतप्राणा गतायुषा ॥

निर्दिष्टा तत्र देशेऽस्मिन् पूर्वमुत्तरयोस्तदा ।
निकृष्टा पापकर्माणः म्लेच्छतस्करतां गताः ॥

पुष्याश्लेषौ यदा चन्द्रे भास्करे वा नभस्तले ।
राहुणा ग्रस्तविम्बा तौ मध्याह्ने वार्द्धरात्रतः ॥

तदा विन्द्यान्महादोष पश्चादन्यां नृपेश्वराम् ।
मघासु यदि ग्रस्येतौ शशिभास्करमण्डलौ ॥

राहुणा सह मुञ्चन्तो अस्तं यातौ ग्रहोत्तमौ ।
तदा महाय तं विन्द्याज्जम्बूद्वीपेषु सर्वतः ॥

दुर्भिक्षराष्ट्रभङ्गं च महामारिं च निर्दिशेत् ।
उभौ फल्गुनिसंयुक्तौ राहुरागमनं भवेत् ॥

मध्याह्नेऽथवा रात्रे च मुच्यते च पुनः क्षणात् ।
दुर्भिक्षं तदा विन्द्याज्जम्बूद्वीपेषु दृश्यते ॥

हस्तचित्रे यदा राहुः ग्रसते चन्द्रभास्करौ ।
ग्रस्तौ सह मुच्येतौ अस्तं यातौ च दुःखदा ॥

महामारिभयं तत्र तस्कराणां समन्ततः ।
नृपाश्च नृपवरा श्रेष्ठा हन्यन्ते व्याधिभिस्तदा ॥

दिशः सर्वे समन्ताद्वै दुर्भिक्षं चापि निर्दिशेत् ।
विशाखस्वातिनौ युक्तौ नक्षत्रवरपूजितौ ॥

राहोरागमनं विन्द्यात् पशूनां पीडसम्भवाम् ।
विविधा कुलमुख्यास्तु हन्यन्ते शस्त्रिभिस्तदा ॥

ज्येष्ठानुराधसंयुक्तौ नक्षत्रौ वरवर्णितौ ।
राहोरागमनं तत्र सुभिक्षं वा विनिर्दिशेत् ॥

मूलेन यदि चन्द्रस्थः राहुर्दृश्यति भूतले ।
उदयन्तं तदा ग्रस्तं उदितं वापि सर्वतः ॥

अस्तं यातेन तेनैव शशिनो राहुणा सदा ।
प्राच्याध्यक्षो विनश्येयुः पूर्वदेशजनालया ॥

महान्तं शस्त्रसम्पातं दुर्भिक्षं चापि निर्दिशेत् ।
परचक्रभयाद् भिन्ना त्रस्ता गौडजना जना ॥

राजा वै नश्यते तत्र व्याधिना सह मूर्च्छितः ।
उभौ अषाढौ तदाकाले राहुर्दृश्यति मेदिनीम् ॥

तत्र दुःखं महाव्याधि तत्र दृश्यति भूतले ।
नृपमुख्यास्तदा सर्वे दुष्टचित्ता परस्परम् ॥

धनिष्ठे श्रवणे चैव निर्दिष्टं लोकनिन्दितम् ।
नाना गणमुख्या वै विश्लिष्टान्योन्यतद्भुवा ॥

पूर्वभद्रपदे चैव नक्षत्रे शतभिषे तथा ।
राहुरागमनं दृश्येत सुभिक्षं चैव निर्दिशेत् ॥

उत्तरायां यदा युक्तः नक्षत्रे भद्रपदे तथा ।
राहुरागमनं श्रेष्ठं दिवा रात्रौ तु निन्दितम् ॥

रेवत्यां तु यदा चन्द्रः राहुणा ग्रस्त सर्वतः ।
उदयन्तं तथा भानोर्निशिर्वा चन्द्रमण्डले ॥

अस्तं यातो यदा राहुर्ग्रहमुख्यैः सहोत्तमैः ।
मध्यदेशाश्च पीड्यन्ते मागधो नृपतेर्वधः ॥

एतद् गणितं ज्ञानं मानुषाणां महीतले ।
नक्षत्राणामेतद् प्रमाणं चैव कीर्तितम् ॥

अशक्यं मानुषैरन्यैः प्रमाणं ग्रहयोनितम् ।
नक्षत्रमाला विचित्रा त्रै भ्रमते वै नभस्तले ॥

एतन्मानुषां सङ्ख्यात्ततोऽन्यद्द् देवयोनिजाम् ।
यो यस्य ग्रहमुख्यो वा क्षेत्रराशिसमोदितः ॥

नक्षत्रं कथितं पूर्वं तस्य तं कुरुतेऽन्यथा ।
ईषद् प्रमाणं न दोषोऽस्ति बहुवाचास्ति निन्दितम् ॥

एतद् प्रमाणकाले वै ग्रहमुख्योऽर्थकृद् स्मृतः ।
कालं कथितं ज्ञेयं नियमं चैव कीर्त्यते ॥

नक्षत्रराशिसंयुक्तः कम्पो निर्घात उल्किनः ।
सग्रहौ यदि तत्रस्थौ रविचन्द्रौ तु दृश्यते ॥

उभयान्तं तदा तस्य नक्षत्रां जातिभूषिताम् ।
अन्यथा निष्फलं विन्द्यात् प्रभावं वापि निन्दिते ॥

तस्माज्जपे तदा काले मन्त्रसिद्धिसमोदिता ।
धूम्रवर्णं यदाकाशं दृश्यते सर्वतः सदा ॥

तदा महद्द् भयं विन्द्यात् परचक्रभयेत् तदा ।
शशिने भास्करे चापि धूम्रवर्णो यदा भवेत् ॥

पर्येषा द्वित्रयो वा वा तत्र विन्द्यान्महद्द् भयम् ।
धूमिकायां भवेद्द् वृष्टिः सर्वकाले भयानके ॥

कुत्सितं सर्वतो विन्द्याद्द् व्याधिसमागमम् ।
ग्रीष्मे शरदे चैव धूमिका यदि जायते ॥

समन्ताद् सप्तरात्रं तु तत्र विन्द्यान्महद्द् भयम् ।
दिवा वा यदि वा रात्रौ धूमिका यदि जायते ॥

नक्षत्रैर्ग्रहचिह्नैस्तु तिथिवारान्तरेण वा ।
पूर्ववत् कथितं सर्वं यथा निर्घात उल्किनाम् ॥
तैरेत्र दिवसैः पूर्वं धूमिकाया नियोजयेत् ।
अर्धरात्रेऽथ मध्याह्ने धूमिका जायते सदा ॥
तत्र विन्द्यान्महोद्वेगं नृपतीनां पुरोत्तमाम् ।
शरदे यदि हेमन्ते ग्रीष्मे प्रावृषेऽपि वा ॥
धूमिका सर्वतो ज्ञेया नक्षत्रैश्चैव कीर्त्तितः ।
शुभाशुभं तथा ज्ञेयं दिवा वा यदि वा निशा ॥
निःफलं चापि विन्द्या त्रै सफलां चापि कीर्त्तिताम् ।
सर्वतः भूमिकम्पे वापि तथोल्कचैकतो राहुसमागमम् ॥
तत्र धूमो भवेद् यत्रत् समन्ताश्चैव नभस्तले ।
अचिरात् तत्र तद् राज्यं घात्यते शस्त्रिभिः सदा ॥
प्रभवः सर्वतो देशे मृत्युश्चैव प्रकीर्त्यते ।
सप्ताहाद्द्विजयमुख्या भुवि वाता सत्त्वयोनयः ॥
घात्यन्ते सर्वतो नित्यं शस्त्रिभिर्मृत्युवशानुगा ।
अन्योन्यापरतो राज्यं कृपावर्जितचेतसः ॥
त्रिंभिन्ना शस्त्रिभिः क्षिप्रं वणिजा नृपयोनयः ।
ग्रीष्मे सितवर्णस्तु नभो यत्र प्रदृश्यते ॥
महाव्याधिभयं तत्र नीले चैव शिवोद्‌यम् ।
पीतनिर्भासमुग्रन्तं सविता दृश्यते यदा ॥
ग्रीष्मे च कथिता मृत्युः शरत्काले च निन्दितम् ।
हेमन्ते च वसन्ते च ताम्रवर्णः प्रदृश्यते ॥
अन्यथा पीतनिर्भासौ निन्दितो लोकवर्जितः ।
शरदे ग्रीष्मतो श्रेयः सितिवर्णः प्रशस्यते ॥
प्रावृड्काले तथा शुभ्रे पीतो वा न च + + + ।
महाप्रभावसङ्काशं महानीलसमप्रभः ॥

नभो ज्ञेयं सदाकालं सर्वसौख्यफलप्रदम् ।
विपरीतं ततो विन्द्या देशमावासपीडनम् ॥

सस्योपघातमारिं च दुर्भिक्षं चापि मुच्यते ।
अतिकष्टं सुरा ह्येतं भयं वा रसदूषितम् ॥

महाप्रणादं घोरं च शुक्रे वै च नभस्तले ।
तत्क्षणादेव सर्वेषां नृपतीनां प्राणोपरोधिनम् ॥

ततोऽन्यच्छुभसंयुक्तं श्रेयसा चैव कल्पयेत् ।
सग्रहे भास्करे चन्द्रे यदा राहो महद्भये ॥

नश्यन्ते जनपदास्तत्र विविधा कर्मयोनिजा ।
ततोऽन्यच्छुभसंयुक्तं शब्दं लोकपूजितम् ॥

श्रेयसार्थे नियोक्तासौ सुरश्रेष्ठा ग्रहोत्तमा ।
विविधा मन्त्र सिद्ध्यन्ते विविधा मूलफलप्रदा ॥

विविधा वा न वा सर्वे विविधा प्राणसम्भवाः ।
अनेकाकारसम्पन्ना स्वरूपा विकृतास्तदा ॥

नानाप्रहरणाश्चैव नानाशस्त्रसमुद्भवा ।
सर्वमतयो ग्रा मूलमन्त्रसुभूषणा ॥

सर्वे ते साध्यमाने वै सिद्धिं गच्छेयु सग्रहा ।
ग्रहे चन्द्रे यदा भानो राहुणार्थोऽपि सग्रहे ॥

तस्मि काले तदा जापी मन्त्रमावर्तयेत् सदा ।
सर्वे ते वरदाश्चैव + + + + भवन्ति ते ॥

सत्त्वोपकारं फलं ह्येतत् प्रतिष्ठा तत्र दृश्यते ।
सिध्यन्ते मन्त्रराट् क्षिप्रं ग्रहे जप्ता सराहुके ॥

सप्ताभिर्दिवसैर्मासैः पक्षैश्चापि सुपूजिताः ।
मन्त्राणां सिद्धिर्निर्दिष्टा सग्रहे चन्द्रभास्करौ ॥

यामान्ते अर्धरात्रे वै सिद्धिरुक्ता तथागतैः ।
विधियुक्तास्तु वै मन्त्रा विहीनां नेष्यते ध्रुवम् ॥

ब्रह्मस्यापि महात्मानः किं पुनर्भुवि मानुषाम्।
शक्रस्यापि च देवस्य रुद्रस्यापि त्रिशूलिने॥

विष्णोश्चक्रगदाहस्ते तार्क्ष्यस्यापि महात्मने।
नेष्यते सिद्धिरेतेषां विधिहीनेन कर्मणाम्॥

मन्त्रे सुजप्ते युक्ते च तन्त्रयुक्तेन हेतुना।
सिध्यन्ते इतरस्यापि + + + + + + + + + + ॥

विधिना मानुषैर्युक्ता विद्यातत्त्वसुभूषिता।
सिध्यन्ते सग्रहा क्षिप्ता जप्ता कालेषु योजिता॥

ददाति फलसंयुक्तं विद्या सर्वत्र योजिता।
हेतुकर्मफला विद्या + + + हेतुदूषणी॥

कर्म सहेतुकं विन्द्या विद्याद्धेतुफलोदया।
विद्या कर्मफलं चैव हेतु चान्य नियोजयेत्॥

चतुःप्रकारात्तथा विद्या चतुर्था कर्मसु योजिता।
दद्यात् कर्मफलं क्षिप्रं सा विद्या हेतुयोजिता॥

सा विद्या फलतो ज्ञेया बुद्धैश्चापि सुपूजिता।
विद्या सर्वार्थसंयुक्ता प्रवरा सर्वकर्मिका॥

प्रदद्युः कर्मतो सिद्धिं सा विद्या कर्मसु योजिता।
श्रेयसा चैव योजयेत् न मन्त्राणां गतिगोचरम्॥

प्रभावं मन्त्रसिद्धिं च लोकतत्त्वं निबोधताम्।
निःफलं कर्मतो वा वा फलं कर्म च तत्र च॥

+ + + + + + + + + लोकतत्त्वनियोजिताम्।
दृश्यते फलहेतुर्वा मन्त्रा बुद्धैश्च वर्णिता॥

न फलं कर्म क्रमं हन्ति नाफलं कर्म क्रिया परा।
फलं कर्मसमारम्भात् सिद्धि मन्त्रेषु जायते॥

गुणं द्रव्यक्रमायोगा क्रमं द्रव्यक्रियाक्रमा।
मन्त्रराड् सिद्ध्यते तत्र फला कर्मेषु योजिता॥

विधिद्रव्यसमायुक्तः व्रतस्थो कर्मयोजितः ।
न योनिः कर्मतो ज्ञेयं यो नियुक्तः सदा फले ॥

न बृहत्कर्मतां यान्ति सिद्धिमन्त्राक्षरं सदा ।
तदा मन्त्री जपेन्मन्त्रं विधियोनिसमाश्रया ॥

कालक्रमा गुणाश्चैव विधियोनिगतिसंगतः ।
सिद्ध्यन्ते मन्त्रराट् सर्वे विधिकालार्थसाधिका ॥

न गुणं द्रव्यतो ज्ञेयं नाद्रव्यं गुणमुच्यते ।
गुणद्रव्यसमायोगात् संयोगान्मन्त्रमर्चयेत् ॥

अर्चिता देवताः सर्वे आमुखेनैव योजयेत् ।
तत्प्रमाणं गुणं द्रव्यं क्षिप्रमन्त्रेषु साधयेत् ॥

क्रमः कालगुणोपेतः गुणकालक्रमक्रिया ।
चतुर्धा दृश्यते सिद्धिः मन्त्रेष्वेव सुयोजिता ॥

प्रभावं गुणविस्तारं सत्त्वनीतिसुखोदयम् ।
प्रदद्युः सर्वतो मन्त्रा गुणेष्वेव नियोजिताः ॥

प्रभवं सर्वतः कर्म गुणद्रव्यं न सिद्ध्यते ।
नापि द्रव्या गुणापेता द्रव्यकर्माच्च वर्जिता ॥

न सिद्धिं दद्यु ततिक्षप्रं यथेष्टमनसोद्भवात् ।
मानसा मन्त्रनिर्दिष्टा न वाचा मनसा विना ॥

वाग्यतो मन्त्रनिर्ज्ञेया न वाग्या मनसे विना ।
नान्यकर्मा मनश्चैव संयोगात् सिद्धिरिष्यते ॥

न दृष्टिकर्मतो हीना नेष्टं कर्मविवर्जितम् ।
सम्यग् दृष्टि तथा कर्म वाक् चित्तं च योजितम् ॥

सिद्ध्यन्ते देवताः क्षिप्रं मन्त्रतन्त्राक्षरोदितम् ।
सम्यग्दृष्टिसमायोगा सम्यक् कर्मान्तयोजयोः ॥

+ + + + + + मन्त्रा सिद्ध्यन्ति सर्वदा सम्यक् ।
कर्मान्तवाक्सुमोपेतं सम्यग्दृष्टिसुयोजितम् ॥

सिद्ध्यन्ते सर्वतो मन्त्राः सम्यक् कर्मान्तयोजिताः ।
न चित्तेन विना मन्त्रं न स्मृत्या राह निजगोः ॥

सम्यक् स्मृत्या च चित्ते च दृश्यते मन्त्रसिद्धये ।
न स्मृत्या च विनिर्मुक्ता मन्त्र उक्तस्तथागतैः ॥

स्मृत्या समाधिभावेन सम्यक् तेन नियोजिताः ।
दृश्यन्ते ऊर्जितं मन्त्रैः सिध्यन्ते च समाधिना ॥

सम्यक्समाधिनो भावो मन्त्रा लोकसुपूजिताम् ।
तत्प्रयोगा इमा मन्त्राः समाध्या परिभाविता ॥

सिध्यन्ते मन्त्रराट् तत्र योगं चापि सुपुष्कलम् ।
सम्यक् समाधिभिर्ध्येयं मन्त्रं ध्यानादिकं परम् ॥

सिध्यन्ते योगिनो मन्त्रा नायोगात् सिद्धिमुच्यते ।
यो मया कथितं पूर्वं सम्यगुक्तसुयोजितम् ॥

नान्यथा सिद्धिमित्याहुर्मुनयः सत्ववत्सलाः ।
नासङ्कल्पाद् भवेन्मन्त्रः सम्यक् तत्त्वार्थयोजिताः ॥

सङ्कल्पा मन्त्र सिध्यन्ते सम्यक् ते त्रिधियोजिता ।
न पूज्य मन्त्रराट् सर्वे सम्यक् सङ्कल्पवर्जिताः ॥

सिध्यन्ते सर्वतो मन्त्राः सम्यगाजीवयोजिता ।
सम्यक् संङ्कल्पतो ह्येगं मन्त्रेष्वेव सुखोदयम् ॥

आजीवे शुद्धितां यान्ति मन्त्रा सम्यक् प्रयोजिता ।
सिध्यन्ते भुवि निर्दिष्टा मन्त्रमुख्या सुयोजिता ॥

आजीवं हि फलं युक्तो सम्यगेव सुयोजयेत् ।
सम्यक् सञ्जीवरतो मन्त्री शुद्धचित्तः सदा शुचौ ॥

शुचिनः शुचिकर्मस्य शुचिकर्मान्तचारिणः ।
सिध्यन्ते शुचिनो मन्त्रा कल्पकालाकल्पले सदा ॥

क्रव्यादा येतरा मन्त्रा ये चान्ये परिकीर्तिता ।
सिध्यन्ते मन्त्रिणां मन्त्राः क्रव्यादेष्वेव भाषिताः ॥

रुद्रविष्णुर्ग्रहा चोरे गरुडैश्चापि महर्द्धिकैः ।
यक्षराक्षसगीतास्तु सिध्यन्ते मन्त्रकश्मलाः ॥
विविधैर्भूतगणैश्चापि पिशाचैर्मन्त्रभाषिताः ।
स्वयं न सिध्यते विधिना हीना अशौचाचाररतेष्वपि ॥
विधिना योजिता क्षिप्रं अशौचेष्वेव सिद्धिदा ।
तस्मान्मन्त्रं न कुर्वीत विधिहीनं तु कर्मयोः ॥
सिध्यन्ते साश्रवा मन्त्रा विधिकर्मसुयोजिताः ।
साध्यास्तु तथा मन्त्रा आर्यो बुद्धैस्तु भाषिता ॥
तेषां सिद्धि विनिर्दिष्टा मार्गेष्वेव सुयोजिता ।
आर्याष्टाङ्गिकं मार्ग चतुःसत्यसुयोजितम् ॥
चतुर्ध्यान सदाचेयं चत्वारश्चरणाश्रिताः ।
सिध्यन्ते मन्त्रमुख्यास्तु प्रवरा बुद्धापदेशिता ॥
अनाख्येयस्वभावं वै गगनाभावस्वभावताम् ।
मन्त्राणां विधिनिर्दिष्टां आर्याणां च महौजसाम् ॥
भूम्यानां विधिनिर्दिष्टा सिद्धिमार्गविवर्जितम् ।
विद्यानां कथयिष्येऽहं तन्निबोध्य दिवौकसाः ॥
दशकर्मपथे मार्गे कुशले चैव सुभाषिते ।
सिध्यन्ते दिव्यमन्त्रास्तु विधिदृष्टेन कर्मणा ॥ इति ।

बोधिसत्त्वपिटकावतंसकान्महायानवैपुल्यसूत्रादार्यमञ्जुश्रीमूलकल्पा-
देकुनविंशतिपटलविसरात् पञ्चमः
ग्रहोत्पादनियमनिमित्तमन्त्रक्रिया-
निर्देशपरिवर्तपटलविसरः
परिसमाप्त इति ॥

---

अथ द्वाविंशः पटलविसरः।

अथ भगवांश्छाक्यमुनिः पुनरपि शुद्धावासभवनमवलोक्य मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म। अस्ति मञ्जुश्रीः! त्वदीये मूलकल्पपटलविसरे सर्वभूतरुतनिमित्तज्ञानपरिवर्त्तनिर्देशं नाम। तं भाषिष्येऽहम्। यं ज्ञात्वा सर्वमन्त्रचर्यानियोगयुक्ताः सर्वसत्त्वा सर्वमन्त्राणां कालाकालं ज्ञास्यन्ते। तं शृणु। साधु च सुष्ठु च मनसि कुरु। भाषिष्येऽहम्॥

अथ मञ्जुश्रीः कुमारभूतो उत्थायासनादेकांशमुत्तरासङ्गं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य येन भगवतः शाक्यमुनेः सिंहासनं तेनाञ्जलिमुपनाम्य त्रिरपि प्रदक्षिणीकृत्य भगवतः पादौ शिरसा वन्दित्वा भगवन्तमेतदवोचत्। तत् साधु भगवां निर्दिशतु। तं भूतरुतज्ञाननिर्देशं सर्वसत्त्वानामर्थाय। तद् भविष्यति सर्वमन्त्रचर्यानुप्रविष्टानां सर्वकालनियमोपकरणं सिद्धिनिमित्तये। यस्येदानीं भगवां कालं मन्यसे॥

अथ खलु भगवां शाक्यमुनिः मञ्जुश्रियस्य कुमारभूतस्य साधुकारमदात्। साधु साधु मञ्जुश्रीः! यस्त्वं तथागतमेतमर्थं परिप्रश्नितव्यं मन्यसे। तेन हि मञ्जुश्रीः! शृणुष्व निर्देक्ष्यामि॥

एवमुक्ते मञ्जुश्रीर्भगवतश्चरणयोर्निपत्योत्थाय निषण्णोऽभूद् धर्मश्रवणाय॥

अथ भगवां सर्वावतीं पर्षदमवलोक्य सर्वभूतरुतप्रचोदनी नाम समाधिं समापद्यते स्म। समनन्तरसमापन्नस्य भगवतः ये केचित् सत्त्वानन्तापर्यन्तेषु लोकधातुषु स्थिता सर्वे ते बुद्धरश्म्यावभासिता सर्वांश्च तां बुद्धां भगवतां शिरसा प्रणम्य अनन्तापर्यन्तलोकधातुस्थितां अभ्यर्चयेन भगवतः शाक्यमुनेः शुद्धावासभवनोपरिस्थितं सिंहासनं तेनोपजग्मुः। येन च सहा लोकधातुः तेन च प्रत्यष्ठात्। तत्र च स्थिता सर्वभूतगणा बुद्धानुभावेन स्वकं स्वकं रुतं विदर्शयन्तः भगवतः पादमूलसमीपोपगता धर्मश्रवणाय। भगवन्तं प्रणम्य मभ्यर्च्य च यथास्थानेषु च सन्निपण्णा अभूवं धर्मश्रवणाय॥

अथ भगवांश्छाक्यमुनिः शाक्यसिंहो शाक्यराजाधितनयः तेषां सर्वसत्त्वानां धार्म्या कथाया सन्दर्शयति समुत्तेजयति सम्प्रहर्षयति तेषां सर्वभूतसुरेश्वराणां तथा तथा धर्मदेशना कृतवां यथा तैः सर्वैः कैश्चिदनुत्तरायां सम्यक्सम्बोधौ चित्तान्युत्पादितानि । कैश्चित् प्रत्येकायां बोधौ कैश्चिच्छ्रावकत्वे कैश्चित्कैश्चित् सत्यानि दृष्टानि कैश्चिदर्हत्वं साक्षात्कृतं कैश्चिद् दशकुशले कर्मपथे स्थित्वा प्रणिधानं कृतम् । अनन्ता बुद्धा भगवतः अनन्तां कल्पकोटीष्वजोपस्थानग्लानप्रत्ययभैषज्यप्रदानं चीवरपिण्डपातशयनासनपरिष्कारं प्रदद्याप इति नियता च भविष्यामो बुद्धबोधेरिति ॥

अथ भगवां शाक्यमुनिः तेषां सत्त्वानामाशयं ज्ञात्वा मन्त्रं भाषते स्म सर्वभूतरुताभिज्ञा नाम । यं साधयित्वा सर्वबोधिसत्त्वाः सर्वसत्त्वाश्च रुतं विजानेयुः एकक्षणेन सर्वेषां सर्वसत्त्वानां यथागोचरमस्थितानाम् । कतमं च तत् ॥

नमः समन्तबुद्धानामप्रतिहतशासनानां समन्तापर्यन्तावस्थितानां महाकारुणिकानाम् । ॐ नमः सर्वविदे स्वाहा ॥

कल्पमस्य भवति । आदौ तावन्महारण्यं गत्वा क्षीरयावकाहारः मूलफलशाकाहारो वा अक्षरलक्षं जपेत् । त्रिःकालस्नायिना वल्कलवाससा पूर्ववत् सर्वं विधिना कर्तव्यम् । यथा मन्त्रतन्त्रेषु तथागतकुलोद्भवेषु । ततः पूर्वसेवां कृत्वा अक्षरलक्षस्यान्ते तत्रैव मा- [illegible] । [illegible] । [illegible] कृत्वा [illegible] चतुर्हस्तविस्तीर्णं समन्ताच्चतुरश्रं सर्वपुष्पफलैरर्घ्यं दत्वा प्राङ्मुखः कुशविण्डकोपविष्टः नवमग्निमुत्पाद्य क्षीरवृक्षकाष्ठैरग्निं प्रज्वाल्य श्रीफलफलानां दधिमधुघृताक्तानामष्टसहस्रं जुहुयात् । त्रिसन्ध्यं दिवसान्येकविंशति ॥

ततो पूर्वायां दिशि महावभासं कृत्वा बुद्धो भगवानागच्छति । ततो साधके मूर्ध्नि परामृशति । अपरामृष्टे साधके तत्क्षणादेव भगवतो वाचा निश्चरते—'सिद्धस्त्वं गच्छ यथेष्टम्, इति कृत्वान्तर्धीयते ॥

ततःप्रभृति साधकः पञ्चाभिज्ञो भवति महाप्रभावदिव्यमूर्त्तिः बोधिसत्त्वाचारः द्विरष्टवर्षाकृतिः यथेष्टगतिः सर्वभूतरुतज्ञः, एकक्षणमात्रेण सर्वभूतानां रुतं विजानीते प्रभवश्च भवति यथेष्टगामी । पञ्चवर्षसहस्राणि जीवते । अवैवर्त्तिको भवति बोधिसत्त्वः । त्रिंशतिभिः साधनप्रवेशैर्नियतं सिध्यतीति नात्र विचिकित्सा कार्या प्रसाधितस्यापि न मन्त्रं जपता पूर्वमादितश्चैव मध्ये चैव निबोधताम् ॥

रुतज्ञानं प्रभावं च स्वभावं चैव कीर्त्यते ।
मध्ये आदितश्चैव अन्ते चैव दिवौकसाम् ॥

भाषितं कथ्यते लोके मध्यदेशे च कीर्तिता ।
मागधा मङ्गदेशेषु काशिपुर्यां नरोत्तमा ॥

वृजिकोसलमध्येषु नरेष्वेव यथावच्च ।
तथा ते देवराट् सर्वे मन्त्रां वत्रे स्वभावतः ॥

त्रिदशो मध्यदेशे च वत्स पश्य दशार्णवा ।
अमन्ते यथा वाचा तथा देशेषु जायते ॥

त्रिदशेष्वेव सर्वत्र तथा वाणीमुदाहृता ।
यामा देवमुख्याश्च निर्माणश्च सनिर्मिता ॥

तदा वाचकृतां वाचा मध्यदेशार्थचारिणी ।
तथारूपिण सर्वे वै अकनिष्ठाश्च महर्द्धिका ॥

सर्वे ते गुरः श्रेष्ठा रूपधातुसमाश्रृता ।
ध्यानाहारगता सौम्या कदाचिद्वाचामभाषिरे ॥

ब्राह्मीश्वरमतेला च कलविङ्करुतस्वना ।
मधुराक्षरनिर्घोषा मनकोकिलनिःस्वना ॥

यद्यदार्था भवेद् वाचा धीरगम्भीरसंयुता ।
तथा सर्वतो वक्रा दृष्टया चैव सुपूजिता ॥

भवन्ते ते सदा देवा मध्यदेशे सवाचका ।
मधुराक्षरसम्पन्नाः स्निग्धगम्भीरनादिनः ॥

मेघगर्जना तेषां वाचैषा तां तु लक्षयेत् ।
मध्यदेशा यथा मर्त्या अवन्त्येष्वेव पूजिता ॥

वाचा शब्दसम्पन्ना तथा ज्ञेयां सुरेश्वराम् ।
अरूपिणां कृता वाचा अगंज्ञायतनसम्भवाम् ॥

अभावादाश्रयात् तेषां न वाचां जग्मिरे सुराः ।
अधः श्रेष्ठाः सुराः सर्वे मध्यदेशेषु वाचका ॥

मध्यदेशात्थ्यचिह्नानां वाचैषा सम्प्रवर्तते ।
अथ देवामथं भूम्या वै यक्षाश्चैव महर्द्धिकाः ॥

देवयोनिसमाविष्टा बहुसत्त्वगणास्तथा ।
करोटपाणयो देवा सदा मत्ताश्च वीणकाः ॥

चत्वारोऽपि महाराजा चतुर्योनिसमाश्रिता ।
त्रिदशा देवमुख्यास्तु शक्रेण सह समाश्रिता ॥

सुयामामथ सर्वत्र ऊर्ध्वं जापि सुरूपिणः ।
सर्वदेवगणा श्रेष्ठा वाचा ह्येषा तु कीर्त्यते ॥

मध्यदेशे यथा मर्त्या हीनोत्कृष्टमध्यमाम् ।
तथा देववती वाचा हीनोत्कृष्टमध्यमाम् ॥

वाचा त्रिविधा ज्ञेया हीनोत्कृष्टमध्यमा ।
त्रिविधात् कर्मतो ज्ञेया हीनोत्कृष्टमध्यमा ॥

तथा देवालये वाणी मधुरं चापि सूक्तजिता ।
रुतं मतं तथा ज्ञेयं कर्मेष्वेव नियोजयेत् ॥

असुराणां भवेद् वाचा गौडपौण्ड्रोद्भवा सदा ।
यथा गौडजनश्रेष्ठं रुतं शब्दविभूषितम् ॥

तथा दैत्यगणा श्रेष्ठं रुतं चापि नियोजयेत् ।
तेषां पर्यटन्तानां समन्तानां च पुरोजवाम् ॥

यक्षराक्षसमेतानां नागांश्चापि सपूतनाम् ।
सर्वेषाममुरपक्षाणा वङ्गसामतटाश्रयात् ॥

हरिकेले कलशमुख्ये च चर्मरङ्गे ह्यशेषतः।
सर्वेषां जनपदां वा तथा तेषां तु कल्पयेत् ॥

त्रिप्रकारा यथोद्दिष्टा तेषां चैव नियोजयेत्।
देवानां च तथा नित्यं पुरागानां परिकीर्तयेत् ॥

प्रेतयक्षगणाध्यक्षा स्कन्दमातरकिन्नरा।
नागांश्चैव सदा काले यथा वाचा निबोधताम् ॥

लाडोद्रेषु तथा सिन्धौ यथा मुत्तरतो तथा।
जनेष्वेव हि सर्वत्र तां तु तेषां नियोजयेत् ॥

नागानां च यथा लाडी वाचा ह्युक्ता मनीषिणी।
यक्षाणां तु तथा वाचा उत्तरां दिशि ये नराः ॥

गरुडानां यथा ह्योद्रे किन्नराणां तु कीर्त्यते।
नेपाले सर्वतो वाचा यथा सा तां निबोधताम् ॥

पूतनानां तथा नार्यां विन्ध्यकुक्षिनिवासिनाम्।
विन्ध्यजाता मनुष्याणां म्लेच्छानां च या वाचा ॥

पूतनानां तु सा ज्ञेया वाचैषां परिकीर्तिता।
राक्षसानां यथा वाचा तां वक्ष्ये सुरोत्तमा ॥

रासज्यदक्षिणा देशा अन्ध्रन्द्राटेषु कीर्तिता।
द्रविडानां तु सर्वेषां डकारबहुला सदा ॥

तां तु वाचा समालक्ष्ये राक्षसेष्वेव नियोजयेत्।
त्रिःप्रकारा तथा ज्ञेया राक्षसानां कुलयोनयः ॥

त्रिःप्रकारेव वाचैषा त्रिधा चैव नियोजयेत्।
सर्वतो त्रिविधा ज्ञेया देशभाषाश्च ते त्रिधा ॥

त्रिःप्रकारं तथा कर्म निर्दिष्टं चैव योजयेत्।
त्रिविधः सर्वतो ज्ञेयः त्रिविधं कर्म कृतं स्मृतम् ॥

समं सर्वेषु तत्रैव विधानान्यं नियोजयेत्
नानाभूतगणा प्रोक्ता नानाभूतलवासिनः ॥

नाना च बहुभाषज्ञा नानाशास्त्रविभूषिता ।
मानुषा मानुषां विन्द्या नानावाचविभाषिताम् ॥
नानाशास्त्रगता ज्ञेया नानामन्त्रार्थशालिनः ।
नानाकर्मसमोद्देशा नानासिद्धिस्तु सूच्यते ॥
आविष्टानां यदा मर्त्या पात्रस्थानसमागता ।
तेषां च विधियुक्तेन मन्त्रैश्चापि सुयोजिता ॥
आगता भूतले देवां वाचेनैव विभावयेत् ।
लिङ्गमर्थं तथा पात्रं देवं चैव नियोजयेत् ॥
श्रेयसा श्रेयसे चैव आवेशानां तु लक्षयेत् ।
नानादेशसमाचारा नानाभाषसमोदया ॥
नानाकर्मार्थसंयोगा नानालिङ्गैस्तु लक्षयेत् ।
मध्यदेशाद्बहिर्येषां वाचा भवति चञ्चला ॥
ते तु व्यक्तं नरा ज्ञेया म्लेच्छभाषारता हि ते ।
ये क्रूरा राक्षसा घोरा रौद्रकर्मान्तचारिणः ॥
डकारबहुला वाचा लकाराव्यक्त मार्षो ।
दक्षिणात्या यथा वाचा चञ्चला भवति निन्दिता ॥
तथा च राक्षसस्तेषु वाचैषा परिकीर्त्तिता ।
बहुधा रुतया ज्येष्ठा आविष्टानां तु विजापराम् ॥
आकृष्टा मन्त्रिभिः क्षिप्रं स्वयं वा इह मागता ।
बहुधा गृह्णन्ति सत्त्वानां मानरा सग्रहा सुरा ॥
गरुडा यक्षगन्धर्वा किन्नरा । । । । । । ।
पिशाचा चोरगराक्षसानां यक्षपूतनाम् ॥
आविष्टानां तथा लिङ्गा कथ्यमाना निबोधताम् ।
म्लेच्छभाषिण क्रव्यादा पिशाचाव्यक्तलापिनाम् ॥
लकारबहुला वाचा डकारान्तास्तु पूतना ।
तेषां नेध्वगता दृष्टि कर्मस्वेतेषु योजिता ॥

मात्सर्या क्रूरसत्त्वानां मृषावादादसुचे रता ।
तेषा नोर्ध्वं गता दृष्टि अधो दृक् नोर्ध्वगता हि ते ॥

मातराणां तथा वाचा शुभार्थोपसंहिता ।
ग्रहाणां कुमारमुख्यानां वाचा भवति केवला ॥

शुभाङ्गसम्पदा वाचा बालभाव्यर्थयोजिता ।
प्रभावसर्वतः श्रेयां सर्वतश्च दिवौकसाम् ॥

गरुडानां तथा वाचा आविष्टानां तु लक्षयेत् ।
गकारसमता ज्ञेया म्लेच्छभाषेव लक्ष्यते ॥

अव्यक्तं स्फुटाभासं कीर्तियुक्तं शुभोदयम् ।
सुपर्णिने पायवदित्येषा विपदर्पनिवारणी ॥

नानागतयो ह्येषां नानाभूतसमागमाम् ।
नानावर्णतो ज्ञेयां नानालिङ्गैस्तु लक्षयेत् ॥

शुभाकरप्रभाकर प्रभासन्तं भक्षतो नागराट् पदे ।
वासुकीप्रभृतयो नागा धार्मिका वसुधातले ॥

क्षिप्रवाचा समायुक्ताश्च वसन्तो उरगाधिपा ।
स्वेन स्वेन तु कायेन यो लिङ्गेन तु लक्षयेत् ॥

तेन तेन तु लिङ्गेन तं तं सत्त्वं विनिर्दिशेत् ।
कश्मला कथिता सर्वे अधो दृष्टिगता हि ते ॥

नानालिङ्गिनां ज्ञेया नानासत्त्वनिकायताम् ।
नानाकायगतैः कर्मैः नानाकायं निबोधताम् ॥

एवम्प्रकाराह्यनेका बहुलिङ्गाभिभाषिणा ।
नानाबुद्धिकृतैः कर्मैः नानायोनिसमाश्रितैः ॥

आविष्टानां भुवि मर्त्यानां कथिता लिङ्गानि वै सदा ।
सुराणामसुराणां च यथा वाचार्थलिङ्गिनी ॥
तथैव तद् योजयेत् क्षिप्रं भूमिमर्त्यानुपतां गताः ।
देवानां तदा विन्द्यात् सुप्रसन्नेन नेतरा ॥

निरीक्षन्ते तथा चोर्ध्वं दिशां चैव समन्ततः ।
अविकृता मनसोद्विग्ना हृष्टा रूपसमन्विता ॥

शुद्धाक्षा अनिमिषाक्षाश्च स्निग्धा च स्निग्धवक्त्रयः ।
प्रसन्नगल्या तथा सर्वे सुरश्रेष्ठा तु लक्षयेत् ॥

पर्यङ्कोपहिता ज्ञेया निषण्णा भूतले शुचौ ।
केचिदम्बरं निःसृत्य निषण्णा खेचरा परे ॥

ब्रह्माद्या कथिता देवा ध्यानप्रीतिसमाहिताः ।
तदूर्ध्वं श्रेयसां स्थाने रूपिणा बहुरूपिणा ॥

आकृष्टा मन्त्रिभिर्मन्त्रैःस्तैः मन्त्रजानां संनिश्रिता ।
तेषां रूपधरा कान्तिः आश्रया ते परिवर्तये ॥

ध्यानप्रीतिसमापन्नाः ईषिस्मितमुखा सदा ।
शुद्धाक्षा विशालाक्षा बहुरूपसमाश्रिता ॥

वमन्त्यो तदा कान्त्या श्रिया रूपसमन्विता ।
परज्ञानविदो देवा तेषां तं निबोधयेत् ॥

पर्यङ्कोपरिविष्टा वै ध्यायन्ता ऋषिवत् सदा ।
तदावेशं विदुर्बुद्ध्या इष्टमर्थप्रसाधकम् ॥

श्रेयसा सर्वमन्त्राणां हितार्थंचोपयोजयेत् ।
कथितं सर्वमेवं तु निबोधत सुरेश्वराः ॥

ऋषिणा कथिता ह्येते संयता ते ऋषवत्स्थिता ।
आविष्टानां तदा लिङ्गा ऋषीणां कथिता मया ॥

ऊर्ध्वदृष्टिगता देवा ऊर्ध्वपादाश्च कश्मला ।
विकृता रौद्ररूपाश्च ऊर्ध्वकेशास्तु राक्षसाः ॥

मातराणां तदेवं तु केषां चैव तु दृश्यते ।
क्रव्यादा नग्नका तिष्ठे सचेला निश्चलतां गता ॥

ऊर्ध्वपादा विकृताख्या ऊर्ध्वकेशा ग्रहा परे ।
विनेरुर्मेदिनीं कृत्स्नां समन्तात् मरिनानटाम् ॥

एकवृक्षा श्मशानां च एकलिङ्गा पुलिनोद्भवाम् ।
देवावसथरथ्यासु विन्ध्यकुक्षिशिलोच्चयाम् ॥

हिमाद्रे सानुमांश्चैव म्लेच्छनस्करगान्दिराम् ।
तत्रस्था विकृतरूपास्तु मन्त्राकृष्टाश्च मागना ॥

गृह्णन्ति प्राणिनां क्षिप्रं शौचाचारपराङ्मुखाम् ।
सर्वमेदिनीं गच्छेद् भयादाहारमोहिनाम् ॥

गृह्णन्ति बहुधा लोके बहुव्याधिसमाश्रिताम् ।
नानाविकृतरूपास्ते नानावेषधरा परा ॥

गृह्णन्ति प्राणिनां क्षिप्रं मृतकं मूत्रसुप्तकाम् ।
तेषां च कथितं लिङ्गं चरितं तु विभावितम् ॥

नाचमालक्षितं पूर्वं कथितं तु महीतले ।
आविष्टानां तथा चिह्नं मानुषेष्वेव लक्षितम् ॥

स्थिरप्रकाराः सर्वत्र सुरश्रेष्ठा निबोधता ।
आविष्टानां तथा लिङ्गा कथिता भूतले नृणाम् ॥

स्निग्धं प्रेक्षते नित्यं अनिमिषश्चापि दृष्टितः ।
मानुषे सत्त्वसङ्क्लिष्टे सुरश्रेष्ठे तु महीतले ॥

वक्रे वसुधरां वाचां गन्दगङ्गार्थभूषिनाम् ।
युक्ते श्रेयसे धर्मे मानुष्ये वाश्रथोगतो ॥

सुरश्रेष्ठो गतो मुख्यो ज्ञेयो सर्वार्थसाधको ।
चिन्तितं जापिने तेन गतबुद्धिर्दिवालये ॥

तत् सर्वं बोधयेत् क्षिप्रं मन्त्रिणे चिन्तितं तु यत् ।
एतत् मस्यगाख्यानमावेशं श्रुचि देवनम् ॥

असंज्ञिनोऽपि सदा मन्त्रैराकृष्यन्ते तु भूतले ।
नभाप मधुरं वाचं न यज्ञो सत्त्वरा सुराः ॥

निःश्रेष्ठा विवशा चैव स्थिता ते मौनमाश्रिताः ।
न वाचा किञ्चनस्तेषां न चित्ता नापि मानिता ॥

तस्मात् तं न चाकृष्ये तं जापी परिवर्तयेत् ।
असाध्यं नापि तत्तेषां मन्त्राणां जिनसोद्भवाम् ॥

नाकृष्यं विद्यते किञ्चिद् दुष्करं तेषां जप्तमन्त्रार्थतापिनाम् ।
आकृष्यन्ते तथा आर्या आर्यमन्त्रैस्तु युक्तिनाः ॥

आर्याणां यानि चिह्नानि खड्गिश्रावकसम्भवाम् ।
बोधिसत्त्वा महात्मानो दशभूमिसमाश्रिता ॥

आकृष्यन्ते तथा मन्त्रैः समयैश्चापि सुभूषिताः ।
महादूत्यैस्तथोर्णापैर्मुनिर्वर्णसुयोजितैः ॥

बुद्धपुत्रैस्तु धीमद्भिरब्जकेतुकुलोदितैः ।
कुलिशाह्वैर्मन्त्रमुख्यैस्तु क्रोधराजमहर्द्धिकैः ॥

नान्ये मन्त्रशाः शक्ता लौकिका ये महर्द्धिका ।
नापि समयत्रित्तेषां न चोत्कृष्टो मन्त्रमीश्वरः ॥

वर्णितुं गणयितुं गन्तुं तं स्थानं यत्र ते सदा ।
समया सञ्चाल्यते तेषां हेतुः कर्मसमाहिताम् ॥

ननु चाकृष्यते तेषां हेतुः कर्मसमाहितम् ।
तन्त्रं चाकृष्यते तेषां समये बुद्धभाषितैः ॥

तस्मात् तं न चालये यत्ना न वृथामर्थेन योजयेत् ।
महर्द्धिका ते महात्मानो दशभूमिसमाश्रिताम् ॥

अशक्ता सर्वमन्त्रा वै गन्तुं यत्र ते तदा ।
तथागतानां तथा माज्ञा संस्मृत्यामरपूजिता ॥

आगच्छेयु तदा सर्वे मन्त्रजप्तार्थमन्त्रवित् ।
आकृष्टानां भवेल्लिङ्गा मानुष्योकायमानुषाम् ॥

धीरतः स्निग्धवर्णश्च गम्भीरार्थसुदेशकः ।
धीरो गम्भीरतां यातो अल्पवाक्यो भवेत् तदा ॥

अस्विन्नगनसोत्कृष्टो पृष्टश्च मन्त्रवित् ।
स्वमुद्रो बन्धयामास सुविदिशे चैव नभस्तले ॥

परमत्त्वविदो मग्नो धर्मेनत्वार्थदेशकः ।
नीतिः प्रीतिसुखाविष्टो कृपाविष्टस्य चेतसा ॥
महोत्साहो दृढारम्भो बुद्धधर्मार्थदेशकः ।
मुहूर्त्तं क्षणमात्रं वा प्रविशेन्मानुपाश्रयम् ॥
बहुरूपो सुरूपश्च ऊर्ध्वं तिष्ठे नभस्तलम् ।
बुद्धधर्मगता दृष्टिः संघे चैव सगौरवा ॥
क्षणमात्रं तदा तिष्ठेन्मानुर्षां तनुमाश्रुता ।
सत्यसन्धो महात्मानो जितक्रोधो त्रिदोपहा ॥
प्रथमं तावतो विन्द्या पश्चाचैव नियोजिता ।
मानुपैस्तदा कृष्टा पुनर्मुक्ताश्च यथेष्टगाः ॥
स्तब्धो निश्चलाक्षश्च गितवर्णस्तथैव च ।
अङ्ककेतुस्तदाविष्टो धीरगम्भीरसुस्वरः ॥
सुप्रसन्नो महाकायो तिष्ठते च महीतले ।
पर्यङ्कमासनाविष्टो कृपाविष्टोऽथ चेतसा ॥
स मुद्रा पञ्चरोपेतो महासत्त्वो समाविशे ।
अवलोकितो मुनिः श्रेष्ठो बोधिसत्त्वो महर्द्धिको ॥
स्वेच्छया आगतो लोकां सत्त्ववत्सलकारणो ।
अभयाग्रा कारणो + + + + + + + + + + ॥
अभयाग्रा करोपेतो ऊर्ध्वदृष्टिसमास्थितो ।
साधकं पश्यते दृष्ट्या करुणाविष्टचेतसा ॥
ईषिस्मितमुखा देवा केचिद् भ्रूलभूषितो ।
महासत्त्वो महात्मानो सत्त्वानां हितकारकः ॥
प्रसन्ना सर्वत मूर्त्या तं विन्द्यादवलोकितुम् ।
क्रूरः वज्रधरो मुख्यो बोधिसत्त्वो महर्द्धिकः ॥
आविष्टो क्रूरिणो सर्वो रक्तान्तायतलोचना ।
इन्दीवरत्विपाकार ईषत् काये तु लक्षयेत् ॥
परामृश्यन्तं तदा वज्रं मुद्रां बध्नाति गात्मनाम् ।
तुष्टो वरदो मर्त्यो भोगां दापयते सदा ॥

महात्मा कृष्णवर्णो वै ईपि दृश्यति तत्क्षणात् ।
स्निग्धं गम्भीरमुक्तोऽसौ वाचां भाषते तदा ॥
नृणां किमर्थमेतं वो कर्मवरं दास्याम वो भुवे ।
अमोघं दर्शनमित्याहुर्वा व्रणेऽब्जिजिने जिने ॥
वरदा सप्रभा मन्त्रा फलं दद्युस्तदा तदा ।
जिनेरागमनं तत्र निर्माणो भुवि मानुषाम् ॥
समयात् कथिता ह्येते वर्णाश्चैव विवोधिता ।
तथागतादाश्रयाद्धि वा फलहेतुसमुद्भवा ॥
निर्माणा कथ्यते विम्बं न विम्बं निर्माणमाश्रुतम् ।
विम्बनिर्माणयो यद्वत् प्रतिविम्ब न विद्यते ॥
पद्मकिञ्जल्कवर्णोऽसौ हेमवर्ण महाद्युतिः ।
निर्भिन्नरोचनाभासो कुङ्कुमाराभिविद्विषः ॥
उद्यन्तमिवार्के वै कर्णिकारसमप्रभः ।
तादृशं विद्यते विम्बे बुद्धविम्बसमाश्रुते ॥
ब्राह्मश्च रुनिघोषो कलविङ्करुतध्वनिः ।
श्रेयसः सर्वभूतानां युक्तियोगान्नियुज्यते ॥
तादृशं लक्षणं दृष्ट्वा बुद्धमित्याहु जन्तवः ।
तद्गोत्रा च विधिस्तेषां वज्राब्जकुलयो तदा ॥
लौकिकानां तु मन्त्राणां मन्त्रनाथं तु योजयेत् ।
यत् पूर्वं कथितं सर्वं वहुप्रस्तावभूषितम् ॥
तं नियुञ्ज्य तदा मन्त्री मन्त्रेष्वेव च सर्वतः ।
रूपीणामेकसंस्थानं गरुडानां च निवोधितम् ॥
स्वलिङ्गा वाचया चैव तं नियुञ्ज्यथ मन्त्रिणाम् ।
वहुलिङ्गा तदा चैषा स्वलिङ्गा चैव साधये ॥
स्वमुद्रामुद्रिता ह्येते इतरा व्यन्तरा स्मृताः ।
कथितं सर्वमावेशं स्वमुखं दुःखदं पराम् ॥

एष कालक्रमो योगे आवेशे चैव योजयेत्।
महाप्रभावैर्मुद्रैस्तु मन्त्रैश्चापि निवारयेत्॥
नियुञ्ज्यात् सर्वतो मन्त्री जगतां न चेतराम्।
अन्यथासमाचरद् यस्तु इतरैर्मन्त्रिभिः सदा॥
परिरक्ष्य तदा पात्रं मन्त्रैश्चापि महर्द्धिकैः।
दूतिदूतगणैश्चापि चेटचेटिगणैः सदा॥
इतरां लौकिकां देवां आह्वये चैव महर्द्धिकाम्।
यक्षराड् विविधा सर्वां यक्षिण्यश्च महर्द्धिकम्॥
आह्वयेत् तत्क्षणान्मन्त्री मनसः यद्यपीप्सितम्।
अन्यमन्त्रा न चाह्वेया नान्ये देवगणा सदा॥
स्वयमेवागता ये तु समये तां नियोजयेत्।
सर्वे सम्पदका ह्येते मन्त्रा सर्वार्थसाधकाः॥
सं तस्मा नेतरां कर्म आवेशां चापि वर्जयेत्।
आकृष्टा महर्द्धिका देवा दिव्या आगोश्च भूमिजा।
अल्पकार्येऽथ युञ्जाना समयभ्रंशोऽथ जायते॥
तक्षकः प्रेक्षते स्तब्धं वासुकिश्चापि नृत्यते।
कर्कोटकश्च महानागो मुचिलिन्दयशस्विनः॥
शङ्खपालदुर्लक्षां नृत्यन्ते उरगाधिपा।
शङ्खपालोऽथ शङ्खश्च मणिनागोऽथ कुण्डिलः॥
सागरा भ्रमते क्षिप्रं पतते च मुहुर्मुहुः।
सर्पवन्निःश्वसन्ते ते विषदर्पप्रमुच्छिनाः॥
विविधा नागवरे श्रेष्ठे अनन्ताना तेषु निबोधताम्।
केचिद् भावयतो हृष्टो केचित् तिष्ठन्ति निश्चलम्॥
केचित् पते + + क्षिप्रं स्वस्थाङ्गा ऊर्ध्वमूर्द्धजा।
पतन्ति विविधाकारं प्लुतं चापि करोति वै॥
अनन्ता भ्रमते क्षिप्रं पद्मनच्चले जले।
अनन्ता नागयोन्यास्तु सङ्ख्याता लिङ्गवेपयो॥

पूर्ववत कथिता नाना दष्टाविष्टमहोदिनम् ।
मोचयेत कुलिशादेन मन्त्रेण क्रोधराजेन युक्तिमांश्च ॥

मन्त्रेणैव कुर्यान्तं तेषां मन्त्रेण योजयेत् ।
मन्त्रास्तु वर्णिता येऽत्र निर्दिष्टा विषनाशका ॥

ते तु मन्त्रा सदा योज्या दष्टाविष्टेषु सर्वतः ।
शेषा विघ्ना तथा कुर्या ग्रहमातरयोजिता ॥

तेनैव कारयेत् कर्म ग्रहमातरपूतनाम् ।
असङ्ख्या लक्षणा ह्येते दष्टाविष्टेषु जन्तुषु ॥

तैरेव लौकिकैर्मन्त्रैस्तत्तत् कर्म नियोजयेत् ।
अशेषं कथितं ह्येतं दष्टाविष्टं च लक्षणम् ॥

अधुना बोधयिष्यामि तिर्यग्भाषां समानुषाम् ।
नारकानां तु भाषां वा कथ्यमानां निबोधताम् ॥

यदा पक्षिगणा सर्वे सन्निपत्य समन्ततः ।
ग्रामवासं तदा चक्रुः मध्याह्ने जनमालये ॥

तदा ते कथये वाचां रेफंयुक्तां सभैरवाम् ।
क्रकः ककारमित्याहुः काका ये क्रूरभाषिणो ॥

कथयन्ति भयं तत्र क्षुधा चैव च दर्शयेत् ।
मयूरा कोकिलाश्चैव सन्निपत्य प्रगे तदा ॥

क्रूरां दर्शयेद् वाचां भयं तत्र निवेदयेत् ।
बुभुक्षां कथयामास आहारं चैव योजयेत ॥

सदाहं सर्वकायाता ग्रामस्थानेषु दृश्यते ।
तदा ते कथयन्त्येते तां वाचां भयभैरवाम् ॥

षण्मासां नश्यते देशे ग्रामगतां भोजनोत्तमाम् ।
तेषां क्षीरसमं देयं तोयं चैव सुगन्धोदयम् ॥

शारिकाशुकमुख्यांस्तु कपोता हरितास्तथा ।
चक्रवाका भासस्नकीका सर्वे आगत्य मीलये ॥

ग्राममध्यगता ह्येते यदा कुर्वन्ति गाल्गम् ।
तदा ते कथयन्त्येवं महादुर्भिक्षकारणम् ॥

अनावृष्टिं तथा व्याधिं बहुरोगसमागमम् ।
लूता विस्फोटकाश्चैव महातस्करताश्रयाम् ॥

अवगच्छन्तु भवन्तो वै पड्भिर्मासैर्भविष्यते ।
यदा सर्वपक्षिगणा क्रूरं चक्रतुर्भृशदारुणम् ॥

रोदमाने तदा सर्वे सत्त्वानां च निवेदिता ।
यथास्थिता यथाकालं तदैवत्तत्र योजयेत् ॥

दकारबहुलं वाचं मनुष्यभाषिणो यदा ।
आगत्य ग्रामवासेऽस्मिं कथयन्ति यथा हि तम् ॥

रात्रौ स्वस्त्ययनं कृत्वा तस्माद् देशादपक्रमेत् ।
मधुराक्षरसंयुक्तं यदा नेदु सपक्षिजा ॥

तस्मात् सुभिक्षमारोग्यमेवं चाहुर्निवेदयेत् ।
यदा दक्षिणतो गच्छे मृगा गच्छेथ मग्रतम् ॥

सिद्धिं च निर्दिशन्ते ताः मृगाश्चैव सुपुष्कलाम् ।
श्वानजम्बूकनित्यस्थाः ते मृत्युं दर्शयन्ति ते ॥
न गच्छेत् तत्र मेधावी जम्बूकैश्च निवारितः ।
प्रविशेत् स्वालयं क्षिप्रं कथयामास ते तदा ॥
अतिक्रूरा निनेदुस्ताः अग्रतश्चापि प्रभावयेत् ।
गच्छेत तत्क्षणान्मन्त्री यदिच्छेत् सिद्धिमात्मनः ॥

वामतो दक्षिणं गच्छेज्जम्बूको यदि गच्छतः ।
सिद्धियात्रं विजानीयाज्जम्बूकेन निवेदिताम् ॥
चाषा च पक्षिणा सर्वे मृगाश्चैव सजम्बुका ।
हरिणा शशकाश्चैव विविधा विजातयः ॥
प्रदक्षिणं न यदा चाहुर्हि सिद्धिं सुपुष्कलाम् ।
कथयामास ते सर्वं सम्यक् पूर्णा भविष्यति ॥

सर्वमशोभना ह्येते उरगा श्वानादयो ।
मार्गे यदि दृश्यते स्थानगच्छेत् कुत्र वा क्वचित् ॥
सर्वे ते कथयन्त्येवं नास्ति सिद्धिनिवर्ततान् ।
गच्छतां स्वकमावासं स्वस्थो तिष्ठति स्वे गृहे ॥
न गच्छेत् तत्र मन्त्रज्ञो उरगैस्तु निवेदितम् ।
यदि गच्छेत् तदा कालं उद्वेगो मृत्यु वा भवेत् ॥
नानातिर्यगता प्राणा जलावासा स्थलेचरा ।
स्थावरा जङ्गमाश्चैव कथयन्ति शुभाशुभम् ॥
विपरीतैर्भयं विद्यात् स्वस्थैः स्वस्थतां गताः ।
केचित् तिर्यगता दिव्याः मानुषा भाषिणो तदा ॥
योऽयं निवेदये वाचां तं तथैव नियोजयेत् ।
स्वलिङ्गैः सदा स्वास्थ्यं क्रूरैश्चापि सुभैरवम् ॥
तत् तथैवावधारणार्थं बुद्धिं दद्याथ मन्त्रवित् ।
लिङ्गावनेकधां लक्ष्ये नानायोनिसमाश्रिताम् ॥
मानुषाणां तथा वाचा युक्ता मध्यार्थभाषिणो ।
मध्यदेशे तु या वाचा शब्दपदार्थावभाषिता ॥
स मानुषी वाचमित्याहुः ततोऽन्यं म्लेच्छवाचिनी ।
वाणी सर्वततो ज्ञेया मध्यदेशे निबोधिता ॥
मधुराक्षरसंयुक्ता हृद्या कर्णसुखावहा ।
अनेला मानसोद्भूता अविशिष्टार्थभाषिणी ॥
स ज्ञेया मानुषी वाचा रुतं चैव स्वभावतः ।
ततोऽन्ये सर्वतोऽनर्थां सा वाचा म्लेच्छवर्णिनी ॥
कथितं मानुषं वान्यं पशूनां तानदिहोच्यते ।
सिंहोऽपि देशमाक्रम्य गच्छेत् पुरवरं सदा ॥
भृशं तत्र हरेत् क्षिप्रं तरुं तस्य सुदारुणम् ।
रुयते पशुराजा वै करुणं दीन निवेदयेत् ॥

महद् भयं तदा विद्यात् सर्वदेशोपसंप्लवम् ।
महापुरे यदा रात्रौ पशुराजेति श्रूयते ॥
पश्चिमे महद् भयं विन्द्याद् दक्षिणे शान्तिकामनाम् ।
पूर्वेण तु भवेच्चक्र परराष्ट्रागमं विदुः ॥
उत्तरेण भवेद् घोरा अतिवृष्ट्याहु संप्लवम् ।
विदिक्षिष्वेव सर्वत्र भयं चैव निवेदयेत ॥
रावैर्द्विस्त्रिभिर्ज्ञेयं त्रिभिर्दिक्षु महद् भयम् ।
क्षेमदक्षिणतो सर्वे सिंहेनैव निवेदितम् ॥
चत्वारो मथ पञ्चा वा सप्त षष्ठ निरोधिना ।
अष्टात् परेणमित्याहुः निःफलं चैव नियोजयेत् ॥
दक्षिणावस्थिता श्रेया अथ ऊर्ध्वार्थसम्पदा ।
क्षेमं + कसामीप्ये देवायतनचत्वरे ॥
सदारावं तदा वर्ज्यं तस्माद् देशादपक्रमेत ।
यथा सिंहे तथा सर्वे सर्वप्राणिषु योजयेत् ॥
शरभैः शार्दूलाख्यैर्वै यथा तत् सर्वे निबोधताम् ।
अभावा मानुषावासं हिंसः शरभया सदा ॥
किन्तु प्रासादिकं ज्ञानं कथ्यते तां गुरोत्तमाम् ।
क्रोष्टुकेषु च सर्वत्र तां तथैव नियोजयेत् ॥
पूर्वपाश्चिमतो भागे यदा हस्ती रुदेद् भृशम् ।
तस्मान्महद् भयं विन्द्यात् तत्र देशेषु जन्तुनाम् ॥
श्मशाना वायसाश्चैव ऊर्ध्वतुण्डा रुदन्ति वै ।
तत्र विन्द्यान्महोद्वेगं वायसैश्च निवेदितम् ॥
प्रस्थितो मन्त्रिणे कालं यत्रदेशाभिकांक्षिणम् ।
गच्छतो वामतः काको भृशं रौति सुदारुणम् ॥
न गच्छेत् तत्र मेधावी वायसेन निवेदितम् ।
रौति दक्षिणतो श्रेयं अग्रतस्तु निवारयेत् ॥
न गच्छेत् तत्र मन्त्रज्ञो गच्छन् मृत्युवशो भवेत् ।
गोमयं भक्षयेत् पक्षी यदा रौति सुखोदयम् ॥

मृष्टान्नभांजनं विन्द्या गोलाभं चैव निर्दिशेत्
मन्दिरारूढानलयस्थो यदा रौति स वायसः ।
अर्धरात्रे तथा काले गृहभेदं समादिशेत् ।
धान्यपुञ्जधरारूढो यदा रौति स वायसः ॥
सुशुभं कूजते क्षिप्रं मधुरं चापि गायितम् ।
अचिरात् तं फलं विन्द्या बहुधान्यधनागमम् ॥
गृहद्वारं यदा पश्यं वायसो रवतो भृशम् ।
तत्र रात्रौ भवेत् तस्य शस्त्रसम्पात चौरिभिः ॥
क्षीरवृक्षे यदा श्रेष्ठो कण्टके कलहप्रियः ।
हस्तिस्कन्धसमारूढं अश्वपृष्ठे च शोभनम् ॥
भोगिनां मस्तके राज्यं पद्मपुष्पेषु सम्पदा ।
नानाविविधसम्पत्यो मधुराक्षरकूजिना ॥
सर्वतोल्लिङ्गमत्थानां तत् पूर्वं कथितं हितम् ।
+++कूजनं क्रूरं समं सर्वेषु योजयेत् ॥
शिवाय सर्वतो ज्ञेया दक्षिणेन फलप्रदा ।
तत् सर्वं सिंहतो ज्ञेयं शिवासु सर्वदा ॥
क्रूरा अशोभनारावा दीना मृत्युपरायणा ।
सर्वतो गुस्वनिष्पत्ति फलं सस्यसमुद्भवम् ॥
सर्वे शिवगणा प्रोक्ता शायम्प्राते च शोभना ।
एकारवेति यत्रैता दक्षिणां दिशमाश्रिता ॥
शिवा शिवतमा प्रोक्ता द्वितीया रावे तु कीर्त्यते ।
तृतीये रावे तथा ज्ञेया राज्ञे अर्थावहा भवेत् ॥
चतुर्थे तु महालाभं पञ्चमे पुत्रदा स्मृता ।
षष्ठे च धननिष्पत्तिः सप्तमे न भवे शुभा ॥
अष्टमं निःफलं विन्द्या तदूर्ध्वं भयपीडिता ।
एवं करोति शिवा तत्र असङ्ख्येया तेऽप्यनिष्टदा ॥
पश्चिमेन शिवा ज्ञेया परचक्रभयं तदा ।
द्वितीये दुर्भिक्षकान्तारे क्रूररावा यदा भवेत् ॥

तृतीये अर्थनाशं तु चतुर्थे प्राणरोधिनम् ।
पञ्चमे कथिते रात्रे अमात्यानां व्याधिपीडकाः ॥
षष्ठे चोरागमं विन्द्या सर्वतस्तु शिवा तु सा ।
सप्तमेन महाव्याधिं अष्टमे चापि निन्दिता ॥
तदूर्ध्वं भयभीतार्त्ता क्षुधिता वा प्रभाषते ।
उत्तरेण तु यो रावो शिवायाः श्रूयते सदा ॥
महाघोरतमं व्याधिं तत्र स्थाने विनिर्दिशेत् ।
द्वितीये क्रूररावे तु दुःखदा सा भवेत् तदा ॥
तृतीये अर्थनाशं तु चतुर्थे अग्निसम्भवम् ।
पञ्चमेन महावृष्टिं षष्ठे राजापरुद्ध्यते ॥
सप्तमेन महायुद्धं शस्त्रसम्पातमादिशेत् ।
अष्टमे निःफलं विन्द्या तदूर्ध्वं यः किञ्चि रोदिति ॥
पूर्वेण च यदा रौति शिवा यामे तु मन्तिमे ।
तदा राजागमं विन्द्या द्वितीयारावे तु प्रेषिणाम् ॥
तृतीयं राजतो मृत्युः बद्धो वा यदि श्रूयते ।
चतुर्थे चोरतो दुःखं पञ्चमे प्राणरोधिकम् ॥
षष्ठे च भवते व्याधिः सप्तमे अग्नितो भयम् ।
अष्टमे निःफलं विन्द्या शेषं पूर्वेनन सदा ॥
यदा दक्षिणपूर्वेण विदिशे व्याहरे शिवा ।
प्रथमेन भवेत् सौख्यं द्वितीये सर्वतो जनाम् ॥
तृतीये धननिःपत्तिश्चतुर्थे सस्यसम्पदा ।
पञ्चमे सुभिक्षानिर्दिष्टं षष्ठे क्षेमं समादिशे ॥
सप्तमे सर्वतो ज्ञेयमष्टमे निःफलं सदा ।
यदा दक्षिणभागेन पश्चिमामध्यतो सदा ॥
निर्दिशे च ध्रुवा ज्ञेया शिवा क्रूरतमा स्मृता ।
प्रथमेन भवेन्मृत्युः हन्यते ब्राह्मणा द्विके ॥

तृतीये क्षत्रियं हन्या चतुर्थे वैश्यमित्याहुः ।
पञ्चमे शूद्रयोनयः ॥

षष्ठे म्लेच्छिनां हन्ति सप्तमे तस्करा तदा ।
अष्टमे निःफलं विन्द्या अतिदुःखं क्रूररात्रिणाम् ॥

असङ्ख्येयानां तु दृश्यते ।
उत्तरापश्चिमाभागे यदा तीव्रं विरौति सा ॥

अतिक्षिप्रं महाव्याधिः राज्ञे वा व्याधिमादिशेत् ।
द्वितीयेन हन्यते हस्ती राज्ञो मुख्यो गजोत्तमम् ॥

तृतीयेन भवेन्मृत्युः मादिष्टः तत्र वै ।
चतुर्थेन भवेन्मृत्युः मुख्यानां च धनेश्वराम् ॥

पञ्चमे धननाशं तु षष्ठे व्याधि सम्भवेत् ।
सप्तमेन भवे दुःखं सर्वतो च भयावहम् ॥

अष्टमे निःफलं विन्द्या पूर्वं वै सर्वतो तदा ।
उत्तरे पूर्वयोर्मध्ये विदिक्षु चैव लक्षयेत् ॥

अतिक्रूरा यदा क्षिप्रं शिवा व्याहरते तदा ।
उत्तरे पूर्वतो मध्ये विदिक्षुश्चैव लक्षयेत् ॥

अतिक्रूरा यदा क्षिप्रं शिवा व्याहरते तदा ।
मृत्युना हन्यते जन्तुः पौरमुख्यो धनेश्वरः ॥

द्वितीयेन हनेन्मन्त्री तृतीये गजमादिशे ।
चतुर्थे विविधयोन्यास्तु म्लेच्छतस्करजीविनः ॥

चतुर्थेन भवेद् व्याधिः सर्वेषां च तदा जने ।
पञ्चमे हन्यते पुत्रो अमात्यो वा नृपतेर्ध्रुवम् ॥

षष्ठे मृत्युमादिष्टा महादेव्या तु नराधिपे ।
सप्तमेन हनेद् राष्ट्रं मुक्तं चापि विनिर्दिशेत् ॥

अष्टमे निःफलं विन्द्या पूर्ववत् कथिता सदा ।
अतः ऊर्ध्वं तथा रात्रौ शिवानां च भवे यदा ॥

अमानुषं तं विदुर्मर्त्या महोपद्रवकारकम् ।
अपक्रम्य ततो गच्छे मन्त्रैर्वा रक्षमादिशेत् ॥

महाप्रभावैर्विद्याभिर्जिनाब्जकुलयोजनैः ।
होमकर्माणि कुर्वीत शान्तिं तत्र समादिशेत् ॥

एवम्प्रकारा ह्यनेकानि बहुभाष्या पशुयोनयः ।
नानापक्षिगणांश्चापि रुतं चैव निबोधये ॥

बहुधा तिर्यगता केचिच्चापसुमूर्च्छिजा ।
केचिद् विकृतरूपास्तु रौद्रा सत्त्वनिहेठका ॥

केचित् प्राणापरोधिका सत्त्वां हिण्ड्यन्तेऽथ महीतले ।
अन्नपानरता केचिद् अन्याहि डन्ति मेदिनी ॥

केचिद् रुधिरगन्धेन भ्रमन्ते मेदिनीतलम् ।
विविधा मातरा ह्येते ग्रहमुख्यास्तु बालिशा ॥

कुमारकुमारिकारूपाः ग्रहाः प्रोक्ताः विविधा परा ।
भ्रमन्ते मेदिनीं कृत्स्नां क्षणमात्रेण सर्वतः ॥

सहस्रं योजनं केचिद् वायुवद् भ्रमतापराः ।
पशुवेषकृता केचिद् दृष्ट्वा नग्ना च जन्तुषु ॥

विविधं करोति सर्वे ते सर्वत्र वसुधातले ।
भूतपूतकसत्त्वेषु गुहा उपहते तथा ॥

गृह्णते मानुषां केचिद् बलिपाल्यार्थकारणात् ।
सर्वेषां मानुषां लोके क्रमन्ते केचिन्नभस्तलात् ॥

सर्वाकारविदो ज्ञेया बहुरूपा विचारिणः ।
शुभा अशुभराश्चात्र ज्ञेया लिङ्गैस्तु गर्वतः ॥

शुभाशुभफलं सर्वं निरुतं गुरुतं तथा ।
आगमैर्बहुविधैर्ज्ञेया लोकतत्त्वार्थनिर्दितैः ॥

ऋषिभिर्जिनसुतैश्चैव खड्गिभिर्जिननगैः सदा ।
श्रावकैर्महर्द्धिकैः सर्वं नानायोनिसमाश्रितम् ॥

॥॥

ग्रहैर्ग्रहवरैः ख्यातैः प्रकृष्टैर्लोकचिह्नितैः ।
ज्ञेयं शास्त्रतो तत्त्वं आगमाधिगमापि वा ॥

नानालिङ्गविधानेन गतियोनिविभागतः ।
ज्ञेयं शुभाशुभं सर्वं क्रूरैः सौम्यैश्च लिङ्गिभिः ॥

छत्रं सितं पताकं च मत्सं मांसं च सार्द्रगोः ।
उत्क्षिप्ता च मेदिनी पद्मयन्त्र गोमयं तदा ॥

दधि पुष्पं फलं चैव स्त्रियं वास्त्रभूषिताम् ।
शुक्लवस्त्रं तथा ज्ञेयं द्विजं श्रेयार्थभाषिणम् ॥

वृषं गजं तथा ज्ञेयं अश्वं चामरभूषितम् ।
प्रदीपं भाजने न्यस्तं पूर्णधान्यफलोदयम् ॥

देवद्विजप्रतिमां वा पूज्यमाना सदा नृपैः ।
अभिषेकार्त्थयुक्तं वा नृपबिम्बाथ मन्त्रिणाम् ॥

शङ्खस्वनं भेरींश्च पटहं चापि सुदुन्दुभिम् ।
घण्टाशब्दं महृष्टं च जयशब्दं प्रघोषितम् ॥

मानुष्योदीरितां वाचां जयसिद्धिफलप्रदम् ।
एता निमित्ता मावेद्य इष्टां चैव निवेदिताम् ॥

सर्वसम्पत्करं क्षेमं इष्टं चैव सुपूजितम् ।
सर्वा शास्त्रानुसारतर्थां रागतां मनसोत्तमाम् ॥

मन्त्रजापं ततो गच्छेत सिद्ध्यर्त्थी सिद्धिमादिशेत् ।
सर्वेषां सर्वसत्त्वानां प्रश्नितानां तु निर्दिशेत् ॥

योऽयं देवताध्यक्ष इष्टो गोत्रजो परो ।
आध्येष्टयो भवेन्नित्यं तं लिङ्गी पश्यतो फलम् ॥

त्रिविधाकारचिह्नास्तु देवाः प्रोक्तास्तु सर्वदा ।
तल्लिङ्गिना तथा प्रोक्ता त्रिविधा तेषाचिह्नयः ॥

यो यमिष्टतरं पश्येत् सो तस्यैव फलोदयम् ।
वाचां बहुविधां यत्रे यदा ते मानुषा भुवि ॥

कथयन्ति शुभां वाचां अन्योन्यालापमामृताः ।
परेषां च यदा वत्रे विश्वस्ताश्च गगन्ततः ॥

एवं च वाचिरे मृत्तुः शुभं श्रेयं जपं सदा ।
क्षेममारोग्यसर्वं वै स्वस्तिशान्तिसुखोदयः ॥

धनिनः देवतो मुख्य सुरो धर्मराजास्तथा ।
सर्वतो भास्करश्चैव छत्रध्वजपताकयोः ॥

बुद्धधर्मतदा सङ्घं मन्त्रं तारमितिः सदा ।
कुमारं काञ्चनं शुभ्रं अग्निस्कन्धं ञ्डोत्सवम् ॥

जिनं पद्म तथा वज्रं लोकेशं बोधिमुत्तमम् ।
बोधिसत्त्वा तथा लोकां ब्रह्मश्चैव सुरोत्तमाम् ॥

बहुप्रकारा ह्यनेकानि प्रशस्तां साधुवर्णिताम् ।
शुश्राव शब्दां यथा गन्ता सर्वासां प्राप्नुया हि सौ ॥

ततोऽन्ये लोकविद्विष्टं स शब्दं चापि निन्दितम् ।
प्रशस्ता शकुनयो ह्येता प्रस्थितानां जपे रताम् ॥

सर्वेषां च मयं योगो उद्योगार्थसम्पदाम् ।
ततोऽन्य निन्दितं सर्वं न लेभे कायितं फलम् ॥

प्रशस्तैव सर्वतो गच्छे अप्रशस्तैश्च न व्रजेत् ।
प्रणम्य सर्वतो बुद्धांस्त्रयं कृत्वा प्रदाक्षिणम् ॥

स्वमन्त्रं मन्त्रनाथं च मातापित्रौ थ दुःकराम् ।
पणम्य सर्वतो गच्छे शिनं तत्र विनिर्दिशेत् ॥

आचार्यगुरुमुख्यानामुपाध्यायं चैव यत्नतः ।
प्रशस्तधार्मकथिक प्रशस्तं चैव व्रते रतम् ॥

यथार्हं तदाभ्यर्च्य इष्टदेवमनेहितम् ।
स्नातभुक्तोऽथ विश्वस्तः प्रत्यूषे वा जितेन्द्रियः ॥

शौचाचाररतो मन्त्री गच्छेत् सर्वतो दिशाम् ।
यथाशाफलसंयोगं प्राप्नुयात् सर्वतो शुभाम् ॥

शान्तिस्वस्त्ययनं चैव आयुरारोग्यवर्द्धनम् ।
श्रीसम्पत् कथितामग्र्या यथेष्टं मनसेप्सितम् ॥

इति महायानवैपुल्यसूत्राद् बोधिसत्त्वपिटकावतंसका-
दार्यमञ्जुश्रीमूलकल्पाद् विंशतिमः सर्व-
भूतरुतज्ञाननिमित्तशकुननिर्देश-
परिवर्तपटलविसरः परि-
समाप्तमिति ॥

---

॥ श्रीः ॥

# आर्यमञ्जुश्रीमूलकल्पम् ।

(द्वितीयो भागः ।)

## अथ त्रयोविंशतितमः पटलविसरः ।

अथ खलु भगवां शाक्यमुनिः पुनरपि शुद्धावासभवनमवलोक्य मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । अस्ति मञ्जुश्रीः! त्वदीयकल्पविसरे शब्दगणनानिर्देशं नाम निवर्तनम् । शृणु साधु च सुष्ठु च मनसि कुरु । भाषिष्येऽहम् ॥

एवमुक्ते भगवां मञ्जुश्रीः कुमारभूतो उत्थायासनादेकांशमुत्तरासङ्गं कृत्वा, दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य, येन भगवांस्तेनाञ्जलिं प्रणम्य, त्रिः प्रदक्षिणीकृत्य, भगवतश्चरणयोर्निपत्योत्थायैवमाह — 'तत् साधु भगवां निर्दिशतु । शब्दज्ञानगणनानिर्देशं नाम धर्मपर्यायं श्रुत्वा सर्वमन्त्रचर्यानुप्रविष्टानां सत्त्वानां च सर्वशब्दगणनाज्ञानं तद् भविष्यति सर्वसत्त्वानां सर्वमन्त्रचर्यानुप्रविष्टानां च हितोदयं सुखावहं सर्वशब्दगणनाव्यतिक्रमज्ञानं तद् भगवां अर्थकामो हितैषी सर्वसत्त्वानामर्थं भाषयतु ॥

अथ भगवां शाक्यमुनिर्मञ्जुश्रियस्य कुमारभूतस्य साधुकारमदात् । साधु साधु मञ्जुश्रीः! यस्त्वं तथागतगेतमर्थं सत्त्वसत्त्वार्थसम्पदं प्रति प्रष्टितव्यं मन्यसे । तेन हि त्वा मञ्जुश्रीः! शृणु निर्देक्ष्यामि ॥

अथ खलु मञ्जुश्रीर्भगवता कृताभ्यनुज्ञातस्ततोत्थाय स्वे आसने निषण्णोऽभूद् धर्मश्रवणाय भगवन्तं व्यवलोकयमानो ॥

अथ भगवां शाक्यमुनिः सर्वावन्तं शुद्धावासभवनं बुद्धचक्षुणा मवलोक्य, सर्वशब्दगणनासमतिक्रमास्पन्दना नाम समाधिं समापद्यते स्म । समनन्तरसमापन्नस्य भगवतः नीलपीतावदातमाञ्जिष्ठस्फटिकवर्णादयो महारश्मिजालप्रभामण्डला निश्चेरुः । निश्चर्य च समन्तात् सर्वसत्त्वानां सर्वलोकधातुं महतावभासेनावभास्य, सर्वसत्त्व-

G. P. T. 2002. 500. 11-12-20. 

भवनानि च सर्वनरकतिर्यक्प्रेतायामलौकिकां असुरभवनां अवभासयित्वा, महादुःखवेदनां प्रतिगश्रुत्य, पुनरेव भगवतः शाक्यमुनेः कायान्तर्द्धीयन्ते स्म ॥

सर्वसत्त्वां सम्प्रबोध्य भगवानेवमाह—

अथ शब्दनिदं ज्ञानं वाच्यं धर्मार्थपूजितम् ।
गणनां चैव लोकज्ञो भाषिरे मधुरां गिराम् ॥

वाच्यात् पदतो ज्ञेयं पदं वाच्यसुभूषितम् ।
धातुस्तेनातिविस्तारं प्रत्ययान्तं क्रियोद्भवम् ॥

लिङ्गं शब्दत ज्ञेयं न लिङ्गं शब्दवर्जितम् ।
शब्दलिङ्गसमुद्देदा भीन धर्मार्थयोः ॥

नाना नेयं शब्द च ज्ञानं न शब्दं ज्ञानयोजितः ।
ज्ञानशब्दाच्च यो भावः स शब्दो तत्त्वार्थयोजनः ॥

प्रत्यया हेतुता ज्ञेया प्रत्ययो हेतुमुद्भवः ।
प्रत्यये तु तदा हेतो क्रियागोगविभाविनी ॥

धारणा वा तदो ह्युक्ता आश्रयो प्रत्ययो विदा ।
धातुप्रत्यययोगेन शब्दो धर्मार्थयोजकः ॥

न शब्दा अर्थतो ज्ञेयं न शब्दादर्थमिष्यते ।
अर्थप्रत्यययोगेन स शब्दो शब्दविधैर्विदाः ॥

बहुधा धातवो प्रोक्ता प्रत्ययाश्च तदाश्रया ।
यं प्रतीत्य तदा शब्दा विभज्युस्ते वराश्रया ॥

येन शब्दविदो विद्या मन्त्रा तत्त्वार्थभाषिना ।
न तां शब्दपदवगच्छेन्मन्त्राणां प्रत्ययैर्विना ॥

नोत्पद्यन्ते तथा मन्त्रा विना प्रत्ययमाश्रया ।
न तां दिदृक्षु सर्वत्र मन्त्रां प्रत्ययतो शिवाम् ॥

अर्थप्रत्ययतां शून्यां धातवैश्च विवर्जिताम् ।
न तां विद्धि संयोगं लिङ्गवाचयार्थसम्मतम् ॥

न लिङ्गे गति निर्दिष्टा हेतुप्रत्ययधातुजा ।
तथाश्रयोजिता सिद्धिर्लिङ्गो धर्मार्थयोजिता ॥

गतिदेशक्रियानिष्ठं पदं वाक्यमतःपरम् ।
चित्रत्वमतिवा शब्दे यो वाचमवसृजेत् सदा ॥

न शब्दादर्थनिष्पत्तिर्लिङ्गेष्वेव तु योजिता ।
मूर्द्धजं कथितं शब्दं हुङ्कारार्धभूषितम् ॥

सर्वं प्रत्ययदाश्रित्य आश्रयं च विनाश्रये ।
ताल्वोष्ठपुटौ वाक्य आश्रयोज्ञापनो परे ॥

शमिनादाश्रयते ज्ञेयं युक्तिरव्यभिचारिणी ।
मतिस्तत्त्व तथा वाणी निष्कारागर्भभूषिता ॥

धातुः करोति संयोगं प्रत्ययार्थास्तु लिङ्गिनः ।
दान्त्यं ताल्वश्चैव ओष्ठं शब्दमतःपरम् ॥

ऋजिह्वा सर्वेषां लोकानां विसर्गो धातुचेष्टिताम् ।
गतिमन्त्रप्रभावेन भाश्रयान्तां निबोधताम् ॥

गतिर्मेव सदा मन्त्रा धातुप्रत्ययजा मता ।
उभौ तौ शब्दनिष्पत्तिः प्रत्ययादाश्रयः स्मृतः ॥

विभज्य बहुधा मन्त्रां सद्वागर्निश्रयाम् ।
विभक्तियोजिता ज्ञेया शब्दा मन्त्राश्च सर्वतः ॥

ज्ञेया विभजत्यर्थे प्रजितास्तथा ।
एकाद्विकर्मसंयोगान त्रिकगजार्थमतमम् ।
अगङ्गादणाधिका ज्ञेया धातुणानां नियोजिता ॥

आधारं ज्ञेयमित्याहुर्भैत्रनवाप्रजनं ।
सप्तमे विधिनिर्दिष्टा मन्त्रालिङ्गेषु जापिनाम् ॥

सप्तपर्थार्थिनां ज्ञेया सप्तप्रकर कर्मा यथा ।
विविधं क्रमनिर्देशं समस्तार्थेषु योजयेत् ॥

मन्त्राणां षष्ठ्यो ख्याता सम्बुद्धावयवास्तथा ।
सम्बन्धाद्धि मन्त्राणां लिङ्गे द्वे नियोजिता ॥

विकारं बहुधास्तस्य षट्प्रकारं निगद्यते ।
स्त्रीषु सल्लिङ्गिनी षष्ठ्या अष्टमन्त्रेषु योजयेत् ॥
पञ्चप्रकारा ये मन्त्रा पञ्चमर्थार्थयन्नता ।
नपुंसकालिङ्गमन्त्रार्थो उक्तो धर्मार्थवर्जिता ॥
ये तत्र निसृता मन्त्रा अपादानार्थयोजिता ।
सर्वेप्राणहराः स्मृताः ।
मूर्धशब्दसमायोगान्निःसृता ओष्ठदन्तयोः ॥
जिह्वा निष्पीडिता येऽत्र शब्दप्राणापरोधिका ।
समप्रत्ययशान्ता ते शमिधातुसयोजिता ॥
प्रपन्नास्मकरान्तानां अस्त्ययनेत्र योजयेत् ।
पुष्ट्यार्था धातवो ये तु शब्दाः प्रत्ययार्थसुशोभिता ॥
तां विदुः पुष्टिकर्मेषु अपादानेषु योजिताः ।
विभज्य यं स्थानं येऽन्ये परिकीर्त्तिताः ॥
शब्दाक्षरविपुष्टा ते धातु विकसते स्फुटा ।
पुंस्कालिङ्गा तथा मन्त्रा महाप्रभावर्थयोजिता ॥
चतुर्थसंविभक्तिभ्यामक्षरं मात्रभूषितम् ।
पवर्गे कथितं ह्यग्र प्रवरं सर्वकार्मकम् ॥
रेफप्रत्ययसमोद्भूतं उकारान्वथ शोभनम् ।
मध्यचिह्नं विसर्गं च भकारं गतिभूषितम ॥
विदुः प्रवरं शब्दं सर्वकर्मार्थसाधनम् ।
नियतं नैष्ठिके धर्मे वोधिसत्त्वे नियोजिते ॥
अनुत्तरं शब्दमित्याहुः महाबोधिपथं पथम् ।
यं जपं मानुषो क्षिप्रं सर्वमन्त्रा प्रसाधयेत् ॥
पञ्चमार्थगतः प्रोक्तो अक्षरमेकचिह्नितम् ।
अन्तजं पवर्गमकारान्तं विदुः सदा ॥
द्वितीयं लोकमुख्यं तु शब्दमित्याहु मानवा ।
तं तु शब्दसमायोगा निःसर्गान्तविभूषितम् ॥

अन्ते या भवरो मन्त्रो उत्कृष्टो शब्दयोनिजो ।
बुद्धो लोकगुरुः श्रेष्ठः छत्रोष्णीपेति लक्ष्यते ॥

अन्ते तकारवर्गे तु कथिता लोकगुरो त्रिकम् ।
मन्त्रा सर्वतः श्रेष्ठे सशब्दो लोकपूजितो ॥

अकारान्तं विभक्त्यार्थं विसर्गान्तं विबोधितम् ।
मध्यलिं + सशब्दान्तं अन्तं शब्दविभूषितम् ॥

तं विदुः शब्दमुत्कृष्टं मन्त्रं देवपूजितम् ।
पञ्चमार्थे नियुक्ता ये मन्त्रे गणनोद्भवे ॥

विभक्तपञ्चमे ह्येते विभक्त्यार्थसुपञ्चमा ।
अनन्ता कथिता मन्त्रा अनन्ता जिनभाषिता ॥

मन्त्रा उष्णीषा जिनमूर्द्धजा ।
अनन्ता शब्दविदो ज्ञेया शब्दाः मन्त्रार्थसम्पदाः ।
चतुःषष्टिपरोपेता मन्त्रं शब्दयोजितम् ॥

स शब्दा सर्वतः श्रेष्ठो पवर्गे यः चतुरं पदम् ।
चतुर्मकारसंयोगाः अन्ते निःप्रयोजिता ॥

सशब्दा मन्त्रमुख्यास्तु छत्रसंज्ञार्थसाधका ।
चतुर्थगणना प्रोक्ता विभक्तिः शब्दयोनिजाः ॥

सम्प्रदानार्थमन्त्राणां द्विलिङ्गादाश्रयतां गताः ।
कथिता अग्जिनैः मन्त्रा पुष्ट्यमथार्थसम्पदा ॥

चतुर्थे कथिता मन्त्रा चतुःप्रकारा नियोजिता ।
चतुरक्षरशब्दानां मूर्धमूष्माथ तालवम् ॥

कथितं शब्दनिर्देशे तृतीये सम्प्रयोजयेत् ।
विकामार्थे स्फुटधातूनां प्रत्यये लिङ्गेऽथ योजयेत् ॥

प्रथमे अन्ते च यः शब्दो स शब्दो लोकपूजितो ।
वर्गे मन्त्रो प्रधानाख्यो सन्नियोजितो ॥

स शब्दो पुष्टिनां युक्तो शब्दहेतुसमुद्भवो ।
अन्तो त्रिकसमायोगो मध्यान्तोऽतिवर्णितो ॥

स शब्दो लोकमुख्योऽसौ मन्त्रो भर्थतो सदा ।
शान्त्योपेतं सदाकालं सगार्थे तं प्रयोजयेत ॥
उपसर्गे च तदा चैव धातुं तां निबोधताम् ।
मधुराक्षरसम्पन्नो उक्तं तां पुंसि योजिताम् ॥
स शब्दो लोकमग्रोऽसौ मन्त्रो मन्त्रमुच्यते ।
चतुर्थ्यां तमक्षरं वर्गे द्वितीयाया पेरिकीर्तितो ॥
स ज्ञेयो शान्तिकाम्यार्थं मन्त्रो बुद्धभाषितो ।
तृतीयो ओष्ठपुटोष्माणं मन्त्रसाधोन्तवर्जितम् ॥
पुल्लिङ्गे सदा युक्तो भूयानो नयोजितो ।
ऊर्ध्वचिह्नं तथो भ्रान्तं स मन्त्रो बुद्धभाषितो ॥
तृतीये विभक्तिमासृत्य योऽर्थो भूतिसशब्दयोः ।
आद्या वर्णतो ग्राह्यास्ता शान्तिका पौष्टिकादया ॥
द्वितीयं कर्मणि प्रोक्तं तृतीया करणे स्तथा ।
उभयो विभक्तयो ज्ञेयं सशब्दो मन्त्रराट् स्मृतः ॥
प्रथमं कर्मभित्याहुः कर्ता यः स्वतन्त्रयोः ।
जिनाब्जकुलिशे मन्त्रे मन्त्रनाथा हितास्तथा ॥
हिते विभक्त्यन्ता सर्वतो ज्ञेया प्रत्ययान्ताश्च धातुजा ॥
सलिङ्गमर्थतो ज्ञेयं वाक्यात् पदयोद्भवेत् ।
मन्त्राः कथितमुख्यास्तु त्रिगोः जिनजा सुराः ॥
जिनाब्जकुलयोर्मन्त्रा वज्रिणे लौकिकास्तथा ।
सर्थवतः धातुं परिगृह्णाति सङ्क्रमाम् ॥
उदात्तानुदात्ताश्चैव सूचिता ज्ञेयार्थसाधना ।
मन्त्रा लिङ्गगतान्ता च मध्यं कृत्वा तथोद्यताः ॥
अनादिनिधनं छन्दं तन्मन्त्रांश्च योजयेत् ।
निवान्ता फलमन्ताश्च रेफयुक्ताश्च विसर्गा ।
वाक्यार्थपदयोर्मध्ये यो लिङ्गच्छविच्छ्रुतम् ॥

तं लिङ्गं स्वरितोयोगेनं क्षिप्रं मन्त्रेण योजयेत ।
पूर्वानुपदयो कालाक्रमाशनिरुप मुख्यनं ॥
पदयोर्मध्यनिःस्वानिः योऽसौ स अक्षरान्तशुनः ।
तस्मात् तं परिज्ञेयार्थं सुरूपं रूपाणितम् ॥
फलार्थे निष्पदश्चेयं स मन्त्रो बुद्धभाषितः ।
अभावस्वभावतो काले स्वभावतश्च परिकीर्तिते ॥
तयोर्निजरयं शान्तं पदश्चार्थभूषितम् ।
वाक्यं परतो श्रेयं शान्तगर्भाक्षरं शुभम् ।
यं ज्ञेयो मन्त्रिभिर्मन्त्रा प्रशस्ता बुद्धभाषिता ।
इतिमेकाक्षरं ब्रह्मं ओं शब्दार्थभूषितम् ॥
ज्ञेया रूपिणः शुभ्रो प्रशस्तो मङ्गलावहो ।
कल्याणार्थकरो युक्तो प्रशस्तो मङ्गलान्वितो ॥
उक्तो लोकनाथैस्तु स मन्त्रो मुख्यतो स्मृतो ।
त्रिविधार्थाश्च शब्दमुख्याश्च मुख्यशब्दा परेस्तथा ॥
स शब्दो धर्मिणः श्रेयो क्रियाकालकर्पादिता ।
आदित्यवंशात ते मन्त्रा दीप्तिशब्दार्थभूषिताः ॥
ज्वलन्ते पावके मन्त्रा सौम्यासौम्याक्षरयोजिताः ।
सुरूपा सौम्यचित्ताश्च नक्षत्राभिधर्मिणो सदा ॥
चन्द्रेऽस्मिं उदिता मन्त्राः शब्दैश्चन्द्राक्षरोदितैः ।
शुचयो निर्मला प्रोक्ता अक्षरा पङ्कजा परा ॥
अमात्रसहविख्याता चारुवर्णा महर्द्धिका ।
मन्त्रा अग्रवरा प्रोक्ता उर्णायां जिनमूर्धभिः ॥
त्रिविधाकारयोगास्तु योगतुष्टिरिव स्थिता ।
प्रसन्ना शुचयो नित्यं प्रत्येकार्हथभाषिता ॥
प्रत्येकबुद्धयोर्मन्त्र प्रशस्तो शान्तिकर्मणे ।
स्वाहावसानयोर्मन्त्रा ओङ्कारगर्भपूजिताः ॥

एकाद्विकसंज्ञा यो स मन्त्रो सर्वकर्मसु ।
श्रेयसैव सदा योज्या मन्त्रेकाजिनमुद्भवाः ॥
नन्तः सहितो ज्ञेयः पूर्वदाशान्तमध्यमम् ।
वहुलिङ्गिनो मन्त्रा बहुमन्त्रार्थमक्षरा ॥
बहुधा धातवो ह्येते । । पान्ता निवोधिता ।
मन्त्रां तां तु वै सिद्धिः तवर्गे मादिमक्षरम् ॥
रेफान्तं आदितः ताडयेन्मन्त्राब्जसम्भवाः ।
तारय दुःखितां सत्त्वां करुणैषामवलोकिते ॥
मा त्वं तारमुख्या तु अनन्ता मन्त्रा हि वै तुरे ।
तवर्याच्छब्दयोर्मध्ये पवर्ग मामकी स्मृता ॥
पवर्गे देवं विख्याता कुलमातार्थसाधनी ।
सितचिह्ना प्रसिद्धार्थे देवी पण्डरवासिनी ॥
तारा तु कथितं पूर्वं रक्षोऽर्थ तां प्रयोजये ।
लकारबहुलो योधर्गच्छब्दान्तं ते त्रयोद्भवम् ॥
जिनाङ्गमसृजं शब्दं देवी लोचनमुच्यते ।
शब्दमर्थाक्षरं सिद्धिः सर्वमन्त्रेषु योजयेत् ॥
कुलमात्राप्रसिद्धेयं जिनवज्राब्जसर्वतः ।
सर्वमन्त्रेषु प्रयोक्तव्या पूर्वमादित शान्तये ॥
लोचना भुवि विख्याता मन्त्राग्रा तत्र साधनीं ।
यतः सर्वमिति ज्ञेयं आदिमन्त्रेषु योजयेत् ॥
प्रसिद्ध्यर्थं च मन्त्राणां आत्मरक्षार्थकारणम् ।
सप्रसिद्धा सर्वतो ज्ञेया देवीं तं जिनलोचनाम् ॥
अनेकाकाररूपास्तु मन्त्रा स शब्दते सदा ।
आदिमध्येषु वर्णेषु चतुपष्ट्याक्षरेषु च ॥
सर्वत्र सर्ववर्णेषु मन्त्रां तन्त्रांश्च योजयेत् ।
आदिमेषु च सर्वत्र तवर्गा तच्च वर्णयोः ॥

सर्वे शान्तिनः प्रोक्तानां त्रिधा प्रयोजयेत् ।
तकारात् प्रकृतिवर्णेषु लकारान्ता सर्वयोनिजा ॥
ते मध्य पौष्टिका वर्णा तदन्ये चाभिचारुकाः ।
ते पुनः त्रिविधा ज्ञेया क्रूरशान्तिकपौष्टिकाः ॥
तथा ते त्रिःप्रकारास्तु तथा ह्युक्ता त्रिधा त्रिधा ।
योगसमायामा अनन्ता ते पुनस्त्रिधा ॥
सौम्यां अक्षरां विद्धि शान्तये तं नियोजयेत् ।
वरदा ह्यक्षरा केचिन्मध्यमा पुष्टिहेतुका ॥
रौद्रां पापकरां ज्ञेयां हकारान्तामक्षरां परम् ।
एवमेतत् प्रयोगेण शब्देऽपि सुभ्रूपिनाम् ॥
अनन्तां ह्यक्षरां विद्धि अनन्ता मन्त्रदेवताः ।
एवमेतेन योगेन अनन्तां मन्त्रांश्च योजयेत् ॥
तं विदुर्मन्त्रराजानं पुंस्कं सर्वार्थसाधकम् ।
एकारसहितो यो वर्णः स शब्दो मन्त्रभणितः ॥
नपुंसकं तं विदुर्मन्त्रं मध्यकर्मेषु योजयेत् ।
इकारसहितो यो वर्णः स मन्त्रो विद्यते कीर्त्यते ॥
सा स्त्रीतरे मन्त्रेषु प्रसिद्धा क्षुद्रकर्मसु ।
ते त्रिधा पुनः सर्वेऽत्र नानाशब्दाभिभणिताः ॥
त्रिधां तां त्रिविधां सर्वां सर्वकर्मेषु योजयेत् ।
पुल्लिङ्गसंज्ञो यो वाक्यो पुरुषोऽर्थो सर्वतो मतः ॥
तं विदुः पुरुषमन्त्रं वै सर्वकर्मेषु योजयेत् ।
नपुंसकलिङ्गे यो मन्त्रः तां विद्धि नपुंसकम् ॥
कुर्यात् सर्वकर्मेषु सर्वसौख्यसुखोदयम् ।
स्त्रीलिङ्गसंज्ञो यो मन्त्रः तां विद्धि सदा स्त्रियम् ॥
सर्वकर्मकरा तेऽपि नित्यं रक्षेषु योजयेत् ।
अनन्तकर्मकरा मन्त्रा अनन्तार्थां शब्दयानयः ॥

विविधा शब्दमुख्यास्तु नानातन्त्रमन्त्रयुताम् ।
तथैवाचरेत् क्षिप्रं मन्त्रा सिद्ध्यन्त्ययत्नतः ॥

कथितं शब्दविज्ञानं सर्वमन्त्रार्थसाधनम् ।
+ + + + + गणनं कीर्त्यते बुधैः ॥

जापिनां हितकाम्यार्थे तां तु विद्धि दिवौकसाः ।
एतद्विक्रमसमायोगा + यावच्छतमुच्यते ॥

दशगुणं पञ्चकां विंशत् सहस्रं तं निबोधताम् ।
दशसाहस्रिको सङ्ख्य अयुतेति परिकीर्त्यते ॥

दशायुतास्तथा नित्यं प्रयुतं लक्षमुच्यते ।
लक्षसाहस्रिको कोटिः स्थानार्बुदं स्मृतम् ॥

दशार्बुदो निर्बुदो ज्ञेयः समुद्रं च ततः परे ।
दशोऽन्यत् सागरो ज्ञेयस्ता दशार्थे समुद्यतः ॥

अक्षोभ्यं परे विन्द्यान्निःक्षोभ्यं च ततः परे ।
देवराट् सर्वे विवाहं कीर्त्यते बुधैः ॥

अधिका दश तरे तस्य खड्गमित्याहु वाणिजाः ।
निखड्गं तद् विदुर्मन्त्री निखड्गं चापि खड्गिनम् ॥

ततः परेण शङ्खं वै सङ्ख्या तस्य परेण तु ।
सा मया गणिते ज्ञेया महामायनिपश्रिमा ॥

असङ्ख्या या विदुर्मर्त्या ततोऽन्ये देवयोनिजाम् ।
दशार्धगुणिता सर्वे सार्धा च दशयोजिनाः ॥

ततः परेण शक्यं वै अशक्यं चापि दुर्जयम् ।
अचिंतोपचितः स्थाने दृष्टिस्थानं विदुर्बुधाः ॥

ततो क्रष्टिनिक्रष्टिश्च अनन्तानन्तयोनिजा ।
ततः परेणं बुद्धानां ज्ञानं श्रावकखड्गिनाम् ॥

बुद्धपुत्र महात्मानो येऽपि तत्त्वविदो गुराः ।
अनन्ता गतयो ह्येषां गणनं स्थानमुत्तमम् ॥

अनन्तज्ञानिनां स्थानं नात्र भूतलवासिनाम् ।
कथितं गणिते स्थानं गणितज्ञैस्तु मन्त्रिभिः ॥

मन्त्रसिद्ध्यर्थयुक्तानां जपकाले नियोजनाम् ।
प्रमाणं गणिते ज्ञेयं मन्त्रजापार्थकारणा ॥

सङ्ख्याग्रहणप्रमाणं वा विधियुक्तोऽर्थजापिनाम् ।
असिद्धा प्रविशे विन्ध्यं सिद्धमन्त्रो व्रजे हितम् ॥
तथा हैमवतं शैलं सिद्धमन्त्रो व्रजेत् सदा ।
यथेष्टं गमनं तस्य सिद्धमन्त्रस्य देहिनः ॥

असिद्धो हिमालयं गच्छेद् यदि मन्त्री जापकारणात् ।
न सेहुः दुःसहं सैन्यं सर्वद्वन्द्वां च शीतलाम् ॥

स्वल्पप्राणा स्वल्पसर्वांगाच्च मूलसिद्धिः समोदिता ।
बहुपुष्पफलोपेतं विन्ध्यकुक्षिनितम्बयोः ॥

भेजे मन्त्रसुजप्तर्थं तस्मात् विन्ध्यं तु भूधरम् ।
पूर्वसेवेत्सदा विन्ध्यो निर्दिष्टो जपकारणात् ॥

तस्मात् सिद्धिं विजानीयाद् विन्ध्याद्रेर्गिरिगह्वरे ।
गङ्गादक्षिणतो भागे सर्वं विन्ध्ये प्रयोजयेत् ॥

उत्तरतो भागे हिमवन्तं विनिर्दिशेत् ।
तस्मात् साधयेन्मन्त्रां यथाष्टुनयादिनाम् ॥

सिद्धो हिमवतं गच्छे सिद्धो विन्ध्यनितम्बयोः ।
गिरिगह्वरकूलेषु गुहानगरमन्दिरे ॥

तटे सरित्पतेर्नित्यं सरिते कूलेषु वा ।
सर्वत्र साधयेन्मन्त्रां यथा तुष्टिकरं हितमिति ॥

महायानवैपुल्यसूत्रात् बोधिसत्त्वपिटकावतंसका-
दार्यमञ्जुश्रीमूलकल्पात् त्रयोविंशतितमः
शब्दज्ञानगणनानामनिर्देशपरिवर्त-
पटलविसरः परिसमाप्त इति ।

## अथ चतुर्विंशतितमः पटलविसरः ।

अथ भगवां शाक्यमुनिः सर्वनक्षत्रग्रहतारकज्योतिषां सर्वलोकधातुपर्यापन्नानां सर्वदिग्व्यवस्थितां सर्वगन्धर्द्धिकोत्कृष्टतरां ग्रहणामन्त्रयते स्म । शृण्वन्तु भवन्तः मार्षाः ! सर्वग्रहनक्षत्रप्रभावस्ववाक्यं प्रभावं निर्देशयितुं भवन्तः सर्वमन्त्रक्रियार्थां साधयन्तु भवन्तः । इह कल्पराजे मञ्जुघोषस्य शासने सिद्धिं परतश्चान्यां कल्पराजांसि औत्सुक्यमाना भवन्तु भवन्त इति ॥

अथ भगवां शाक्यमुनिः,
ग्रहाणां चरितं सर्वं सत्त्वार्थं वहेकार्थम् ।
सर्वजापिनां मन्त्रार्थं च प्रसाधितम् ॥
++++++++ वक्ष्ये सर्वं म सर्ववित् ।
अश्विन्या भरण्या कृत्तिका ॥
नक्षत्रा त्रिविधा ह्येते अङ्गारग्रहचिह्निता ।
मेषराशिप्रकथ्येते तेषु सिद्धिर्न जायते ॥
उत्तमा मध्यमाश्चैव कन्यसा सिद्धि दृश्यते ।
न गच्छेत् सर्वपत्थानां क्रूरग्रहनिवारितः ॥
रोहिणी मृगशिरश्चैव आर्द्रं नक्षत्रमुच्यते ।
पुनर्वसुपुष्यनक्षत्रौ अश्लेषश्च प्रकीर्तितः ॥
मघाफल्गुन्यौ उभौ चापि हस्तचित्रौ तथैव च ।
स्वात्यविशाखमनुराधज्येष्ठमूलस्तथैव च ॥
आषाढौ तौ शुभप्रशस्तौ जापिनां हितौ ।
श्रवणधनिष्ठनक्षत्रौ क्रूरकर्मणि ॥
शतभिषभद्रपदौ उभौ नक्षत्रौ सिद्धिहेतवः ।
रेवत्या जायते श्रीमांन युद्धशौण्डो विशारदः ॥
शेषा नक्षत्रमुख्यास्तु न जायन्ते युगाधमे ।
अभिजित् सुचरितश्चैव सिद्धिपुण्या प्रकीर्तिता ॥
तिष्य उपपदश्चैव कनिष्ठो निष्ठ एव तु ।
भूतः मत्यस्तथा लोक आलोकश्च प्रकीर्त्यते ॥

भोगदः शुभदश्चैव अनिरुद्धो रुद्ध एव तु ।
यशोदस्तेजराड् राजा लोकस्तथैव च ॥

नक्षत्रा बहुधा प्रोक्ता चतुःषष्टिगहग्रहाः ।
न एतेषां प्रभावोऽयमस्मिन् काले युगाधमे ॥

कथिता केवलं ज्ञाने कल्पराजे सुखोदये ।
स्वयम्भुप्रभावास्तु सत्त्वा वै तस्मिन् काले कृते युगे ॥

आकाशगामिनः सर्वे जरामृत्युविवर्जिता ।
अस्मिन् काले न नक्षत्रा नार्कचन्द्रा न तारका ॥

न देवता नासुरा लोके आदौ काले युगोत्तमे ।
न संज्ञा नापि गोत्रं वै न तिथिर्न च जातकम् ॥

नोपवासो न मन्त्रा वै न च कर्म शुभाशुभम् ।
स्वच्छन्दा विचरन्त्येते न भोज्यं नापि भोजनम् ॥

शुद्धा निरामया ह्येते सत्त्वा बहुधा समा ।
लोकभाजनसंज्ञा वै ग्रस्यायां प्रवर्तते ॥

ततस्ते पूर्वेण कर्मेण आकृष्टा यान्ति भूतलम् ।
भूमौ विमानदिव्यसंस्था ससुरासुरः ॥

सम्भवं ततो मध्यगे ।
मध्यमे तु युगे प्राप्ते मानुष्यं तनुमाश्रिताः ॥

आहारपानलुब्धानां सा प्रभा प्रणाशिता ।
गात्रे खक्खटत्वं वै शुभाशुभनिवेशितम् ॥

ततो दिवसमासा वै संवृता वै ग्रहज्योतिस्तथा ।
ततः प्रभृति यत् किञ्चित् ज्योतिषां ज्ञानमेव वा ॥

मया हि तत् कृतं सर्वं सत्त्वानामनुग्रहक्षमा ।
ऋषिभिर्नृपः पूर्व ज्ञातानि ब्रह्मणोऽथ धीमतः ॥

षडैश्वर्यं तनुमाश्रित्य विष्णुनोक्तं तथा पुनः ।
गारुडीं तनुमास्थाय यक्षराक्षसघातिनाम् ॥

पैशाचीं तनु एवं स्याज्जातो जातो नराम्यहम् ।
कुशला बोधिसत्त्वास्तु तासु तासु च जातिषु ॥

उपपत्तिवशान्नित्यं बोधिचर्यार्थकारणात् ।
बोधिसत्त्वः पुरासीदहमेव तदा युगे ॥

अज्ञानतमसा वृतो बालिशोऽहं पुरा ह्यसौ ।
यावन्ति केचिल्लोकेऽस्मिन विज्ञाना शिल्पचेष्टिता ॥

शास्त्रं नीतिपुराणां च वेदव्याकरणं तथा ।
छन्दं च ज्योतिषश्चैव गणितं कल्पसम्मतम् ॥

मिथ्याज्ञानं तथा ज्ञानं मिथ्याचारं तथैव च ।
सर्वशास्त्रं तथा लोके पुरा गीतं मया चिरा ॥

न च ज्ञानं मया लब्धं यथा शान्तो मुनी ह्ययम् ।
बोधिकारणमुत्स्यर्थं मोक्षहेतोस्तथैव च ॥

संसारचारके रुद्धो न च मुक्तोऽस्मि कर्मभिः ।
[illegible] ॥

सम्यक्ष लब्धो मे चिरकालाभिलाषितम् ।
प्राप्तोऽस्मि विधिना कर्मैः युक्तिमन्तोऽधुना स्वयम् ॥

प्राप्तः स्वायम्भुवं ज्ञानं जिनैः पूर्वदर्शितम् ।
न तं पश्यामि तं स्थानं बहिर्मार्गेण लभ्यते ॥

भ्रान्तः संसारकान्तारे बोधिकारणदुर्लभाम् ।
न च प्राप्तो मया ज्ञानं यादृशोऽयं स्वयम्भुवः ॥

अधुना प्राप्तोऽस्मि निर्वाणं कर्मयुक्ता शुभे रतः ।
केवलं तु मया ह्येतद् वक्ष्यते शास्त्रसङ्ग्रहः ॥

न च कर्मविनिर्मुक्तं लभ्यते सिद्धिहेतवः ।
दीर्घः संसारसूत्रोऽयं कर्मबद्धो निबन्धनः ॥

तस्यैतद् भूतिमाहात्म्यं पच्यते च शुभाशुभम् ।
केवलं सूच्यन्त्येते नक्षत्रग्रहज्योतिषाम् ॥

नान्येषां दृश्यते चिह्नगर्भांशा मनुजां तथा ।
अत एव ग्रहा युक्ता सानुग्रहा शुभाशुभा ॥

चत्वारो लोकपालास्तु आपो भूम्यनिलज्योतिषश्चयोनिभूताः
इह लोके च महाभूता भूतसङ्घकारणा ॥ [प्रकीर्त्तिताः ।

प्रचोदितास्तु मन्त्रे वै सत्त्वसङ्घकारणात् ।
तेषां कालनियमाच्च मन्त्रसिद्धिरजायते ॥

तेषु ज्ञातिषु तत्रे वै स्वर्गीता गुणागताः ।
प्रकृष्टो लोकमुख्यैस्तु अकाशाश्च सुरेश्वराः ॥

तेऽपि तस्मिन् तदा काले युगान्ते परिकल्पिता ।
मन्त्रा सिद्धिं प्रयत्नेन सिद्ध्यन्ते न युगाधमे ॥

अत एव हि जिनेन्द्रैस्तु कुमाररूपिकल्पितः ।
मञ्जुघोषो महाप्राज्ञः बालदारकरूपिणः ॥

भ्रमते सर्वलोकेऽस्मिन् सत्त्वानुग्रहतत्क्षमः ।
तस्मिन् काले तदा सिद्धिर्मञ्जुघोषस्य दृश्यते ॥

नक्षत्रं ज्योतिषज्ञानं तस्मिन् काले भविष्यति ।
सप्तविंशतिनक्षत्रा मुहूर्ताश्च प्रकीर्तिता ॥

राशयो द्वादशश्चैव तस्मिन् काले युगाधमे ।
ते ग्रहा संविभाज्यं वै नक्षत्राणां राशिमाश्रिता ॥

पृथुभूतानि सर्वाणि संश्रयन्ति पृथक् पृथक् ।
जातकं चरितं चैव सत्त्वा राशे प्रतिष्ठिता ॥

मोहजा विपरीतास्तु शुभाशुभफलोदया ।
अत एव कर्मवादिन्यो राशयस्ते मुहुर्मुहुः ॥

सत्त्वानां सिद्धियात्रं तु कल्पयन्ति शुभाशुभम् ।
जातकेषु तु नक्षत्रो रोहिण्यां परिकल्पितः ॥

श्रीमां क्षान्तिसम्पन्नः बहुपुत्रः चिरायुषः ।
अर्थभागी तथा नित्यं सेनापत्यं करोति सः ॥

वृषराशिर्भवेदेष वृषे च परिमर्दते ।
मृगशिरे चैव लोकज्ञः धार्मिकः प्रियदर्शनः ॥

कृत्तिकांशे तथा नित्यं राजा दृश्यति मेदिनीम् ।
त्रिसमुद्राधिपतिर्नित्यं व्यक्तजातकमाश्रुते ॥

प्रादेशिकेऽथ दुर्गे वा एकदेशे नृपो भवेत् ।
यदि जातकसम्पन्नः ग्रहे च गुरुचिह्निते ॥

समन्ताद् वसुधां कृत्स्नां अनुभोक्ता भविष्यति ।
दश वर्षाणि पञ्च वै तस्य तस्य राज्यं विधीयते ॥

अश्विन्या भरणी चैव कृत्तिकांशं विधीयते ।
एष राशिसमर्था वै वणिज्यार्थार्थसम्पदा ॥

यदि जातकसम्पन्नः ऐश्वर्यभोगसम्पदम् ।
जातकं अस्य नक्षत्रे रक्ते भास्करमण्डले ॥

अस्तं गते यथानित्यं विकृतिस्तस्य जायते ।
क्रूरः साहसिकश्चैवासत्यलापी च जायते ॥

तनुत्वचोऽथ रक्ताभो दृश्यतेऽसौ महीतले ।
अस्य जातिक्षणान्येषनिर्गेषं च प्रकीर्त्तितम् ॥

अत्रान्तरे च यो जातस्तस्यैते गुणविस्तराः ।
अच्छटापदमात्रं तु जातिरेषां प्रकीर्त्तिता ॥

अतो जातितो भ्रष्टा ग्रहाणां दृष्टिवर्जिता ।
जायन्ते विविधा सत्त्वा व्यतिमिश्रे प्रजातके ॥

व्यतिमिश्रा गतिनिष्पत्तिर्व्यतिमिश्रा भोगसम्पदा ।
अत एव न जायन्ते जातिकेष्वेव वर्णितैः ॥

जातका कथिता त्रिंशत् शुभाशुभफलोदया ।
क्रूरजातिर्भवेत् ह्येषां अङ्गारग्रहचिह्निता ॥

महोदरोऽथ स्निग्धाभो विशालाक्षः प्रियंवदः ।
जायते नित्यं धृतिमां बृहस्पतेग्रहमीक्षिते ॥

मघाः फल्गुनीश्चैव पांशपूर्वफल्गुनी ।
भास्करः स भवेत् क्षेत्रः सिंहो राशिर्विधीयते ॥

तत्र जाता महाशूरा मांसतत्परभोजना ।
गिरिदुर्ग समाश्रित्य राज्यैश्वर्यं करोति वै ॥

यदि जातकसम्पन्नः ह्येषा यथा नियताश्रिता ।
उद्यन्ते तथा भानौ जातक एषु कीर्त्यते ॥

उत्तरा फल्गुनी संज्ञा हस्तचित्रा तथैव च ।
नक्षत्रेषु च जातस्थो शूरश्चौरो भवेन्नरः ॥

असंयमी परदारेषु सेनापत्यं करोति सः ।
यदि जातकसम्पन्नः नियतं राज्यकारणम् ॥

कन्याराशिर्भवे ह्येषा यत्रैते तारका स्मृता ।
उभौ भवेदेषां स्वामी स्यादन्यो नात्र कश्चित् पुनः ॥

एतेषां तारका श्रेष्ठा ग्रहो रक्षति दारुणः ।
सौम्यो वा पुनर्भद्रश्च समुद्रः सदा पति ।

मध्याह्नापूरणाज्जातिः जातकं एषु दृश्यते ।
चित्रांशं स्वातिनश्चैव विशाखास्यार्द्धसाधिकम् ॥

तुलाराशिः प्रकृष्टार्थसोमश्चरति देहिनाम् ।
एतदारुणं क्षेत्रं शनिर्भार्गवनाल्पगम् ॥

जातकं ह्येषु जातस्थः प्रहरान्ते निशासु वै ।
एषु जाता भवेन्मर्त्या बहुपानरताः सदा ॥

अप्रगल्भा तथा दीशा महासम्मतपूजिता ।
कचिद् राज्यं कचिद् भोगां प्राप्नुवन्ति कचिद् ध्रुवम् ॥

अनियता जातके दृष्टा मात्रा बाल्यविवर्जिता ।
यदि जातकसम्पन्ना बहुपत्या सुखोदयाः ॥

अनुराध दृष्टनक्षत्रे प्रकृष्टः कर्मसाधनम् ।
मैत्रात्मको बहुमित्रः शूरः साहसिकः सदा ॥

ज्येष्ठा कथितं लोके जातः प्रचण्डो हि मानवः ।
बहुदुःखो सहिष्णुश्च क्रूरो जायति मानवः ॥

वृश्चिकां राशिमित्याहुः तीक्ष्णः साहसिकः सदा ।
एतेष्वेव सदा जाति जातकं न च दारुणम् ॥

मध्यन्दिने तथादित्ये यदि जन्तुः प्रजायते ।
तीव्रो विजितसङ्ग्रामः राजासौ भवते ध्रुवम् ॥

बालदारकरूपास्तु ग्रहांमीक्षति तत्क्षणम् ।
योऽसावङ्गारकः प्रोक्तः पृथिवीदेवताशुभः ॥

अत एव पृथिवीं भुङ्क्ते स्वयुनश्चैव पार्थिवा ।
ततोऽन्यो विपरीतास्तु जाति एव शुभाशुभा ॥

दीर्घायुषोऽथ तेजस्वी मनस्वी चैव जायते ।
जायतो ह्यनुराधायां महाप्राज्ञो मित्रवत्सलः ॥

एतदङ्गारकक्षेत्रं व्यतिमिश्रैः ग्रहैः सदा ।
मूलनक्षत्रसञ्जातः पूर्वाषाढास्तथैव च ॥

आषाढे उत्तरे अंशे धनूराशिः प्रकीर्तिता ।
एतद् बृहस्पतेः क्षेत्रं जातकं तस्य जायते ॥

अपराह्णे तथा सूर्ये शशिने वापि निशासु वै ।
तस्य जातकमित्याहुः यो जातो राज्यहेतवः ॥

स्वकुलं नाशयेन्मूले यत्र शोभनमुच्यते ।
मध्यजन्मस्थितो भोगान् प्राप्नुयान्न स न संशयः ॥

अतिक्रान्ते तु तारुण्ये यथा भास्करमण्डले ।
वार्द्धिक्ये भवते राजा महाभोगो महाधनः ॥

निम्नदेशे समासथ्यो नान्यदेशेषु कीर्त्यते ।
ततोऽन्ये विपरीतास्तु दृश्यन्ते विविधा जिना ॥

उत्तराषाढमेवं स्या श्रवश्चैव प्रकीर्त्यते ।
धनिष्ठः श्रेष्ठनक्षत्रः राशिरेषा मकरो भवेत् ॥

एतत् शनिश्चरक्षेत्रं तदन्यैर्वा ग्रहन्विह्नितम् ।
जातकर्मेषु नित्यस्था दृश्यते च महीतले ॥

निर्गते रजनीभागे प्रथमान्ते च मध्यगे ।
एषु जाता महाभोगा दृश्यते च समन्ततः ॥

नीचा नीचकुलास्तथा महीपाला भवन्ति ते ।
प्रचण्डा कृष्णवर्णाभाः श्यामवर्णा भवन्ति ते ॥

रक्तान्तलोचना मृदवः शूराः साहसिकाः सदा ।
जलाकीर्णं तथा देशे नृपतित्वं करोति वै ॥

दीर्घायुषो ह्यनपत्या बहुदुःखा सहिष्णवः ।
ततोऽन्ये विपरीतास्तु दरिद्र्व्याधितो जना ॥

धनिष्ठा शतभिषश्चैव पूर्वभद्रपदं तथा ।
अंशमेतद् भवेद् राशिः कुम्भसंज्ञेति उच्यते ॥

एतद् ग्रहमुख्येन क्षेत्रमध्युषितं सदा ।
व्यतिमिश्रस्तथा चन्द्रः शुक्रेणैव तु धीमता ॥

एषु जातिर्भवेद्वार्ता मन्त्रूपे च प्रदृश्यते ।
प्रकृष्टोऽयं जातको नित्यो लोके चोष्टितसुद्धितः ॥

कृषकर्मा भवेन्मूर्त्या बुद्धिमन्त्या उदाहृतः ।
विचित्रां भोगसम्पत्तिमनुभोक्ता महीतले ॥

तदन्ये विपरीतास्तु दरिद्रव्याधितो जना ।
भद्रपदश्चैव नक्षत्रः रेवती च भरणीनिता ॥

पूर्वभद्रपदे अंशे मीनराशिसकल्पिता ।
जातकर्मेषु-नित्यस्था दृश्यते च समन्ततः ॥

रात्र्या मध्यगे यामे दिवा वा सवितो स्थिते ।
अर्द्धयामगते भानौ मध्याह्ने ईषदुत्थितम् ॥
स्तोकगात्रविनिर्गतं ।
हस्तगात्रावशेषे तु एककालं तु जातकम् ।
शुद्धः शुक्रतरश्चैव शुक्लेनैव सुयोजितः ॥

शुक्रक्षेत्रमिति देवा तं विदुर्ब्रह्मचारिणः ।
पीतकैः शुक्रनिर्भागैर्ग्रहैश्चापि रश्मिभिः ॥

तत् क्षेत्रं श्रेयसो नित्यं धार्मिकं परमं शुभम् ।
एषु जाता भवेन्मर्त्या सर्वाङ्गाश्च सुशोभना ॥

राज्यकामा महावीर्या दृढसौहृदबान्धवा ।
दीर्घायुषो महाभोगा निम्नदेशे समाश्रिता ॥

प्राचिं दिश समाश्रित्य वृद्धिं यास्यन्ति ते सदा ।
न तेषां जङ्गले देशे वृद्धि जायति वा न वा ॥

न मत्स्या मूलचारिण्या दृश्यन्ते ह कथञ्चन ।
जलौघ चाभिवर्द्धन्ते ऋषीणामालयोऽम्भसि ॥

तेषु जाति प्रकीर्त्यंते राशिरेव प्रकीर्तिता ।
तेषु जाता हि मर्त्या वै निम्नदेशेऽतिवर्द्धका ॥

महीपाला महाभोगा प्राच्यावस्थिता सदा ।
ग्रहाः श्रेष्ठाभिवीक्ष्यन्ते बृहस्पत्याद्याः शनैश्चराः ॥

प्राच्याधिपत्यं तु कुर्वन्ति एषु जातं न संशयः ।
राशयो बहुधा प्रोक्ता नक्षत्राश्च अनेकधा ॥

त्रिविधा ग्रहमुख्यास्तु चिरकाले तु नाधुना ।
मानुषाणागतो ज्ञानं तिथयः पञ्चदशस्तथा ॥

त्रिंशतिश्चैव दिवसाणि अतो मासः प्रकीर्तितः ।
पक्षः पञ्चदशाहोरात्राः द्विपक्षो मास उच्यते ॥

ततो द्वादशमे मासे वर्षमेकं प्रकीर्तितम् ।
एतत् कालप्रमाणं तु युगान्ते परिकल्पितम् ॥

प्राप्ते कलियुगे काले एषा संज्ञा प्रकीर्तिता ।
मानुषाणां तथायुष्यं शतवर्षाणि कीर्तिताः ॥

तेषां संवत्सरे प्रोक्तो ऋतवः सम्प्रकीर्तिताः ।
आदिमन्ते तथा मध्ये त्रिविधा ते परिकीर्तिताः ॥

अन्तरा उच्चनीचं स्यादायुषं मानुषेष्विह ।
तेषा मनुष्यलोकेऽस्मिं उत्पाताश्च प्रकीर्तिताः ॥
मानुषाणां तथायुष्यं शतवर्षाणि कीर्तितम् ।
अमानुष्या जीवलोकेऽस्मिन विद्रवन्ति इतस्ततः ॥
वित्रस्ता तेऽपि भीता वै विचरन्ति इतस्ततः ।
देवासुरमुख्यानां यदा युद्धं प्रवर्तते ॥
तदा ते मनुष्यलोकेऽस्मिं कुर्वन्ते व्याधिसम्भवम् ।
केतुकम्पास्तथोल्काश्च अशनिर्वज्र एव तु ॥
धूम्रा दिशः समन्ताद् वै धूमकेतु प्रदृश्यते ।
शशिमण्डल भानो वै कबन्धाकारकीलका ॥
छिद्रं च दृश्यते भानौ चन्द्रे चैव महर्द्धिके ।
एवं हि विविधाकारा दृश्यन्ते बहुधा पुनः ॥
दुर्भिक्षं च अनायुष्यं राष्ट्रभङ्गं तथैव च ।
नृपतेर्मरणं चैव यतीनां च महद् भयम् ॥
लोकानां चैव सर्वेषां तत्र देशे भयानकम् ।
मघासु चलिता भूमिरश्विन्यां च पुनर्वसू ॥
मध्यदेशाश्च पीड्यन्ते चौराः साहसिकास्तदा ।
महाराज्यं विलुम्पते दक्षिणापथसंश्रृतैः ॥
भरणिः कृत्तिकाश्चैव रोहिण्या मृगशिरास्तथा ।
यदा कम्पो महाभयो लोको तत्र शङ्का प्रजायते ।
पश्चिमां दिशिमाश्रृत्य राजानो म्रियते तदा ।
येऽपि प्रत्यन्तवासिन्यो म्लेच्छतस्करजीविनः ॥
विन्ध्यपृष्ठे तथा कुक्षौ अनुलीनो जनेश्वरः ।
तेऽपि तस्मिं तदा काले पीड्यन्ते व्याधिमूर्छिताः ॥
अरीणां सम्भवस्तेषामन्योन्यातिशया जनाः ।
आर्द्रः पुष्यनक्षत्रः आश्लेषाश्चैव फल्गुनी ॥

उभावुत्तरपूर्विकौ ।
एतेषु चलिता भूमिनक्षत्रेषु नराधिपाम ॥
सर्वां च कुरुते व्यग्रां अन्यां आतपकम्पना ।
नश्वरव्यसपीडाश्च दुर्भिक्षश्च प्रजायते ॥
हस्तचित्र तथा स्वात्या अनुराधा जेष्ठ एव तु ।
एषु कम्पो यदा जातः भूरि सिंग लोकभाजने ॥
हिमवन्तगता म्लेच्छा तस्कराश्च समन्ततः ।
नेपालाधिपतेश्चैव खशद्रोणिसमाश्रिताः ॥
सर्वे नृपतयस्तत्र परस्परविरोधिनः ।
सङ्ग्रामशीलिनः सर्वे भवन्ते नात्र संशयः ॥
मूलनक्षत्रकम्पोऽयं आषाढौ तौ पूर्वमुत्तरौ ।
नक्षत्रेष्वेव दृश्यन्ते चलनं वसुधातले ॥
पूर्वे देशा मनुष्याश्च पौण्ड्रोद्राः कामरूपिणः ।
वङ्गालाधिपती राजा मृयते नात्र संशयः ॥
गौडानामधिपतिः श्रीमान् रुध्यते परराष्ट्रकैः ।
ग्लानो वा भवते सद्यं मृत्युर्वा जायते क्वचित् ॥
समुद्रान्तो तथा लोका गङ्गातीरे समाश्रिता ।
प्लाव्यन्ते उदके सर्व बहुव्याधिसमन्विता ॥
श्रवणे यदि धनिष्ठायां शतभिषा भद्रपदौ तथा ।
पूर्वमुत्तरमेव स्याद् रेवत्यां यदि जायते ॥
महाप्रकम्पो मध्याह्ने लोकभाजनसङ्कुलम् ।
प्रकम्पते वसुमती सर्वा पर्वताश्च सकानना ॥
सर्वे ते व्यस्तविन्यस्ता दृश्यते गगने सदा ।
उत्तरापथदेशाश्च पश्चाद्देशसमाश्रिता ॥
दक्षिणापथे सर्वत्र सर्वा दिशि समाश्रिता ।
नृपवरा भूमिभूयिष्ठा अन्योन्यापरुन्धिना ॥

महामार्यां च सत्त्वानां दुर्भिक्षगणपीडने ।
प्रत्यूषे च शिवा शान्तिर्देहिनां च प्रकम्पने ॥
ततोत्कृष्टवेलायां रौद्रकम्पः प्रजायते ।
ततोत्कृष्टतरश्चापि मागधानां वधात्मकाः ॥
अङ्गदेशाश्च पीड्यन्ते मागधो नृपतिस्तथा ।
ततो ह्यागि मध्याह्ने अपराह्ने दिवाकरे ॥
यदि कम्पः प्रवृत्तोऽयं कृत्स्ने चैव महीतले ।
सर्वप्रव्रजिता नित्यं प्राप्नुयाद् व्याधिसम्भवम् ॥
ज्वरारोगशूलैस्तु व्याधिभिः स्फोटकैः सदा ।
क्लिश्यन्ते मसराज्यं तु श्रेयस्तेषां ततः परे ॥
तमो ह्यास्तंगते भानोः क्ष्माकम्पो यदि जायते ।
चतुर्वर्णतरोत्कृष्टा ब्राह्मणाः सोमपायिनः ॥
क्लिश्यन्ते नश्यते चापि मन्त्री राज्ञो न संशयः ।
पुरोहितो धर्मिष्ठो अमात्यो वा राजसेवकः ॥
अन्यो वा व्रतिनो मुख्यो मन्त्रमन्त्रार्थकोविदः ।
ब्राह्मणः क्षत्रियो वापि वैश्य शूद्रस्तथैव च ॥
निपुणः पण्डितश्चापि शास्त्रतत्त्वार्थनीतिगाम् ।
हन्यते नश्यते चापि व्याधिना वा प्रपीड्यते ॥
स्मृतिमान श्रुतितत्त्वज्ञ इतिहासप्रचिन्तकः ।
हन्यते व्याधिना क्षिप्रं वज्रेणेव स पादपः ॥
ततोऽस्तं गते भानौ ततोत्कृष्टतराथ पृच्छते ।
अपराह्ने युगान्ते च यदि कम्पः प्रजायते ॥
व्यतिमिश्रास्तथा सत्त्वास्तिर्यग्योनिसमाश्रिता ।
मानुषा लोकमुख्यास्तु तस्मिन कम्पेऽधिरीश्वराः ॥
ततो रात्रेः प्रथमे यामे यदि कम्पः प्रजायते ।
महावृष्टिः प्रदृश्येत शिलापातनसम्भवा ॥

ततो ह्यासि यामे वै चलिते वसुमती यदा ।
तस्य चिह्नं तदा दृष्ट्वा नानवर्षं महद् भवेत् ॥

ततो ह्यासि यामान्ते दृश्यते वर्षं दारुणम् ।
परचक्रागमनं विन्द्या पाश्चात्यं तु नराधिपम् ॥

ततो द्वितीयो यदा कम्पः प्रजायते ।
मृत्युव्याधिपरचक्रकुक्षिरोगं च दारुणम् ॥

पित्तश्लेष्मगता व्याधिं स कोपयति जन्तुनाम् ।
संवेजयति भूतानि देशाद् देशागमं तथा ॥

ततो द्वितीयमध्ये तु यामे कम्पः प्रजायते ।
महावातं ततो विन्द्याद् वृक्षदेवकुलां भिदे ॥

अट्टप्राकारशृङ्गाश्च पर्वतानां न संशयः ।
विहारवसथान् रम्यान् मन्दिरांश्च मनोरणाम् ॥

पातयत्याशु भूतानां आवासां तिर्यग्गतां तथा ।
अर्द्धरात्रकाले तु यो कम्प प्रजायते ॥

हन्यन्ते नृपवरा मुख्याः प्राच्यानामधिपतिस्तदा ।
मृतो वा नश्यते तस्य दुर्भिक्षं वा समादिशेत् ॥

ततो ह्यासिमध्ये तु अन्ते यामे प्रजायते ।
कम्पो महीतले कृत्स्नः शान्तिमारोग्यं निर्दिशेत् ॥

ततोऽन्तेऽर्द्धरात्रे तु यदा कम्पः प्रजायते ।
अनूपा मध्यदेशाश्च नृपतो व्याधिर्पीडिताः ॥

म्रियन्ते दारुणैः दुःखैः परस्परविरोधिनः ।
तृतीये मास सम्प्राप्ते वालिशानां सुखोदयम् ॥

मशदंशपतङ्गाश्च सर्वे नश्यन्ति तस्कराः ।
आयुरारोग्यसौभिक्षं कुर्यात् प्रत्यूपकम्पने ॥

अग्निदाहं विजानीयान्नगराणां तु सर्वतः ।
उदयन्तं यदादित्ये भूमिकम्प प्रजायते ॥

मध्यदेशेऽथ सर्वत्र तस्करैश्च उपद्रुतः ।
दृश्यते नृपतेर्मृत्युः सप्ताहात्परतस्तदा ॥

यस्मिं स्थाने यदा कम्पो दृश्यते मनुजो कदा ।
तस्मिं स्थाने तदा दृष्टः शुभाशुभविचेष्टितम् ॥

उल्कनिर्घातभूकम्पं एककाले समादिशेत् ।
ज्वलनं सितमुल्कायाः यद्रूक नाशयेंत्तु तम् ॥

सितवर्णास्तथा नित्यं प्रशस्तः शुभदस्तदा ।
रक्तवर्णो महाघोरः अग्निदाहोऽपदिश्यते ॥

धूम्रवर्णोऽथ कृष्णो वा राज्ञो मृत्यु समादिशेत् ।
पीतवर्णाथ कपिला वा व्यतिमिश्रा वाथ वर्णतः ॥

व्यतिमिश्रं तदा कम्पं उत्पातं चैव निर्दिशेत् ।
निर्घातश्चैव कीर्त्यते यस्यां दिशि तस्यामादिशेत् ॥

यदि मध्यं तदा मध्ये देशेष्वेव प्रकीर्तितम् ।
सस्वरो मधुरश्चैव क्षेममारोग्यमादिशेत् ॥

क्रूरघोरतरो लोके शुभदो दुन्दुभिस्वनः ।
भीषणो ह्यतिभीमश्च दुर्भिक्षं तत्र निर्दिशेत ॥

एवमाद्याः प्रयोगास्तु ग्रहाणां वै तदा सदा ।
सिद्धिकर्म तदा कुर्यान्नक्षत्रेष्वेषु शोभने ॥

अश्विनी भरणी चैव पुष्या भद्रपदा उभे ।
रेवत्या चानुराधश्च जापकाले प्रशस्यते ॥

सिद्ध्यन्ते एषु मन्त्रा वै सिद्धमर्थं ददन्ति ते ।
मण्डलं चैव आलेख्यमेतेष्वेव तारकैः ॥

वारग्रहमुख्यानां पीतशुक्लावभासिनाम् ।
तिथयः शोभने ह्येते पूर्णमी पञ्चदशी तथा ॥

प्रवासं नैव कुर्वीत मण्डलं तु समालिखेत् ।
प्रथमा तृतीयापञ्चम्या दशमी चैव सप्तमी ॥

त्रयोदश्यां तथा यात्रा कल्पयन्तु नराधिपाः ।
शुभदः सर्वजन्तूनां यात्रागानं प्रशस्यते ॥
न लिखेत् सर्वमन्त्राणां मण्डलं मन्त्रमन्त्रयोः ।
न सिद्ध्यन्ते एषु मन्त्रा वै विघ्नहेतुमुदाहृता ॥
यात्रां होमतः सिद्धिः तिथिः श्लिष्टैः ग्रहोत्तमैः ।
बृहस्पतिः शुक्रचन्द्रश्च बुधः श्रेष्ठः सर्वकर्मसु ॥
एते ग्रहा वरा नित्यं चत्वारस्तिथिमिश्रिता ।
सिद्धियात्रां तथा लोके कुर्वन्तेऽत्र महीतले ॥
दुष्टारिष्टविनिर्मुक्ता छेदभङ्गायतस्वरम् ।
एतेष्वेव विनिर्मुक्ता दिवसांश्चैव प्रकल्पयेत् ॥
द्वादशैव मुहूर्त्तानि तस्मिन् काले प्रयोजयेत् ।
श्वेतो मैत्र एवं स्यात रक्ताक्षाः प्रकीर्तिताः ॥
रौद्रो महेन्द्रः शुद्धश्च अभिजिश्चैव सुशोभनः ।
श्रमणो श्रामणश्चैव कीर्त्तिते च शुभप्रदः ॥
सौम्योऽथ वरदश्चैव कीर्तिते च शुभप्रदः ।
सोमोऽपि वरदश्चैव इत्येते द्वादश क्षणाः ॥
बहुधा लक्षणा प्रोक्ता ग्रहनीनां तं शन्संज्ञका ।
दशम्या दृष्टिरेवं स्यात् चतुर्दश्या रात्रावेव च ॥
अष्टमी द्वादशी चैव . . . . . . वर्जिताः ।
स्वराद्या गणिते युक्तो अमिते पक्षे तु रात्रिनः ॥
विघ्नकारणमेषां तु विनायकोऽह चतुर्थितः ।
एतद्गणनयोर्युक्तं कालेनैव प्रकीर्तितम् ॥
एषोन्मेषनिमेषश्च अक्षरा स्वरिता गतिः ।
एतत्कालप्रमाणं तु विस्तरं लक्ष्यते पुनः ॥
अष्टाशतसङ्ख्यातं नाडिकाश्च प्रकीर्तिता ।
चतुर्नाडिकयो धटीत्युक्ता चतुर्धटिका प्रहरः स्मृतः ॥

चतुःप्रहरो दिवसस्तु रात्र्यः एभिः प्रकीर्तिताः ।
एभिरष्टैस्तथायुक्तः अहोरात्रं प्रकल्पितम् ॥
दशोन्मेषनिमेषं तु क्षणमात्रं प्रकल्पितम् ।
दशतालप्रमाणं तु क्षणमात्रं तु लक्ष्यते ॥
दश क्षणा निमित्याहुर्मुहूर्त्तं प्रतिकल्पितम् ।
चतुर्मुहूर्त्तः प्रहरस्तु मन्त्रज्ञैः परिकल्पितः ॥
एतत्कालप्रमाणं तु त्रिसन्ध्ये परिकल्पयेत् ।
होमकाले तथा जापे सिद्धिकाले तु योजयेत् ॥
स्वप्नकाले तथा जाग्रं स्नानपानेऽहनिः सदा ।
अहोरात्रं तु दिवसं वै संज्ञा एषा प्रकीर्त्तिता ॥
दिवसानि पञ्चदशश्चैव पक्षमेकं प्रकीर्त्तितम् ।
द्विपक्षं मासमित्याहुर्गणितज्ञा विशारदा ॥
षड्भिर्मासैस्तथा चन्द्रः राहुणा ग्रस्यते पुनः ।
ततो द्वादशमे मासे वर्षशब्दः प्रकीर्तितः ॥
ततो द्वादश वर्षाणि महावर्षं तदुच्यते ।
विपरीता ग्रहनक्षत्रा दानवेन्द्राश्च प्रकीर्त्तिता ॥
ततो द्वादशमे अब्दे कुर्वन्तीह शुभाशुभम् ।
एकपक्षे यदा राहुरसुरेन्द्रः प्रदृश्यते ॥
समस्तं व्यस्तविन्यस्तं शशिभास्करमण्डलौ ।
महान्तं शस्त्रसम्पातं दृश्यते वसुधातले ॥
एवमाद्यां सदा नित्यं कालेकाले प्रयोजयेत् ।
अनेके बहुधा चैव विघ्ना दृश्यन्ति दारुणाः ॥
प्राप्ते काले युगान्ते वै अधार्मिष्ठे लोकभाजने ।
समस्तं चन्द्रगसं ग्रस्तं मूलनक्षत्रमाश्रितम् ॥
रात्रौ सङ्ग्रहश्चैव अस्तमेति स चन्द्रमा ।
दिवा वा यदि । भानोरस्तमेति स पीडितः ॥

रविणे चन्द्रमसश्चैव अर्द्धरात्रे तु सग्रहे।
अस्तमन्ति यदा भीता दानवेन्द्रस्य च्छायया॥

दृश्यते पूर्वदेशस्थो राजा दुष्टो न संशयः।
स्वकं वा मृत्युभयं तस्य परेर्वा स निलुप्यते॥

म्लेच्छानामधिपतिश्चैव पूर्वदेशं विलुप्यते।
उद्रा जनपदा सर्वे उद्राणामधिपतिस्तथा॥

अश्विन्या यदि दृश्येरं रोहिण्यां भरणीस्तथा।
कृत्तिकासो यदा दृश्यौ ग्रहौ चन्द्रदिवाकरौ॥

त्रिविधाः श्लेष्मिका रोगा पैत्तिका वातमुद्भवा।
व्यतिमिश्रास्तथा चान्ये जायन्ते सर्वदेहिनाम्॥

विविधा रोगमुत्थाना दृश्यते सर्वबालिशाम्।
मघासु यदि फल्गुन्यों उत्तरा पूर्वगेर्व तौ॥

हस्तचित्ते ह ॥ स्वात्यां विशाखासु तथैव च।
एषु चन्द्रो यदा गृह्ये भास्करो वा न संशयः॥

राहुणा ग्रस्यते पूर्वं शशिभास्करमेव तौ।
प्राच्यो + + + + + + देशाधिपतिस्तथा॥

वङ्गाङ्गमागधो राजा अक्षिशूलेन गृह्यते।
पुत्रो वा मृयते तेषां मृत्युर्वा पतितो भयम्॥

भर्तीणां दुष्टचित्तानां गह्वानां वा भवेत् तदा।
मृगशिरार्द्रपुनर्वस्वा पुष्याश्लेषो तथैव च॥

एषु दृश्यति राहुर्वै सूर्यशशिन तथा।
मागधो नृपतिः पीड्यते मागधा जनपदा तदा॥

अमात्या व्याधिभयं विन्द्याद्दु वन्धक्लेशां सपौरजाम्।
अनुराधाज्येष्ठयोः सर्वे दृश्येरं दानवेश्वरः॥

सर्वान् जनपदान् व्याधिं जनयेत् सर्वगतं तदा।
वधबन्धनाभिक्लेशां नागानां गिरिवासिनस्तथा॥

धनिष्ठायां ततस्तेषु जनमुख्येषु नर्दने ।
पूर्वाषाढे श्रवणे च उत्तराषाढे नक्षत्र च ॥
भानोर्मण्डलं ग्रस्तोऽसौ शशिने रक्तमानना ।
ग्रहस्यागमं नित्यं दुर्भिक्षं चोपजायते ॥
श्रवणधनिष्ठनक्षत्रपूर्वभद्रपदम् ।
शतभिषेषु यदा चन्द्र भानो वा यदि गृह्यते ॥
कृष्णमात्रं समाश्रित्य ग्रहस्यागमनं विदुः ।
महान्तशोकमायासं दुर्भिक्षं च समन्ततः ॥
सर्वा जनपदा विन्द्या राजचौरमहद् भयम् ।
रेवत्यामथ नक्षत्रे उत्तराभद्रपदा यदा ॥
राहुणा ग्रस्यते पूर्वं शशिनौ भास्करमण्डलौ ।
पश्चाद् भानोऽथ विन्यस्तः पक्षेनेकेन दृश्यते ॥
राज्याद् भ्रश्यते सर्वः मागधो नृपतिः पतिः ।
एते च कथिता चिह्ना राहोरागमनं यदा ॥
दिशासु यासु गृह्णाति शशिनो भास्करमण्डलम् ।
तेषु तेषु तदा देशे उत्पद्यन्ते शुभाशुभम् ॥
य एव भूतले कम्पा कथिता लोकचिह्निता ।
ग्रहोपरागे तं विन्द्यात् तत्र तत्र शुभाशुभम् ॥
धूमिका वृष्टिहेतुः स्याद् दिवमात्येऽथ पञ्च वै ।
ततोऽर्द्धं लोकतः चिन्ता तीरभुक्तिसमाश्रिता ॥
नश्यन्ते जनपदाः सर्वा व्याधिसम्भवमाकुलया ।
नृपतिश्चापि नश्येत गङ्गातीरं उत्तरे ॥
हिमवन्तस्तथा कुक्षौ दुर्भगज्वरमाश्रिता ।
भूपाला चापि विन्यस्ता कोह्नु पालाः समन्ततः ॥
गङ्गाया उत्तरे तीरे तीरभुक्तिपतिस्तदा ।
विविधैः शोकसन्तापैः मृयतेऽसौ नराधिपः ॥

सपुत्रभार्यया सार्द्धं नश्यतेऽसौ नराधिपः ।
नक्षत्रेषु येषु कम्पो वै तेषु भूपं समादिशेत् ॥
दिशः सर्वासु धूमाश्च घोरा वर्देल्वर्जिता ।
पश्चाहा समतिक्रान्ता वक्रुदेनागिके गता ॥
नश्येत् परस्परा मर्त्या गोचरा मानुषालया ।
न दृष्टिस्तत्र प्रवर्तन्ते मानुषाणां परस्परम् ॥
विन्द्यान्महद्भु भयं तत्र मरणं नृपतिं हनेत् ।
येषु एवं भवेत् कम्पः उल्कापात समन्ततः ॥
पर्येषां चापि विन्यस्तं द्वित्रिश्चैव दारुणः ।
रात्रौ इन्द्रधनुश्चैव श्वेतपक्षं यदि वायसम् ॥
शुक्लवर्णोऽथ कृष्णो वै कृष्णो शुक्लोऽथ दृश्यते ।
विपरीता पक्षिणो वर्णा विपरीता ऋतुनिस्वना ॥
विपरीताः पक्षिणः सन्ति यत्र तत्र महद् भयम् ।
द्विपदाश्चतुष्पदाश्चैव सर्वे बहुपदापदा ॥
पक्षिणाः तिर्यक् प्राणा विपरीतास्तु महाभयम् ।
ऊर्ध्वतुण्डा तथा श्वाना रुवन्ते च मुहुर्मुहुः ॥
दिवा वा यदि वा रात्रौ यत्र तत्र महाभयम् ।
एवम्प्रकारा अनेकाश्च बहुधा यत्र प्रकल्पिता ॥
अनावृष्टिर्भवेत् तत्र राज्ञाश्चक्रं विनश्यति ।
यथा हि जातकर्माख्यातं प्राणिनां च शुभाशुभम् ॥
तथोत्पाता नाना जाता कुर्वन्तीह शुभाशुभम् ।
नान्यथा दृश्यते किञ्चिन्निमित्तं पूर्वहेतुना ॥
नाहेतुकं प्रवर्तन्ते निम्ना उत्पातसम्भवा इति ॥

आर्यमञ्जुश्रियमूलकल्पाद् बोधिसत्त्वपिटकावतंसका-
न्महायानवैपुल्यसूत्राद्द्वाविंशतितम निमित्त-
ज्ञानज्योतिषपटलविसरः
परिसमाप्त इति ॥

---

# अथ पञ्चविंशतितमः पटलविसरः ।

अथ भगवाञ्छाक्यमुनिः पुनरपि ग्रहनक्षत्रतारकज्योतिषगणानामन्त्रयते स्म । + + + + शृण्वन्तु भवन्तः सर्वे । अनतिक्रमणीयोऽयं कल्पराजा मञ्जुश्रियः कुमारभूतस्य मन्त्रतन्त्राभिषेकमण्डलविधान नित्य जपहोमनियमनिद्यागाधनप्रवृत्तानामस्मिं कल्पवरे विद्याधराणां तिथिनक्षत्रचारितगणितामभिज्ञानां नक्षत्र भवद्भिः विघ्नं कर्तव्यम् । प्रवृत्तानां शासनेऽस्मिन सर्वैश्च देवसङ्घैः तत्र रक्षा कार्या । सर्वे च दुष्टसत्त्वानि निषेद्धव्यानि, रोद्धव्यानि, शासयितव्यानि, सर्वे सर्वे न घातयितव्यानि. व्यवस्थासु च स्थापयितव्यानि शासनेऽस्मिन दशबलानाम् ॥

अथ भगवां शाक्यमुनिः सर्वतथागतोष्णीषाभ्युन्नतं नाम समाधिं समापद्यते स्म सर्वदुष्टनिवारणार्थं सर्वसत्त्वानाम् । समनन्तरसमापन्नस्य भगवतः शाक्यमुनेः सर्वे च ते तथागताः दशदिग्लोकधातुव्यवस्थिता भगवन्तं शाक्यमुनिं तथागतं शुद्धावासभवनस्थं व्यलोक्योपसङ्क्रमन्ते । उपसङ्क्रम्य अचिन्त्यबुद्धस्वकाधिष्ठानेन भगवन्तं शाक्यमुनिं तथागतमामन्त्रयते स्म ॥

भाष भाष भो महावीर ! लोकानां च हितोदयम् ।
प्रवृत्ते सर्वमन्त्राणां समन्त्रतन्त्र यथाविधि ॥

भाषितः सर्वबुद्धैस्तु विद्याराजा महर्द्धिकः ।
एकाक्षरः प्रवरो ह्यग्रो नष्टे काले कलौ युगे ॥

प्रवरः सर्वमन्त्राणां सर्वबुद्धैस्तु भाषितम् ।
उष्णीषराजा महावीर्यः सर्वभूतनिवारणम् ॥

निषेद्धा ग्रहनक्षत्रां मातरां दुष्टचेतसाम् ।
विघ्नाः सर्वे तथा लोके ये चान्ये दुष्टचेतसा ॥

अनुग्रहार्थं तु सत्त्वानां जापिनां च सुखोदयाम् ।
सकलेऽस्मिन शासने ह्यग्रः चक्रवर्तिमहर्द्धिकः ॥

उष्णीषराजा महावीर्यः सर्वस्मिं परमेश्वरः ।
भाष त्वं कालमेतस्य यस्येदानीं तथागत ! ॥

एवमुक्तास्तु ते बुद्धास्तूष्णीम्भावा व्यवस्थिता ।

अथ तेषां बुद्धानां सन्निपाता सर्वे त्रिसाहस्रमहासाहस्रो लोकधातवः सर्वसत्त्वानां च लोकभाजनानि एकज्वालीभूतानि, न च एकसत्त्वानां पीडा अभूत्। बुद्धाधिष्ठानेन महान्तश्चावभासाः सन्दृश्यन्ते स्म ॥

अथ भगवां शाक्यमुनिः सर्वं तं शुद्धावासभवनमवलोक्य, तांश्च बोधिसत्त्वान्महासत्त्वान् तत्रस्थितानि च देवपुत्रां सर्वश्रावकप्रत्येकबुद्धांश्च भगवतः महापर्षत्सन्निपातानामन्त्रयते स्म ॥

समन्वाहरन्तु बुद्धा ! भगवन्तः ! सर्वप्रत्येकबुद्धार्यश्रावकाः कल्पमेकाक्षरस्य विद्याचक्रवर्तिनः सर्वतथागतोष्णीषाणां उपर्युपरि वर्तमानस्याप्रतिहतशासनस्यापरिमितबलपराक्रमस्य भगवतः उष्णीषराजचक्रवर्तिनः पुनरपि कल्पं भाषेऽहम् अस्मिं काले कलौ युगे ॥

अथ भगवतो दुरतिक्रमशासनस्य त्रैलोक्यगुरोः सर्वदेवनागयक्षगन्धर्वासुरगरुडकिन्नरमहोरगसन्क्रान्तस्य सर्वकर्मार्थसाधकस्य मन्त्रे वक्ष्ये पुनरपि कलौ युगे काले शासनान्तर्द्धानकाले समये शासनारक्षको भगवां उष्णीषचक्रवर्ती भविष्यति। सिद्धिं च यास्यते। सर्वकालं सर्वबुद्धानां च शासनान्तर्द्धानकालसमये बुद्धोऽयं भगवां सत्त्वार्थं करिष्यति । आरक्षकोऽयं भगवां सर्वतथागतधर्मकोशसंसृष्टः। शृण्वन्तु भवन्तो देवगणाः! सर्वसत्त्वाश्च। भ्रूम् ॥

एष भगवां सर्वज्ञः बुद्धैर्मन्त्ररूपेण व्यवस्थितः ।
महाकारुणिकः शास्ता विचिरुः सर्वदेहिनाम् ॥

मन्त्राणामधिपतिः श्रीमां ख्याता उष्णीषसम्मतः ।
करुणाथ समागम्य स्थितोऽयमेषमक्षरः ॥

स धर्मधातुं निःसृत्य स्थितोऽयं विश्वरूपिणः ।
यथा हि बुद्धानां शरीरा प्रोक्ता धातवो जने ॥
सामिषा लोकपूज्यास्ते निरामिषाः पु विशेषतः ।
सद्धर्मधातवः प्रोक्ता निरामिषा लोकहेतवः ॥
सामिषा कलेवरे प्रोक्ता जिनेन्द्राणां महर्द्धिका ।
विविधा धातवः प्रोक्ताः मुनिचन्द्रा निराश्रवाः ॥
सामिषा निरामिषाश्चैव प्रसृता लोकहेतवः ।
धर्मधातुं सन्मिश्रं सत्त्वानां करुणावशात् ॥
तिष्ठते मन्त्ररूपेण लोकनाथं प्रभङ्कर ।
स विश्वरूपी सर्वज्ञः दृश्यते ह महीतले ॥
सर्वार्थसाधको मन्त्रः सर्वबुद्धैस्तु भाषितः ।
एष संक्षेपतो मन्त्रः जप्तोऽयं विधिना स्वयम् ॥
करोति सर्वकर्मं वै ईप्सितां सफलां सदा ।
अस्य कल्पं समासेन पुनः काले प्रवक्ष्यते ॥
युगान्ते मुनिवरे लोके अस्तं याते तथागते ।
कल्पासिद्धिस्तदा काले मन्त्रसिद्धिरुदाहृता ॥

अथ भगवतश्चक्रवर्तिनस्तथागतोष्णीषस्य परकर्मप्रयोगविध्वंसनकरस्याजितंजयस्य सर्वमन्त्राधिपतेः सर्वबुद्धबोधिसत्त्वानुनीतस्योष्णीषचक्रवर्तिनः संक्षेपतः कल्पमेकाक्षरस्य प्रवर्तितपूर्वं विस्तरतः ॥

आदौ तावत् यस्मिं स्थानेऽयं जप्यते, तस्मिं स्थाने पथे योजनाभ्यन्तरेण सर्वदुष्टग्रहाः प्रपलायन्ति, सर्वमन्त्राः सिद्धा अपि न प्रभवन्ति, सर्वदेवाः सान्निध्यं त्यजन्ति, अन्यत्र साधकस्येच्छयान्येषां लौकिकलोकोत्तराणां साधकानां सिद्धिमपहरति, परप्रयोगमन्त्रां छिन्नभिन्नउत्कीलनतां मोचयति ॥

स्वयं विद्याच्छेदं कर्तुकामः कुशानां हरितानां मुष्टिं गृहीत्वा, अष्टशताभिमन्त्रितं कृत्वा, शस्त्रेणच्छिन्द्यात् तां विद्यामुद्दिश्य, सा छिन्ना भवति । अनेन प्रतिकृतिं कृत्वा, हृदये कीलकेन ताडयेत् । कीलिता भवते । सप्तजप्तेन सूत्रेण कुसुम्भरक्तेन ग्रन्थिं कुर्यात । बद्धा भवति । शरा-

त्रेणाष्टशतजप्तेन पिथयेद्, रुद्धा भवति। शस्त्रेण हृदयं द्विधा कुर्याद्, भिन्ना भवति। राजिकाभिर्त्रिपरुधिररक्ताभिः रञ्जयेच्छिष्टिता भवति। करवीरलतया आहनेत्, पीडिता भवति। सर्वविघ्नाभिचारुकमिच्छया करोति। सर्वत्र पूर्तिकं कर्म मुक्ताक्षीरेण स्नापयित्वा, होमं कुर्याच्छान्तिः। घृतहोमेन सर्वेषां शान्तिराप्यायनं कृतं भवति। मुष्टिबन्धेन सर्वमन्त्रां स्तम्भयति, मनसा मोक्षयति, मन्त्र साधयितुकामस्तमनेनैवोपरुद्ध्य साधयेदन्यकल्पं साधयितुमिच्छति, तमनेनैव साधयेत्। सिद्ध्यति। अनेनैव मन्त्रेणावाहनं भवति। पुनरनेनैव विसर्जनं भवति। अनेनैव यस्य रक्षा क्रियते, सोऽप्यदृश्यो भवति। यो मन्त्रो न सिद्ध्यति, प्रत्यादेशं वा न ददाति, अनेनैव सह जपेत्। शीघ्रं सिद्ध्यति, प्रत्यादेशं वा ददाति। यदि न सिद्ध्यति, प्रत्यादेशं प्रयच्छति। सो म्रियते॥

दधिमधुघृताक्तानां तिलानामष्टशतं जुहुयात् त्रिसन्ध्यं सप्ताहं यं मन्त्रमुद्दिश्य, सोऽस्य वशो भवति। यदुच्यते तत् कर्म करोति। प्रत्यादेशं वा प्रयच्छामि देवा वशीकर्तुकामः देवदारुसमिधानामष्टसहस्रं जुहुयात्, सप्तरात्रेण वश्यो भवति। नागां वशीकर्तुकामः त्रिमधुरं जुहुयात्। वश्या भवन्ति। यक्षां वशीकर्तुकामो दधिभक्तं जुहुयाद्, वश्या भवन्ति। यक्षिणी वशीकर्तुकामेन दधिभक्तं जुहुयात्। सर्वगन्धैर्गन्धर्वं वशीकरोति। अशोकप्रियङ्गुसमिद्भिः कुसुमैर्वा यक्षिणीनागिनागग्रहाणां राजिकाभिः राजानसिद्धार्थकैः ब्रह्माणं पुष्पहोमेन, वैश्यं दधिक्षीरघृतेन, शूद्रं तुषपांसुभिः, स्त्रियां लवणहोमेन, रण्डां माषजम्बूलिकाहोमेन, कन्यां लाजाहोमेन, सर्वान् घृततैलहोमेन वश्यां करोति सर्वत्र त्रिसन्ध्यं सप्तरात्रम्। इत्युक्त्वा तूष्णीम्भूतो जिनोत्तमः।

देवसङ्घां तदा मन्त्रे सप्तमो मुनिपुङ्गवः।
प्रहस्य लोकधर्मज्ञः मुक्तोऽसौ गतधीस्तदा॥

मुनिः श्रेष्ठस्तदा ज्येष्ठं बुद्धपुत्रं तदालपेत्।
मञ्जुघोषं तदा वव्रे बोधिसत्त्वं महर्द्धिकम्॥

एष कल्पो मया प्रोक्तः एकदेशो हि चक्रिणे ।
विस्तीर्णं यस्य नाथस्य देवदेवस्य धीमतः ॥
कल्पैर्यस्य प्रमाणं तु न शक्यं भाषितुं जिनैः ।
संक्षेपेण प्रवक्ष्ये ते मानुषाणां हितोदया ॥
एवमुक्ते तदा श्रीमां मञ्जुघोषो महर्द्धिकः ।
अद्धयेषयति तं बुद्धं शुद्धावासोपरि स्थितम् ॥
भाष भाष महावीर! सम्बुद्ध! द्विपदोत्तम! ।
नष्टे काले युगान्ते वै मानुषाणां सुखोदयम् ॥
कथमस्य महातेजा महावीरस्य मन्त्रराट् ।
ऽटसिद्धिः प्रदृश्येते क्षिप्रं पटविधिः कथमिति ॥

आर्यमञ्जुश्रियमूलकल्पाद् बोधिसत्त्वपिटकावतंसका-
न्महायानवैपुल्यसूत्रात् त्र्यविंशतितमः
एकाक्षरचक्रवर्त्युद्भवपटलविसरः
परिसमाप्त इति ॥

---

## अथ षड्विंशतितमः पटलविसरः ।

अथ खलु भगवां शाक्यमुनिः पुनरपि शुद्धावासभवनमवलोक्य मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । शृणु मञ्जुश्रीः ! एकाक्षरचक्रवर्तिनस्य महानुभावस्य संक्षेपेण पटविधानं भवति । विस्तरशः पूर्वमुदीरितम् । अधुना संक्षेपेण युगाधमे सत्त्वा अल्पवीर्या भवन्ति, अल्पप्रज्ञा मन्दचेतसः । न शक्यन्ते विस्तरशः पटप्रमाणप्रयोगं साधयितुम् ।

संक्षेपेण वक्ष्येऽहं सत्त्वानां हितकाम्यया ।
उत्तमार्थं तु यथा सिद्धिः प्राप्नुवन्ति स जापिनः ॥

उत्तमसाधनं कर्तुकामेन अनाहते पटे अच्छिन्नदशे केशापगते अश्लेषकैर्वर्णैर्भगवां चित्रापयितव्यः । धर्मराजा धर्मचक्रप्रवर्तकः सर्वलोकाधिपतिः पुरुषोत्तमः द्विपदानामग्र्यः तथागतरत्नः रत्नकेतुर्नामा जिनोत्तमः धर्मं देशयमानः समन्तज्वालप्रभामण्डलः । अधस्ताद् ब्रह्मा आर्यवज्रपाणिश्च, उपरिष्टान्मालाधारिणौ देवपुत्रौ, अधस्तात् साधकः ॥

तस्याग्रतस्त्रिसन्ध्यं अगरुधूपं दहता दशलक्षाणि जपेत् । पश्चात् कर्माणि भवन्ति ॥

प्रथमं चक्रसाधनं कर्तुकामः, द्वादशारं पुष्पलोहमयं चक्रं कृत्वा प्रातिहारकपक्षे भगवतोऽग्रतस्त्रिसन्ध्यमगरुधूपं दहता दश लक्षाणि जपेत् । अन्ते पूर्णमास्यां उदारां पूजां कृत्वा, हस्तेनावष्टभ्य, तावज्जपेत्, यावत् प्रज्वलितमिति । तं गृहीत्वा विद्याधरचक्रवर्ती भवति । यैर्दृश्यते, यांश्च पश्यति, तैः सहोत्पतति ॥

अथच्छत्रं साधयितुकामः, श्वेतच्छत्रं विचित्रं चाभिनवं कारयित्वा, सुवर्णचक्रचिह्नं कौशेयवस्त्रावलम्बितं तेनानेनैव विधानेन शिरसि कृत्वा जपेद्, विद्या स्वयमेवोपतिष्ठति । अनेन च भगवतोऽग्रतस्त्रिसन्ध्यमगरुधूपं दशलक्षं जपेत् । अन्ते पूर्णमास्यामुदारां पूजां कृत्वा, हस्तेनावष्टभ्य तावज्जपेद्, यावत् प्रज्वलितमिति । तं गृहीत्वा विद्याधरचक्रवर्ती भवति । मासे मासे पौर्णमास्यां पञ्चभिः

पक्षैः प्रातिहारिकपक्षे सिद्ध्यति । अथ सिद्धमात्रेण सर्वधर्मा आमु-खीभवन्ति । सर्वाभिज्ञ प्रतिलभते । सर्वबुद्धबोधिसत्त्वाभिनन्दितः सर्व-सत्त्वानुप्रवेशः सिद्धो भवति । लोकधात्वन्तरेऽपि सहस्रपरिवारश्चक्र-वर्ती भवति ॥

अथोष्णीषं साधयितुकामः हस्तमात्रे दण्डे सौवर्णरजतताम्र-मयं मणिमयं वा कृत्वा तावज्जपेद् यावत् प्रज्वलितमिति । तं गृहीत्वा यथेष्टं विचरति । सत्त्वेभ्यो धर्मं देशयति । महाकल्पं जीवति ॥

अथ भद्रघटं साधयितुकामः सौवर्णं भद्रघटं कृत्वा सर्वबीजर-त्नौषधिपरिपूर्णं शुक्लवस्त्रावकुण्ठितं तमनेन साधयेद् एकस्मिं प्रातिहा-रकपक्षे कर्मारभेद्, अपरस्मिन् सिद्ध्यति । तस्मिं हस्ते प्रक्षिप्य य-मिच्छति तं लभते । अक्षयं भवति ॥

अथ चिन्तामणिरत्नं साधयितुकामः सौवर्णदण्डो जात्यमणिं स्फटिकमणिं च सौवर्णं वा वस्त्रावलम्बन्तं कृत्वा अनेनैव विधानेन साधयेद्, यं चिन्तयति तत् सर्वं सिद्ध्यति । देवमनुष्येषु चानेन गृहीतेनाप्रतिहतबलपराक्रमो भवति । अथ भगवतः कोटिं जपेत्, स्व-शरीरेणोत्पतति । दिव्यबहुमहाकल्पं जीवति । अन्ये वा योरसितातप-त्रप्रमुख्यादयः तदप्यनेन भगवतो दशलक्षजप्तेन कर्माणि कर्तव्यानि सिद्ध्यन्ति । एवमप्रतिहतः तथागतोष्णीषः परकल्पविधानेनापि यथा यथा प्रयुज्यति, तथा तथा सिद्ध्यति । अचिरादेव भगवतः उष्णीष-चक्रवर्त्तिनः दशलक्षजप्तः सर्वं साधयति सर्वविद्यामन्त्राधिपतिच-क्रवर्ती ॥

अथ वज्रं साधयितुकामः रक्तचन्दनमयं एकसूचिकं वज्रं कृत्वा, अथवा पुष्पलोहमयं कृत्वा, पञ्चगव्येन प्रक्षाल्य, शुक्लपञ्चदश्यां पटस्याग्रतः उदारां पूजां कृत्वा, घृतप्रदीपान् प्रज्वाल्य, गन्धोदकेन प्रक्षाल्य, यक्षा वश्या भवन्ति । सर्वबुद्धबोधिसत्त्वानमात्मानं नि-र्यात्य, अनेनोष्णीषराजा परित्राणेन तेजोराशिसितातपत्रेण वा रक्षां

कृत्वा, मण्डलबन्धं सहायानां च रक्षां कृत्वा, वज्रं दक्षिणेन हस्तेन गृहीत्वा, प्रथमे यामेऽतिक्रान्ते द्वितीये यामे उपविश्य एकाग्रचित्तः तावज्जपेद्, यावत् प्रज्वलितमिति । अत्रान्तरे सर्वविद्याधरा सर्वे देवनागयक्षाः सन्निपतन्ति । सर्वे च विद्याधरराजानः आगच्छन्ति । तैरभिष्टूयमानः विद्याधरपुरं गच्छति । विद्याधरचक्रवर्ती भवति । वज्रपाणिसदृशकायः वज्रपाणिसमबलः क्षणलवमुहूर्त्तेनाकनिष्ठं देवभवनं गच्छति । महाकल्पस्थायी भगवन्तमार्यमैत्रेयं पश्यति । धर्मं शृणोति । मृतो यत्रेच्छति, तत्रोपपद्यते । यदिच्छति वज्रपाणिसकाशादुत्पद्यते ।

अथ खड्गं साधयितुकामः, निर्व्रणं खड्गं गृहीत्वा, अहोरात्रोषितः भगवतोदारां पूजां कृत्वा, तावज्जपेद्, यावज्ज्वलितेन सिद्धेन सपरिवारेणोत्पतति । आकुञ्चितकुण्डलकेशः द्विरष्टवर्षाकृतिः अपन्थदायी अगम्यः सर्वविद्याधराणां अन्तरकल्पं जीवति ॥

अथ मनःशिलां साधयितुकामः, वीरक्रयेण क्रीत्वा पुष्ययोगात्रात्रोषितः सङ्घोद्दिष्टकां भिक्षां भोजयित्वा आज्ञा दापयितव्या । अनुज्ञातस्तत्र साधनं प्रविशेत् । उदारां पूजां कृत्वा, घृतप्रदीपसहस्रं प्रज्वालयितव्यम् । त्रिरात्रोषितः सर्वसत्त्वानां मैत्रचित्तमुत्पाद्य आत्मानं निर्यात्य मनःशिलां गृहीत्वा तावज्जपेद्, यावत् त्रिविधा सिद्धिः । ऊष्मधूमज्वलितपूर्वमेव चिन्तयितव्यम् । अमुक्तसिद्धिरूष्मायमानतिलकं कृत्वा, सर्वदेवनागयक्षभूतपिशाचादीं जम्बूद्वीपनिवासिनश्च सत्त्वा दासभूता भवन्ति । किङ्करा भवन्ति । वर्षसहस्रं जीवति । धूमायमाने तिलकं कृत्वा, अन्तर्धीयते । यदिच्छेद् देवानामप्यदृश्यो भवति । क्षणलवमुहूर्तेन दृश्यते । पुनरन्तर्धीयते । सर्वान्तर्द्धानिकानां राजा भवति । त्रीणि वर्षसहस्राणि जीवति ज्वलितेन विद्याधरो भवति । सपरिवार उत्पतति । विद्याधरराजा भवति । देवकुमारवपुः अभ्रपर्णायः सर्वदेवानां कः पुनर्विद्याधराणां कल्पस्थायी भवति । कालगतस्तुषिते देवनिकाये उपपद्यते ॥

अथ त्रिशूलं साधयितुकामः, पुष्पलोहमयं त्रिशूलं कृत्वा, संवत्सरं जपेत् । ततो वालुकामयं हस्तप्रमाणं चैत्यं कृत्वा, तस्य महतीं पूजां कृत्वा, उदारं च बलिं निवेद्य, दक्षिणहस्तेन त्रिशूलं गृहीत्वा, तावज्जपेद्, यावत् पर्यङ्कं बध्वा यात्र स्फुरति, ज्वलति, रश्मिसहस्राणि प्रमुञ्चति । अत्रान्तरे महेश्वरप्रमुखा देवा आगच्छन्ति । सर्वविद्याधरा पुष्पवर्षं प्रवर्षन्ति । ततस्तैः परिवृतः यावतां पश्यति, यैश्च दृश्यते, तैः सहोत्पतति । त्रिनेत्रः द्वितीय इव महेश्वरः सर्वविद्याधरनमस्कृतः महाकल्पस्थायी निरीक्षितमात्रेण दुष्टचित्तां पातयति । न कस्यचिद् गम्यो भवति । सदेवके-लोके प्रागेव विद्याधराणां च्युतः सुखावत्यामुपपद्यते ।

अथ वेताडं साधयति । अक्षताङ्गं पुरुषं गृहीत्वा, चतुरखदिरकीलकैः यन्त्रितस्योरस्युपविश्य, रत्नचूर्णं जुहुयात् । तस्य जिह्वाग्रे चिन्तामणिरत्नं दृश्यते । तं गृह्य विद्याधरचक्रवर्ती भवति । यानि प्रहरणानि चिन्तयति, तानि मनसैवोपपद्यन्ते । योजनशतं प्रभयावभासयति । इच्छया कालं करोति । यत्रेच्छति, तत्र गच्छति । लोकधात्वन्तरेऽपि विद्याधरचक्रवर्ती भवति । च्युतो विमलायां लोकधातावुपपद्यते ॥

द्वितीयं वेतालसाधनम् । अक्षताङ्गं वेतडं गृहीत्वा, बदरकीलकैः कीलयित्वा, तस्य मुखे लोहचूर्णं जुहुयात् । तस्य जिह्वा निर्गच्छति । तं छित्वा, शतपरिवार उत्पतति । अन्तरकल्पं जीवति । सुमेरुमूर्द्धनि क्रीडति, रमति । यदा मृयते, तदा एकदेशिको राजा भवति ॥

अथाङ्कुशं साधयितुकामः, कुशमयमङ्कुशं कृत्वा, कृष्णमयोरेकतरेण पञ्चगव्येन प्रक्षाल्य, एकरात्रोपितः अङ्कुशस्य हस्तं प्रमाणमात्रं कर्तव्यम् । उदारां पूजां कृत्वा, वज्रपाणेर्घृतप्रदीपशतं प्रज्वालयितं कर्तव्यम् । वज्रं कुर्यात् तथैव सितातपत्रस्य आत्मनः रक्षा कर्तव्या । तेजोराशिना मण्डलबन्धं विकिरेणेन कीलकां सप्ताभिमन्त्रितां कृत्वा, चतुर्दिशं निखानयितव्या । अथाबन्धं स्थानं च परिग्रहं कृत भवति । ततो द्वितीये प्रहरे एकाग्रमनाः पर्यङ्कं बध्वा, अङ्कुशं गन्ध-

पुष्पधूपैरभ्यर्च्य कृतरक्षः सर्वबुद्धबोधिसत्त्वां नमस्कृत्य अङ्कुशं हस्तेन गृह्य तावज्जपेद् यावदत्रान्तरे नरकायिकानां देवानां वेदनान्युपशाम्यन्ते । सर्वबुद्धबोधिसत्त्वां नमस्कृत्य उत्पतति । विद्याधरराजो अप्रतिहतगतिः अङ्कुशाग्रहस्तः । सर्वदेवनागयक्षादयश्च दृष्ट्वा दूरादेव प्रणामं कुर्वन्ति । कल्पस्थायी । यदा मृयते, तदा वज्रभवनं गच्छति । वज्रपाणिं पश्यति । यदि पटं साधयति, तेन ज्वलितेन विद्याधरो भवति । यमिच्छति कल्पं साधयितुं तस्य मन्त्रस्य नामं ग्रहाय लक्षं जपेदन्ते एकारात्रोषितः उदारां पूजां कृत्वा अर्ककाष्ठैरग्निं प्रज्वाल्य तिलानां दधिमधुघृताक्तानामष्टसहस्रं जुहुयात् । होमान्ते आगच्छति । धनं यमिच्छति तं ददाति । वशं तिष्ठति किङ्करवशः ॥

अथ महेश्वरं कर्तुकामः महेश्वरस्य महतिं पूजां कृत्वा दक्षिणायां मूर्त्तौ अर्ककाष्ठैरग्निं प्रज्वाल्य अष्टसहस्रं जुहुयात् । हाहाकारशब्दं भवति । न भेतव्यं तत आगच्छति ब्रवीति किं कर्तव्या सर्वे महेश्वरा विद्या मम सिद्धा भवन्तु । यद्वरं रोचति तं ददाति । एवमस्त्विति कृत्वा अन्तर्द्धीयते ॥

एवं विष्णुब्रह्माद्यमाकर्षयति । ये चारोचयति तस्याप्येषो विधिः कर्तव्यः । कृतरक्षेण कार्यम् ॥

अथ यक्षिणी आकर्षयितुकामः तस्य नामं गृह्य सप्ताहमर्काकपुष्पाणि जुहुयात् । आगच्छति वरं ददाति सप्तमे सप्ताहेऽवश्यमागच्छति । माता भगिनी भार्या यं चारोचति । अथ न वा गच्छति । मूर्द्धानमस्य स्फुटति ॥

नागीमाकर्षितुकामस्य नागपुष्पाणामेष एव विधिः । यक्षं आकर्षितुकामस्य मासत्रयं दधिभक्तं जुहुयात् । अन्ते एकरात्रोषितः भगवतः पूजां कृत्वा यक्षाणां यक्षबलिं चोदनानि निवेद्य यक्षाकर्षणं करिष्यामीति मनसि कृत्वा वटवृक्षसमिधां दधिमधुघृताक्तानां अष्टसहस्रं जुहुयात् । अत्रान्तरे कुबेराद्या यक्षा आगच्छन्ति । तेषां गन्धकुसुमैः अर्घो दीयते । वक्ष्यन्ति किं कर्तव्यं ते । वक्तव्याः

एकैकं दिने यक्ष आज्ञाकरं यक्षं प्रेषयेति । तत एकैकं यक्षं प्रयच्छन्ति। तस्य आज्ञा दातव्या। योजनशतादपि स्त्रियमानयन्ति । प्रभाते तत्रैव नयन्ते । शतपरिवृतस्य भक्तं प्रयच्छन्ति । पृष्ठमारुह्य यत्रेच्छति तत्र गच्छति । नयति । रसायनं ददाति । आज्ञप्ताः सर्वं करोति ॥

अथ वज्रपाणिं साधयितुकामः चतुर्गुणं सप्तगुणं पूर्वसेवां कृत्वा प्रातिहारकपक्षे सकलामुदारतरां पूजां कृत्वा यावत् पूर्णमासीति पूर्णमास्यां पूजां कृत्वा भिक्षवः सङ्घोद्दिष्टकां भोजयित्वा आर्यवज्रधरस्यैव अनुमोदितव्या तत उदारां पूजां कृत्वा प्रथमे यामेऽतिक्रान्ते द्वितीये यामे पर्यङ्कं बद्ध्वा उपविश्यैकाग्रमनसः वज्रधरं द्रक्ष्यामीति चित्तं सङ्कल्प्य गुग्गुलुगुलिकानां बदरास्थिप्रमाणां रात्रावेकयामं जुहुयात् । ततो भगवतः स्रग्दामचलनं भवति । भूः प्रकम्पति । मेघा गुलुगुलायन्ति । सर्वे विद्याधराः पुष्पवर्षं प्रवर्षन्ति । अत्रान्तरे भगवां वज्रपाणिरागच्छन्ति सर्वविद्याभिः परिवृतः विद्योत्तमप्रमुखैः विद्याराजैः परिवृतः सर्वदेवैः सर्वनागैः सर्वयक्षैः सर्वगन्धर्वैः किन्नरैर्बोधिसत्त्वैः परिवृतः आगच्छति । तत्क्षणं नारकाणां सत्त्वानां तीव्रवेदना व्युपरता भवन्ति । गन्धोदकेन अर्घ्यो देयः । प्रणिपत्य स्थातव्यं ततो वज्रधरो वक्ष्यति किं ते वरं ददामि। विद्याधरचक्रवर्तित्वं बिलप्रवेशं राज्यं अन्तर्द्धानं यद्वा रोचते तस्यैव भगवतः सकाशाल्लभ्यते । यद्वा रोचति विद्याधरचक्रवर्तित्वं सर्वविद्याधराणां चक्रवर्त्ती वज्रकायो वज्रपाणिसदृशः चित्तमात्रेण सर्वप्रहरणान्युत्पद्यन्ते । महाकल्पस्थायी । यदा मृयते तदा वज्रभवनं गच्छति । अन्येषामपि विद्याधराणां एष एव विधिः संक्षेपतो यानि वज्रपाणिकल्पे यानि अवलोकितेश्वरकल्पे यानि च भगवता प्रोक्तानि कल्पानि यानि ब्रह्मकल्पे यानि महेश्वरकल्पे संक्षेपतो लौकिकलोकोत्तरेषु कल्पेषु ये साधनीयाः, ते एतेनैव साधनया सिद्ध्यन्ते । महामन्त्रा साध्यमाना न सिद्ध्यन्ति । अनेन सार्द्धं जप्तव्याः सप्तरात्रं नियतं दर्शनं ददाति । अथ न ददाति विनश्यति । महेश्वरप्रमुखानां देवानां अग्रतः यदि जपति सप्तरात्राभ्यन्तरेण दर्शनं ददाति । यदि न

ददाति त्रिसप्तधा मूर्ध्ना स्फुटति । चन्द्रग्रहे आदित्यग्रहे वा घृतवचाञ्जनपवित्रदण्डकाष्ठयज्ञोपवीतहरितालमनःशिलादयः साधयितव्याः ॥

अथ द्रव्यं साधयितुकामस्य मनःशिलां गृह्य मानुषक्षीरेण पीषयित्वा पञ्चगुलिका कर्तव्या । अंगुष्ठमूद्रके प्रक्षिप्य श्वेतसिद्धार्थकसहितां साधयेत् । चन्द्रग्रहे सूर्यग्रहे वा बलिविधानं कृत्वा यदा सर्षप चिटिचिटीयन्ति तथा प्रथमा सिद्धा या वा सर्वजनवशीकरणं तथा सर्वस्य लौकिकेया क्रियेया भवन्ति । यदुच्यते तत् सर्वं करोति । अथ धूमायते सर्वान्तर्द्धानिकानां राजा भवति । अन्तरकल्पं जीवति । ज्वलिते तदा देवकुमारवपुः तरुणार्कतेजो विद्याधरराजा भवति । महाकल्पं जीवति ॥

एवं रोचनाहरितालादीनि साधयितव्यानि ॥

अथाञ्जनं साधयितुकामः श्रोताञ्जनं नीलोत्पलं कुष्ठं चन्दनं चैकतः कृत्वा ताम्रभाजने संस्थाप्य चन्द्रग्रहे तावज्जपेद् यावद् धूमायति । तेनाञ्जितनयनः अन्तर्द्धीयते कामरूपी सर्वान्तर्द्धानिकानां राजा भवति ॥

अथ खड्गं साधयितुकामः निर्व्रणं खड्गमादाय कृष्णाष्टम्यां कृष्णचतुर्दश्यां वा पटस्योदारां पूजां कृत्वा बलिविधानं च कृतरक्षः खड्गं दक्षिणहस्तेन गृहीत्वा तावज्जपेद् यावत् स्फुरति । ज्वलिते स्फुरिते एकाकी विद्याधरो भवति । ज्वलितेन सर्वविद्याधराणां राजा भवति । अप्रतिहतबलपराक्रमः यैर्दृश्यते यांश्च पश्यति तैः सहोत्पतति ॥

अथ वज्रं साधयितुकामः पुष्पलोहमयं वज्रं कृत्वा षोडशाङ्गुलं उभयत्रिशूलकं रक्तचन्दनेनानुलिप्य प्रातिहारकपक्षप्रतिपदमारभ्य पटस्योदारां पूजां कृत्वा जपेत् प्रतिदिनं वर्द्धमाना भिक्षवो भोजयितव्या । अन्ते त्रिरात्रोषितः पटं सधातुके चैत्ये प्रतिष्ठाप्य उदारां पूजां कृत्वा घृतप्रदीपशतं प्रज्वाल्य कुशपिण्डकोपविष्टः वज्रमुभाभ्यां पाणिभ्यां गृहीत्वा तावज्जपेद् यावज्ज्वलितमिति । तं

शुचिदेशे जने चैव शुभे नक्षत्रतारके ।
प्रशस्ते दिवसे वारे शुक्लपक्षे शुभेऽहनि ॥
शुक्लग्रहसंयुक्ते तिथौ पूर्णसमायुते ।
परिपूर्णे तथा चन्द्रे अवतारं तेषु दृश्यते ॥
अवतीर्णस्य भवे चिह्नः वीतरागस्य महर्द्धिकः ।
आकाशे तालमात्रं तु पृथिव्यामुत्प्लुत्य तिष्ठते ॥
पर्यङ्कोपविष्टोऽसौ दृश्यते नियताश्रये ।
नानादिव्यमतुलयाथा वाचार्कर्णसुखास्तथा ॥
वदतेऽसौ महासत्त्वो यत्रासौ पीदभियोऽस्थितः ।
उष्णीषमुद्रैराकृष्टः पततेऽसौ महीतले ॥
महीमस्पृश्यतस्तिष्ठेदर्घं दद्यात्तु तत्क्षणात् ।
जातीकुसुमसन्मिश्रं श्वेतचन्दनकुङ्कुमम् ॥
मिस्रतं उदकं दद्यादर्घं पाद्यं तु तत्क्षणम् ।
प्रणिपत्य महीं मन्त्री अध्येष्ये हितकाम्यया ॥
अध्येष्टो हि सः सत्त्वो वीतमत्सरचेतसः ।
वाचं प्रभाषते दिव्यां अनेलां कर्णसुखास्तथा ॥
यथेप्सं तु ततः पृच्छे मन्त्रज्ञे हि विशारदः ।
न भेतव्यं तत्र काले तु मञ्जुघोषं तु संस्मरेत् ॥
मुद्रां पञ्चशिखां बद्ध्वा अन्यं वोष्णीषसम्भवम् ।
दिशाबन्धं ततः कृत्वा दिग्यूर्ध्वमध एव तु ॥
ततोऽसौ सर्ववृत्तान्तमध्यान्तं च प्रवक्ष्यते ।
आदिमध्यं तथा कालं भूतं तव्यमनागतम् ॥
वर्तमानं यथाभूतं आचष्टेऽसौ महाद्युतिः ।
अनिमिषाक्षास्तथा स्तब्धः प्रेक्षतेऽसौ भीतविद्विषः ॥
यस्तेनोदिता वाचा सत्यं तं नान्यथा भवेत् ।
सिद्धिसाध्यं तथा द्रव्यं योनिं म निश्चयं गतिम् ॥

प्रत्येकबोधिमर्हत्वं महाबोधिं नियतं न तत् ।
बुद्धत्वगोत्रनियतं + + + + + + + + + + ॥
अगोत्रं चैव कालं वै सत्त्वमसत्त्वगर्हितं कृत ।
सर्वं सो कथये सत्यं मन्त्रेणाभिलक्षितः ॥ ५
लक्षणमात्रं कथेद् योगी नान्यकालप्रतीक्षयेन ।
एतल्लक्षणेन यत् किञ्चित् प्रार्थये मौनगात्मना ॥
तत् सर्वं लभते क्षिप्रं मन्त्रसिद्धिश्च केवला ।
प्राप्नुयात् सर्वसम्पत्तिं यथेष्टां नाभिकाङ्क्षितम् ॥
विसर्ज्य मन्त्री तत् क्षिप्रमर्घं दत्त्वा तु सम्मनाम् ।
पात्रसंरक्षणां कुर्याद् विधिदृष्टेन कर्मणा ॥
पतितं देहमत्त्वा वै शयानं चैव महीतले ।
उष्णीषमुद्रया युक्तं मन्त्रं चैव जिनोचितम् ॥
तेनैव रक्षां कुर्वीत मुद्रापञ्चशिखेन वा ।
स्वस्थदेहस्तदा सत्त्व उत्तिष्ठेन महीतले ॥
सर्वमाविष्टसत्त्वानां रक्षा एषा प्रकल्पिता ।
अशक्ता दुष्टसत्त्वा वै हिंसितुं पात्रनिश्रिते ॥
रक्षा च महती हीना जन्तूनां पात्रसम्भवाम् ।
वाचा तस्य मध्यस्था मध्यदेशे प्रकीर्तिता ॥
देवयोनिं समासृत्य अकनिष्ठाश्चाश्च रूपिणाम् ।
एतेऽन्ये तानि चिह्नानि दृश्यन्ते रूपसम्भवाम् ॥
कामधात्वीश्वरा ये तु [illegible]नाभिन दिवौकसाम् ।
ततो हीना गतिश्चिह्ना वाचा चैव सगाधुरा ॥
ततो भूनिष्पन्ना विमानस्था सदिवौकसाम् ।
वाचा काशिपुरीं तेषां यक्षाणां च समागधिम् ॥
अङ्गदेशां तथा वाचा महोरगाणां प्रकीर्तिता ।
पूर्वां वाचा भवेत् तेषां गरुडानां महौजसाम् ॥

तथा वङ्गे समा जाता या वाचा तु प्रवर्त्तते ।
किन्नराणां तथा वाचा सा वाचा परिकल्पिता ॥
यौञ्जी वाचा भवेन्नित्यं सिद्धविद्या सखड्गिणाम् ।
विद्याधराणां तु सा वाचा + + + + + + + + + ॥
ऋषीणां तु कामरूपी तु वाचा विश्वरूपिणाम् ।
पञ्चाभिज्ञं तु सा वाचा ऋषीणां परिकल्पिता ॥
या तु सामा तटी वाचा या च वाचा हरिकेलिका ।
अव्यक्तां स्फुटां चैव डकारपरिनिश्रिता ॥
लकारबहुला या वाचा पैशाचीवाचमुच्यते ।
कर्मरङ्गाख्यद्वीपेषु नाडिकेसरसमुद्भवे ॥
द्वीपवारुषके चैव नग्नवालिसमुद्भवे ।
यवद्वीपिवा सत्त्वेषु तदन्यद्वीपसमुद्भवा ॥
वाचा रकारबहुला तु वाचा अस्फुटतां गता ।
अव्यक्ता निष्ठुरा चैव सक्रोधा प्रेतयोनिषु ॥
दक्षिणापथिका वाचा अन्ध्रकर्णाटद्राविडा ।
कोसलाडविसत्त्वेषु सैहले द्वीपमुद्भवा ॥
डकारे रेफसंयुक्ता सा वाचा राक्षसी स्मृता ।
तदन्यद्वीपवास्तव्यैः मानुष्यैश्चापि भाषितम् ॥
स एष वचनमित्युक्त्वा मातराणां महौजसाम् ।
पाश्चमी वाच निर्दिष्टा वैदिशीश्चापि मालवी ॥
वत्सममत्सार्णवी वाचा शूरसेनी विकल्पिता ।
दशार्णवी चापि पार्वत्या श्रीकण्ठी चापि गौर्जरी ॥
वाचा निर्दिष्टा आदित्याद्यां ग्रहोत्तमाम् ।
तदन्यां ग्रहमुख्यां तु पारियात्री विकल्पिता ॥
अर्बुदे सह्यदेशे च मलये पर्वतवासिनाम् ।
खपद्रोण्यां तु सम्भूते जने वाचा तु यादृशी ॥

तादृशी वाच निर्दिष्टा कूष्माण्डाधियोनिजम् ।
शरपस सम्भूता यरलावकमुद्भवा ॥

मकारप्रथिता या वाचा दानवानां विनिर्दिशेत् ।
कश्मीरे देशसमुद्भूता कात्रिशे च जनालये ॥

सर्वे कुलोद्भूता वज्रपाणिकुलोज्झिता ।
तेषां मन्त्रमुख्यानां सर्वेषां वाचमिष्यते ॥

तथाब्जमध्यदेशस्था कुलयोनिसमाश्रिता ।
वाचा गतिचिह्नाश्च दृश्यन्ते अब्जसम्भवा ॥

पूर्वनिर्दिष्टमेवं स्यात् जिनमन्त्रा विकल्पिता ।
वीतरागां तु ये चिह्ना ते चिह्ना जिनसम्भवा ॥

यत्र देशे भवेद् वाचा तत्रस्था गतिचेष्टिता ।
तद्देव निर्दिशेत् सत्त्वं तच्चिह्नं तु सर्वतः ॥

हिमाद्रेः कुक्षिसंविष्टा गङ्गातीरे तु चोत्तरे ।
यक्षगन्धर्वऋषयो जने वाचा प्रदृश्यते ॥

विन्ध्यकुक्ष्यद्रिसम्भूता गङ्गातीरे तु दक्षिणे ।
श्रीपर्वते तथा शैले सम्भूता ये च जन्तवः ॥

राक्षसोस्तारकप्रेता विकृता मातरास्तथा ।
घोररूपा महाविघ्ना ग्रहाश्चैव सुदारुणाम् ॥

परप्राणहरा लुब्धा तज्जनोद्वाचसम्भवा ।
तत्र देशे तु ये चिह्ना तद्देशे गतिचेष्टिता ॥

तद्वाचवाचिनो दुष्टा आविष्टानां विचेष्टिनम् ।
एते चान्ये च बहवो तचेष्टागतिचेष्टिनः ॥

विचित्राकाररूपाश्च विविधाकारचिह्निता ।
विविधसत्त्वमुख्यानां निर्विवायोनिमिष्यते ॥

एतदाविष्टचिह्नं तु लक्षणं गतिचिह्नितम् ।
सर्वेषां तु प्रकुर्वीत मानुषाणां सुखावहम् ॥

रक्षार्थं प्रयोक्तव्या कुमारो विश्वसम्भवः ।
षडक्षरेणैव कुर्वीत मन्त्रेणैव जापिनः ॥
महामुद्रासमायुक्तं + + + + + + + + ।
पञ्चचीरासु विन्यस्तः महारक्षो कृता भविष्यति ॥

आर्यमञ्जुश्रियमूलकल्पाद् बोधिसत्त्वपिटकावतंसकात्
महायानवैपुल्यसूत्रात् एकूनत्रिंशतिमः आवि-
ष्टचेष्टाविधिपरिवर्तपटविसरः
परिसमाप्तः इति ॥

---

# अथ द्वात्रिंशः पटलविसरः ।

अथ खलु भगवां शाक्यमुनिः पुनरपि शुद्धावासभवनमवलोक्य मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । अस्ति मञ्जुश्रीः त्वदीयमन्त्राणां सर्वतन्त्रेषु समनुप्रवेशसर्वविद्यारहस्यमनेककालगुणशकलफलोदयमप्यनुबन्धनिमित्तं प्रमाणतो वक्ष्ये सिद्धिकारणानि । तद्यथा —

जन्मान्तरिता सिद्धिः न सिद्धिः कालहेतुतः ।
तत्प्रमाणप्रयोगस्तु पूर्वसंम्बद्धमुद्भवा ॥

अहितावहितो सिद्धिः भवेद् युक्तिविचारणम् ।
त्वत्कुमाराश्रययुक्तिः दृश्यते सर्वदेहिनाम् ॥

अत्र पूर्वकृतं कर्म युक्तिरित्यभिधीयते ।
तद्योगे युक्तितः धीरो प्राप्नुयात् सिद्धिमुत्तमाम् ॥

असिद्धं सिद्ध्यते कर्म न सिद्धिः कर्मणा विना ।
कर्मकर्तृसमायुक्तं संयुक्तः सिद्धि कल्प्यते ॥

लिलेभ परमं स्थानं विधियुक्तेन हेतुना ।
न वत्रे मन्त्रिणा मन्त्रं अमन्त्रो मन्त्रिणो भवेत् ॥

मौनकर्मसमाचारे सिद्धिमाप्नोति पुष्कलाम् ।
जापी वीजसमाहार आजहार धियोत्तमम् ॥

वियतः श्रेष्ठतमं स्थानं प्रथमं गतिमाप्नुयात् ।
वियताभावतः स्वस्थो प्राप्नुया निर्जरसम्पदम् ॥

निमित्ता कालतो यस्य अकाले सिद्धिकांक्षिणः ।
न सिद्धिस्तस्य मन्त्राणां शक्रस्यापि समासितः ॥

अहितो भूतजन्तूनां अकालाक्रमणः पुनः ।
न सिद्धिस्तस्य दृश्यते ब्रह्मणस्यापि महात्मनः ॥

तन्द्रीतृष्णासमायुक्तो मदामानसमन्वितः ।
शैथिल्योदीर्यमुद्वेक्षी नित्यं प्राग्यजने रतः ॥

आलस्या मिथुनसंयोगी अस्य सिद्धिः कुतो भवेत् ।
सुराणां गुरवो यत्र असुराणां च येस्तदा ॥

तेऽपि साधयितुं मन्त्रं न शक्तो विधिवर्जितम् ।
विधिहीनं तथा कर्म चित्तविभ्रमकारकम् ॥

तस्मात् तं जपेन्मन्त्रं अयुक्तं विधिना विना ।
बालानां दृष्टिसम्मोहं जनयन्ति तथाविधा ॥

संमूढास्तु ततो बाला पतन्ते कष्टतमां गतिम् ।
ततस्ते मन्त्रधरास्तस्मादुज्जहार ततः पुनः ॥

अनुपूर्व्या ततः सिद्धिं प्रयच्छन्ति शुभां गतिम् ।
ततो तं जपिनं मन्त्रा स्थापयन्ति शिवाचले ॥

एवममोघं मन्त्राणां जपमुक्तं तथागतैः ।
दृष्टिभ्रान्तेऽपि चित्तस्य अनुग्रहायैव युज्यते ॥

एते कल्याणमित्रा वै एते सत्त्ववत्सला ।
एतेषां सिद्धिनिर्दिष्टा त्रियानसमता शिवा ॥

तस्मात् सर्वप्रयत्नेन जपेन्मन्त्रं समाहितः ।
अविधिप्रयोगान्मन्त्रा हि प्रयुक्ता मन्त्रजापिभिः ॥

चिरकालं तु संसारात् कथञ्चिन्मुक्तिरिष्यते ।
सुचिरात् कालतरं गत्वा मन्त्राणां सिद्धि दृश्यते ॥

विधियुक्ता हि मन्त्रा वै क्षिप्रं सिद्धिमवाप्नुयात् ।
पश्यते फलनिष्पात्तिं नाफलं मन्त्रमुच्यते ॥

इहैव जन्मे सिद्ध्यन्ति मन्त्राः फलसमोदिता ।
न निष्पत्तिः फलकर्मणां नाफलं कर्ममिष्यते ॥

फलं कर्मसमायोगात् सफलं कर्म उच्यते ।
तज्जापी जन्मजनिता वियत्याभावसम्भवः ॥

शिवं लोकनिर्दिष्टं शान्तभावा विमुच्यते ।
तद्गतं गतिमाहात्म्यं बुद्धवर्त्मानुसेविनः ॥

विपरीतकलौ काले सिद्धिस्तस्यापि दृश्यते ।
इहैव जन्मे भवेत् सिद्धिः जन्मान्ते न प्रवर्त्तते ॥

यावत्तिष्ठा भवेच्छासनि शिववर्त्मगसंस्कृतम् ।
यत्तु लोकविनिर्दिष्टं शिवं स्थानं मुनिर्मलम् ॥

बुद्धत्वं सम्प्रकाशं तु जनैः सर्वप्रकाशिनम् ।
तदन्तं तस्य अन्तं वै मन्त्रसिद्धिरुदाहृता ॥

अप्रकाश्यमभावं तु जिनानां प्रत्याख्यागमस्भवम् ।
मन्त्रा तु कथितं लोके मुनिचन्द्रैर्महर्द्धिकैः ॥

साक्षात् सिद्धि समादिष्टा इह जन्मेऽपि देहिनाम् ।
शून्ये तत्त्वविदे क्षेत्रे मन्त्रा बुद्धत्वमाविशेन ॥

अन्ते कलियुगे काले शान्ति तत्त्वविदे गते ।
मन्त्रा सिद्धिं न गच्छेयुः क्षिप्रमर्थाभिकांक्षिणाम् ॥

तस्मिं काले प्रयोगेन विधिदृष्टेन कर्मणा ।
साधयेन्मन्त्रतन्त्रज्ञः शासनेऽस्मिं मुनिर्वचे ॥

ध्रियते तथागते सिद्धिः उत्तमा क्षिप्रसिध्यते ।
मध्यकाले तथा सिद्धि मध्यमा तु उदाहृता ॥
युगान्तं कालमासाद्य अधमा सिद्धिरुच्यते ।
युगे शोभने काले वियत्योत्पतनं तथा ॥
सिद्धिश्च सर्वमन्त्राणां निर्दिष्टा लोकनायकैः ।
तदा काले जिनेन्द्राणां कुलाद्यं तत् प्रसिध्यति ॥
मध्ये पद्मकुले सिद्धिः युगान्ते वज्रकुलस्य तु ।
प्रणिधानवशात् केचित् मन्त्रा सिद्ध्यन्ति सर्वदा ॥
अवलोकितेशो मञ्जुश्री तारा भृकुटी च यक्षराट् ।
सर्वे माणिचरा यक्षा सिद्ध्यन्ते सर्वकालतः ॥

रागिणो ये च मन्त्राद्या प्रयुक्ता सर्वदैवतैः ।
सिद्ध्यन्ते कलियुगे काले लौकिका ये मुनिर्हिताः ॥

प्रोक्ता देवमनुजैः दानवेन्द्रैर्यक्षराक्षसैः ।
ऋषिभिर्गरुडैश्चापि पिशाचैर्भूतगणैर्ग्रहैः ॥
मानुषामानुषाश्चैव कामधातुसमाश्रितैः ।
महर्द्धिकैः पुण्यवद्भिश्च क्रूरकर्मैः सुदारुणैः ॥
शक्रब्रह्मतथारुद्रैः ईशानेन तथापरैः ।
विष्णुना सर्वभूतैस्तु मन्त्र प्रोक्ता महर्द्धिकाः ॥
तेऽपि तस्मिं युगान्ते वै सिद्धिं गच्छन्ति जापिनाम् ।
क्रूरकर्मे तथा सिद्धिः तस्मिं काले महद्भये ॥
वश्याकर्षणभूतानां क्रव्यादानां महीतले ।
दृश्यते निःफला सिद्धिः परलोकान्तगर्हिता ॥
अत एव जिनेन्द्रेण तस्मिं काले महद्भये ।
मञ्जुघोषसमादिष्टः सत्त्वानुग्रहतत्परः ॥
विनश्यन्ति तदा सत्त्वा मन्त्ररूपेण जापिनाम् ।
शासनेऽस्मिन् प्रसन्नानां त्रिरत्नेष्वेव पूजकामिति ॥

आर्यमञ्जुश्रियमूलकल्पाद् बोधिसत्त्वपिटकावतंस-
कात् महायानवैपुल्यसूत्रात् त्रिंशतिमः
विधिनियमकालपटलविसरः
परिसमाप्त इति ॥

---

अथ त्रयस्त्रिंशः पटलविसरः ।

अथ खलु भगवां शाक्यमुनिः सर्वावन्तं शुद्धावासभवनमवलोक्य, मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । त्वदीये मञ्जुश्रीकल्पराजे निर्दिशसमाख्याते धर्मधातुकोशतथागतगर्भधर्मधातुनिष्पन्दानुचरिते महासूत्रवररत्नपटलविसरे तथागतगुह्यवरमनुज्ञाते मन्त्रवधसाध्यमाने निमित्तज्ञानचिह्नकालप्रमाणान्तरितसाधनोपयिकानि सर्वभूतरुतविताानि असत्त्वसत्त्वसंज्ञानिर्घोपाणि भवन्ति ॥

शाब्दिकं ज्ञानं इत्युक्त अशाब्दिकं चैव कीर्त्यते ।
व्यतिमिश्रं तथा युक्तिमन्त्राणां त्रिविधा क्रिया ॥

दिव्यशब्दसमायुक्ता अनित्यार्थप्रयोजिता ।
अपशब्दापगता नित्यं संस्कारार्थार्थभूपिता ॥

अवाहिः सर्वसिद्धान्ते आर्यामन्त्राः प्रकीर्त्तिता ।
निरर्थं पदार्थहीनं तु तत् त्रिधा परिभिद्यते ॥

गुरुलघु तथा मध्यैः वर्णैश्चापि विभूपिता ।
सा भवेन्मन्त्रदेवी तु स्वरच्छन्दनिभूपिता ॥

संस्कृतासंस्कृतं वाक्यं अर्थानर्थ तथा परे ।
धात्वर्थां तथा युक्तिः गतिमन्त्रार्थभूपिता ॥

विकल्पबहुला वाचा मन्त्राणां सर्वलौकिका ।
एकद्विकवर्णं तु च्छन्दैः साम्वरिनालयः ॥

त्रिचतुःपञ्चपष्ठं वा सप्तमं वाष्टमं तथा ।
नवमं दशमं चैव वर्णानां सिद्धिरिष्यते ॥

दशाक्षरसमायुक्ता वर्णानां हेतुनाम् ।
यावद्दशगुणा ह्येते वर्णा दृश्यन्ति महीतले ॥

शताक्षरं विंशतिकं यावदेकाक्षरं भवेत् ।
एतत्प्रमाणैर्वर्णैस्तु ग्रथिता मन्त्रसम्पदा ॥

पदैश्चतुर्भिः संयुक्ता मन्त्रा सर्वार्थसाधकाः ।
ज्येष्ठाः प्रवरा ह्यार्या मन्त्रा ये जिनभापिताः ॥

ते तु मध्यमा अधमा + + तदा ।
तदात्मजैर्जिनपुत्रैस्तु भाषिता ते तु मध्यमा ॥
अधमा ये तु मन्त्रा ये भाषिता गर्वलौकिका ।
निकृष्टा कथिता मन्त्रा भाषिता नैर्ऋतैस्तु ये ॥
दशाष्टसप्तत्रिंशं वा यावदभ्यधिकं शतम् ।
एतत्प्रमाणं तु मन्त्राणां आर्याणां जिनभाषिताम् ॥
एकद्विकवर्णं तु सहस्राद्धं वर्णतो भवेत् ।
यावत्प्रमाणं तु मन्त्राणां बोधिसत्त्वैः प्रकाशिता ॥
तदक्षरे पदविन्यस्तं मन्त्रयुक्तिमुदाहिता ।
छन्दांसि स्वरयुक्तानां शास्त्रार्थार्थभूषिता ॥
वचनं सुप्रयुक्तं वै तन्त्रयुक्तिसमन्वितम् ।
भवेत् कदाचिकात् सिद्धिः शब्दस्वरवियोजिता ॥
मुद्रायुक्तं तु शब्दैस्तु मूर्ध्नादूष्मान्ततालुकैः ।
दन्तोष्ठकण्ठतः शब्दं विसृतं साधनं क्रिया ॥
अव्यक्तविनिवृत्तं तु सुप्रयुक्तमुदाहृतम् ।
सम्पूर्णं वाक्यतः शब्दं सम्प्रयुक्तः साधयिष्यति ॥
विधिभ्रष्टं क्रियाहीनं शब्दार्थैश्च वियोजितम् ।
मन्त्रं न सिद्ध्यते क्षिप्रं दीर्घकालमपेक्षते ॥
अवन्ध्यं तस्य सिद्धिस्तु न वृथा कारयो जपी ।
अन्यजन्मेऽपि दृश्यन्ते मन्त्रसिद्धिवरप्रदा ॥
तस्य मन्त्रप्रभावेन चिरकालाच्च जापिनाम् ।
अवन्ध्यं कुरुते कर्म समन्त्रा मन्त्रविदो जनाम् ॥
निकृष्टा सर्वमन्त्राणां लौकिका ये समानुपा ।
सर्वभूतैस्तु ये प्रोक्ता मन्त्रा ये च समत्सरा ॥
तेषां त्र्यक्षरा प्रोक्ता एकद्विकत्रिसङ्ख्यकम् ।
विविधैः म्लेच्छभाषैस्तु देवभाषप्रकीर्त्तितैः ॥
ग्रथिता पङ्क्तियुक्ताश्च व्यतिमिश्रा शब्दतः सदा ।
सहस्रं चाष्टशतं अष्ट च यावदेकं तु वर्णतः ॥

चतुःपादं पादार्द्धं तु गद्यपद्यं निगदितम् ।
श्लोकं दण्डकगात्रैस्तु गाथमकन्यकार्पाश्रितम ॥
प्रतिपक्षार्थयुक्तिश्च सहस्रतार्थभूषितम् ।
अपभ्रंशसंस्कृतं शब्दं अर्थहीनं विकल्पते ॥
अव्यक्तं व्यक्तहीनं तु मात्राहीनं तु युज्यते ।
गतिदेशविसंयोगान्मन्त्रसिद्धिस्तदुच्यते ॥

एतत् सर्वमन्त्राणां एष लक्षणः ।
शकारबहुला ये मन्त्रा ओंकारार्थभूषिता ॥
तकारलक्षणतन्त्रस्था सिद्धिस्तेषु ध्रुवं भवेत् ।
ओङ्कारा ये मन्त्रा मकारान्तविनिर्गताः ॥
शकारसहसंयुक्तादवन्ध्यं शोभनं तथा ।
तकारचतुरश्राकारा प्रत्याहारान्तरर्गिता ॥
तकारक्षी रेफसंयुक्ता समन्त्रं साधनक्रिया ।
द्विरेफबहुलं आद्यं हुङ्कारगुणमुद्भवम् ॥
वकारचतुरश्रान्ते वर्णा साधनक्षमा ।
ककारं रेफसंयुक्तं मकारान्तं गात्रमिश्रितम् ॥
मकारं नकारगाद्यं तु स मन्त्रः श्रेषु उच्यते ।
तकारबहुलं यत्र सर्वतन्त्रेषु दृश्यते ॥
स मन्त्रः सौम्यमित्युक्तो याम्यहुङ्कारभूषितम् ।
ऐन्द्रावायव्यमित्युक्तं भकारबहुलं तु यः ॥
वारुणः चकारमित्याहुः हितं लोके तु पौष्टिकम् ।
वकारबहुलो यो मन्त्रः माहेन्द्रं तत् प्रदृश्यते ॥
आद्यं त्रिरत्नगमनं यो मन्त्रः शरणं तथा ।
नमस्कारं प्रवर्तेत शान्तिहेतुं सुखावहम् ॥
तदन्यत् सर्वदेवानां नमस्कारार्थं प्रयुज्यते ।
स्वमन्त्रं मन्त्रनाथं च स मन्त्रः सार्वकर्मिकम् ॥

ढकारबहुलो यो मन्त्रः फट्कारार्थहुङ्कृतः ।
एते मन्त्रा महाक्रूरा तेजवन्तो महौजसा ॥

प्राणोपरोधिना सद्यः क्रूरसत्त्वसुयोजिता ।
तस्मान्न कुर्यात् कर्माणि पापकानि विशेषतः ॥

तं जापी वर्जयेद् यस्मात् मुनिभिर्वर्जिता सदा ।
उभयार्थेऽपि सिद्ध्यन्ते मन्त्रा शान्तिकपौष्टिका ॥

क्षणेन कुरुते सर्वे कर्मा यावन्ति भाषिता ।
सुजप्ता मन्त्रा होते तेजवन्ता महर्द्धिका ॥

शान्तिकानि च कर्माणि कुर्यात्तां जिनभाषितैः ।
पौष्टिकानि तु सर्वाणि कुर्यात् कोकनदे कुले ॥

कर्मा पापका सर्वे आभिचारे प्रयुज्यते ।
आभिचारुकसर्वाणि कुर्याद् वज्रकुलेन तु ॥

निषिद्धा लोकनाथैस्तु यक्षेन्द्रेण प्रकाशिता ।
सत्त्वानां विनयार्थाय मन्त्रमाहात्म्यमुद्भवम् ॥

कथितं त्रिप्रकारं तु त्रिकुलेष्वेव सर्वतः ।
ये तु अष्ट समाख्याता कुलाख्या मुनिना स्वयम् ॥

तेषु सिद्धिस्त्रिधा याता त्रिप्रकाराः समोदिताः ।
उत्तमा मध्यमा नीचा तत् त्रिधा परिभिद्यते ॥

शान्तिकं पौष्टिकं चापि आभिचारुकमिष्यते ।
केवलं मन्त्रयुक्तिस्तु तन्त्रयुक्तिरुदाहृता ॥

मन्त्राणां गतिमाहात्म्यं आभिचारुक युज्यते ।
एतत् कर्म निकृष्टं तु सर्वज्ञैस्तु गर्हितम् ॥

न कुर्यात् कृच्छ्रगतेनापि कर्म प्राणोपरोधिकम् ।
केवलं तु समासेन कर्ममाहात्म्यवर्णितः ॥

तन्त्रयुक्तविधिर्मन्त्रैः कर्मविस्तरविस्तरः ।
कर्मराजे इहोक्तं तु अन्यतन्त्रेषु दृश्यते ॥

न भेजे कर्महीनं तु गर्वमन्त्रेषु युक्तिमाप ।
यावन्ति लौकिका मन्त्रा सकला निष्फलास्तथा ॥

सर्वे लोकोत्तराश्चैव तेषामेव गुणः गता ।
असङ्ख्यं मन्त्रसिद्धिस्तस्य कर्म तत्र परिकीर्त्यते ॥

एकसङ्ख्यप्रभृत्यादि विंशमुक्तं तथापि तु ।
ततः त्रिंशत् समासेन चत्वारिंशं तु चापरम् ॥

ततस्त्रिगुणषष्टिं तु सप्तभिः सदृशं तथा ।
दशं चापरमित्याहु अशीतिसङ्ख्या तु चापरम् ॥

सदृशं नवतिमित्याहुः शतं पूर्णं दशापरम् ।
शतसङ्ख्या तु सङ्ख्याता तद्दशं सहस्रापरम् ॥

दशसहस्रमयुतं तु दशमयुतानि लक्षितम् ।
दशलक्षाविलक्षं तु विलक्षं दश कोटिम् ॥

++++++क्यो वै दशविकोट्योऽर्बुदो भवेत ।
दशार्बुदा निर्बुदः उक्तः तद्दशं खड्गमिष्यते ।

दशखड्गनिखड्गं तु दशनिखः खर्वमिष्यते
दश निखर्वा तथा पद्मः दशपद्मा महापद्मः ॥

दशपद्मानि विवाहस्तु दशविवाहांस्तथापराम् ।
महाविवाहस्तथा हस्तद्दशं मायमुच्यते ॥

तद्दशमायां महामायः महामायां दशापराम् ।
समुद्रं गणितज्ञाने निर्दिष्टं लोकनायकैः ॥

महासमुद्रं ततः पश्चाद् विंशार्द्धं परिमाणकं ।
महासमुद्रस्तथा ह्युक्तः सदृशं सागरं ततः ॥

महासागरमित्याहुर्विंशार्द्धेन प्रयुज्यते ।
महासागरा दश गुणीकृत्य प्रवरा ह्येवमुच्यते ॥

दशप्रवराण्युक्तः परेति तं प्रकीर्तितम् ।
दशपरे नामतोऽप्युक्ता अशेषं तु समुच्यते ॥

अशेषान्महाशेषं विशार्द्धेन गुणीकृतम् ।
तदसङ्ख्यं प्रमाणं तु कथितं लोकनायकैः ॥
सङ्ख्यां दश सङ्ख्यामित्याहु तदसङ्ख्यं गुणीकृतमिति ।
ततः परेणापि तथा + + + + + + + + + ॥

अमितात् सहस्रगुणितं तं लोकं परिकीर्त्यते ।
लोकात् परेण महाल्लोकं महाल्लोकाद् गुणीकृतम् ॥
ततस्संस्तमसमित्युक्तं तमसा ज्योतिरुच्यते ।
ज्योतिषो महाज्योत्स्ना गुणीकृत्य महाराशिस्तदुच्यते ॥

महाराश्या महाराशिरित्युक्ता राश्ये गम्भीरमुच्यते ।
गम्भीरा स्थिरमित्याहुः स्थिरात् स्थिरतरं व्रजेत् ॥
ततः परेण वहुमत्या बहुमतं स्थानमुच्यते ।
स्थानं स्थानतरं त्याहुः गणितज्ञानसूरताः ॥

महास्थानं ततो गच्छेन्महास्थानमितमिष्यते ।
मितान्मितसमं कृत्वा महार्थं तत् परिकीर्त्यते ॥
महार्था सुश्रुतस्थानं ततो गच्छेन्महार्णवम् ।
महार्णवात् प्रथमामित्याहुः प्रथमात् प्रथमतरं हि तत् ॥

प्रथमे श्रेष्ठमित्याहुः श्रेष्ठाज्ज्येष्ठान्तमुच्यते ।
ज्येष्ठान्मन्दिरसो नाम तदचिन्त्यं परिकीर्त्यते ॥
अचिन्त्य अचिन्त्याथिन्यतमं घोरं घोरात् राष्ट्रतमिष्यते ।
राष्ट्रात् परेण निध्यस्तो निध्यस्तपरतः शुभम् ॥

शुभात् परेण महाचेतः महाचेता चेतयिष्यते ।
चेतो चित्तविक्षेप अभिलाप्य तदुच्यते ॥

अभिलाप्या अनभिलाप्यास्तु विश्वरं च मुदाहृतम् ।
विश्वात् परेण महाविश्वः अस्वरं तु तदुच्यते ॥

अस्वरान्महास्वरस्थानं सर्वतोऽधिगर्वितस्तथा ।
श्रेयसं शान्तिमित्युक्तं स्थानं गणितपारगैः ॥

महाभूपस्ततो भूपः ओदकं तदिहोच्यते ।
ओदका चित्तविभ्रान्तं स्थानं चापरमुत्तमम् ॥

उत्तमात् परतो बुद्धा विषयं नाथगभूमिकाम् ।
अशक्यं मानुषाणां तु गणना लोककल्पनम् ॥

ततः परेण बुद्धानां गोचरं नापरं गतम् ।
बुद्धक्षेत्रं आसिकता गङ्गानद्यास्तु मुच्यते ॥

सम्भिद्य परमाणूनां कथयामास नायकाः ।
दृष्टान्तं क्रियते ह्येतत् तर्कज्ञानं तु गोचरम् ॥

हेतुना साध्यते द्रव्यं न शक्यं गणनापरैः ।
एतत्प्रमाणं सम्बुद्धा पर्युपास्ते मया पुरा ॥

तेषामाराधयित्वा मे कल्पेऽस्मिं तदचित्तके ।
एतावत्कालमपर्यन्तं बोधिसत्त्वोऽहं पुरा भवेत् ॥

सत्त्वानामर्थसम्बुद्धो बुद्धत्वं न समाविशेत् ।
तत्र तत्र मया तन्त्रा भाषिता कल्पविस्तरा ॥

एतत् कल्पवरं ज्येष्ठमेतद् बुद्धैस्तु भाषितम् ।
एतद् प्रमाणं सम्बुद्धैः कथितोऽहं पुरातनम् ॥

अधुना कुमार ! मया प्रोक्त अन्ते काले तु जन्मिके ।
यावन्ति लौकिका मन्त्रा कल्पराजाश्च शोभना ॥

लोकोत्तरा तथा दिव्या मानुष्या ससुरासुरा ।
सर्वेषां तु मन्त्राणां तन्त्रयुक्तिरुदाहृता ॥

सम्मतोऽयं तु सर्वत्र कल्पराजो महर्द्धिकः ।
तेषां कल्पविधानेन सिद्धिमायाति मञ्जुमाम् ॥

अनेनैव तु कल्पेन विधिना मञ्जुभाषिणा ।
तेषां सिद्धिमित्युक्ता सर्वेषां प्रभविष्णुना ॥

किं पुनर्मानुषे लोके ये चान्ये मन्त्रदेवता ।
सर्वे लोकोत्तरा मन्त्राः लौकिका महर्द्धिकाः ॥

अनेन विधियोगेन कल्पराजेन सिद्धिताम् ।
वसिता सर्वमन्त्राणां सर्वकल्पमुदाहृतम् ॥
सम्मतोऽयं तु मञ्जुश्रीः कल्पराजे इहोत्तमे ।
ये केचिच्छिल्पविज्ञाना लौकिका लोकसम्मता ॥
निमित्तज्ञानशकुनाः ज्योतिषज्ञानचिह्निताः ।
निमित्तज्ञानचरिता रुतावैव शुभाशुभा ॥
सर्वभूतरुतश्चैव चरितं चित्तचिह्नितम् ।
धातुरायतनं द्रव्यं + + + + + + + + ॥
इङ्गितं शकुनमित्याहुः खन्यधातुक्रिया तथा ।
गणितं व्याकरणं शास्त्रां शस्त्रं चैव क्रमो विधिः ॥
अध्यात्मविद्या चैकित्स्यं सर्वसत्त्वहितं सुखम् ।
हेतुनीति तथा चान्ये शब्दशास्त्रं प्रवर्त्तितम् ॥
छन्दभेदोऽथ गान्धर्वः गन्धयुक्तिमुदाहृताः ।
ते मया बोधिसत्त्वेन सत्त्वानामर्थाय भाषिता ॥
पुराहं बोधिसत्त्वोऽस्मिं सत्त्वानां हितकारणा ।
भाषिता ते मया पूर्वं संसारार्णववासिनाम् ॥
संसारगहने कान्तारे चिरकालं उषितो ह्यहम् ।
यथा वैनेयसत्त्वानां तथा तत्र करोम्यहम् ॥
यथा यथा च सत्त्वा ते हितं कर्म समादधेः ।
तथा तथा करोम्येषां हितार्थं कर्म शुभालयम् ॥
विचित्रकर्मभेदस्थाः सत्त्वानां हितयोनयः ।
विचित्रेन क्रियते तेषां विचित्रार्थयोनिदूषिता ॥
विचित्रकर्मसंयुक्ता विचित्रार्थां शास्त्रवर्णिताम् ।
तं तथैव करोम्येषां विचित्रां रूपसम्पदाम् ॥
अहं तथा वेषधारी स्या विचित्राङ्गं निजानिजाम् ।
हिताशयेन सत्त्वानां विचित्रं रूप निर्मिमे ॥

महेश्वरः शक्रब्रह्माद्यां विष्णुर्धनदनैर्ऋताम् ।
विचित्रां ग्रहरूपांस्तु निर्मितोऽहं तथा पुरा ॥

महाकरुणाविष्टमनसः सत्त्वानामाशयगोचरा ।
अनुपूर्व्या तु तेषां वै स्थापयामि शिवे पदे ॥

पर्यटामि संसारे दीर्घकालमपेक्षितम् ।
सत्त्वानामर्थनिष्पत्तिं मन्त्ररूपेण देशितम् ॥

अनुपूर्वं मतज्ञानं मन्त्रकल्पं प्रवर्तितम् ।
चिरा मे संसरता जन्मे बुद्धगोत्रे समागत ॥

न च मे विद्यते कश्चित् कर्ता वा स्वामिनोऽपि वा ।
नियतं गोत्रमाश्रित्य बुद्धोऽहं बोधिमुत्तमां ॥

क्षेमोऽहं निर्जरं शान्तं अशोकं विमलं शिवम् ।
प्राप्तोऽहं निर्वृतिं शान्तिं मुक्तोऽहं जन्मबन्धना ॥

अधुना प्रवर्तितश्चक्रः भूतकोटिसमाश्रित ।
दर्शयामेष कल्पं वै मन्त्रवादं सविस्तरम् ॥

न वृथा कारयेज्जापी कर्मकल्प सविस्तरम् ।
यावन्ति लौकिका मन्त्राः कल्पाश्चैवमुदाहृताः ॥

पूज्या मान्याश्च सर्वे ते अवज्ञा तेषां तु वर्जिता ।
नावमन्ये ततो मन्त्री तेषां कल्पानि विस्तरम् ॥

निमित्तं ज्ञानयुक्तिं च ज्योतिषज्ञानगोचितम् ।
न वृथा कारयेदेतां मङ्गलार्थमुदाहृताः ॥

दृष्टधार्मिकमेवं तु सिद्धिद्रव्यादिमीप्सितम् ।
सामिषं लोभनं सिद्धिस्तस्मात्मङ्गलमुच्यते ॥

प्रशस्ता जिनगाथाभिः स्वस्तिगाथाभिपूजितम् ।
प्रशस्तैर्दिवसैर्मुख्यैः सितपक्षे सुचिह्नितैः ॥

शुक्रग्रहवरे युक्ते मन्त्रसाधनमारभेत् ।
एवमाद्याः शुभा युक्ता अशुभांश्चापि वर्जयेत् ॥

मयैव कथितं पूर्वं तस्माद् ग्राह्या तु जापिभिः ।
यावन्ति केचिल्लोकेऽस्मिं ज्योतिषज्ञानकौशला: ॥

अन्ये वा तत्र कौशल्याः नीतिहेतुमहेतुकाः ।
न्यायशास्त्रसुसम्बद्धा सत्त्वानां हितकारया ॥

मयैव कथितं तत् सर्वं ग्राह्यते मन्त्रजापिभिः ।
सिद्धिहेतुरयं मार्गः दर्शितं तत्त्वदार्शिभिः ॥

सर्वं ह्यशेषसिद्धान्तं यथोक्तं मोक्षकारणम् ।
तेनैव कुर्यान्मन्त्राणां मार्गं सिद्धिकारणाः ॥

न वृथा कारयेज्जापी मन्त्रयुक्तिं ह्यशेषतः ।
सर्वे लौकिका मन्त्रा उत्तमाश्च प्रकीर्तिताः ॥

लोकोत्तरास्तथा दिव्या सर्वेष्वेव प्रयोजयेत् ।
न मिथ्यं कारये चित्तं न दूष्ये तत्र मनं कदा ॥

सर्वे पूज्यास्तु मन्त्रा वै समयज्ञः प्रकीर्तिताः ।
शासनेऽस्मिं तथा सास्तुः बुद्धानां समताहिते ॥

निर्दिष्टा जिनपुत्राणामाकृष्टाश्च प्रवेशिताः ।
मण्डले मुनिचन्द्राणां समयज्ञ इहोदिताः ॥

अवन्ध्यास्ते सदा मन्त्रैरानीता त्रिशनाशया ।
न नगे परमन्त्राणां नापि सावज्ञमाचरेत् ॥

अनार्या ये तु मन्त्रा वै अवन्ध्यास्ते परिकीर्त्तिता ।
यावन्ति लौकिका मन्त्रा अधरा जापसम्भवा ॥

सक्लेशा दृष्टमार्गान्ता अवन्ध्यास्ते तु जापिभिः ।
न वृथा कारये चित्तं कोपने रोषसंयुतम् ॥

रोचनं न चैव भक्तिं न कुर्यात् कर्म वृथाफलम् ।
तदायत्तं हि चित्तस्य न दद्यात् सचर्तिं क्वचित् ॥

एकमन्त्रस्तु युक्तिस्थः जपं नित्यं समाहितः ।
लभते फलमशेषं तु यथोक्तं विधिना विभैः ॥

निश्चलं तु मनः कृत्वा एकमन्त्रं तु तं जपेत् ।
एकचित्तस्य सिद्ध्यन्ते मन्त्राः सर्वार्थसाधकाः ॥
व्यस्तचित्तो हि मूढात्मा सिद्धिस्तस्य न दृश्यते ।
अशेषं फलनिःपत्तिं प्राप्नुयाद् विपुलां गतिम् ॥
नित्यशुद्धं मनो यस्य स श्राद्धस्येन शासने ।
रत्नत्रये च प्रसन्नस्य सिद्धिरिष्टा उदाहृता ॥ इति ।

आर्यमञ्जुश्रीमूलकल्पात् बोधिसत्त्वपिटकावतंसका-
न्महायानवैपुल्यसूत्रात् एकात्रिंशतिमः कर्मक्रिया
विधिनिमित्तज्ञाननिर्देशपटलवि-
सरः परिसमाप्तः ।

---

अथ चतुस्त्रिंशः पटलविसरः ।

अथ खलु भगवां शाक्यमुनिः पुनरपि तं शुद्धावासभवननिवासिनं लोकस्य मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । शृणु मञ्जुश्रीः ! त्वदीयमुद्रातन्त्रं मत्रहस्यं परमगुह्यतमं अप्रकाश्यमश्राद्धस्य तथागतशासने ऽनभिप्रसन्नं अप्रमयानुज्ञातत्रिरत्नवंशानुच्छेदनकरे अकल्याणमित्रपरिगृहीते पुण्यकामे दुष्टजनसम्पर्कव्यतिमिश्रिते पापमित्रपरिगृहीते दूरीभूते बुद्धधर्माणां निःफलीभूते कल्पेऽस्मिन्नाचार्यानुपदेशे अनभिषिक्त तत्र कुमार ! परमगुह्यतमे मण्डले अदृष्टसमये तथागतकुले अप्रसन्ने जने अप्रकाश्य सर्वभूतानां त्वन्मन्त्रानुवर्त्तिनां अश्राद्धां बुद्धधर्माणां दूरीभूतां हि बोधये ॥

न तस्या दापयेन्मुद्रां तन्त्रं चैव न दर्शयेत् ।
प्रमादान्मोहसम्मूढः लोभाद्वा यदि दापयेत् ॥
न सिद्ध्यन्ते तन्त्रमन्त्रा वै विपरीतस्य जापिनः ।
असान्निध्यं कल्पयेन्मुद्रां मन्त्राश्चैवमन्यथा ॥
सिद्धिं न लभते क्षिप्रंश्च शरीरेणापि हीयते ।
सौम्यानां श्राद्धचित्तानां समये तत्त्वदर्शिनाम् ॥
तन्त्रमन्त्रप्रवृत्तानां मुद्रातन्त्रं प्रकाशयेत् ।
त्रिरत्नपूजका ये च प्रसन्ना जिनशासने ॥
विधिप्रयोगदृष्टानां तेषां मुद्रा प्रकाशयेत् ।
बोधिचित्तविधिज्ञानां बोधिचित्तविभूषिताम् ॥
नित्यं बोधिमार्गस्था तेषां मुद्रां प्रकाशयेत् ।
तन्त्रमन्त्रप्रयुक्तानां समये दृष्टपरापराम् ॥
महाबोधौ प्रतिच्छन्नां तेषां मुद्रां प्रकाशयेत् ।
प्रसन्नानां जिनपुत्रेषु तेषु श्रावकखड्गिणाम् ॥
दृष्टधर्मफलं येषां तेषां मुद्रा प्रकाशयेत् ।
अविकल्पितधर्माणां श्राद्धानां गतिमत्पराम् ॥

शास्तुर्नैचनर्युक्तिज्ञां तेषां मुद्रां प्रकाशयेत् ।
मुद्रा मुद्रिता ह्येते प्रमाणस्था साष्टशतं तथा ॥

न चातिरिक्ता न चोनाश्च साक्षाद् बुद्धैः प्रकाशिताः ।
मञ्जुश्रियस्य कल्पे वै मन्त्रांशेन तत्परा ॥

साष्टं शतमित्युक्तं मन्त्राणां तत्परोदितानाम् ।
मुद्राश्चैव शताष्टं तु कथिता मुनिवरैः पुरा ॥

एतत्प्रमाणं तु कल्पस्य मुद्रामन्त्रसमुद्भवं ।
कोशं सर्वबुद्धानां मन्त्रकोशमुदाहृतम् ॥

मुद्रा मन्त्रसमोपेताः संयुक्ताः क्षिप्रकर्मिकाः ।
न चक्रेण विना स्यन्दं युक्तिमुत्पद्यते रथे ॥

तथैव सर्वमन्त्राणां मुद्रानर्जं न कर्मकृत् ।
मन्त्रा मुद्रसमोपेता संयुक्ता क्षिप्रकर्मिका ॥

सर्वमावर्त्तयं ह्येते त्रैलोक्यसमुरासुरम् ।
किं पुनर्मानुषे लोके अन्यकर्मेषु संस्कृते ॥

दृष्टधर्मफलो ह्येतां मुद्रामन्त्रेषु दृश्यते ।
संयुक्तः उभयतः शुद्धां विधियुक्तेन दर्शिता ॥

आवर्तयन्ति भूतानां जिनाग्राणां तु सम्मताम् ।
मन्त्रं मुद्रतपश्चैव त्रिधा कर्म करे स्थितम् ॥

सर्वथा सम्पदां कृत्स्नां प्राप्नुयाज्जापिनस्तथा ।
मन्त्राणां मुद्रिता मुद्रा मन्त्रैश्चापि मुद्रिता ॥

न मन्त्रं मुद्रहीनं तु न मुद्रा मुद्रवर्जिता ।
मुद्रा मन्त्रसमोपेता संयुक्ता सर्वकर्मिका ॥

अन्योन्यफला ह्येते अन्योन्यफलमुद्भवा ।
साधकैः युक्तिमायुक्ते न साध्यं कर्म न विद्यते ॥

सिध्यन्ते सर्वमन्त्रा वै मुद्रायुक्तास्तु रूपिणाम् ।
निर्दिष्टः प्रयुक्तस्तु मन्त्रं । । सर्वाद्भुतम् ॥

न सो विद्यति तत् स्थानं यत्राकृष्टो न सिद्ध्यति ।
मन्त्राख्या वीचिपर्यन्तं लोकधात्वगतिं तरम् ॥
यत्राविष्टो न चाकृष्टः असाध्यो यो न विद्यते ।
न सो संविद्यते कश्चित् सत्त्वो यो निवर्तितुम् ॥
महर्द्धिका बोधिसत्त्वापि आकृष्यन्ते विधिवादिता ।
अममत्वो बोधिसत्त्वापि दशभूमिसमाश्रिता ॥
रक्षाविधानभेत्तुं वा कर्मसिद्धि निवारितुम् ।
अधृष्यः सर्वभूतानां मन्त्रमुद्रसमास्रुताः ॥
सर्वभूतानां यो हि मन्त्रे समाश्रितः ।
मुद्रा प्रयोगयुक्ता वै एते रक्षासमुद्भवा ॥
उद्धृतिः सर्वमन्त्राणां सर्वमन्त्रेषु दृश्यते ।
मन्त्रातः सर्वमुद्राणां अन्योन्यसमासृताः ॥
रूपजापविधिर्मार्गे होमकर्मे प्रयुज्यते ।
अतो जात तथासिद्धिः मुद्रा मन्त्रेषु दृश्यते ॥
जापिनो नित्यमुद्युक्त सदा तेषु प्रतिष्ठितः ।
सिद्ध्यन्ते सर्वमन्त्रा वै अवन्ध्यं मुनिनां वचः ॥
वचनं सर्वबुद्धानां अन्यथाकारितं हितैः ।
। । । ।- । । । । मन्त्रतन्त्रेषु युक्तितः ॥
कारितं यैर्विधिमुक्ता अशेषं मन्त्रमुद्रया ।
एतत् कुमार! मञ्जुश्रीः! कथयामि पुनः पुनः ॥
अशेषमन्त्रमुक्तिस्तु मुद्रा तत्र हितोदयम् ।
तां वन्दे कल्पराजेऽस्मिं नैस्तारिकं फलसम्भवम् ॥
हितं गुह्यतमं लोके मुद्रातन्त्रं समुद्धितम् ।
ततोऽसौ युक्तिमां श्रीमां सहिष्णुर्बालरूपिणः ॥
ईषस्मितमुखो भूत्वा कुमारो विश्वसम्भवः ।
बोधिसत्त्वो महावीर्यः दशभूमिगमा तः ॥

प्रयच्छ मुनिनां श्रेष्ठं बुद्धमादित्यबान्धवम् ।
यद्येतत्कथितं लोके भगवन्मन्त्रकारणम् ॥

पूर्वकैरपि सम्बुद्धैः कथितं तत्पुरा मम ।
अधुना शाक्यसिंहेन किमर्थं सम्प्रकाशितम् ॥

एतन्मे संशयो जातः आचक्ष्व मुनिसत्तम ।
कलविङ्करुतो धीमां ब्राह्मगर्जितसम्भवः ॥

अब्रवीद् बोधिसत्त्वं तु दशभूमिप्रतिष्ठितम् ।
पुराहं बहुकल्पानि संसारे सरता मम ॥

लब्धोऽयं कल्पराजेन्द्रः मुनेः सङ्कुसुमाह्वयान् ।
तत्र तत्र मया सत्त्वा उपकारकृतं बहु ॥

करुणावशमागम्य प्रणिधिं च कृतं तदा ।
यदाहं बुद्धमग्रो वै सम्भवामि युगाधमे ॥

शासनार्थं कारित्वा वै धर्मचक्रानुवर्तिनं ।
अपश्चिमे च काले वै निर्वास्येऽहं यदा भुवि ॥

एतत्तु कल्पराजेन्द्रं निर्दिशेऽहं तत्रान्तिके ।
मयापि निर्वृते लोके शून्ये जम्बुसमाह्वये ॥

दुर्भूते तथा शास्तुः धर्मकोशे कलौ युगे ।
नाशनार्थं तु सत्त्वानां करिष्यन्त्येष कल्पराट् ॥

तत्रैव सम्प्रदत्तोऽयं कल्पराजा मतिव्रतः ।
सत्त्वानामर्थमुद्युक्तः तस्मिं काले भविष्यति ॥

अधर्मिष्ठास्तदा सत्त्वास्तस्मिं काले भयानके ।
अव्यवस्थस्थिता नित्यं राजानां दुष्टमानसाः ॥

मानुषामानुषाश्चापि सर्वे शासनविद्विषाः ।
नाशयिष्यन्ति मे सर्वे धर्मकोशं मयोदितम् ॥

तस्य विनयार्थाय मन्त्रकोशमुदाहृतम् ।
तवैतत् कुमार! प्रणिधानं पूर्वकल्पानचिन्तिताम् ॥

यावन्ति कानिचिद् बुद्धा वै निर्वृता लोकबान्धवा ।
तेषां शासनार्थाय करिष्यामि युगे युगे ॥

बालदारकरूपोऽहं विचरिष्यामि सर्वत ।
मन्त्ररूपेण सत्त्वानां विनेष्यामि तदा तदा ॥

एतत् कुमार! तुभ्यं वै प्रणिधानं पुरा कृतम् ।
तत् प्राप्तमधुना बाल! निर्देक्ष्यामि तेनैव ॥

शून्ये बुद्धक्षेत्रे अशरण्ये तदा जने ।
मन्त्ररूपेण सत्त्वानां बालिशस्त्वं समादिशेत ॥

विनेष्यासि बहूं सत्त्वां सर्वसत्त्वहितदारकः ।
वरदस्त्वं सर्वसत्त्वानां तस्मिं काले युगाधमे ॥

निर्वृते हि मया लोके शून्यीभूते महीतले ।
त्वमेव बालरूपेण बुद्धकृत्यं करिष्यसि ॥

महारण्ये तदा रम्ये हिमवत्कुक्षिसम्भवे ।
नद्या हिरण्यवतीतीरे निर्वाणं मे भविष्यतीति ॥

आर्यमञ्जुश्रियमूलकल्पात् बोधिसत्त्वपिटकावतंसका-
न्महायानवैपुल्यसूत्रात् द्वात्रिंशतिमः मुद्रा-
चोदनविधिमञ्जुश्रीपरिपृच्छा-
निर्देशपरिवर्तः पटल-
विसरः परिसमाप्तः ।

## अथ पञ्चत्रिंशः पटलविसरः ।

अथ खलु भगवान् शाक्यमुनिः पुनरपि शुद्धावासभवनमवलोक्य तथागतमहामुद्राकोशसंचोदनीं नाम समाधिं समापद्यते स्म । समनन्तरसमापन्नस्य भगवतः शाक्यमुने ऊर्णाकोशान्महारश्मिर्निश्चचार । अनेकरश्मिकोटीनियुतशतसहस्रपरिवारा सा रश्मिजाला अनेकां बुद्धक्षेत्रानवभासयित्वा सर्वबुद्धां सञ्चोद्य पुनरपि भगवतः शाक्यमुनेः ऊर्णाकोशेऽन्तर्हिता ॥

समनन्तरसञ्चोदिताश्च सर्वे बुद्धा भगवन्तः गगनस्वभावां समाधिं समापद्य शुद्धावासोपरि गगनतले प्रत्यस्थात् ॥

अथ भगवान् शाक्यमुनिः सर्वबुद्धानध्येष्य मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । शृणु मञ्जुश्रीः! मुद्राकोशपटलविधानं भविष्यसर्वबुद्धैरधिष्ठितम् ॥

अथ मञ्जुश्रीः कुमारभूतो भगवतश्चरणयोर्निपत्य सर्वबुद्धां प्रणम्य भगवन्तं शाक्यमुनिं तथागतमेतदवोचत् । तत् साधु भगवान् निर्दिशतु सर्वतथागतमुद्राकोशपटलं परमगुह्यतमं यस्येदानीं कालं मन्यसे तद् भविष्यति । बहुजनहिताय बहुजनसुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय हिताय सुखाय देवानां च मनुष्याणां च सर्वसत्त्वानां सुखोदयं भविष्यति सुखविपाकम् ॥

अथ भगवान् शाक्यमुनिः अध्येषितो भगवता मञ्जुश्रिया कुमारभूतेन सर्वबुद्धानवलोक्य सर्वसत्त्वां समन्वाहृत्य सर्वबोधिसत्त्वां सम्प्रहृष्य सर्वमलोकयुद्धार्थश्रावकां सम्प्रकाश्य सर्वमन्त्रमन्त्रार्थयुक्तानां सम्प्रयुज्य सर्वदुष्टां निवार्य सर्वभूतानां समाश्वास्य सर्वव्यसनकष्टां क्षेमे शिवे निर्वाणे प्रतिष्ठाप्य सर्वदुःखितानां सुखार्थाय मुद्रापटलविधानं भाषते स्म ॥

शृणु कुमार ! मञ्जुश्री ! वक्ष्येऽहं पटलमुद्रिताम् ।  
आद्या पञ्चशिखा भवति महामुद्रा तु सा मता ॥

त्रिशिखं द्वितीयं विन्द्या तृतीयं एकचीरकम् ।  
चतुर्थं उत्पलामित्याहुः सम्बुद्धाः द्विपदोत्तमाः ॥

पञ्चमः स्वस्तिको दृष्टः पष्ठं ध्वज उच्यते ।
सप्तमं पूर्णमित्याहुः मन्त्रज्ञानसुशोभनाः ॥

अष्टमं यष्टिनिर्दिष्टा लोकनाथैर्जितारिभिः ।
नवमं छत्रनिर्दिष्टं दशमं शक्तिरुच्यते ॥

एकादशं तु सम्बुद्धा सम्पुटं तु समादिशेत् ।
द्वादशं फणमित्युक्तो त्रयोदशं तु गदस्तथा ॥

चतुर्दशं खड्गनिर्दिष्टा घटा पञ्चादशस्तथा ।
षोडशः पाशमित्युक्तः अङ्कुशः सप्तदशः स्मृतः ॥

अष्टादशं भद्रपीठं तु ऊनविंशतिपीठकम् ।
विंशन्मयूरासनः प्रोक्तो एकविंशस्तु पट्टिशम् ॥

एकलिङ्ग द्विविंशं तु द्विलिङ्गो विंशसत्रिकम् ।
चतुर्विंशस्तथा माला पञ्चविंश धनुस्तथा ॥

विंशत्षष्टाधिकं प्रोक्तं नाराचे तु प्रकल्पिता ।
सप्तविंशतिमित्याहुः सप्तलिङ्गे प्रवर्त्तिता ॥

अष्टाविंशस्तथा शूलः ऊनत्रिंशश्च मुद्गरः ।
तोमरं त्रिंशमित्याहुः एकत्रिंशं तु दक्षिणम् ॥

द्वात्रिंशत् तथा चक्रः त्रयस्त्रिंशत् पद्ममुच्यते ।
चतुस्त्रिंशस्तथा कुम्भः पञ्चत्रिंशे तु खर्परम् ॥

कलशं षट्त्रिंशतिः प्रोक्ता सप्तत्रिंशे तु मौशलम् ।
अष्टत्रिंशे तु पर्यङ्कः ऊनचत्वारिंशत पङ्कजम् ॥

चत्वारिंशतिमित्याहुः धर्मशङ्खमुदाहृतम् ।
चत्वारिंशे स एकं च शङ्खला परिकीर्तिता ॥

द्वितीया बहुमता प्रोक्ता तृतीया समनोरथा ।
चतुर्थी जननी दृष्टा प्रज्ञापारमिता मिता ॥

पञ्चमं पात्रमित्याहुः सम्बुद्धा द्विपदोत्तमाः ।
तोरणं षष्ठमित्युक्तः सप्तमं तु सुतोरणम् ॥

अष्टमं घोषनिर्दिष्टः जपशब्दो नवमः पुनः ।
पञ्चाशद् भेरिमित्युक्ता धर्मभेरी तु साधिका ॥
द्विपञ्चाशद् गजमित्याहुः वरहस्तत्रिकस्तथा ।
चतुःपञ्चाशमिति ज्ञेयं मुद्रा तद्व्रतचारिणी ॥
पञ्चमं केतुमित्याहुः षष्ठं चाशशरस्तथा ।
सप्तमं परशुनिर्दिष्टं अष्टमं लोकपूजिता ॥
ऊनषष्टिस्तथा ज्ञेया भिण्डिपालं समागतः ।
षष्टिश्चैव भवेद्युक्ता लाङ्गलं तु समासतः ॥
एकषष्टिस्ततः पद्मः द्विषष्टिः वज्रमुच्यते ।
त्रिषष्टिः कथितं लोके धर्मचक्रं प्रवर्तितम् ॥
चतुःषष्टिस्तथा ज्ञेयः पुण्डरीकं समासतः ।
पञ्चषष्टिस्तथा विन्द्याद् वरदं मुद्रमुत्तमम् ॥
षट्षष्टि तथा बध्वा वज्रमुद्रा तु कीर्तिता ।
सप्तषष्टिस्तथा लोके कुन्तमाहुर्मनीषिणः ॥
अष्टषष्टिस्तथा कुर्याद् वज्रमण्डलमुदाहृतम् ।
ऊनसप्ततिमेवं स्यात् शतघ्नेति प्रकीर्तिता ॥
ततः सप्ततिकं विन्द्यान्नादामुद्रं समासतः ।
एकसप्ततिमित्याहुर्विमानं मुद्रवरं शुभम् ॥
द्विसप्तत्या समासेन स्यन्दनं स इहोच्यते ।
शयनं लोकनाथानां त्रिसप्तत्या समागतः ॥
पञ्चसप्ततिराख्यातश्चतुःसप्ततिकस्तथा ।
अर्धचन्द्रं च वीणा च उभौ मुद्रावुदाहृतौ ॥
षट्सप्ततिमं लोके मुद्रा पद्मालया भवेत् ।
सप्तसप्ततिमः श्रेष्ठः मुद्रा कुवलयोद्भवा ॥
अष्टसप्ततिमं मुद्रा नमस्कारेति उदाहृता ।
नवमं नवतिसङ्ख्या तु उभौ मुद्रौ शुभोत्तमौ ॥

सम्पुटं युगलमुद्रा च सङ्ख्यया नवतिमं भवेत् ।
एकनवतिमित्याहुः पुष्पमुद्रा उदाहृताः ॥
द्वितीया वलयमुद्रा तु तृतीया धूपयेत् सदा ।
चतुर्थी गन्धमुद्रा तु पञ्चमी दीपना स्मृता ॥
षष्ठ्या साधनं विन्यात् सप्तम्या आसने स्मृता ।
अष्टममावाहनं प्रोक्तं नवमं तु विसर्जनम् ॥
शतपूर्णस्तथा विन्यात् मुद्रां सर्वकर्मिकाम् ।
साधिकं शतमित्याहुर्महामुद्रा इति स्मृताः ॥
उष्णीषं लोकनाथानां चक्रवर्ति सदा गुरोः ।
तं मुद्रं प्रथमतः प्रोक्ता द्वितीया सितमुद्भवा ॥
तृतीया मूलमुद्रा तु मञ्जुघोषस्य दृश्यते ।
चतुर्थी धर्मकोशस्था धर्ममुद्रेति लक्ष्यते ॥
पञ्चमी सङ्घमित्याहुर्महामुद्रापि सा भवेत् ।
षष्ठी तु भूतशमनी प्रत्येकार्हमुद्भवा ॥
सप्तमी बोधिसत्त्वानां दशमी तु प्रयोगिनाम् ।
मुद्रा पद्ममालेति महामुद्रां तु तां विदुः ॥
वरदा सर्वमुद्राणां मन्त्राणां च सलौकिकाम् ।
महाप्रभावां महाश्रेष्ठां ज्येष्ठां त्रैलोक्यपूजिताम् ॥
अष्टमीं सम्प्रयुञ्जीत मुद्रां त्रिभुवनालयाम् ।
मुद्राणां कथिता सङ्ख्या अस्मिं तन्त्रे महोद्भवा ॥
शतमेकं तथा चाष्टं सङ्ख्यामुद्रेषु कल्पिता ।
एतत्प्रमाणं तु सम्बुद्धैः पुरा गीतं महीतले ॥
निर्दिष्टे शासने शास्तुः प्रचरिष्यति देहिनाम् ।
आदौ तावत् करे न्यस्तमुभयाग्रां करे स्थितौ ॥
अन्योन्याङ्गुलिमावेष्ट्य सन्मिश्रां च पुनस्ततः ।
उभौ करौ समायुक्तौ पञ्चचलासुचिह्नितौ ॥

विपर्यस्तस्तनस्तेषामङ्गुलीनां तु अग्रतः ।
मुद्रा पञ्चशिखा ज्ञेया पञ्चचीरकमेव तु ॥

महामुद्रेति विख्याता चापि पञ्चशिखस्तथा ।
महाप्रभावो मुद्रोऽयं प्रयुक्तः सर्वकर्मिकः ॥

मञ्जुश्रियस्य मन्त्रेण हृदयेनापि योजयेत ।
केशिन्या चैव मन्त्रेण मूलमन्त्रेण वा सदा ॥

योजयेद् विधिदृष्टेन सर्वमन्त्रेषु वा पुनः ।
कुर्यात सर्वाणि कर्माणि अवन्ध्येदं वचनं मुनेः ॥

तथैव हस्तौ विन्यस्तौ कुर्यात् तत्करसम्पुटम् ।
तत्रैव त्रिशिखं कुर्यादङ्गुलीभिर्विमिश्रितैः ॥

उभौ हस्तौ तु यदाङ्गुष्ठौ शून्याकारौ तु निश्रितौ ।
मध्यमानामिकं चैव विपरीताकारयोगिकौ ॥

एतत् तत् त्रिशिखं ज्ञेयं त्रिचीराकार इति पुनः ।
एषा मुद्रा महामुद्रा मञ्जुघोषस्य धीमतः ॥

कुर्यात् सर्वाणि कर्माणि विधिदृष्टानि यानि वै ।
मञ्जुश्रियस्य ये मन्त्रास्तेषु सर्वेषु योजयेत ॥

क्षिप्रं साधयते ह्यर्थां जापिभिर्जन्मतापिनम् ।
तदेव हस्तौ विन्यस्तौ कुर्यादेकशिखं तथा ॥

मध्यमाङ्गुलिसंश्लिष्टौ भवेदेकशिखा ध्रुवम् ।
एषा मुद्रा महामुद्रा सम्बुद्धैस्तु प्रकाशिता ॥

मन्त्रा कुमारसन्यस्ता ये चान्येऽपि सलौकिका ।
सिद्ध्यन्तेऽनेन युक्तास्तु क्षिप्रकर्मप्रसाधिका ॥

अनेन साध्यास्तथा मन्त्रा उत्तमा जिनभाषिता ।
क्षिप्रं साधयते ह्यर्थां विधिदृष्टेन कर्मणा ॥

तदेव करसंयुक्तौ विन्यस्तं अङ्गुलीचितम् ।
उभौ तर्जन्य सङ्कोच्य सूच्यादञ्जलिमादृशम् ॥

विन्यस्ताङ्गुष्ठयुगले मध्याङ्गुल्यौ प्रसारितौ ।
अनामिकां वेष्टयित्वा तु उत्पलेति उदाहृतम् ॥
एषा बोधिसत्त्वस्य मूलमन्त्रेति लक्ष्यते ।
तदेव सर्वं यत कर्म निर्दिष्टं पञ्चचीरके ॥
सर्वं तत् कुर्यात् क्षिप्रं उत्पलेन तु साधयेत् ।
एषा वरदा मुद्रा क्षिप्रभोगप्रसाधिका ॥
संयुक्ता मूलमन्त्रेण क्षिप्रमर्थकरी भवेत् ।
उभौ करौ तथा युक्तौ कुर्यादुत्तानकौ सदा ॥
तदेव सम्पुटं कृत्वादङ्गुलीभिः समन्ततः ।
विन्यस्तं शोभनाकारं स्वस्तिकाकारसम्भवम् ॥
मध्यमाङ्गुलिमध्ये तु कन्यसौ तु समा भवेत् ।
अङ्गुष्ठयुगलविन्यस्तं मुद्रा स्वस्तिकमुच्यते ॥
एषा सर्वार्थकरी मुद्रा शान्तिकर्मे प्रयुज्यते ।
हृदयैः षडक्षरैर्युक्ता सर्वकर्मा करोति वै ॥
तदेव हस्तौ सम्मिश्र अन्योन्याङ्गुलिमिश्रितम् ।
पूर्णमुद्रेति मित्याहुर्गतिज्ञानविशेषगाः ॥
आकोशादञ्जलिं कृत्वा विरलं च समन्ततः ।
पूर्णमुद्रेति सम्बुद्धाः कथयामास जापिनाम् ॥
एषा सर्वशमनी दुःस्वदारिद्रदुःखिताम् ।
धनाढ्यं कुरुते क्षिप्रं मूलमन्त्रसमन्विता ॥
अपरं मुद्रमित्याहुः लोकज्ञानसुचेष्टिताः ।
उभौ हस्तौ तथा कृत्वा वामतर्जनिमाश्रितम् ॥
दक्षिणं तु करं कृत्वा तस्य मङ्गुलितस्थितम् ।
तर्जन्या मध्यमा चैव विसृतं ध्वजमुच्यते ॥
ध्वजमुद्रा इति ख्याता उच्छ्रिता शक्रधारणी ।
अनया मुद्रया कुर्याद् बलिहोमादिकं क्रमम् ॥

सर्वकर्मकरा ह्येषा मूलमन्त्रप्रचोदिता ।
तदेव हस्तौ विन्यस्तौ अङ्गुल्याकारसम्पुटौ ।

सम्पुटा सा भवेन्मुद्रा सर्वविघ्नप्रणाशनी ।
क्रमेण कुरुते कर्म मन्त्रज्ञानप्रणोदिता ॥

विधिदृष्टेन मन्त्रा वै क्षिप्रमर्थप्रसाधिका ।
मन्त्रैर्मन्त्रज्ञयोगस्य हृदयस्थानसंयुक्तैः ॥

संयुक्ता कुरुते कर्म अशेषां लोकनिन्दिताम् ।
तदेव हस्तौ विन्यस्तौ नागदन्तोपरि स्थितम् ॥

दक्षिणं तर्जनीं गृह्य वामं तर्जनिमुष्टिना ।
एषा यष्टिरिति ख्याता मुद्रा शत्रुनिवारणी ॥

सर्वां समयते विघ्नां दारुणानतिभैरवान् ।
सर्वदुष्टवधार्थाय निर्दिष्टा मन्त्रजापिनाम् ॥

मूलमन्त्रसमोपेता क्षिप्रमर्थकरा भवेत् ।
तदेव हस्तं विन्यस्तं घण्टाकारसमुच्छ्रितम् ॥

दक्षिणं तु करं कृत्वा विसृतं छत्रमुन्नतं ।
अनेन मुद्रया कुर्यादात्मरक्षां तु मन्त्रिणः ॥

सर्वमन्त्रैस्तु कुर्वीत कर्म रक्षाभिचारकम् ।
शत्रूणां छादयेत् वक्त्रं स्तम्भयेद्वा मनीषितम् ॥

यथाभिलषितां दुष्टां कारयेद्वा यथानुगाम् ।
नश्यन्ते सर्वविघ्ना वै दृष्ट्वा मुद्रां गरुत्मकाम् ॥

तदेव हस्तौ कुर्वीत लिङ्गस्याकारसंस्थानम् ।
अङ्गुष्ठाग्रयुक्तं तु मध्यमाङ्गुलिगामिनम् ॥
अनामिकाकुञ्चिताग्रं तु मध्यपर्वं तु मध्यमम् ।

तदेव शक्तिनिर्दिष्टा सर्वदुष्टनिवारणी ॥
कथिता लोकनाथैस्तु रक्षा सग्रहनाशनी ।
त्रि[illegible]ना :परांजन समान्तेन तु रोपिणा ॥

कुर्यात् क्षिप्रतरं लोके दारुणं पापमुत्तमम् ।
प्राणोपरोधिनं कर्म सर्वबुद्धैस्तु वर्जितम् ॥

न कुर्यात् कर्ममेतं तु निषिद्धं लोकमुत्तमैः ।
अतः सर्वगतैर्मन्त्रैः योजयेच्छ्वितमुत्तमम् ॥

लौकिका ये च मन्त्रा वै तथैव जिनभाषिता ।
तां प्रयुञ्जीत मुद्रेऽस्मिं शक्तिना सुसमाहितः ॥

दृष्ट्वा मुद्रवरं घोरं नश्यन्ते सर्वनैर्ऋता ।
पिशाचास्तारकामेता पूतना सह मातरा ॥

बालाग्रहाविरूपाश्च बालकानां प्रपीडना ।
नश्यन्ते सर्वदुष्टा वै ये केचित् क्रूरकर्मिणाः ॥

तदेव हस्तं विन्यस्तं शक्तिकाकारसम्भवम् ।
विपरीतसम्पुटाकारं अन्योन्याङ्गुलिमिश्रितम् ॥

तदेव सम्पुटमित्याहुः सम्बुद्धा विगताद्विषा ।
अनेन कारयेत् कर्म मन्त्रेणैकाक्षरेण तु ॥

पिथयेत् सर्वविदिशां कृत्स्नां दिशाबन्धं तदुच्यते ।
एष मुद्रा महारक्षा सम्पुटीकृत्य तिष्ठति ॥

नश्यन्ते सर्वदुष्टा वै ये चान्ये अहितानि वै ।
देहं रक्षयते सर्वं परिवारं चापि गोचरे ॥

अशेषं रक्षते चक्रं यत्र जापी वसेत् सदा ।
न तस्य पातकं किञ्चित् अहितं चापि सम्भवेत् ॥

क्षेमं सुभिक्षमारोग्यं परचक्रभयं कुतः ।
उभौ करौ समाश्रित्य विपरीतं तु कारयेत् ॥

दक्षिणं तु अधः कृत्वा वाममुत्तानकः सदा ।
अन्योन्यमिश्रितौ तौ करमित्याहुर्जिनोत्तमाः ॥

निवारयति दुष्टानामरीणां पापसम्भवम् ।
उपहृत्याक्षरैर्युक्ता रिद्धि + + + + + + ॥

एकवर्णकैः स मन्त्रैर्युक्तः क्षिप्रमर्थकरं नागम् ।
विचित्रार्थां कुरुते कर्मां अभिचारकपापकाम् ॥
भोगिनां विषनाशं च मूलमन्त्रप्रयुक्तिका ।
अन्यां वा युक्तिकृतां दोषां निर्नाशयति देहिनाम् ॥

एष मुद्रवरः प्रोक्तः सम्बुद्धैर्द्विपदोत्तमैः ।
तदेव हस्तौ विन्यस्तौ संश्लिष्टावङ्गुलीभि तत ॥
गदाकारं तदा कुर्यान्मूलेनापि वेष्टितम् ।
उभयोरङ्गुष्ठयोर्मध्ये कन्यसीभि सुवेष्टितम् ॥
षड्भिरङ्गुलिभिः कुर्यात शून्याकारं सुशोभनम् ।
एतन्मुद्रा गदः प्रोक्ता सर्वदानवनाशनी ॥
दैत्या च दुष्टचित्ताश्च सौम्यचित्ता तु दर्शने ।
नश्यन्ते उच्यते मुद्रे गदे वापि सुपूजिते ॥

मूलमन्त्रप्रयुक्तास्तु क्षिप्रमर्थकरी शिवा ।
तथैव खड्गनिर्दिष्टा अनामिकाग्रैः सुकोचितैः ॥
तथैव हस्तौ कुर्वीत प्रसारिताग्रं तु कुञ्चितम् ।
शरावाकारसमौ कृत्वा अङ्गुलीभिः समन्ततः ॥

घण्टां तां विदुर्बुद्धाः प्रकाशयामास देहिनाम् ।
तदेव हस्तौ सम्मिश्रा उभौ बध्वा तु सम्पुटम् ॥
अन्योन्यं मिश्रयित्वा वै मध्यमाङ्गुलिभिस्तथा ।
कुर्यात्तन्मण्डलाकारं पाशाकारं तु त भवेत् ॥
तर्जनीति ततो न्यस्तं मध्यपर्वा सुशिश्रितैः ।
एष पाशमिति ख्यातः मुद्राग्रं बुद्धनिर्मितः ॥
विनेयार्थं तु सत्त्वा बन्धमुक्तोऽतिदारुणम् ।
ये च दुष्टा ग्रहाः क्रूरा ये वै सर्वराक्षसाः ॥

ईषित् प्रचोदिता ज्ञेया बध्नातीह समानराम् ।
बन्ध बन्धेलादा मुक्ता बध्नातीह गणकनाम ॥

किं पुनर्मानुषे लोके क्रव्यादां पिशिताशिनाम् ।
तदेव हस्तौ विन्यस्तौ उभौ कृत्वा तु तत्समौ ॥

वामपाणोपरि न्यस्तं दक्षिणं तु करं तथा ।
तदेव अङ्कुशाकारं मध्यमाङ्गुलितर्जनी ॥

मध्यमं पर्वमाश्लिष्य तर्जनी कारयेदङ्कुशम् ।
मूलमन्त्रप्रयुक्तोऽयमङ्कुशोऽयं प्रचोदितः ॥

क्षिप्रं कारयते कर्मा जापिभिर्जन्मनीपितम् ।
आनयेत् क्षिप्र देवेन्द्रां ब्रह्माद्यां सशक्रकाम् ॥

प्रयुक्तो मुद्रवरः श्रेष्ठः अङ्कुशाकर्षणं शुभः ।
तदेव हस्तौ सम्मिश्रविपरीताकारपिण्डिकम् ॥

मध्यमानामिकौ नाम्य अङ्गुल्यौ वामकरासृतौ ।
तर्जनी कन्यसां चापि उभौ तर्जन्यदक्षिणा ॥

दक्षिणा हस्तनिर्दिष्टा मध्यमानामिकनामितौ ।
विपर्यस्त ततो न्यस्तं श्लिष्टौ अङ्गुष्ठकारितौ ॥

तदेव भद्रपीठं तु कथिता मुद्रवरा शुभा ।
आसनं सर्वबुद्धानां कुद्रशक्रनिवारणम् ॥

योजिता सर्वमन्त्रैस्तु जिनाग्राणां कुलसम्भवैः ।
स्थापिता सर्वबुद्धानां बोधिसत्त्वां महर्द्धिकाम् ॥

सदेवकं च लोकं वै सर्वा निश्चलकारिका ।
तदेव भद्रपीठं तु मध्यमाङ्गुलिमाश्रिताम् ॥

उपरिस्थानविन्यस्तौ मध्यानामिति शारितौ ।
तदेव पीठनिर्दिष्टा मुनिसिंहैर्जितारिभिः ॥

उभौ हस्तौ तथोन्मिश्र अङ्गुलीभिर्विवेष्टयेत् ।
ततो वेणिसमाधश्च कन्यसाङ्गुलिसूचिकाम् ॥

सङ्कोच्य मध्यमतः क्षिप्रं पद्मपत्रायतोद्भवाम् ।
उभयोरङ्गुष्ठयोन्मिश्रः स्थापयेत स्थितकं सदा ॥

एतन्मयूरासनं प्रोक्तं सम्बुद्धैर्जिनवर्णितैः ।
एतद् बोधिसत्त्वस्य मञ्जुघोषस्य धीमतः ॥
आसनं मुनिवरैर्युक्तं नाल्पकीर्तितं सदा ।
महाप्रभावा इयं मुद्रा पुरा प्रोक्ता स्वयम्भुभिः ॥
करोति कर्मवैचित्र्यं मञ्जुमन्त्रप्रचोदिता ।
विनाशयति दुष्टानां क्रव्यादा पिशिताशिना ॥
परिपूर्णं तथा त्रिंशन्मुद्राणां तु शतः परम् ।
कथिता लोकमुख्यैस्तु सम्बुद्धैर्द्विपदोत्तमैः ॥

अतः परं प्रवक्ष्यामि मुद्राणां विधिसम्भवम् ।
करैः शुभैस्तथा शुद्धैः निर्मलैर्जलशोधितैः ॥
श्वेतचन्दनकर्पूरैः कुङ्कुमैर्जलमिश्रितैः ।
बहुभिर्गन्धविशेषैस्तु उपस्पृश्यानिलशोषितैः ॥
शुचिभिः करैरभ्यग्रैरङ्कुशैश्चापि अदहूलैः ।
तदेव मुद्रां बध्नीयाद् वन्द्याद्यां द्विपदोत्तमाम् ॥
शालं सङ्कुसुमं चैव अमिताभं रत्नकेतुनम् ।
अमितायुर्ज्ञानविनिश्चयेन्द्रं लोकनाथं दिवङ्करम् ॥
क्षेमं लोकनाथं च सुनेत्रं भगकेतुनम् ।
प्रभामालीति विख्यातं ज्येष्ठं श्रेष्ठमितोत्तमम् ॥
एतेषामन्यतरं बुद्धं वन्दित्वा द्विपदोत्तमम् ।
शुचिर्भूत्वा शुचिस्थाने बध्येन्मुद्रां जपान्तिके ॥
आचार्यो तु यं दृष्टा सन्देहार्थं विमुच्यते ।
तं तथाचारसम्पन्नो बध्येन्मुद्रां यथासुखम् ॥
संशोध्य च विविक्तं वै कृत्वा स्थानाभिमन्त्रितम् ।
न क्रुद्धो न चोच्छिष्टो न चाकृष्टो परेण तु ॥
नाङ्गारे न भस्मनिर्मध्ये बध्येन्मुद्रां कदाचन ।
न सक्तः परदारेषु परद्रव्येषु वै तदा ॥

न स्थितो न निपन्नश्च बन्धेन्मुद्रां सुखोदयाम् ।
न दक्षिणामुखमास्थाय नापि पश्चान्मुखोत्थितः ॥

न चोर्ध्वे नाप्यधश्चैव मुद्राबन्धं तु कारयेत् ।
उदङ्मुखः पूर्वतश्चापि विदिशेष्वेतेषु तेषु वै ॥

बन्धयेन्मुद्रमन्त्रज्ञः मन्त्रं स्मृत्वा तु चक्रिणम् ।
एषा विधिमतः श्रेष्ठा सर्वमुद्रेषु बन्धने ॥

अत ऊर्ध्वं प्रवक्ष्यामि मुद्रा साधिकविंशमम् ।
उभौ करौ समायुक्तौ कुर्यादङ्गुलिमिश्रितौ ॥

मध्यमं तु ततः शून्यं अङ्गुलीभिः समादिशेत् ।
मध्यपर्वविधिन्यस्तं शून्याग्रं कन्यसीभितम् ॥

कारयेन्नित्यमन्त्रज्ञो अङ्गुष्ठौ कुञ्चिताश्रितौ ।
त्रिशून्याकारसंयुक्तौ पट्टिशं विदुर्बुधाः ॥

एष मुद्रवरः क्षिप्रं परमन्त्रांसि च्छिन्दिरे ।
परमुद्रां तथा भिन्द्यात् दुष्टसत्त्वनियोजिता ॥

त्राशयेत् सर्वभूतानां ग्रहमातरपूतनाम् ।
करोति कर्मवैचित्र्यं क्षिप्रमानयते शिवम् ॥

रुद्रेण भाषिता ये मन्त्रा विष्णुना ब्रह्मणा स्वयम् ।
तां विच्छेद मन्त्रज्ञो विधिदृष्टेन कर्मणा ॥

मुद्रेणानेनैव युक्तेन पट्टिशेन महात्मना ।
मन्त्रेण चैव युक्तस्थो जिनवक्त्रसमुद्भवैः ॥

करोति कर्मवैचित्र्यं छेदभेदक्रियां तथा ।
परसत्त्वकृतां दुष्टां नाशयेत् तामशेषतः ॥

तदेव हस्तौ संवेष्ट्य मध्यानामिकमुच्छ्रितौ ।
उभौ करौ समायुक्तौ लिङ्गाकारसमुद्भवौ ॥

चतुरङ्गुलसंयुक्त लिङ्गमुद्रमिति मतम् ।
महेश्वरो देवपुत्रो वै आत्ममन्त्रं च मुद्रिणम् ॥

कथयामास तन्त्रे वै आकृष्टो मुनिना पुरा ।
अन्येषां चात्मनो मन्त्रां मुद्रां चैव सविस्तराम् ॥

प्रकाशयामास आकृष्टः समयेऽस्मिं कल्पमुत्तमे ।
एतन्मुद्रवरं ह्यग्रं लौकिकेषु प्रकथ्यते ॥

यावन्ति केचिन्मन्त्रा वै रुद्रप्रोक्ता महीतले ।
तेषामधिपतिर्ह्यग्रो मुद्रोऽयमेकलिङ्गितः ॥

बोधिसत्त्वप्रभावेन मञ्जुघोषस्य धीमतः ।
आनीतो मण्डले + + नौम कर्मप्रसाधकः ॥

यावन्ति केचिद् दुष्टा वै पर्यटन्ते महीतले ।
ग्रहाः क्रव्यादपिशिताश्च मातराः कटपूतना ॥

तेषां निवारणार्थाय रुद्रविघ्नकृतेषु वै ।
पुनरेतन्मुद्रवरं युक्तं बलिकर्मेषु वै निशा ॥

करोति सर्वकर्मां वा मुद्राधिष्ठानकल्पया ।
तथैव तद्विधं कृत्वा द्विलिङ्गसमुदाहृतः ॥

तथैव मालमङ्गुल्यै स माला परिकीर्तिता ।
तदेव मालां सङ्कोच्य सम्पुटाकारसम्भवम् ॥

तर्जन्यावुभौ श्लिष्य कुर्याद्धनुसन्निभम् ।
अङ्गुष्ठौ पीडयेन्मुष्टौ धनुर्मुद्रा स लक्ष्यते ॥

तदेवमङ्कुलिं कुर्याद् दक्षिणाकरनिसृता ।
वामं तर्जनीं मुष्टौ निष्पीड्यन्ते तु पर्वाणि ॥

नाराचं मुद्रमित्युक्तः समलिङ्गं पुनर्वदे ।
उभौ हस्तौ ततः कृत्वा अन्योन्यासृतपिण्डितौ ॥

दक्षिणाकरमङ्गुष्ठं उच्छ्रितां लिङ्गसम्भवम् ।
समलिङ्गं तं विदुः कल्पे शासनेऽस्मिं विशारदाः ॥

तदेव हस्तौ उभौ कृत्वा अन्योन्यासृतमङ्गुलम् ।
उभौ तर्जन्य संयोज्य शूलाकारं तु कारयेत् ॥

एतच्छूलमिति प्रोक्तं सत्त्वदुष्टानुशासनम् ।
तदेव हस्तौ निसृत्य मुष्टिं बध्वा उभौ पुनः ॥
अङ्गुष्ठौ स्थितकौ कृत्वा मुद्गरं समुदाहृतम् ।
तदेव मुद्गरमीषच्चालयेत् करसम्पुटे ॥
तोमरं कथितं ह्यग्रं मुद्रं शत्रुनाशनम् ।
उत्पलं तु ततो बध्वा अनामिकाङ्गुलिभिस्तदा ॥
अधस्तादङ्गुष्ठयोर्मध्ये विन्यस्तं चापदर्शितम् ।
एत दंष्ट्रमिति प्रोक्तं स्थिते वक्रमुच्यते ॥
समौ कृत्वा ततस्तेषामङ्गुलीनां समन्ततः ।
उरे दत्वावसव्यं वै क्षिपेत् त्वा पटमुच्यते ॥
उभौ सम्पुटौ कृत्वा हस्तौ विन्यस्तशोभनौ ।
अङ्गुलीमङ्गुलीभिश्च अन्योन्याग्रश्लेषितौ ॥
उत्थितानामिसङ्कोच्य कुम्भमुद्रमुदाहृतम् ।
तदेव मुष्टि संयोज्य तर्जन्यौ पुनरुच्छ्रितौ ॥
कुर्यात् खखराकारं वेणिकाकारमुज्ज्वलम् ।
एतन्मुद्रं समाख्यातं खखरेत्यारिसूदना ॥
तदेव खखर ईषदवनाम्यं तु शोभनम् ।
कुर्यादङ्गुष्ठविन्यस्तं कलशं तदिहोच्यते ॥
उच्छ्रितं तु पुनः कृत्वा तर्जन्यानामिसम्भवम् ।
चतुर्भिरङ्गुलीभिः कुर्यान्मुशलाकारसम्भवम् ॥
मुद्रं मुशलमित्याहुः मन्त्रज्ञानसमन्विता ।
तदेव हस्तौ विन्यस्तौ मध्यमानामिकौ अधः ॥
उपरिष्टात् तेषु वै नित्यं न्यस्तं दक्षिणावायवेष्टितम् ।
संवेष्ट्य अङ्गुष्ठयोर्न्यस्तौ कन्यसा तर्जनी तु ताम् ॥
समन्तात् पर्यङ्कमाकारं मुद्रामाहुस्तथागता ।
एतत् पर्यङ्कमुद्रेति ख्यातं लोके समन्ततः ॥

अनया मुद्रया युक्तो मन्त्रयुक्तस्तथा पुनः ।
सर्वैर्जिनमुक्तैस्तु वज्राब्जकुलमुद्भवैः ॥
एतैर्मन्त्रैः प्रयुक्तोऽयं सर्वकर्मकरं शिवम् ।
ये च मुद्रास्तथा प्रोक्ता मुशलाद्याः शूलसम्भवाः ॥
सर्वे वै क्रोधराजस्य यमान्तस्येह शासने ।
उग्रा प्रहरणा ह्येते सत्त्ववैनेयनिर्मिता ॥
बोधिसत्त्वप्रभावेन ऋद्धया कुर्वन्ततस्तदा ।
सर्वे वैनेयदुष्टानां कुम्भाद्या मुद्रभापिता ॥
तदेव हस्तं विन्यस्तं पटहाकारसम्भवम् ।
आवन्धेदङ्गुलिभिर्युक्तं सर्वाभिश्च रुवेणिकाम् ॥
वेणिकां कृत्यमङ्गुष्ठैस्ततो न्यस्य करे पुनः ।
मध्ये प्रादेशिनी कृत्वा उच्छ्रितांग्रं तु कारयेत् ॥
एतत् पटहनिर्दिष्टं मुद्रा दुष्टनिवारणी ।
तदेव हस्तौ विन्यस्तौ अञ्जली सुप्रयोजितौ ॥
उभौ तर्जन्य सङ्कोच्य कुण्डलाकारशोभनौ ।
अङ्गुष्ठे ते अधः कृत्वा अङ्गुष्ठौ नामितौ उभौ ॥
प्रविष्टौ मध्यपुटान्तस्थौ शङ्ख भवति शोभनम् ।
एतद्धर्मसङ्खं वै वरमुद्रं प्रकाशितम् ॥
मन्त्रैर्मुनिवरोक्तैस्तु संयुक्तः सर्वकार्मिकः ।
करोति कर्मवैचित्र्यं सर्वदंष्ट्राविषभोगिनाम् ॥
निर्नाशयति सर्वांस्तां मूलमन्त्रप्रयोजिता ।
शङ्खमापूरयेज्जप्तं विद्याराजैर्महर्द्धिकैः ॥
निर्विषोऽपि भवेत् क्षिप्रं यो जन्तुर्विषमूर्च्छितः ।
चत्वारिंशति समाख्याता मुद्रा श्रेष्ठा महर्द्धिका ॥
अतः ऊर्ध्वं प्रवक्ष्यामि मुद्रालक्षणसम्भवम् ।
तदेव हस्तौ विन्यस्तौ अङ्गुल्याग्रसवेगिकौ ॥

भूयो दामोटयेद् यत्नादत्रसव्यं तु कारयेत् ।
अधस्तात् सर्वतः कृत्वा शङ्कलेति उदाहृता ॥
एषा मुद्रवरश्रेष्ठाः सर्वदुष्टार्थबन्धनी ।
मन्त्रैस्तैरेभिसंयुक्ता मुनिमुख्यार्थभाषितैः ॥
सर्वां बन्धयते भूतां ग्रहमातरकश्मलाम् ।
तदेव हस्तौ सङ्कोच्य मुक्त्वा वेणि समुच्छ्रयेत् ॥
तदेव विधिना बध्वा अन्येनाङ्गुष्ठमध्ययोः ।
मध्यपर्वे समाश्लिष्य उभयाभ्यं करं पुनः ॥
दत्वाभिमुखं ह्यग्नेर्वह्निमन्त्रसुयोजितः ।
आवाहयेच्छिखिनं होमे अग्निकर्मेषु सर्वदा ॥
क्षिप्रमाह्वयते वह्निः मुद्रेणानेन योजिता ।
विसर्जयेदनेनैव मन्त्रेण तर्जन्याग्रविमिश्रितैः ॥
अङ्गुष्ठे नित्यमाश्लिष्टे विशर्ज्य वह्निदैवतम् ।
मुद्रा बहुमता ह्येषा अग्निकर्मप्रसाधिका ॥
आह्वानयति देवानां यदृच्छं मन्त्रजापिनो ।
एषा बहुमता मुद्रा बध्वाधिष्ठानवर्णिनी ॥
करोति कर्मवैचित्र्यं संयुक्ता मन्त्रमुत्तमैः ।
तदेव हस्तौ एकस्थौ सम्पूर्णमङ्गुलिमाश्रितौ ॥
कुर्यादाकोशमञ्जल्या श्लथं वर्तुलसम्भवम् ।
परिपूर्णं ततः कृत्वा कुड्मलं पद्मसम्भवम् ॥
मनोरथं तु तं विन्द्या मुद्रां सर्वार्थसाधिकाम् ।
एषा मुद्रा वरा श्रेष्ठा पुरा गीता तथागतैः ॥
सत्त्वानां हितकाम्यार्थं मञ्जुघोषे नियोजिता ।
मनसा कांक्षते सत्त्वो यो हितार्थं मनोरथम् ॥
तूर्णं तत् साधयते क्षिप्रं मन्त्रैर्युक्ता महर्द्धिकैः ।
एषा मुद्रा वरा श्रेष्ठा मनोरथेति स उच्यते ॥

एषा मुद्रवरा श्रेष्ठा सर्वकर्मप्रसाधिका ।
क्षिप्रं साधयते मन्त्रां द्रव्यां चैव सविस्तराम् ॥

एषा मुनिचन्द्रेण चन्द्राभा सुप्रवर्त्तिता ।
चन्द्रा पद्मकुले मन्त्रा तेनायं सुप्रयोजिता ॥

करोति कर्मवैचित्र्यं सितवर्णामृतसम्भवा ।
तदेव हस्तौ संशुद्धो उभौ अङ्गुलिमाश्रितौ ॥

षड्भिरङ्गुलिमाश्लिष्टौ पुस्तकाकारसम्भवौ ।
उच्छ्रितौ वर्त्तुलौ कृत्वा कन्यसाङ्गुष्ठकौचितौ ॥

एषा मुद्रा वरा प्रोक्ता प्रज्ञापारमितामिता ।
जननी सर्वबुद्धानां मोक्षात्थं तु नियोजिता ॥

साधयेत् सर्वकर्म वै शान्तिपुष्ट्यर्थयोजिता ।
तदेव हस्तौ विन्यस्तौ दक्षिणं वामतोपरि ॥

कृत्वा नाभिदेशे वै कोलस्थं निम्नमुन्नतम् ।
उभौ हस्तौ तदाश्लिष्य स मुद्रा पात्रमुच्यते ॥

पात्रं जननी मुद्रौ जिनमन्त्रैः सुयोजितौ ।
करोति कर्मवैचित्रं यथेष्टं मन्त्रविचक्षणैः ॥

तदेव हस्तावुद्धृत्य कुर्यात् तर्जनिमुच्छ्रितौ ।
मध्यमाङ्गुलिमग्रं तु नामितं मीपितोरणम् ॥

तदेव उच्छ्रितौ कृत्वा कथयामास सुतोरणम् ।
तदेव बध्वा तदन्योन्यं घोपनिर्दिष्टमष्टमम् ॥

उच्छ्रितोत्तममङ्गुष्ठौ जपशब्दं विदुर्बुधाः ।
तदेव उच्छ्रितौ हस्तौ अङ्गुल्याग्रौ सुकुञ्चितौ ॥

सर्वैरङ्गुलिभिर्मुक्ता विरला केशसम्भवा ।
भेरी तं विदुर्बुद्धा धर्मभेरीति उच्छतौ ॥

तदेव हस्ततलं ऊर्ध्वं दक्षिणं वामतोच्छ्रतम् ।
अधस्तात् कारयित्वा तु गजाकारं सुयोजितम् ॥

दक्षिणं मध्यमाङ्गुल्यां कराकारं तु कारयेत् ।
एतद् गदामुद्रं तु निर्दिष्टं संसारपारगैः ॥

एषा मुद्रा महामुद्रा सम्बुद्धैस्तु प्रकाशिता ।
करोति कर्मा सर्वास्तांस्तामशेषां लोकपूजिता ॥

दक्षिणं हस्तमुद्यम्य अभयदत्तं परिकल्पयेत् ।
गृहीत्वा मणिबन्धे तु वामहस्तेन सुव्रतम् ॥

मध्यमां तर्जनी स्पृष्ट्वा अङ्गुष्ठं मध्यतो स्थितम् ।
मध्यपर्वाश्रितं युक्तं वरहस्तं तदुच्यते ॥

एतन्मुद्रवरं श्रेष्ठं आदिबुद्धैस्तदोदितम् ।
अभयं सर्वसत्त्वानां मुद्रां बध्वा ददौ जपी ॥

मन्त्रैर्मुनिमतैर्युक्तः क्षिप्रमर्थप्रसाधकः ।
तदेव हस्तौ संयुक्तौ सम्पुटाकारशोभनौ ॥

उच्छतौ मध्यमाङ्गुल्यौ मुद्रा तद्गतचारिणी
तदेवमङ्गुलिभिर्वेष्टय अङ्गुष्ठौ उपरि स्थितौ ॥

न्यस्य पर्वतले न्यस्तं केतुमित्याहु मुद्रिणम् ।
तदेव मूर्च्छिताग्रे कं शुभो निर्दिष्टमुद्रिणम् ॥

उभौ तर्जन्यसमायुक्तौ अन्योन्याग्रविमिश्रितौ ।
सङ्कोच्य पर्वतोऽङ्गुष्ठाः कन्यसीति समुच्छ्रितौ ॥

तदेव परशुनिर्दिष्टा मुद्रा सर्वार्थसाधिका ।
सङ्कोच्य पुनः सर्वा वै सा मुद्रा लोकपूजिता ॥

तदेवमुच्छ्रतं कुर्यात् तर्जन्याग्रमूच्चिकम् ।
भिण्डिपालस्ततो मुद्रा लाङ्गलं चक्रतो गतम् ॥

तर्जन्यौ वक्रतः कृत्वा लाङ्गलो मुद्रमुत्तमम् ।
एतत् षष्टिमुद्राणां कथितं विधिना पुनः ॥

सर्वे ते प्रहरणा मुद्रा संयुक्ता मन्त्रमीरिता ।
सर्वां विघ्नकृतां दोषां ग्रहकूष्माण्डमातराम् ॥

सर्वराक्षसमुख्यानां बालसर्वानुत्रासिनाम्।
निर्नाशयति सर्वांस्तां मुद्रां प्रहरणोद्भवाम्।।

षष्टिमेतं तु मुद्राणां लक्षणं समुदाहृतम्।
अतः परं प्रवक्ष्यामि मुद्राणां विधिसम्भवम्।।

तदेव हस्तौ विन्यस्तौ पद्माकारंसमुच्छ्रितौ।
प्रसारिताङ्गुलिभिः सर्वं मुद्रां पद्म इति स्मृतम्।।

एषा मुद्रवरा ख्याता सन्यस्ताब्जकुलोद्भवाम्।
यावन्त्यब्जकुले मन्त्रा संयुक्ता तैः शुभोदया।।

क्षिप्रकर्मकरा ख्याता बुद्धाधिष्ठानमुद्भवा।
सर्वा साधयते मन्त्रां यावन्त्यब्जकुलोदया।।

मुद्राणां पद्ममुद्रेयं मध्यमे समुदाहृता।
उभौ हस्तौ समायुक्तौ तर्जनीभिः समुच्छ्रितौ।।

मध्यमाङ्गुलिभिर्युक्तं विन्यस्ताकारसम्भवम्।
अङ्गुष्ठौ न्यस्य वै तत्र मध्यमाङ्गुलिपर्वयोः।।

तदेव कथितं वज्रं कन्यसं मुद्रमुत्तमम्।
यावन्ति वज्रकुले मन्त्रा ते साध्यानेन मुद्रिता।।

सिद्ध्यन्ते क्षिप्रतो युक्ता विधिना सम्प्रकीर्त्तिता।
संयुक्तैः साधकं कर्म यः साध्यं साधयेन् सदा।।

तस्य सिद्धिर्भवेन्नित्यं उत्तमाधममध्यमा।
सर्वे च लौकिका मन्त्राः सिद्ध्यन्ते ह्यविकल्पतः।।

उभौ हस्तौ समायुक्तौ मध्यमाङ्गुलिमुच्छ्रितौ।
सङ्कोच्यानामिकाङ्गुष्ठौ कन्यसौ सूचिमाश्रितौ।।

उभौ तर्जनिसंश्लिष्टौ मध्यपर्वाग्रकुञ्चितौ।
मध्यमौ सूचिसमौ न्यस्तौ चक्राकारसमुद्भवौ।।

एतत्तु धर्मचक्रं वै मुद्रराजमिहोदितः।
धर्मराजैस्तथा ह्युक्तो धर्मचक्रश्च वर्त्तितुम्।।

शान्तिचक्र तदा वत्रे मुनिचन्द्रोऽथ सप्तमः ।
त्रिमलां विच्छेदजापेन मुद्राराजेन योजिता ॥
चक्रिण्यो ये च उष्णीषा लोचनाविधमुत्तमा ।
भ्रुकुटीपद्मकुले तारा मामकी चापि वज्रिणे ॥
सिध्यन्ते धर्मचक्रेण मुद्राराजेन योजिता ।
समस्ता लौकिका मन्त्रा विष्णुरीशानभाषिता ॥
तां विच्छेदहृष्ट्वा वै जापिनां मुद्रसंयुताम् ।
एतन्मुद्रवरं श्रेष्ठं धर्मधातुविनिःसृतम् ॥
करोति सर्वकर्म वै सत्त्वानां च यथेप्सितम् ।
धर्मराजेन शान्त्यर्थं मुद्रेयं सम्प्रभाषितम् ॥
अस्मिं कल्पवरे श्रेष्ठे सर्वकर्मप्रसाधिका ।
मुद्रेयं धर्मचक्रेति मञ्जुघोषस्य शासने ॥
अग्रिमं सर्वमुद्राणां शान्तिकर्मसु योजयेत् ।
मन्त्रिभिर्लक्षते नित्यं शिवचक्रा तु सम्भवम् ॥
तदेव विन्यस्तौ हस्तौ सम्पुटाकारमुद्भवौ ।
श्लथकोशायताङ्गुल्यः उभौ सङ्कुचितौ शुभौ ॥
पुण्डरीकमिति ज्ञेयं मुद्रा सर्वार्थसाधका ।
तदेव हस्तं निक्षिप्य त्यज्य मुष्ट्यायताङ्गुलिम् ॥
प्रसारिता कराकारं वरदं मुद्रमुच्यते ।
उभौ हस्तौ पुनः कृत्वा अङ्गुलीभिः समन्ततः ॥
बध्वा च वेणिकाकारं मुद्रैषा रज्जुमुच्यते ।
पुनः प्रसारयस्तदेकं तु दाक्षिणं करमुत्तमम् ॥
कुर्यात् सूचिकाकारं मध्यतर्जनिमङ्गुलौ ।
ईषत् सङ्कुचिताग्रं तु अङ्गुलीनां नतोत्तमम् ॥
स्थितिकां कारयेत् तत्र सुन्यस्तं तर्जनी तु तम् ।
कुर्यात् संश्लेपिते तत्र अनामिकापर्वनिश्रिता ॥

मुद्रेयं कुन्तनिर्दिष्टा बहुधा लोकनायकैः ।
तदेव हस्तौ विन्यस्तौ उभौ तर्जन्यसूचितौ ॥

उभौ मुष्टिसमं कृत्वा अङ्गुलीभिः समं पुनः ।
तदेव मुद्रसमाख्याता वज्रदण्डं मनीषिभिः ॥

तदेव हस्तौ संयोज्य सम्पुटाकारकारितम् ।
विन्यस्तामङ्गुलिमञ्जल्यमन्योन्याश्लेषमाश्रितम् ॥

उभौ अङ्गुष्ठमाश्रित्य शतघ्नामुद्रमुच्यते ।
ततः कृत्वा तुभौ हस्तौ समन्तान्निम्नसम्भवौ ॥

अञ्जलिं तु ततो कृत्वा नाधायानससम्भवम् ।
मुद्रेयं भेरीति ख्याता त्रिषु लोके हितायिभिः ॥

सन्तारयति भूतानां महासंसारसागरात् ।
तदेवाञ्जलिमुत्सृज्य चित्रहस्ततलावुभौ ॥

विमानमुद्रमित्याहुः ऊर्ध्वसत्त्वनयानुगाः ।
तदेव हस्तौ सङ्कोच्य स्यन्दनं तदिहोच्यते ॥

त्रियानगमनं श्रेष्ठं रतो ह्युक्तो नुतायिभिः ।
नयते सर्वभूतानां जापिनां मन्त्रसम्पदाम् ॥

उत्तमायानमाश्रित्य ययुधुर्द्धगतं तु तम् ।
तदेव हस्तौ उत्सृज्य उभौ कृत्वा पुनस्ततः ॥

कुर्याच्चित्रतलं शुद्धं वेदिकाकारसम्भवम् ।
एतन्मुद्रवरं श्रेष्ठं लोकनाथैः सुपूजितम् ॥

शयनं सर्वबुद्धानां जिनपुत्रैः समुदाहृतम् ।
यत्रातीतास्तु सम्बुद्धा शान्ति जग्मुस्तदाश्रिता ॥

निर्वाणधातुसंन्यस्ता यत्रारूढाशयानुगा ।
स एषा मुद्रमिति ख्याता शयनं लोकनायकम् ॥

तदेव हस्तौ विन्यस्तौ संश्लिष्टयाङ्गुलिभिः समम्
सम्पुटाकोशविन्यस्तं तर्जन्येकं तु दक्षिणम् ॥

कुर्याद् वक्रतो ह्यग्रे अर्धचन्द्रं स उच्यते ।
उभौ हस्तौ पुनः कृत्वा दक्षिणाङ्गुष्ठमुष्टितः ॥
वामहस्तास्तैः सर्वैः अङ्गुलीभिः समोचितैः ।
बध्वा मुष्टिं कराग्रे तु दक्षिणाङ्गुष्ठमिश्रितः ॥
तं दक्षिणैरेव समायुक्तैरङ्गुलीभिः पुटीकृतैः ।
कन्यसां विसृतां कृत्वा वीणमुद्रा उदाहृता ॥
उभौ हस्तौ पुनः कृत्वा आकाशौ विरलाङ्गुलौ ।
उभावङ्गुष्ठयोर्मध्या उभौ तर्जनिमाश्रितौ ॥
एषा पद्मालया मुद्रा सम्बुद्धैः कथिता जगे ।
उद्धृताङ्गुष्ठकौ नित्यं पुनः कुवलयोद्भव ॥
मुद्रा च कथिता लोके सम्बुद्धैर्द्विपदोत्तमैः ।
तदेवमञ्जलिं कृत्वा प्रणामाकारजगद्गुरुम् ॥
सा नमस्कारमुद्रेयं सर्वलोकेषु विश्रुता ।
तदेव मुद्रा विष्टभ्य हस्तौ यमलसम्भवौ ॥
एषा यमलमुद्रेयं त्रिषु लोकेषु विश्रुता ।
ईषन्मूलतो हस्तौ अङ्गुष्ठौ च सुपीडितौ ॥
सा भवेत् सम्पुटा मुद्रा शोकायासीवनाशनी ।
एता मुद्रास्तु कथिता ये सर्वे महरणोद्भवाः ॥
पुष्पाख्या शयनयाश्च वाद्यात्रा ग्रहनामका ।
सर्वे सर्वकरा युक्ता मन्त्रैः सर्वैस्तु भाषितम् ॥
न तिथिर्न च नक्षत्रं नोपवासो विधीयते ।
संयुक्ता मुद्रमन्त्राश्च क्षिप्रं कर्माणि साधयेत् ॥
जापिनस्तपसा युक्तो जप्तमात्रो विचक्षणः ।
मुद्रा मन्त्रप्रयुक्ता च असाध्यं किञ्चि न विद्यते ॥
उभौ हस्तौ पुनः कृत्वा अञ्जल्यान्योन्यसक्तकम् ।
कन्यसानामिकाङ्गुष्ठौ पार्श्वतो न्यस्तौ धूपमुद्रा उदाहृता ॥

आधाराञ्जलियोगेन तर्जन्यावीपत् कांचयेत् ।
सामान्या बलिमुद्रा तु उद्धृता ब्धोनतागिभिः ॥
मध्येषु पुष्पविन्यस्तं यथासम्भवतो विधिवैः ।
दत्तं भवति मन्त्राणां बलिकर्मेषु सर्वशः ॥
दक्षिणेनाभयं हस्तं कृत्वा च वामकरेण वै ।
मणिबन्धनयोगेन ग्राह्यं करदक्षिणम् ॥
एषा ते सर्वमन्त्राणां गन्धमुद्रा उदाहृता ।
दक्षिणाकरमुष्टौ तौ अङ्गुष्ठौ मध्यमौ सदा ॥
सूच्याकारं ततः कृत्वा दीपमुद्रा उदाहृता ।
अनामिकाङ्गुष्ठयोरेव अक्षसूत्रात् संस्थितम् ॥
कन्यसां प्रसार्यतो नित्यं मध्यमां तस्य पृष्ठतः ।
तर्जनीं कुञ्चितां न्यस्य अक्षमुद्रेति उच्यते ॥
गर्भाञ्जल्यास्ततो न्यस्य अक्षसूत्रं स मन्त्रवित् ।
जपेद् यथेष्टतो मन्त्रं क्षिप्रं सिद्धिवरप्रदम् ॥
शोभनं सर्वमुद्राणामेष दृष्टविधिः सदा ।
अग्नेर्दक्षिणहस्तेन अभयाग्रं तु कारयेत् ॥
अभिमुखं ज्वलने स्थाप्य तर्जनीं कुञ्चयेत् सदा ।
अङ्गुष्ठं च करे न्यस्य मध्ये कुञ्चितसंस्थितम् ॥
एतदावाहनं मुद्रं निर्दिष्टं जातवेदसे ।
कुञ्चितं तर्जन्याग्रं अङ्गुष्ठौ चकयोजितम् ॥
विसर्जनं सर्वकर्मेषु ज्वलने सम्प्रदश्यते ।
कुर्यात् सर्वमन्त्राणां होमकर्मविचक्षणः ॥
मुद्रैरेतैर्भिसंयुक्तः मन्त्रमग्नौ सुयोजितः ।
प्रणामाञ्जलिरन्तरिता अङ्गुलीभिः समन्ततः ॥
कुर्यात् तं विपरीतं तु अङ्गुष्ठौ च समिश्रितौ ।
बहिः सङ्कोच्य तर्जन्यौ मध्यमीभिः समाश्रितौ ॥

एषा मुद्रवरा ह्युक्ता पूजाकर्मसु योजिता ।
प्रणामं सर्वमन्त्राणां मन्त्रार्थं जिनोरसाम् ॥
शोधनं सर्वमन्त्राणामासनं च प्रदापयेत् ।
असम्भवेऽपि पुष्पाणां मुद्रां बध्वा तु योजयेत् ॥
पूजिता विधिना ह्येते मन्त्रा सर्वार्थसाधिका ।
मुद्राबन्धेन पूजार्थं कृतं भवति शोभनम् ॥
द्वितीया चित्तपूजा तु यादृशी पुष्पसम्भवा ।
एष पूजाविधिः प्रोक्ता सम्बुद्धैः द्विपदोत्तमैः ॥
अभावेन तु पुष्पाणां द्विविधा पूज उच्यते ।
सर्वमन्त्रप्रसिध्यर्थं सर्वकर्मेषु योजयेत् ॥
सर्वकर्मकरा मुद्रा सर्वबुद्धैस्तु भाषिता ।
आसने शयने स्नाने पानानुभोजने ॥
शोभने दीपने मन्त्रे स्थाने मण्डलकारणे ।
समयः सर्वमन्त्राणामधिष्ठानार्थं तु मन्त्रिणाम् ॥
कथिता लोकनाथैस्तु मुद्रेयं सर्वकार्मिका ।
परिपूर्णं शतं प्रोक्तं मुद्राणां नियमादयम् ॥
अतःपरं प्रवक्ष्यामि मुद्रामष्टमतां गताम् ।
तदेव हस्तौ विन्यस्तौ उभौ कृत्वा पुनस्ततः ॥
तथैव प्रदेशिनीं कृत्वा मध्यमा सूचिमिश्रिता ।
नखस्याधस्तात् तृतीये वै भागे संसक्तकारितौ ॥
आकोशामुद्भवावेष्टय शूच्याकारं तु कारयेत् ।
एतन्मन्त्राधिपतेर्मुद्रा शक्रिणस्य महात्मनः ॥
एता एव प्रदेशिन्या सश्चार्या सममध्यमा ।
शूच्या नखस्य विन्यस्ता संशक्ता च अनामिका ॥
एष उष्णीषमुद्रा वै जिनेन्द्रैः सम्प्रकाशिता ।
तदेव हस्तौ विन्यस्तौ मध्यमाङ्गुलिवेष्टितौ ॥

कन्यसाङ्गुलिसंयुक्तौ मुद्रेयं भितमुद्भवा ।
मध्यसूच्या समं कृत्वा संसक्तौ च करोरुहौ ॥
निर्मुक्तः कुण्डलाकारा महामुद्रा स उच्यते ।
तामेव प्रदेशिन्याग्राधिभून्तरेल्पसतकृम् ॥
मध्यसूच्यां ततो न्यस्य अधस्तात् संसक्तपाणिना ।
पर्वतृतीययोर्न्यस्तौ अङ्गुष्ठौ नखपीडितौ ॥
एषा मुद्रा वरा प्रोक्ता मञ्जुघोषस्य धीमतः ।
तदेव हस्तौ विन्यस्तौ अञ्जलीकारसंस्थितौ ॥
मध्यमाङ्गुलिविन्यस्तौ सूच्यग्रानामितः स्थितौ ।
अङ्गुष्ठौ मध्यमां स्पृश्य अङ्गुलीपर्वसत्रिकम् ॥
कन्यसाङ्गुलीभिः सूचीं कृत्वानामितमुच्छ्रितौ ।
एषा मुद्रा वरा श्रेष्ठा धर्मकोशस्थनां गताः ॥
तदेव हस्तौ विन्यस्तौ विधिदृष्टसमासतौ ।
तदेवमङ्गुलिभिः सर्वैः आपूर्णं कोशसंस्थितम् ॥
उभौ हस्तौ विवृण्णीयात् अष्टानाङ्गुलिनावृताः ।
अष्टां पुरुषतत्त्वज्ञां चत्वारो युगतां गताम् ॥
तदेव सङ्घमित्याहुः सम्बुद्धा द्विपदोत्तमाः ।
स एव मुद्रा सङ्घेति कथ्यते ह भवालये ॥
एषा मुद्रवरा श्रेष्ठा सर्वकर्मप्रसाधिका ।
उभौ हस्तौ पुटीकृत्वा अञ्जल्याकारसंस्थितौ ॥
प्रसार्य तर्जनीमेकां दक्षिणां करनिःसृताम् ।
सा एष भूतशमनी निर्दिष्टा तत्त्वदर्शिभिः ॥
एषा मुद्रा वरा ख्याता सर्वकर्मार्थसाधिका ।
तदेव हस्तौ विन्यस्तौ वेणिकाग्रानचिह्नितौ ॥
पिण्डस्थौ सम्पुटाकारौ उच्छ्रिताङ्गुष्ठनामितोः ।
एषा सा पद्ममालेति आदिबुद्धैः प्रचोदिता ॥

यापयति धर्मं च देशयति आर्यमञ्जुश्रियं च साक्षात् पश्यति धर्मं शृणोति अनेकान्यपि बोधिसत्त्वशतसहस्रा पश्यति तांश्च पर्युपास्ते महाकल्पसहस्रं अजरामरल्लीली भवति । पटस्तत्रैव तिष्ठति सर्वबुद्धबोधिसत्त्वाधिष्ठितो भवति तेषां चाधिष्ठानं सञ्जानीते क्षेत्रशतसहस्रं चाक्रामति कायशतसहस्रं वा दर्शयति अनेकऋद्धिप्रभावसमुद्गतो भवति आर्यमञ्जुश्रियश्च कल्याणमित्रो भवति नियतं बोधिपरायणो भवतीति ॥

बोधिसत्त्वपिटकावतंसकान्महायानवैपुल्यसूत्राद्
अष्टम उत्तमसाधनौपयिककर्मपटल-
विसरात् प्रथमः समाप्त इति ॥

---

प्रणम्य शिरसा सम्बुद्धं लोकनाथं प्रभाकरम् ।
दीर्घं निश्वस्य करुणार्द्रो रोरुरोद ततः पुनः ॥
तस्थुरे समीप बुद्धस्य आपृच्छय वरदां वरम् ।
निर्नष्टे भगवां लोके मन्त्रकोशे महीतले ॥
सत्त्वानां गतिमाहात्म्यं कथं तस्मै भविष्यति ।
एवमुक्तस्तु सम्बुद्धो मञ्जुघोषं तदालपेत् ॥
शृणोहि वत्स! मञ्जुश्रीः! कुमार! त्वं यदि पृच्छसि ।
मया हि निर्वृते लोके शून्यीभूते महीतले ॥
निर्नष्टे धर्मकोशे च श्रावकैश्चिरनिर्वृतैः ।
शास्तु बिम्बस्तथा रूपं कृत्वा वै द्विपदोत्तमः ॥
पूजां सत्कारतः कृत्वा धूपगन्धविलेपनैः ।
विविधैर्वस्त्रवरैश्चान्यैर्मणिकुण्डलभूषणैः ॥
विविधैर्भोज्यभक्षैश्च सन्नियोज्य निवेदनम् ।
विविधाकारसम्पन्नं यथेष्टाकारकारिणे ॥
तथं + मन्त्रमावर्त्य सत्त्वयोनिगतिः शुभम् ।
आजहार पुरं श्रेष्ठं उत्तमां गतियोनये ॥
अन्ते बोधिनिम्नस्थः शान्ति जग्मुः गणाश्रिमे ।
एवमुक्तस्तु मञ्जुश्रीस्तुष्टो सम्बुद्धचोदितः ॥
सम्प्रतुष्य ततो धीमां बोधिसत्त्वो महर्द्धिकः ।
एतत् सर्वं पुरा गीतं शुद्धावासोपरि स्थितम् ॥
बुद्धानां सन्निधौ बुद्धधर्मचक्रप्रवर्त्तकः ।
मन्त्रचक्रं तदा वव्रे चिरकालानुवर्त्तिनम् ॥ इति ॥

आर्यमञ्जुश्रियमूलकल्पाद् बोधिसत्त्वपिटकावतंसकाद्
महायानवैपुल्यसूत्रात् त्रयः त्रिंशतिमः
मुद्राविधिपटलविसरः
परिसमाप्तमिति ।

# अथ षट्त्रिंशः पटलविसरः ।

अथ खलु भगवां शाक्यमुनिः पुनरपि शुद्धावासभवनमव-लोक्य मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । अस्ति मञ्जुश्रीः! पर-मगुह्यतमं त्वदीयं मूलमुद्रासमेत सपरिवारं मुद्रालक्षणं सर्वकर्मेषु चोप-योज्यं सर्वसम्पत्तिदायकं सफलं सर्वमन्त्रानुवर्त्तनं सर्वकर्मार्थसाधकम्। संक्षेपतः शृणु मञ्जुश्रीः! ॥

आदौ तावत् प्रसृताञ्जलिः, तर्जन्यानामिकामध्यपर्वतानुप्रविष्टा पृथक् पृथक् । सा एषा मञ्जुश्रीस्त्वदीया मूलमुद्रा विख्याता सर्व-कर्मिका भवति । तथैव हस्तौ संगृह्य, अनामिकासंहता तर्जनी मध्य-मास्तथा कनिष्ठिकया ऊर्ध्वरेखास्थिताङ्गुष्ठशीर्षे । अयमपरा मञ्जुश्री-स्त्वदीया वक्रमुद्रा उदाहृता । अन्योन्यसक्ताङ्गुलिमुष्टिं कृत्वा, मध्यं-माङ्गुलि विमुच्य, सूचीकृत्वा, तस्य पार्श्वयोर्वलिततर्जनीयुगलमन्ते न्यसे एषा मञ्जुश्रीः! त्वदीयमुद्रेयं दंष्ट्रा भवति । मुद्राया अङ्गु-ष्ठयुगलं पार्श्वयोर्न्यसेत् । एषा मुद्रा साक्षात् त्वं मञ्जुश्रीः! तस्मि-स्थाने तस्मि करपुटे सान्निध्यं समयेनाधितिष्ठसे । अन्योन्यसक्ता-ङ्गुलिमुष्टयोः प्रदेशिनीं मुक्त्वा, अङ्गुष्ठयुगलं मध्यतः । एषा सा मञ्जु-श्रीः! त्वदीया अपरा चीरकमुद्रा । प्रसृताञ्जलिपर्वणी कृत्वा, अना-मिके तर्जनीं मध्यमान्तरस्थिताग्रे । इयमपरा मञ्जुश्रीः! साक्षादेव त्वं मूलमूद्रा उदाहृता । अस्यैव मुद्रायाः प्रसृतां तर्जनीं कृत्वा । एषा सा मञ्जुश्रीस्त्वदीयनेत्रमुद्रा भवति । कन्यसानामिकावेर्णीकृतकर-पुटमध्यस्थिता मध्यमौ बहिः तः तर्जन्युपरि कुञ्चिताग्रे अङ्गुष्ठाग्रसं-श्लिष्टाग्रासु । अयमपरा त्वदीया त्वदीया मञ्जुश्रीः! वक्रमुद्रा भवति सर्वकर्मिका ॥

एवमनेन क्रमेणैकैकाङ्गुलिमथ मुंच उभौ अङ्गुष्ठसहिता सर्वे अ-ङ्गुलियोगेन एकैकं प्रसारये उचीकृतदक्षिणाङ्गुष्ठं त्वदीय मञ्जुश्री! एषा उष्णीषमुद्रा । दक्षिणं सङ्कोच्य वाममुच्छ्रितं ललाटमुद्रा भवति त्वदीया मञ्जुश्रीः! । यां दृष्ट्वा सर्वे दुष्टग्रहाः प्रपलायन्ते ॥

एवं श्रवणो ग्रीवा भुजौ हृदयं करौ कण्ठ कटिं नाभिः ऊरू जङ्घां चरणौ नेत्रौ वक्त्रं जिह्वा चेति, एवं दशभिरङ्गुलीभिरनुपूर्वेमुच्छ्रितौ अनुपूर्वमुद्रालक्षणं भवति । अनुपूर्वं च कर्म करोति । वक्त्रमुद्रया मुखाबन्धं, दंष्ट्रमुद्रया दुष्टग्रहमोचनं, जिह्वामुद्रया दुष्टवचननिवारणं, हृदयमुद्रया नृपतिकोपनाशनं, अन्यं वा सत्त्वं देवासुरं मानुषामानुषाद्यां विविधां वा गातेनिश्रितां रुपितानां क्रोधनाशनं भवति ॥

एवमनुपूर्व्या सर्वतः सर्वकर्माणि करोति । एवमसङ्ख्येयानि अनेन क्रमेण मुद्राणि भवन्ति । असङ्ख्येयानि च कर्माणि करोपि त्वं मञ्जुश्रीः ! सर्वथा सर्वमुद्रेष्वेव सर्वकर्माणि भवन्ति ॥

बद्धा ता यैः महावीरैः सङ्ख्यातीतैः तथागतैः ।
महामुद्रा महावीरैर्महाभूमिगतैरपि ॥
यत्र निम्बरकोट्यानि षट्त्रिंशाशीतिनवपञ्चकैः ।
षष्टिर्नयुतसङ्ख्याद्यैः सर्वलोकोत्तरोत्तरैः ॥
सर्वमुद्रान्तर्गताः सर्वे ये चान्या लौकिका क्रिया ।
एभिरन्यतमैर्मुद्रैः कुर्यात् सर्वार्थसाधनम् ॥
हस्तद्वयेनावबद्धा वै साधनकाले च मण्डले ।
पूर्वसेवाभियुक्तेन होमजापेषु वा पुनः ॥
निषण्णः स्थितको वापि यावदिच्छं जपेद् व्रती ।
महारक्षाविधानेन आत्मनस्य परस्य वा ॥
कुर्यात् सर्वाणि कर्माणि सर्वमुद्रेषु सर्वदा ॥ इति ॥

आर्यमञ्जुश्रियमूलकल्पाद् बोधिसत्त्वपिटकावतंसका
महायानवैपुल्यसूत्रा चतुःत्रिंशतिमः
द्वितीयमुद्राविधिपटलविसरः
परिसमाप्त इति ॥

---

[एतद्ग्रन्थान्तेऽन्तिमस्य पटलविसरस्य त्रिपञ्चाशत्तमस्य समाप्त्यनन्तरं महामुद्रापटलविसरो नाम कश्चिदपरश्चतुस्त्रिंशत्तमः पटलविसरो लिखित उपलभ्यते । स गतस्य चतुस्त्रिंशत्तमस्यैव प्रकारभेदो भवितुमर्हतीत्यतः कारणादिहैव योज्यते । ]

अथ भगवां शाक्यमुनिः पुनरपि शुद्धावासभवनमवलोक्य मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । सर्वांश्च बोधिसत्त्वां सर्वसत्त्वांश्च पर्षत्सन्निपतितां । शृण्वन्तु भूतगणाः! सर्वे! देवपुत्राश्च महर्द्धिकाः! अस्ति मञ्जुश्रियः कुमारभूतस्य बोधिसत्त्वस्य महासत्त्वस्य कल्पविसरे समुद्रापटलसाधनोपयिकं सर्वमन्त्रतन्त्रचर्यानुप्रविष्टानां सत्त्वानां बोधिसम्भारकारणं । यथा सिध्यन्ति सर्वमन्त्राः क्षिप्रतरमाकृष्यन्ते सर्वकर्माणि सर्वेषां सर्वतः मुद्राणि भवन्ति । यैः मुद्रिताः क्षिप्रतरं वशा भवन्ति । तं शृण्वन्तु भवन्तो । भाषिष्येऽहं सर्वसत्त्वानामर्थाय । सर्वमन्त्राणां मुद्राणि भवन्ति ॥

अथ खलु भगवां शाक्यमुनिः सर्वबुद्धधर्माणां मुद्रालङ्कारतथागतगुणमाहात्म्यसमुद्रमुद्रा नाम समाधिं समापद्यते स्म । समनन्तरसमापन्नस्य भगवतः सर्वतथागताः सर्वमुद्रासमयं भाषते स्म । तस्मात् समाधेरुत्थाय सर्वतथागतमुद्रामुद्रितं महामुद्रापटलविसरं सर्वमन्त्राणां भाषते स्म ॥

आदौ तावत् सर्वमन्त्रकुलेषु हृदयानि भवन्ति । पूर्वमुच्चारयेद् द्विसप्त एकवारम् । ततो मुद्रा बन्धितव्या, नान्यथादिति । कतमं च तत् ॥

सर्वतथागतानां हृदयम् । जिनजिक् । एष स माषाः! सर्वतथागतानां हृदयः सर्वकर्मिकः । तथागतकुले सर्वमुद्रा बन्धितव्या । ततः कर्म समारभेत । आरोलिक् । अवलोकितस्य हृदयः सर्वकर्मिकः पद्मकुले सर्वमुद्राबन्धयता अयं जप्तव्यः सर्वसाधनोपयिक सर्वकर्मसु । वज्रधृक् । एष स मार्षा वज्रपाणेः हृदयम् । सर्ववज्रकुलेषु च जपता मुद्रा बन्धितव्या । गुरारक । एष सर्वदेवानां सर्वमुद्राबन्धथ-

षा सर्वकर्मसु प्रयोक्तव्यः । सर्वदेवानां हृदयः । यक्षातक । सर्वयक्षाणां हृदयः । पिनाकृक । रुद्रस्य हृदयः । ष्ठीं । एष स मार्षा एकाक्षरं नाम हृदयम् । सर्वलौकिकलोकोत्तराणां सर्वभूतकूष्माण्डपूतनकव्यादादिषु नक्षत्रग्रहमातरकुमारकुमारिकाणां मनुष्यामनुष्यगर्वसङ्कव्यातविद्याधरऋषिप्रभृतीनां सर्वसत्त्वानां सर्वगतिगुत्रकर्मावबद्धानां सर्वभूतानामुक्तानां च वीतरागानां महर्द्धिकामहर्द्धिकाणां नृदोपशमनानां त्रिपङ्कनिमग्नानां सर्वसत्त्वानामर्थाय अयमेकाक्षरो मन्त्रः सर्वेषां हृदयं भवति । सर्वकर्माणि करोति । सर्वमुद्राश्च बन्धितव्या । जपं कुर्वाण अनेनैव हृदयेन जपः कर्तव्यः । सततं बुद्धाधिष्ठितो भवति । महाप्रभावोऽयं महानुशंसः सर्वकर्मसु मुद्रादिकमण्डलविधानपटसाधनोपायिकेषु सत्त्वानुपूर्वं प्रयोक्तव्यः । सर्वं साधयति । यन्मनसाभिरुचितं साधकेनेति ॥

ततो मुद्राणि भवन्ति शतं चाष्टसाधिकम् ।
उष्णीषमुद्रा प्रथमं कुर्याच्चक्रिणे जिने ॥

ततः परमलोके स पद्ममुद्रेति कथ्यते ।
तृतीयं वज्रमुद्रं तु वज्रपाणिसमाविशे ॥

चतुर्थं देवतामुद्रं स्वस्तिकं तु विनिर्दिशेत् ।
पञ्चमं खड्गमुद्रा तु राक्षसानामिहोच्यते ॥

षष्ठं गदमुद्रा तु यक्षाणा मे प्रकीर्तिता ।
सप्तमं असुराणां तु मन्त्राणां वज्रमुष्टिसमोदिता ॥

अष्टमं शूलमुद्रा तु सर्वक्रोधेषु पठ्यते ।
नवमं पुष्पमुद्रा तु यक्षयक्षीषु कीर्त्तिता ॥

दशमं मुद्गरं विन्द्यात परमेकादशं परम् ।
द्वादशं शक्तिनिर्दिष्टा कार्त्तिकेयस्य वालिशः ॥

मञ्जुघोषस्य विख्यातमुत्पलं तु प्रयोजयेत् ।
त्रयोदशानां सङ्ख्या निर्दिष्टा मुनिभिः सत्त्वदेशिभिः ॥

चतुर्दशं तु भवेच्छङ्खो भेरी पञ्चादशा स्मृता
पटहो षोडशा ज्ञेयो दुन्दुभिः सप्तदशो परः ॥

अष्टादश तथा वद्धमूनविंशत् करणमुच्यते ।
त्रिंशत् परशु निर्दिष्टा सङ्ख्याया तु प्रमाणतः ॥

सितपत्रा तथाच्छत्रं उष्णीषाणां प्रकीर्त्तितम् ।
चीवरं पात्रनिर्दिष्टं खखरं तु मतः परम् ॥

कृपा मैत्री तथा प्रज्ञा ध्यानशील तथापि च ।
क्षान्तिदानादिकं षट्कं निर्दिष्टं लोकनायकैः ॥

बुद्धानां कथिता ह्येतं षट् पारमिताश्रवात् ।
त्रिंशच्चक्रिणे मुद्रा कथिता लोकपुङ्गवैः ॥

एकाक्षरस्य वीरस्य मन्त्राणामधिपतेर्विभो ।
लोकेश्वरस्य विद्यानां कथिताष्टविंशति साधिका ॥

सिताख्या महाश्वेता तथा पण्डरवासिनी ।
भृकुटी च तथा देवी बुद्धानां हृदयोद्भवा ॥

ताराद्या कथ्यते मुद्रा उत्पलं तु नियोजयेत् ।
हयग्रीवस्य तु भीमस्य मुद्रा वज्र इति स्मृता ॥

वज्रपाणे तथा मुद्रा त्रिंश एक भवन्ति ते ।
सर्वे प्रहरणा तस्य नानाकारा युधिष्ठिता ॥

चत्वारोऽपि महामुद्रा प्रोक्ता मारमण्डले ।
रुद्रस्य शूलनिर्दिष्टो ॥

ब्रह्मस्याक्षमालं तु विष्णोश्चक्रमितिस्तथा ।
यमदण्डमतः परां ॥

एतत् सर्वं देवानां सर्वयक्षनराधिपां ।
सर्वभूतानां तथा मुद्रा सर्वसत्त्वसमाश्रिता ॥

सरागवीतरागाणां त्रिधा धातु स्थिता परां ।
सर्वलोकसमाहृत्यु त्रिधा स्थावरजङ्गमा ॥

धात्वाख्यामसङ्ख्येयां ये सत्त्वा भूतवादिनः ।
सर्वेषाणां तु सर्वत्र एकमुद्रादिहोच्यते ॥

एवमष्टशतं प्रोक्तं शतमेकं साष्टसाधिकम् ।
तेषां च गुणविस्तारं प्रभावं च इहोच्यते ॥

यथा मनुष्याणां भवेत् सिद्धिः संयुक्ता मन्त्रयोजिता ।
करोत्यन्यप्रयोगैश्च अङ्गुलीभिः सशोभिता ॥

विन्यस्ता करयोर्मध्ये क्षिप्रमर्थकरा परा ।
तेषामादि वक्ष्ये शृणुध्वं भूतिकांक्षिणः ॥

आदौ तावच्छुचौ देशे शुक्लवस्त्र शुचाम्बरः ।
शुचिकर्मसमाचारो शुचौ देशे सदारतः ॥

बन्धयेत् प्राङ्मुखो भूत्वा स्थितो स्तूपस्य चाग्रतो ।
नाशिष्याय प्रदातव्यं रौद्रकर्मान्तचारिणे ॥

अभय अदाताय समयानुप्रवेशिने ।
भक्तो जिनपुत्राणां बुद्धानां चापि शासने ॥

अनुत्पादितचित्तस्य नादेयं मुद्रसम्पदा ।
भक्तानां जिनपुत्राणां बोधिसत्त्वानां च धीमताम् ॥

प्रत्येकबुद्धानार्हतानां पूजितानां ददेत् सदा ।
सुस्थितो बोधिचर्यायामाचार्यो बहुमतः सदा ॥

सर्वमन्त्रप्रयोगेषु + + + उत्कृष्ट सदा ।
तेन मुद्रा तदा देया शिष्यस्याविचिकित्सतः ॥

तथा मन्त्रप्रयोगज्ञः शुचिर्दक्षः कुलान्वितः ।
आचार्यो धार्मिको धीमां अभिषिक्तो दृष्टमण्डलः ॥

तेनोपदर्शिता मन्त्राः शिष्यो गृह्येत तन्त्रवित् ।
शिष्येण कार्यस्तथा प्रेमो बुद्धस्येव गुरोस्तथा ॥

अन्यथा न सिद्धि मन्त्राणां सर्वमुद्रेषु वा सदादिति ।

आदौ तावत् शुचिर्भूत्वा प्राङ्मुखो शुक्लचन्दनेन हस्तमुद्वर्त्य. पूर्वं तावत् समयमुद्रा बन्धितव्या । भगवतो उष्णीषस्य मुद्रा । उभौ करौ कृताञ्जलिपुटौ अशुषिरौ ईषित्कुञ्चितौ कुड्मलाकारौ अनाशप-मानतौ । अयं भगवतो बुद्धस्य समयमुद्रा । तदेव हस्तौ प्रसारितौ सम्पुटावस्थौ पद्मविकसिताकारा अवलोकितस्य मुद्रा । उभौ हस्तौ पूर्ववत् करमावेष्टयित्वा अभ्यन्तरस्थिताभिरङ्गुलीभिः कन्यसः तर्जन्योपरिष्ठा निष्पीडयेत् । इयं मञ्जुश्रियः कुमारभूतस्योत्पलमुद्रा । तदेव कन्यसौ सङ्कोच्य पूर्ववत् तर्जन्याभिः अङ्गुष्ठसंमतौ स्थितिका एव उत्पलकुड्मलाकार दर्शयेत् । सर्वज्ञमानामियं ताराया मुद्रा । तदेव सङ्कोच्य नेत्राकारं कृत्वा, इयं मुद्रा आर्यभृकुट्याः । तदेव ललाटे योजयेत् । इयं देव्यदेव्या नेत्रमुद्रा । पुनरपि तं सङ्कोच्योभौ मध्यमाङ्गुलिभिः सन्दंशाकारं कृत्वा मस्तकोपरि स्थापयेत् । इयं भगवतो चक्रवर्तिनः एकाक्षरस्य महामुद्रा सर्वकर्मिका । तदेव ललाटे स्थापयेद् बुद्धस्य भगवतः हृदयमुद्रा । अक्ष्णौ स्थापयेत् । तदेव चक्रवर्तिनः नेत्रमुद्रा । तदेव मुखे स्थापयेत् । तदेव विद्याधिपतेः चक्रवर्तिन एकाक्षरस्य वक्त्रमुद्रा । एवं याव मन्त्री च भुजौ जानुजङ्घाचरणादिषु त्रिंशत्प्रकारा भवन्ति मुद्रा अष्टौ महामुद्रा भवन्ति । सर्वकर्मेषु प्रयोक्तव्या । तदेव करसम्पुटं मध्यमाङ्गुल्यावेष्टितं कृत्वा कन्यसाङ्गुलिसूचीकृतां उभौ अङ्गुष्ठाग्रयवाकारास्थितौ तर्जन्या प्रसारितौ कृतसूच्या कोशीकृतावुभौ निर्नामिकौ वक्रीकृतपर्यन्तौ सुविन्यस्तौ । इयं भगवतां धर्मचक्रमहामुद्रा । तदेवाङ्गुष्ठौ विनाम्य मध्ये प्रसार्य, इयं बुद्धानां चतुर्मारपराजयमुद्रा । तदेव मुद्रां शिरस्योपरिधाय दर्शयेत् । सर्वबुद्धानां सर्वक्लेशनिषूदनं नाम महामुद्रा । तदेव ललाटे स्थापयेत् । महाकरुणा नाम सर्वबुद्धानां मुद्रा । तदेव हृदये स्थाप्य, सर्वदृष्टिशल्याभ्युद्धरणं नाम महामुद्रा । तदेव मुद्रं उभौ न्यसेत् । सर्वविद्याप्रसाधनं नाम महामुद्रा । तदेव मुद्रा ग्रीवा संन्यसेत् । सर्वानर्थप्रशमनकरी नाम महामुद्रा । तदेव मुद्रा सर्वतः भ्रामयेत् । महारक्षार्थसम्पातनं नाम महामुद्रा । एवमनेन प्रकारेण अष्टौ महामुद्रा भवन्ति सर्वार्थसाधकाः । जयोष्णीषस्य मुद्रा भवन्ति । तदेव करपल्लवो वामहस्तप्रसारितो दक्षिणतस्तिर्यक् । इयं सितातपत्रस्य च्छत्रमुद्रा ।

तदेव हस्तौ तथा विन्यस्तौ शिरसि भगवतो जयोष्णीषस्य मुद्रा। उभौ करतलौ सम्पुटीकृत्य मूर्ध्नि स्थापितौ उष्णीषाकारौ इयं भगवतो अभ्युद्गतोष्णीषस्य मुद्रा। तदेव मुद्रां विकाशयेत्। इयं ज्वालामालिनोष्णीषमहामुद्रा सर्वकर्मिका सर्वभयेषु च प्रयोक्तव्या सर्वकर्मसु। तदेव मुद्रा उरसि स्थापयेत्। सर्वोष्णीषाणामियं महामुद्रा। तदेव हस्तौ आवेष्ट्यावस्थितौ सुदृढौ सर्वतथागतानां महाकवचमुद्रा सर्वविघ्नेषु प्रयोक्तव्या। तदेव हस्तौ उभयाग्रावस्थितौ पुस्तकाकारौ उरोमध्ये न्यसेत्। इयं सा सर्वबुद्धानां जनेत्री प्रज्ञापारमिता महामुद्रा। सर्वसत्त्वानां दर्शयेत्। सर्वविघ्नेषु सर्वानर्थां प्रशमयति। सर्वार्थां सम्पादयति। स्मृतिसञ्जननं कुरुते। तदेव हस्तौ ललाटे न्यसेत्। सर्वबुद्धानामभिषेकः धर्ममहामुद्रा। सर्वाभिषेकेषु प्रयोक्तव्यः सर्वसत्त्वानाम्। तदेव हस्तौ चित्राकारेण ललाटे न्यसेत्। सर्वमारविद्रापनं नाम महामुद्रा। तदेव हस्तौ सङ्कुचिताकारौ अन्योन्यसङ्कुचितसक्तौ सूच्याकारेण व्यवस्थितौ मध्यमाङ्गुलिप्रसारितौ सूचीकृतचिह्नौ अङ्गुष्ठोद्वन्द्वपरामृष्टौ। इयं भगवतो तेजोराशेर्महामुद्रा। तदेव मुद्रं शिरसोपरि निधाय इयमपरा तथागतोष्णीषस्य तेजोराशेर्महामुद्रा। तदेव हस्तौ ललाटे स्थापयेत् तेनैवाकारेण इयं भगवतो तृतीया नेत्रमुद्रा। तदेव हस्तौ उभयचित्रीकृतौ अन्योन्योपरिस्थितौ दक्षिणार्थमेथ वामसम्पुटाकारस्थितौ अन्योन्याङ्गुष्ठकन्यसावेष्टितौ। इयं सर्वबुद्धानां महावज्रासनमूलमुद्रा। तदेव हस्तौ मूर्ध्नि दर्शिनौ महाबोधिवृक्षमूलमुद्रा। तदेव हस्तौ सम्पुटितौ पृष्ठाकृतौ सर्वबुद्धानां सर्वमारविध्वंसनकरी नाम मुद्रा। तदेव हस्तौ अन्योन्यावसक्तौ ग्रीवायां न्यसेत्। सर्वभूतवशीकरी नाम मुद्रा। तदेव कण्ठे धारयेत्। सर्वभूतविलोकनी नाम महामुद्रा। तदेव जानुभ्यां न्यसेत्। सर्वदुर्गतिविशोधनी नाम महामुद्रा। तदेवोर्ध्वे चिक्षिपेत्। सर्वदेवोत्पत्तिसन्निचयं नाम महामुद्रा। तदेव हस्तौ अभयाकारं उभौ सर्वभोगविषयं नाम शनिर्नाम महामुद्रा। तदेवाञ्जल्यकारेण मूर्ध्नि स्थापयेत्। सर्वबुद्धक्षेत्राक्रमणी नाम महामुद्रा। तदेव हस्तौ उभौ कर्णे स्थापयेत्। स्फुटाकारेण सर्वनागदमनी नाम महामुद्रा। तदेव हस्तौ उभौ सम्पुटं कृत्वा नासाग्रे धारितव्यः। सर्वबुद्धानामालम्बनं

नाम महामुद्रा। तदेव मुद्रं शिरस्योपरि न्यसेत् । सर्वबुद्धाभ्युद्गतोष्णीषो नाम महामुद्रा ॥

एवमनेनाकारेणासङ्ख्यानि भवन्ति सर्वतथागतोष्णीषाणां मुद्राणि। असङ्ख्येयैः बुद्धैर्भगवद्भिः असङ्ख्येय चक्रवर्तिकुलं असङ्ख्येयाश्चक्रवर्तिनः। तेषामधिपतिः एकाक्षरो चक्रवर्त्ती मन्त्राधिप असङ्ख्येयाश्च तथागतोष्णीषराजानः असङ्ख्येयाश्च सर्वमन्त्रेषु कल्पविसरा । तेषां संक्षेपतः वक्ष्यते मुद्रा चात्र भवत्येक एव सर्वेषां हृदयः एकाक्षरः चक्रवर्त्ती । तस्यैव यो मूलमुद्रा सा इहैवोच्यते मन्त्रेषु निर्दिष्टा महाप्रभावामितौजसः । यस्याः बन्धनादेव सर्वमन्त्राभिमुखा भवन्ति । सर्वबुद्धाश्च भगवन्तः सिद्धिमनुप्रयच्छन्ते । अधिष्ठिन्ति च विद्यासाधकं चक्रवर्तिस्मरणादेव मन्त्रनाथं एकाक्षरमद्वितीयं दशबुद्धकोटीकुशलमूलार्जितो भवति । चतस्रोऽपि मूलापत्तयोरापन्नस्य भिक्षा तन्महान्तं नरकोपपत्तिवेदनीयं कर्मक्षयं गच्छति स्मरणादेव । कः पुनर्वादो जपम् । पञ्चानन्तर्याणि च क्षयं गच्छन्ति । कः पुनर्वादोऽन्ये अकुशलाः स तस्मात् सर्वप्रयत्नेनायं विद्याराजाधिपो एकाक्षरः स्मर्तव्यो जप्तव्यः भावयितव्यो मनासि कर्तव्यः पूजयितव्यः सततमेवाराधयितव्यः । नमः समन्तबुद्धानाम् । भ्रूँ । एष स मार्षा सर्वोष्णीषाणां तथागतभाषितानां अयं मूलमन्त्रः। अनेनैव मन्त्राधिपतिना उष्णीषचक्रवर्तिना तथागतमूर्धजेन सर्वकर्माणि कारयेत् । मुद्रोपेतेन सर्वमन्त्रेषु लौकिकलोकोत्तरेषु कल्पविसरेषु नियतं सिध्यति । मुद्रा चात्र भवति । तदेव हस्तौ सम्पुटाकारौ मध्यमाङ्गुलिप्रसारितौ सर्वत्राङ्गुल्याग्राभ्यन्तरस्थितौ कुण्डलाभोगाकार ईषिदूर्ध्वावनतं उष्णीषाकारं शिरस्युपरि धारयेत् । इमं एकाक्षरचक्रवर्तिने महामूलमुद्रा। अनया सर्वकर्माणि कारयेत् । उत्तमसाधनादिषु योजयेत् । सर्वरक्षावरणगुप्तये च प्रयोक्तव्यः । नाल्पसाधप्रयोगादिषु प्रयुञ्जानः असमयज्ञो भवति । मन्त्राचार्यस्य न सिद्ध्यन्ते । अन्यत्र रक्षाविधाना । शान्त्यर्थे च पापक्षपणार्थे नित्यमेव जप्तव्यः शुचौ देशे पर्वतनदीसरित्पतिततटेषु च नान्यस्थानेषु जप्तव्यो यत् कारणं महाप्रभावोऽयं विद्याराजा नान्यदेशेषु जप्तव्यः । प्रभावो- [illegible] स्फरित्वा जप्तव्यः । मुद्रा चात्र

भवति । तदेव हस्तौ करसम्पुटाकारौ आवेणिकाङ्गुलिभिः कृत्वा मध्यमाङ्गुलीनां पर्वभागे तृतीये ईषिद्विनामयेत् । उष्णीषाकारं कारयेत् । इयं भगवतोष्णीषराजस्य महामुद्रा । तदेव हस्तौ सम्पुटं कृत्वा ईषद्विनामयेद्भगवतोष्णीषस्य तृतीया महामुद्रा । ॐ गोदरे वीर स्वाहा । अयं सर्वेषां तथागतानां हृदयः सर्वकर्मिकः सर्वार्थसाधकः सर्वानर्थनिवारकः । इयं स्मरणमात्रेणैव सर्वबुद्धाधिष्ठिता भवति । सर्वपापेभ्यो मुच्यते । सर्वमन्त्राणामुपरि वर्तते । बुद्ध एव साक्षाद् द्रष्टव्यः । अनया मुद्रया सह प्रयोक्तव्या । सर्वकर्माणि क्षिप्रतर एव करोति । अनेन जप्यमानेन सर्व एव मन्त्रा जप्ता भवन्ति । यथा यथा प्रयुज्यते तथा तथा कर्माणि करोति । जापिनस्येच्छया सर्वकर्मिको भवति । तदेव हस्तौ करसम्पुटावस्थौ शिरसि धारयेत् त्रिमूर्ध्याकारेण । इयं भगवतां बुद्धानां सर्वेषां द्वितीया हृदयमुद्रा । मन्त्रं चात्र भवति । ॐ गेहरे वीर स्वाहा । इमं सर्वेषां बुद्धानां भगवतां हृदयमुद्रा । सर्वकर्मिका सर्वानर्थनिवारिका सर्वार्थसम्पादिका महाप्रभावा सर्वमन्त्रकल्पेषु साधनीया । नात्र विचिकित्सा कार्या । यथा यथा प्रयुज्यते तथा तथा सिध्यतीति । पुनरपि तदेव हस्तौ सम्पुटाकारावस्थितौ अभ्यन्तराङ्गुलिभिः गाढमावेष्ट्य उभौ तर्जन्यौ प्रसारितौ ईषदाकुञ्चयेच्छिरस्युपरि निधाय दर्शयेत् । इमं सर्वतथागतोष्णीषाणां महामुद्रा । भवति चात्र मन्त्रः । ॐ ट्रां बन्ध स्वाहा । अयं सर्वोष्णीषाणां मूलमन्त्रः सर्वकर्मिकः दिश दिश सर्वबन्धेषु प्रयोक्तव्यः । सर्वकर्माणि च करोति । साधनजपकाले होमादिषु आत्मरक्षा पररक्षा वा सर्वद्रव्येषु सर्वमन्त्रकल्पेषु च यान्युक्तानि लौकिकलोकोत्तरेषु तान्यशेषतमनेनैव रक्षा कार्या । महारक्षा कृता भवति । सर्वमन्त्रेषु प्रयोक्तव्यः । सर्वकर्मसु सिध्यति । सर्वतथागतोष्णीषाणां महाचक्रवर्तिविद्याधिपतीनां तेजोराशिसितातपत्रजयोष्णीषप्रभृतीनां यानसाधनविसरपटलानि मुद्रामन्त्राणि तान्यशेषतः विस्तरतो प्रयोक्तव्या सर्वाणि च लौकिकलोकोत्तराणि मन्त्रतन्त्रविस्तरपटलविसरां अनन्तानि च मुद्राणि । भवन्ति चात्र मन्त्रः । ॐ ज्वलितोष्णीषदेह विभिन्द हुं फट् स्वाहा । एष

भगवतः तेजोराशेर्बुद्धस्य परमहृदयः सर्वतन्त्रेषु सर्वतः सर्वकर्मिकः प्रयोक्तव्यः इति। तदेव हस्तौ यमलिताकारौ मध्यमाङ्गुलिप्रसारितौ तर्जन्या परिवेष्टितौ कटकाकारेण पाशपरिवेष्टितौ उभौ कृतमण्डलाभोगौ। इयं च भगवतो बुद्धस्य खड्गरमुद्रा। मन्त्रं चात्र भवति। ॐ धुन जितारण हुँ। एष भगवतां बुद्धानां खड्गरकमुद्रामन्त्रः सर्वकर्मसु प्रयोक्तव्यः। यथाभिरुचितेषु सर्वमन्त्राणां प्रबोधनः सर्वभूतानां वशङ्करः सर्वसत्त्वानां समाश्वासकरः सर्वद्रव्याणां समुत्तेजकः साधकः सर्वपापानां समुच्छोपकः। यथा यथा प्रयुज्यते अयमष्टाक्षरो तथागतमन्त्रः तथा तथा सर्वकर्माणि साधयतीति। तदेव हस्तौ आवेष्टितौ कृत्वा कृतपात्राकारौ। इयं सर्वतथागतानां पात्रमुद्रा तथागतपात्र इत्यवगन्तव्यः। नाभिदेशे धारयेत् सर्वकर्मसमर्था भवति। भवति चात्र मन्त्रः। ॐ लोकपालाधिष्ठित धर धर धारय महानुभाव बुद्धपात्र स्वाहा। एष भगवतां बुद्धानां तथागतपात्रमुद्रामन्त्र अनेन संयुक्तः सर्वकर्मसमर्थकरो भवेत् ॥

करोति कर्मवैचित्र्यं गतिमाहात्म्यपूजितम्।
साधयेत् सर्वकर्माणि सर्वमन्त्रेषु भाषिताम् ॥

साधकस्येच्छया क्षिप्रं करोतीह न संशयः।
येऽपि ताथागती मन्त्रा ये चापि अवलोकिते ॥

कुलिशाद्ये मन्त्रमुख्यास्तु नानादेवतपूजिता।
ते सर्वे सिद्धिमायान्ति बुद्धपात्रसमोदिता ॥

त्रिविधा दूतिगणा ह्यग्रा चेटचेटिगणास्तथा।
नानाकिङ्करमुख्यास्तु यक्षराक्षसकश्मला ॥

प्रेष्या सर्वमन्त्राणां सर्वकर्मकरास्तथा।
विविधैर्राजमुख्यैस्तु देवगन्धर्वयोनिजैः ॥

सिद्धविद्याधरैः मन्त्राः लोकपालाश्च महर्द्धिकाः।
शक्राद्यैः ब्रह्ममुख्यैस्तु सुरश्रेष्ठैश्च धीमतैः ॥

मन्त्रा भाषिता ये स्युः सर्वकर्मकरा सदा।
किन्नरैर्गरुडैश्चापि महर्द्धिकैः ॥

सर्वे ते सिद्धिमायान्ति बुद्धपात्रसमोदिता ।
आकृष्टा सर्वमन्त्राणां गतिमूर्तिसमाश्रिताम् ॥

वशी ता मन्त्रराट् स्वामी प्रभुः श्रेष्ठो महाद्युतिः ।
अग्र च सर्वमन्त्राणां निर्दिष्टो तत्त्वदर्शिभिः ॥

स मन्त्रो पात्रभूतस्थः त्रिपु चिन्तामणिस्तथा ।
करोति कर्मवैचित्र्यं ईप्सितं साधकेच्छया ॥

विविधागुणमाहात्म्यं प्रभावातिशयापराम् ।
करोति ऋद्धिदुर्लङ्घ्यं सर्वमन्त्रिभिः ॥

अपात्रो पात्रतां याति मन्त्रस्थे मुनिवर्णिते ।
पात्रो मन्त्रप्रयुक्तस्तु मुद्राभिश्च समन्वितः ॥

करोति गुणविस्तारं विचित्रं कर्मसम्भवम् ।
हन्युः सर्वतो रोगान् भोगांश्चैव सुपुष्कलाम् ॥

त्रिजन्मगतसत्त्वानां देवदैत्यनराधिपाम् ।
कुर्यात् सम्पदां क्षिप्रं सर्वकर्मसु योजिता ॥ इति ।

तदेव हस्तौ करसम्पुटाकारौ सविचित्रवेणिकावबद्धौ ललाटदेशे स्थापयेत् । चित्रहस्त तदेव भगवतां बुद्धानां चिन्तामणिरत्नमहामुद्रा । मन्त्रं चात्र भवति । नमः सर्वबुद्धेभ्यः ॐ तेजोज्वाल सर्वार्थसाधक सिध्य सिध्य सिद्धिचिन्तामणिरत्न हुँ ॥

चिन्तामणिरत्नमन्त्रः सर्वार्थसाधकम् ।
ईप्सितां साधयेदर्थां मन्त्राश्चापि सविस्तराम् ॥

करोति गुणमाहात्म्यं चिन्तितं चापि साधयेत् ।
सम्पदां सफलांश्चापि मन्त्रतन्त्रसुभाषितम् ॥

नैष्ठिकं साधयेदर्थां बुद्धत्वनियतं तथा ।
इच्छया कर्मविन्यस्तं करो चैवमजायत ॥

विविधां सम्पदां सद्यः फलमुद्धवचेष्टिताम् ।
सर्वाणां मन्त्रतन्त्राणां साधये त्मसाधितम् ॥

देवत्वमथ शक्रत्वं ब्रह्मत्वं वापि रूपिणम् ।
आभास्वराणां तथा मूर्तिसदृशानां सुदर्शनाम् ॥

सुरश्रेष्टां सुरामग्रां बृहत्फलामकनिष्ठाम् ।
देवभूयिष्ठां मूर्तिमाप्नोति साधनादिति ॥

चिन्ता मनसो ह्यग्रा कथिता मन्त्रार्थविस्तराम् ।
मुद्रास्तु पुष्कलाश्चैव गतिधर्मार्थसाधका ॥

सर्वधर्मार्थनिःपत्तिं सर्वमन्त्रार्थसाधनम् ।
सर्वगुणबोध्यर्थं धर्मधातुसमाश्रयम् ॥

कथितं मन्त्ररूपेण रत्नचिन्ताग्रपूजितम् ।
विशेषात् प्राप्नुयात् स्वर्गरूपाश्चैव समाश्रयम् ॥

साधनात् प्राप्नुयात् स्वर्गे गतिमन्त्रार्थविस्तरमिति ॥

तदेव हस्तौ उभौ स्कन्धावसक्तौ अर्धोपरिस्थितौ दक्षिणवामावष्टब्धौ अन्योन्यासक्तौ करमूलसुयोजितौ । इयं सर्वबुद्धानां चीवरमुद्रा । भवति चात्र मन्त्रः । ॐ रक्ष रक्ष सर्वबुद्धाधिष्ठिता मे चीवर स्वाहा । चीवरमन्त्रः । आत्मचीवरमभिमन्त्र्य प्रावरेत् । सर्वभूतानां अधृष्यो भवति । महाराजक्षत्रियेण मूर्ध्नाभिषिक्तेन सर्वप्रश्वासकरेणात्मवस्त्रमभिमन्त्र्य ससत्वारां सङ्ग्राममवतरेत् । सर्वारयः दृष्ट्वा स्तम्भिता भवन्ति । प्रतिनिवर्तन्ते वा । सर्वभूताश्च दृष्टमात्रा वशा भवन्ति । गतमानमदर्प न चास्य काये शस्त्रं निपतति । न चास्य मनुष्यामनुष्यभयं भवति । न विषो न हुताशनः काये निपतति । न चास्य रोगभयं भवति । न चास्यापमृत्युभयं भवति । न चास्य परचक्रेण हन्यते । न डाकिनीभूतपिशाचैश्च यक्षराक्षसगन्धर्वैं विविधैर्वा भूतगणैः ओजोहारिभिः रौद्रचित्तैः पिशिताशनैः सर्वक्रव्यादैर्वा हिंसकैः परसत्त्वविहेठकैः पापकर्मान्तचारिभिर्वा राजानैर्न शक्यते हिंसयितुं उपघातं कर्त्तुम् । कः पुनर्वादो विना रक्षा वा भेत्तुं सर्वकर्मादिषु सर्वद्रव्येषु जीविता व्यवरोपयितुम् । न हि तद्विद्यते सत्त्वो वा सत्त्वनिकायो वा मन्त्रो वा मुद्रो वा विषो वा स्थावरजङ्गमो वा शस्त्रो वा प्रहरणानि वा विविधानि

राक्षसो वा राक्षसी वा यक्षो वा यक्षी वा यक्षमहल्लको वा यक्षमह-ल्लिका वा यक्षपार्षदो वा यक्षपार्षदी वा पेयालं विस्तरेण कर्तव्यं सर्वसत्त्वेभ्यः । नेदं स्थानं विद्यते । अतो न तथागतमुद्राचीवरमन्त्रेण कृतरक्षाविधानेन जापमात्रेण वा स्मरितेन वा नान्यशक्तो भेत्तुं तथा-गतमन्त्रैर्वा सर्वबुद्धबोधिसत्त्वैश्च भेत्तुम् । वर्जयित्वा तस्यैव साधक-स्येच्छया । एवं महाप्रभावोऽयं मन्त्रः सर्वकर्मिकः सर्वार्थसाधकः स-र्वदुष्टविनाशकः सर्वमङ्गलसङ्गतः सर्वार्थपरिपूरकः सर्वदुर्गतिशोधकः सर्वक्लेशनिषूदनो बुद्धधर्मा परिपूरकमिति ॥

तदेव हस्तौ पूर्ववत् मध्यमाङ्गुलिमधोनामितौ अनामिकाग्राव-स्थितौ अङ्गुष्ठपरिनामितौ तृतीयपर्वमङ्गुष्ठाविश्लेपितौ कन्यसानामितौ चक्राकारौ आराग्रोपेतौ नाभिमण्डलोपेतौ कृत्वा शिरःस्थाने स्थापयेत् । इयं सर्वबुद्धानां धर्मचक्रमुद्रा । मन्त्रं चात्र भवति । ॐ छिन्द छिन्द हन हन दह दह दीप्तचक्र हूँ । एष सः सर्वबुद्धानां धर्मचक्रमन्त्रः । सर्वक्लेशनिषूदनः सर्वोपायदुर्गतिविनिपातां छिन्दयति । सर्वबुद्धधर्मां ज्वालयति । सर्वक्लेशान्धकारां आलोकीकरोति । सर्वदुःखां विघट-यति । सर्वकर्मां साधयति । सर्वदुःखेभ्यः प्रमोचयति । सर्वज्ञज्ञानं दी-पयति । अयं भगवां धर्मचक्रः परमन्त्रकृतदुष्टसत्त्वोपदेशितप्राणोप-हारिणां मन्त्रां हिंसकां रौद्रां विकृतिस्थां छिन्दयति दालयति पाच-यति शोषयति उत्सादयति च साधकेच्छया उत्कीलयति मोचयति यथाव्यवस्थायामुपस्थापयति । यथा यथायं भगवां प्रयुज्यते तथा तथा कर्माणि करोति वर्जयित्वाभिचारुकं कायोपसंहिताना च । स-र्वशान्तिकर्मसु च प्रयोक्तव्यम् । महारक्षादिभिः सर्वतः सर्वसत्त्वोपका-रायैव प्रयोक्तव्यः । सर्वसाधनेषु लौकिकलोकोत्तरेषु मन्त्रमुद्रेषु कल्पो-क्तेषु सर्वकर्मसु शान्तिकपौष्टिकेषु महारक्षा अनेनैव प्रयोक्तव्यमिति ॥

तदेव हस्तौ प्रहारावर्जितदक्षिणाग्रकरवामहस्ततर्जन्या तर्जय-मानं सङ्कोचितकनिकाग्रन्थान्यप्रयोगावस्थितसन्दंशेऽङ्गुष्ठा जा-नुभागावस्थितवामचरणविक्षिप्तदक्षिणावनामितउपविष्टकिञ्चित्स्मित-

कास्थित। इदं भगवत्यापराजिताया महामुद्रा। भवति चात्र मन्त्रः—
ॐ हुलु हुलु चण्डालि मातङ्गि स्वाहा। अपराजिताया

मन्त्रा सर्वबुद्धानां सर्वमारनिषूदनी।
सर्वविघ्नप्रशमनी आयुरारोग्यवर्धनी॥

श्रेष्ठा सर्वमन्त्राणां रक्षाकर्मविधानता।
नरनारीकुमाराणां सौभाग्यजननं परम्॥

मनुष्यामनुष्याश्च ये चान्ये दुष्टसत्त्वचेतसा।
राक्षसोस्तारका प्रेता स्कन्दापस्मारगुह्यका॥

मातृभूतग्रहगणा योगमन्त्रकृतानि च।
रुजो रोगो व्याधयश्च नानाधातुसमुद्भवाः॥

सर्पमूषिकलूताश्च कीटाविष्फोटकानि च।
शरीरे न क्रमिष्यन्ति कर्मणान्यत्र पूर्वकात्॥

अध्ववादविवादेषु राजचोरोदकाग्निषु।
जयं क्षेमं शिवं शान्ति लप्स्यते नात्र संशयः॥

भूर्जपत्रेऽथवा वस्त्रे लिखित्वान्यत्र वा क्वचित्।
शिरसा ग्रीवकण्ठ्या वा बाहुना पाणिनाथवा॥

वस्त्रबन्धं शिखाबन्धं कृत्वा ग्रन्थिमालिकाम्।
धारयिष्यति यो नित्यं स्वस्ति तस्य भविष्यति॥

यश्चेमां प्रातरुत्थाय स्वपंश्च परिवर्तये।
सुखं कालक्रियां कृत्वा सप्तजातीं स्मरिष्यति॥

रूपवां शीलसम्पन्नो मुखेनोत्पलगन्धिना।
प्रियश्चादेयवाक्यश्च जात्यां जात्यां भविष्यति॥

भवन्ति चात्र सिद्धानि मन्त्रपदानि मन्त्रसंज्ञानि यथोक्तार्थकराणि तु। तद्यथा—

भञ्जने स्तंभने धा धा धा धत्स या या या यते हा हा हा हते परकराणि वीर्येवीर्ये गुणतेजभूतकरि भद्रकरि रौद्रकरि कुम्भवति

विषकुम्भवति सर्वबले भूतबले रक्ष रक्ष मां सर्वविषेभ्यः सर्वविघ्नेभ्य । तद्यथा — सिद्धकरि सिद्धार्थे सिद्धमनोरथे सिद्धकार्ये कुरु नुरूपे स्वस्ते प्रशस्ते सिद्धे सिद्धार्थे धैर्यवति समने तपने शरणे भद्रे भवति शान्ते दान्ते शिवे हुनुनु परि परित्राणं कुरु, परिग्रहं कुरु, परिपालनं कुरु, शान्तिं कुरु, स्वस्त्ययनं कुरु, मम सर्वसत्त्वानां च रक्षां कुरु स्वाहा । अयं हृदयः अपराजितायाः । पूर्वं मूलविद्या । अवश्यं साधकेन कुशलपक्षाभियुक्तेन भवितव्यम् । त्रिःकालं जप्तव्यम् । पूर्वतरमेव सकृत् पुस्तकवाचिकायां वाचयेदेतदेव कुशलपक्षं भवति । उपहृदयं चात्र भवति — नमः सप्तानां सम्यक्सम्बुद्धानां सश्रावकसङ्घानां सर्ववैरभयातीतानाम्

विपश्चिनस्तेजसा ऋद्ध्या च शिखिनस्तथा ।
विश्वभुक् प्रज्ञया चैव क्रकुच्छन्दबलेन च ॥

कनकमुनेः शिक्षायां काश्यपस्य गुणैरपि ।
शाक्यसिंहस्य वीर्येण शिवं भवतु सदा मम ॥

तद्यथा — जये विजये अपराजिते मारसैन्यप्रमर्दनीये स्वाहा । सर्वार्थसाधनीये स्वाहा । एषा भगवती सर्वार्थसाधिका यथा यथा प्रयुज्यते, तथा तथा कर्माणि करोति । सर्वत्र च रक्षाविधानेषु प्रयोक्तव्या । अवश्यं साधकेन मनसि कर्त्तव्या । सर्वविघ्नां नाशयति । सर्वमारकर्माणि च विधमयति । सर्वमन्त्राणि चांमुखीकरोति । सर्वबुद्धधर्मां परिपूरयति । सर्वलौकिकलोकोत्तराणि च मन्त्रं आकर्षयति । ऊनातिरिक्तं परिपूरयति । सर्वाशां सम्पादयति । सर्वदुष्टां निवारयति । संक्षेपतः साधकस्येच्छया सर्वा करोति । मरणकाले चास्य संमुखं दर्शनं ददाति । सर्वापायदुर्गतिं परिशोषयति । सततजापेन पञ्चानन्तर्याणि क्षपयति । चतस्रोऽपि मूलापत्तयः तन्वीकरोति । स्मरणमात्रेण जापेनैवोन्मूलयति । सर्वदेवोपपत्तिमनुष्योपपत्तिभ्यो प्रतिष्ठापयति । सर्वबोधिसत्त्वचर्या नियोजयति । सर्वबुद्धधर्मां परिपूरयति । एवमपि भगवती अपरिमितगुणानुशंसा महाप्रभावा सर्वबुद्धानां मुखोद्गीर्णा सर्वमारनिर्नाशनाय भाषिता सर्वतथागतैः सर्वक्लेशशोषणी

अप्रतिहता सर्वकर्मसु सर्वरक्षावरणगुप्तयेषु च योजयितव्या । सर्वबु-
द्धानां निष्पादितमेतत् । महाभिज्ञानाद्यमेतत् । सर्वचर्याभिश्रयमेतत् ।
सर्वबुद्धानां गोपितमेतत् । महासमाधिनिष्पन्दितमेतत् । महाप्रातिहार्यऋ-
द्धिमेतत् । सर्वातिशयमेतत् । सर्वशान्तपदमेतत् । सर्वबुद्धास्पदमेतत् ।
निर्वाणपदमेतत् । स्वस्त्ययनपदमेतत् । अनभिलाप्यपदमेतत् । भूत-
कोटिपदमेतत् । अभावस्वभावपदमेतत् । यदुत मन्त्रपदं सर्वबुद्धाधि-
ष्ठानपदमिति ॥

तदेव हस्तौ करसम्पुटाविन्यस्तौ उभयाङ्गुलिमध्यमुन्नितौ ललाटदेशे न्यसेत् । एषा अपराजिताया मुद्रा द्वितीया सर्वकर्मिका मूलमन्त्रेण सह विन्यस्ता सर्वाशां परिपूरयति । हृदयस्थाने न्यस्ता हृदयमन्त्रेण संयुक्ता सर्वरक्षोघ्ना सर्वापायदुर्गतींश्च नाशयति । एषा तृतीया भगवत्यापराजितायाः हृदयमुद्रा । तदेव हस्तौ नाभिदेशावलम्बितौ अधोनामितौ करौ । एषा चतुर्था भगवत्यपराजिताया उपहृदयमुद्रा । हृदयमन्त्रेण सर्वकर्माणि करोति । सर्वमङ्गलसंमतानि च सर्वशान्तिः स्वस्त्ययनं च । उदकाभिमन्त्र्य स्नपनं परमसौभाग्यकरणं अलक्ष्म्यापहं लक्ष्मीसञ्जनन श्रिया सम्पत्करणम् । तदेव हस्तौ वक्रदेशे स्थापयेत् । इयमपरा महामुद्रा भगवत्यपराजितायाः महामुद्रा पञ्चमं भवति । एवमनेन प्रकारेण असङ्ख्येयानि मुद्राणि भवन्ति । सर्वपराजितमन्त्रेषु च प्रयोक्तव्यमिति । तदेव हस्तं दक्षिणक्षिप्तं ईषिन्मुष्टोपश्लेषितं वामहस्तेन दृढमुष्टिकम् । एषां सर्वबुद्धानां महाशक्तिमुद्रा । मन्त्रं चात्र भवति — ॐ विजये महाशक्ति दुर्धरि हूं फट् विजयिने फट् मङ्गले फट् स्वाहा । तथागतशक्तिमन्त्रा सर्वदुष्टगरनेषु प्रयोक्तव्या । महाभयेषु च प्रत्युपस्थितेषु ग्रामे वा मुद्रोपेता प्रयोक्तव्या सर्वकर्मसु । ग्रहनक्षत्रपीडासु च सर्ववेताडग्रहगृहीतेषु सर्वयक्षराक्षसपिशाचमरुतग्रहब्रह्मराक्षसादिषु गृहीतस्य मुद्रां बध्वा मन्त्राः प्रयोक्तव्याः । तत्क्षणादेव मुच्यति । सर्वमहाश्मशानप्रवेशेषु च प्रयोक्तव्या । सर्वविघ्ना विद्रवन्ति, प्रपलायन्ते सर्वेण सर्वं न भवन्ति । एवम्प्रकारान्यनेकानि सर्वकर्मार्थचित्राणि मन्त्रतन्त्रमाहात्म्यानि साधयति । सर्वरक्षावरणगुप्तिं च करोति । सर्वरक्षोघ्नं च पवित्रं आयुरारोग्यवर्धनमिति ॥

तदेव हस्तौ समापुटाकारौ ईषिन्नामितामध्यमाङ्गुष्ठौ म-नायिकावेष्टितान्तरौ नेत्राकारौ उभयाङ्गुष्ठाग्रौ एष भगवतां बु-द्धानां तथागतलोचनमहामुद्रा । तथागतदर्शिना सर्वतथागुणाप्रमात्रा सर्वतथागतानां जनेत्री सर्वविद्यानां प्रभङ्करी सर्वाशापरिपूरकी सर्वकु-दृष्टीनां विशोधनकरी सर्वसत्त्वसम्यग्दृष्टिप्रजननकरी सर्वतथागतकु-लमाता सर्वमन्त्रगोत्रकुलन्धरी सर्वलौकिकलोकोत्तराणां मन्त्राणां परिपूरकी सर्वार्थपरिपूरकी समाश्वासिका । भवति चात्र मन्त्रः — ॐ रु रु स्फुरु ज्वल तिष्ठ सिद्धलोचने सर्वार्थसाधनि स्वाहा । त-थागतलोचनानाममहाविद्या । ननन ननन ननन ॐ बुद्धलोचने स्वा-हा । इयं सा विद्या वज्रपाणेः सर्वकर्मिका अस्यैव । तदेव हस्तौ पूर्ववत् सम्पुटाकारं कृत्वा मध्यमाङ्गुलिरवनामितौ कन्यसाप्रसारि-ताग्रौ ईषिदवनामितौ उभयाङ्गुष्ठौ तर्जन्यपरिवेष्टितौ अनामिकासं-श्लिष्टौ ईषत्कुञ्चितौ । इयं भगवतां सर्वबुद्धानां ऊर्णामुद्रा । तदेव हस्तौ उभयाग्रौ ललाटदेशे स्थापयेत् । एष सर्वतथागतानां ऊर्णा-मुद्रा । तदेव हस्तौ उभयाग्रवेणीकृतौ ललाटदेशे मण्डलाकारेणावेश-येत् । ईष तृतीयं ऊर्णामणिरत्नमुद्रा । तदेव हस्तौ उभयतः कुञ्ची-कृतौ कन्यसाङ्गुलिवेष्टितौ उभयाङ्गुष्ठसंश्लिष्टौ । इयं चतुर्थी ऊर्णामुद्रा । तदेवाङ्गुष्ठावनतौ ललाटदेशे चित्राकारेण दर्शयेदेष सर्वतथाग-तानां तथागतोर्णा । एते पञ्च महामुद्रा तुल्यवीर्या तुल्यप्रभावा सर्वक-र्मिकानि भवन्ति । भवति चात्र मन्त्रः सर्वेषाम् — नमः सर्वतथाग-तानीभ्योऽर्हद्भ्यः सम्यक् सम्बुद्धेभ्यः । हे हे वन्ध वन्ध तिष्ठ तिष्ठ धारय धारय निरुन्ध निरुन्धोर्णामणि स्वाहा । भगवन्मन्त्रा सर्वोर्णाम-णिमुद्राणां सर्वकर्मिकाणि भवन्ति । एषा तथागतोर्णामुद्रा अप्रतिहता सर्वकर्मसु सर्वमयोक्तव्या । गोरोचनेन तिलकं कृत्वा मन्त्रं जपता त-थागतोर्णा सङ्ग्राममवतरे । सर्वशत्रवः स्तम्भिता भवन्ति । दृष्ट्वा तं मपलायन्ते । विगतक्रोधाश्च भवन्ति । मैत्रचित्ता हितचित्ता सर्वसत्त्वा स-माश्वस्ताश्च भवन्ति । दृष्ट्वा तं रोचनतिलकं कृत्वा सर्वक्रव्यादादयो न शक्यन्ते । दृष्ट्वा तं महाराजमहारत्नमहेशाख्यमहोत्साहं ज्वलन्तमिव पश्यन्ते । सर्वदुष्टप्रदुष्टानां सर्वयक्षराक्षसप्रेतपिशाचसर्वग्रहभूतकश्मला

रौद्रचित्ता मैत्रचित्ता भवन्ति। अपक्रमन्ते तस्माद् देशात्। सर्वोपद्रवचर्येभ्यश्च मुच्यते। सर्वग्रहगृहीतेषु सर्वमातरबालग्रहेषु ब्रह्मराक्षसादिषु गोरोचनमभिमन्त्र्य ललाटे तिलकं कृत्वा दर्शयेत्। सर्वे दृष्टमात्रा मुञ्चन्ते विद्रवन्ति च प्रपलायन्ते। सर्वेण सर्वं तस्मै न भवन्ति न भूयो गृह्णन्ते। यदि गृह्णन्ति, सर्वेण सर्वं विनश्यन्ति। एवं सर्वग्रहेषु प्रयोक्तव्यः सर्वतः मन्त्रतन्त्राणां कल्पेषु यान्युक्तानि विविधानि साधयति लौकिकलोकोत्तरेषु यानि विधानमण्डलपटसाधनानि तन्यनेनैव साध्यानि क्षिप्रतरं सिध्यन्ते। गोरोचनमभिमन्त्र्य तिलकं कृत्वा शत्रुमध्ये प्रविशेत्। विगतक्रोधा भवन्ति। न शक्यन्ते अभिभवितुम्। महाजनमध्ये जपता प्रविशेत्। सर्वे मैत्रचित्ता भवन्ति। आदेयवाक्यश्च भवन्ति। परैरनभिभवनीयश्च अधृष्यश्च सर्वत्र सर्वभूतानाम्। गोरोचनेनाभिमन्त्र्य सप्तवारानेनेन मन्त्रेण तिलकं कृत्वा महाश्मशानं प्रविशेत्। सर्वक्रव्यादाशिनः प्रपलायन्ते। सर्वग्रहमातराश्च नश्यन्ते। अधृष्यो भवति। सर्वमनुष्याणां तेजसा तस्य ज्वलन्तमिव दृष्ट्वा ओजोहारा अपक्रमन्ते। तस्माद् देशा दर्शनमपि न समनुप्रयच्छन्ति। कः पुनर्वादो ओजो हर्तुम्। क्षणमपि नाप्रतिष्ठन्ते। महाश्मशानं परित्यज्य सर्वभूतगणा ये तत्र निवासिनः ते प्रक्रमन्ते। इतश्चा + तश्च न शक्यन्ते प्रेक्षितमपि। कः पुनर्वादो ओजो हर्तुम् हिंसयितुम् वा। एवमपीयं महाप्रभावा सर्वविद्या महर्द्धिका उपपरिवर्तते महाविद्या तथागतोर्णो नाम। असङ्ख्यैश्च बुद्धैर्भगवद्भिः भाषिता गङ्गासिकतप्रख्यैः भाषिता चाभ्यनुमोदिता च। एतर्हि शाक्यमुनिना सम्यक् सम्बुद्धेन भाषिता चाभ्यनुमोदिता च। येऽपि ते भविष्यन्त्यनागतेऽध्वनि सम्यक् सम्बुद्धाः तेऽपि भाषिष्यन्ते। एवमतीतानागतैर्बुद्धैर्भगवद्भिः संवर्णिता सम्प्रशस्ता अनुमोदिता मयाप्येतर्हि शाक्यमुनिना संवर्णिता सम्प्रशस्ता कृताभ्यनुज्ञाता सर्वसत्त्वानां सर्वासां विधितः साधयिष्यन्तीति। यथा यथा प्रयुज्यते तथा तथा सर्वकर्माणि करोति। वर्जयित्वाभिचारुकम् कामोपसंहितं चेति॥

तदेव हस्तौ सम्पुटाकारौ कृत्वा अन्योन्यावावेष्ट्य चित्रीकृतौ आत्मोरसि मध्ये स्थापयेत्। एतद् भगवतः समाधिवज्रस्य महामुद्रा।

यां बध्वा अवैवर्त्तिको भवत्यनुत्तरायां सम्यक् सम्बोधो नियतस्थम्। भवति चात्र मन्त्रः—नमः समन्तबुद्धानाम् । ॐ त्रिभिदे चूर्णय चूर्णय वज्रधिक् वज्रधिक् हुँ हुँ जः जः समाधिजः हुँ फट् स्वाहा। अल्पमस्य विस्तरेण सर्वं तं प्रयोक्तव्यम्। अपरिमितानुशंसश्चायम्। भगवां समाधिवज्रः सर्वबुद्धानाम् । तदेव मुद्रां कण्ठदेशे न्यसेत् । इयं सर्वबुद्धानां पद्मपद्ममुद्रा । एतदेव वामपार्श्वे न्यसेत् । उत्पलमुद्रा । एतदेव दक्षिणभुजे न्यसेत्। इयं भगवतो बुद्धस्य कृपालम्बनमैत्रीमुद्रा। एतदेव हस्तौ उभयाङ्गुल्यवेष्टितौ मध्यमाङ्गुलिसम्प्रसारितौ आभोगमण्डलाकारौ हृदयमध्ये न्यस्ता। इयं द्वितीया मैत्रीमुद्रा। सर्वतथागतानां सर्वकर्मिकम्। अप्रतिहता। एवमनेनैव विधिना ललाटे तृतीया, ऊर्ध्वविन्यस्ता चतुर्थ्या, समन्तात् परिभ्रामिता पञ्चमा भवति मैत्रीमुद्रा। ध्यानालम्बनकाले च प्रयोक्तव्या । न सर्वे मानुषा विहेठयन्ति। न चास्य काये किञ्चिदाबाधमुत्पादयन्ति मानुषामानुषा वा सर्वयक्षराक्षसप्रेतपिशाचकटपूतनादयः । सर्वे च मारा मारकर्माणि कुर्वन्ति । सर्वे च विघ्ना अविघ्ना भवन्ति । भवति चात्र मन्त्रः—ॐ प्रस्फुर प्रस्फुर कृतालम्बनमन्त्रात्मक ह्राँ । एष भगवतो मैत्री प्रयोक्तव्यः । तदेव हस्तावन्योन्यावावेष्ट्य वेणिकाकारौ कृत्वा मण्डलाद् व्यवस्थापयेत् । ज्येष्ठाङ्गुलीयकावूर्ध्वस्थितौ ललाटदेशे न्यसेत् । एष भगवतो बुद्धस्य महाकरुणामुद्रा। मन्त्रं चात्र भवति—ॐ विश्वे स्वाहा । सर्वकार्मिका । सत्त्वानां प्रयोक्तव्या। करुणात्मका भवन्ति । तदेव हस्तावुद्वेष्ट्य चित्रीकृतावभयावस्थितौ । एषा बुद्धस्य भगवतो महामुदिता मुद्रा । मन्त्रं चात्र भवति—ॐ मुनिमुनिगगन स्वाहा । एषा भगवती सर्वकर्मिका सर्वासां परिपूरयति प्रमुदितेन चेतसा प्रयोक्तव्या । सर्वं करोति । सर्वमन्त्रकल्पेषु यानि कर्माणि सर्वलौकिकलोकोत्तरेषु तान्यशेषतो साधयतीति । तदेव हस्तावुभयाङ्गुष्टविन्यस्तौ चित्रीकृतौ ललाटे दर्शयेदेषा भगवतस्तथागतप्रेक्षामुद्रा सर्वकर्मिका सर्वार्थसाधिका । मन्त्रं चात्र भवति—ॐ महव्रते उपेक्षय सर्वधर्मा विश्वात्मने विश्वमूर्त्ति ज्वल ज्वलय सर्वबुद्धधर्मा हुँ फट् स्वाहा । षट्पारमितासु च

षण्मुद्रा भवन्ति। तदेव हस्तौ वरप्रदानौ। इयं दानपारमिता महामुद्रा। तदेव हस्तौ अन्योन्यसङ्कुचितौ नाभिदेशे स्थापितौ। इयं शीलपारमिता महामुद्रा। तदेव हस्तौ अधः कृत्वा कक्षाभ्यां सन्नियोज्य स्थापयेदियं क्षान्तिपारमिता महामुद्रा। तदेव हस्तौ भुजोपरि स्थापयेत्। परामृश्यमाना विपर्यस्ताकारेण। इयं वीर्यपारमिता महामुद्रा। तदेव हस्तौ पर्यङ्कं बध्वा मुपरि स्थापये वामदक्षिणमुपरि निबध्य च पर्यङ्कासने सर्वसत्त्वानां करुणायां माना ध्यानालम्बनगतदृष्टि। इयं भगवत्या ध्यानपारमितायाा महामुद्रा। तदेव ध्यानपारमितामुद्रं पर्यङ्कमभिन्द्य धर्मदेशनाकारा। इयं भगवत्या प्रज्ञापारमितायाा महामुद्रा। तदेव पर्यङ्कमभिन्द्यात्। वामहस्त पर्यङ्के न्यस्य दक्षिणहस्तमवलम्ब्य भूमौ स्पृशेत् वज्रासनाकारेण। इयं भगवती सर्वबुद्धानामनुत्तरायां सम्यक् सम्बुद्धौ महामुद्रा सर्वबुद्धधर्माणामेषा एव महामुद्रा। सर्वेषां मन्त्राणि भवन्ति— ॐ दाने दद दद ददापय ज्वल ज्वल सर्वबुद्धाधिष्ठिते हुँ हुँ जः स्वाहा। एषा दानपारमितायाा महामुद्रा। ॐ शील शीलाढ्ये शान्तिकरणि शिवे प्रशस्ते सर्वबुद्धाधिष्ठिते स्वाहा। शीलपारमितायाा महामुद्रा— ॐ शान्ते श्रीकारि क्षान्ते क्षान्तिकारि स्वाहा। इयं क्षान्तिपारमितायाः। ॐ वीर्ये वीर्यमिति सर्वबुद्धाधिष्ठिते स्वाहा। अभावस्वभावे स्वाहा। वज्राक्रमणि स्वाहा। इयं वीर्यपारमितायाः। ॐ शान्तिकरि धूधूधूर्धरि धैर्ये वीर्ये गगने रमणे ध्यानवति स्वाहा। इयं ध्यानपारमितायाः। ॐ धीः धूः इयं प्रज्ञापारमिता। ॐ त्रायाहि भगवति सर्वबुद्धजुष्टे अनालम्बने गगनस्वभावे धर्मधातुमनुप्रविष्टे आलोककरि विधमय विधमय सर्वक्लेशान्धकारम्। च्छोपय तारय माम्। अमूर्त्तिजे हुँ हुँ दालय सर्वकर्मां हुँ फट् स्वाहा। एषा भगवती बुद्धानां भगवतां महाबोधिमन्त्रा सर्वकर्मिक सर्वार्थसम्पादिकाः सर्वामर्थप्रतिघातिकाः· सर्वबुद्धधर्मा पारिपूरिका. सर्वक्लेशां निषूदिनी सर्वमन्त्रां परकर्मकृतां विनाशनी सर्वमारविद्रापणी सर्वलौकिकलोकोत्तराणां मन्त्राणां प्रसाधनी सर्वपापां विधमनी सर्वदुर्गतिशोधिका सर्वदेवमनुष्येषु सर्वबुद्धधर्मेषु प्रतिष्ठापनीति। संक्षेपतो यथा यथा प्रयुज्यते,

तथा तथा कर्माणि करोति। न शक्यमस्याः कल्पकोटीभिर्गुणमाहात्म्यं संवर्णनं असङ्ख्येयैश्च बुद्धैर्भगवद्भिः प्रभावनिकुर्वणचर्याधिष्ठानऋद्धिबलाधान भाषितुं वर्णयितुं वा। एवमस्या भगवत्या अपर्यन्तगुणविस्तारमाहात्म्यस्य विकुर्वण इति षट्पारमितामपि विस्तरेण कर्त्तुम्। समासतो निर्दिशप्रभावचर्या ऋद्धि च गुणगोत्रमधिष्ठितचर्या सर्वतो ज्ञेया विशेषाधिगमोऽपि वा॥

गगनस्वभावा धर्माख्यां भावाभावविचारताम्।
कल्पकल्पाक्षरं प्रयोक्त + + कर्मसिद्धिषु॥

पुष्कलां कथिता ह्येभिः क्षिप्रं फलाकारसमुद्भवम्।
गगनस्वभावमन्त्रार्थं मक्षरव्यक्तिभूषितम्॥

फलन्ति बहुधा काले युक्तिमात्रि दभिमूक्षिता।
मुद्रातं वै सविस्तरं कथितं तत्त्वचेष्टिभिः॥

मन्त्रतन्त्रगतिं कालो नियमश्चैव सुयोजिता।
जपो होमादिभिर्ज्ञेयं फले तत्त्वसमुद्भवे॥

आश्रयाय न द्रव्याणां गतिर्लक्षणसुलाक्षितम्।
मन्त्रबोथ स्वमन्त्रं न कुलयोनिगमोदयाः॥

लक्ष्यते सिद्धिकालो हि मुद्राचिह्नसमुद्भवम्।
तत्त्वनिष्ठागतो मन्त्री जपेन्मन्त्रं समाहितः॥

सिद्धयः सिद्धहेतुत्वं दर्शयेत् कुलदेवताम्।
एता मुद्रा वराः प्रोक्ता मन्त्राश्चैव महायशाः॥

सिध्यन्ते विधिना युक्ता यथेच्छा मानसोद्भवे। इति॥

तदेव हस्तौ परिवेष्टिताङ्गुलीयकौ दक्षिणाङ्गुष्ठावनामितौ वामाङ्गुष्ठाधस्थितौ। एषा सर्वबुद्धानां हृदयमुद्रा सम्यक्सम्बुद्धैस्तु भाषिता सर्वकर्मिकास्तु। भवति चात्र मन्त्रः—ॐ त्रैलोक्यपूजिताय हूँ फट् स्वाहा। सर्वकर्मकरा भवन्ति। सर्वमण्डलविधानेषु प्रयोक्तव्या

सर्वैः सत्त्वानां महारक्षादिषु । तदेव हस्तावुभयाग्रौ सङ्कोचितावूर्ध्वमेतमध्यमाङ्कुलीयकौ । इयं भगवतां सर्वबुद्धानां मूलमुद्रा । भवति चात्र मन्त्रः — ॐ द ददातु दण्ड हुं । ॐ सर्वसत्त्वामृतप्रदेशिकंकराय स्वाहा । दण्डकमण्डलू उभौ मूलमन्त्रौ । अनेन सर्वकर्माणि कारयेत् । सर्वत्र च सर्वमन्त्रेषु प्रयोक्तव्यः सर्वसिद्धदः सर्वरक्षाविधानेषु प्रयोजितव्यौ । तदेव हस्तौ उभयकरावलम्बौ अन्योन्यावसक्तवेणिकौ शिरःस्थाने स्थापयेत् । विशेषेषु प्रयोक्तव्यः । भवति चात्र मन्त्रः — ॐ ज्वल ज्वल सर्वबुद्धाधिष्ठिते स्वाहा । अनेन तथागतकुले सर्वकर्माणि कारयेत् । आर्यमञ्जुश्रियो मन्त्रेण वा रक्तेन करवीरेण मालतीकुसुमेन वा द्रव्यस्योत्तेजनं कार्यम् । मञ्जुश्रीमूलमन्त्रेण सर्वतो योज्यम् । सर्वतश्च प्रयोजयितव्यः सर्वकर्मसु । तदेव हस्तौ उभयवेणिकाकारौ शिरःस्थाने स्थापयेत् । सर्वबुद्धानामुष्णीषमहामुद्रा । मन्त्रं चात्र भवति — ज्रीँ । सर्वकर्मिकोऽयमुष्णीषराजा । तदेव हस्तौ पद्माकारं कृत्वा हृदये स्थापयेत् । इयं पद्मकुलेऽवलोकितमहामुद्रा सर्वकर्मिका । मन्त्रं चात्र भवति — ज्रीः । तदेव हस्तौ कुड्मलपद्माकारौ नाभिमध्ये स्थापयेत् । इयमपरा अवलोकितस्य सर्वविघ्नप्रशमनी नाम महामुद्रा । मन्त्रं चात्र भवति — जिः । अयं सर्वकर्मिकोऽवलोकितसर्वभयेभ्यः प्रयोक्तव्यः । तदेव हस्तौ सुशिराकारौ कृत्वान्योन्यप्रतिकूलाङ्गुलिभिर्ललाटदेशे न्यसेदियं सर्वबुद्धानां प्रभावमानसोद्भवं नाम महामुद्रा । मन्त्राणि चात्र प्रयोक्तव्यानि । एकाक्षराणि चतस्रः — ताः । वाः । द्रोः । हाः । एते मन्त्रा एकाक्षरा चतश्चतुर्भिर्बुद्धकोटिभिर्भाषिता सर्वबुद्धानामुष्णीषराजानः सर्वेषां विद्यामहर्द्धिकानां प्रभावा सर्वधर्माश्रयाचतुऋद्धिपश्चचरणाश्चतुरार्यसत्यमास्था बोधिप्राग्भारशिरा चतुर्विमोक्षचतुर्ध्यानसमाधिभिः सर्वैरासेवनीया अप्रकम्प्या सर्वलौकिकलोकोत्तरादिभिर्मन्त्रतन्त्रैः परमेश्वराः सर्वविद्याराजा चक्रवर्तीनां ज्येष्ठा सर्वमन्त्राणाम् अचिन्त्या सर्वसमाधिविशेषाणां बोधिप्राप्तामिति महासत्त्वैस्त्रैलोक्याधिपतयो सर्वकुलप्रवृतन्त्रादिषु अगम्यां सर्वबोधिसत्त्वार्यश्रावकप्रत्येकबुद्धैः । एवमचिन्त्या अप्रभावा अलङ्घ्या गगनस्वभावभूतकोटिधर्मधातुमनाविकमप्रतिष्ठा इति संक्षेपतः सर्वकर्मसु प्रयोक्तव्या इति ।

अनेनैव सर्वकर्माणि कारयेत्। विशेषतः आर्यमञ्जुश्रियः मूलकल्पविधानेष्विति। तदेव हस्तौ सम्पुटाकारौ शिरःस्थाने मुपदर्शयेत्। इयं सर्वतथागतकुले सर्वविषनाशिनी नाम महामुद्रा सर्वविषकर्मसु प्रयोक्तव्या। दूँ।

अनेन मुद्रया युक्त मन्त्रोऽयं बुद्धभाषितः।
निर्विषां कुरुते क्षिप्रं सत्त्वां स्थावरजङ्गमाम्॥
निर्विषां कुरुते नागां उग्रुक्तां विषदर्पिताम्।
सर्वदोषां तथा हन्ति रागद्वेषजा॥
परा मोहजाश्चैव मन्त्रोऽयं मुद्रेण योजितः।
विविधां कुरुते कर्मा विषसत्त्वसमुद्भवाम्॥

संक्षेपत इयं मुद्रा।

विन्यस्ता मन्त्रयानेन विविधां च विषोद्भवाम्।
कर्मां करोति विषं चास्य वशो भवति यदृच्छया॥

इति लक्षजप्तेन। तदेव हस्तौ समयवज्राकारौ उभयत्रिसूचिकौ वामहस्तादधःस्थितः दक्षिणहस्तादूर्ध्वविपर्यस्तं कृत्वा शिरःस्थाने न्यसे। तदेव वज्राधिपतेर्हृदयमुद्रा सर्वकर्मिका। मन्त्रं चात्र भवति— हूँ। सर्वकर्मिकोऽयं सर्वार्थसाधकः सर्वक्रूरग्रहेषु प्रयोक्तव्यः नान्यथा विचिकित्सा कार्या। ॐ भद्रे भद्रवति करट रत्न त्रिरत्न स्वाहा। अस्य जापः प्रथमं कार्यः अष्टशतम्। ततो मञ्जुश्रीः सिद्ध्यतीति। तदेव हस्तौ उभयकुञ्चिताग्राङ्गुलीयकौ मूर्ध्नि स्थापयेदियं समन्तभद्रस्य बोधिसत्त्वस्य महामुद्रा। सर्वकर्मसु प्रयोक्तव्या सर्वरक्षेषु प्रतिकृता सर्वार्थसाधनी मञ्जुश्रियसाधनेषु च पूर्वमारभेत् पश्चात् कर्म कुर्यात् कुलत्रयसामान्यमिति। तदेव मुद्रं आर्यसमन्तभद्रस्य ललाटे न्यसेत्। आकाशगर्भस्य महामुद्रा। मन्त्रं चात्र भवति सर्वकर्मिकम्—स्वं। तदेव मुद्रं गलदेशे स्थापयेत्। इयं विमतेलगते महामुद्रा। मन्त्रं चात्र भवति सर्वकर्मिकम्—लं। तदेव मुद्रां उरसि मध्ये स्थापयेत्। मैत्रेयस्य महामुद्रा। मन्त्रं चात्र भवति—मं। तदेव हस्तौ पूर्ववज्रा-

भिदेशे स्थापयेत् । क्षितिगर्भस्य महामुद्रा । मन्त्रं चात्र भवति सर्व-
कर्मिकम्— क्षिं । तदेव मुद्रा कटिदेशे नियोज्य ऊर्ध्वं क्षिपेत् ।
इयं गगनगञ्जस्य मुद्रा । मन्त्रं चात्र भवति सर्वकर्मिकम्— गं ।
तदेव मुद्रां ऊर्ध्वां मुखं न्यस्य शिरसि स्थापयेत् नृत्ययोगेन । इयं सर्व
बोधिसत्त्वार्यश्रावकप्रत्येकबुद्धानाम् । भवति चात्र मन्त्रः— ध्रुः । एषो-
परिमितानृशंसकर्मप्रभावविस्तारा सर्वतः द्रष्टव्यगुणमाहात्म्ययोगेन ।
तदेव मुद्रं ऊर्ध्वमवलोकयाननामयित्वा ऊर्ध्वं क्षिपेत् नृत्ययोगेन ।
इयं सर्वदेवानां त्रिधातुस्थितानां अनन्तलोकधातुपर्यापन्नानां ऊर्ध्व-
मधस्तिर्यक् सर्वतः सर्वसत्त्वानां यक्षयक्षीराक्षसराक्षसी विस्तरेण
सर्वेषां इयं महामुद्रा सर्वत्रतालया नाम सर्वकर्मसु प्रयोक्तव्यः । आ-
ह्वाननविसर्जनमण्डलपटलविधानसर्वसाधनेष्वपि कर्मसु प्रयोक्तव्यः ॥
मन्त्रं चात्र भवति— ओं ष्ट्रैं । तदेव हस्तौ अञ्जलिकृताकारौ मूर्ध्नि
न्यसेदेषा सर्वमन्त्रेषु महाबन्धनान्तरावरणमहामुद्रा । कटिदेशे च
भ्रामयितव्या । भवति चात्र मन्त्रः— ओं जये कुमारि शुक्लबन्धनि
स्वाहा । अष्टशतजप्तं सूत्रकं कन्याकर्तितकं कट्यां बन्धयेत् । शुक्रब-
न्धः कृतो भवति । सर्वदिशांश्च व्यवलोकयेत् । सर्वविघ्नाः स्तम्भिता
भवन्ति । सर्वतश्च रक्षा मुद्राबन्धमतः साधकेन सर्वकर्मसु । अयं प्रथ-
मतः प्रयोगः कार्यः । पश्चात् कर्माणि कर्तव्यानीति । एवमष्टाविंशकं
शतं भवति मुद्राणाम् । साधकेन यथेच्छयान्यतरं प्रयोक्तव्यं सर्वक-
र्मसु सर्वाणि वा । एवमसङ्ख्येयानि अनेन प्रयोगेण मुद्राणि भवन्ति ।
असङ्ख्येयाश्च मन्त्रां । तदेव हस्तौ करसम्पुटाकारौ स्थितौ अन्योन्या-
ङ्गुलिभिः समस्तव्यस्ताभिरुभयाङ्गुष्ठोपशोभिताभिः पञ्चसूचिकाकारे-
ण उभौ मुष्टीकृतौ शिरःस्थाने मूर्धनि न्यसेत् । इयमार्यमञ्जुश्रियः
पञ्चशिखा नाम महामुद्रा सर्वकर्माणि करोति । अङ्गुष्ठाक्षेपविक्षेपां
सङ्कुचितैराह्वाननं विक्षिप्तैर्विसर्जनम् । एवं मनसा सर्वप्रयोगैः सर्वक-
र्माणि करोति । मञ्जुश्रीमूलमन्त्रहृदय उपहृदय सर्वमन्त्रेषु वा संयुक्तः
सर्वार्थकरा भवति । तदेव मुद्रां त्रिसूच्याकारम् । एषा मञ्जुश्रिय-
स्य त्रिशिखेति कथ्यते । तदेव कन्यसाङ्गुलिभिः सूच्याकारं एकचीरेति

अवगन्तव्यम् । उभौ करसम्पुटावस्थितौ समौ नामितौ अङ्गुलिभिः सुरचितविन्यस्ता गाढावसक्तं मूर्ध्ना स्थापितम् । एषा मञ्जुश्रियस्य सर्वशिरोऽभ्युद्गतं नाम महामुद्रा । तदेव हस्तौ समांगुलाग्र उत्तानकावस्थितौ वक्षमध्ये स्थापयेत् । एषा मञ्जुश्रियः महामुद्रा । तदेवावतार्य हृदयमध्ये न्यसेत् । इयमपरा मञ्जुश्रियः हृदयमुद्रा । तदेव हस्तौ अर्धावस्थितौ किञ्चिन्नामितकनिष्ठकौ । इयमपरा हृदयमुद्रा । तदेव हस्तौ उद्धृत्य मध्यमाङ्गुलिमनामिकौ अनामिका अवनामितदर्शिताग्रौ तर्जन्या कृतवेष्टितौ अङ्गुष्ठपार्श्वेषु प्रसारितौ । इयमपरा वक्रदंष्ट्रमहाशूलमुद्रा सर्वमहाभयेषु प्रयोक्तव्या । द्वौ मुष्टौ तदेव । इयमपरा मञ्जुश्रियः उत्पलमुद्रा । तदेव वज्रौ अवनाम्य संवेष्टितौ । मञ्जुश्रियः मयूरासनमुद्रा । तदेव तर्जन्या कन्यसानामिकौ उभयपार्श्वयोः तिर्यक् पीठाकारेण । इयमपरा भद्रपीठमुद्रा । तदेवाङ्गुलिमुष्टीकृतौ तर्जन्येकोच्छ्रिता । इयमपरा यष्टिमुद्रा । द्विरुच्छ्रितौ ध्वजमुद्रा । त्रिरुच्छ्रितौ पताकामुद्रा । चतुरुच्छ्रितौ घण्टा । तदेव हस्तं तर्जन्योपरिस्थितौ तं छत्रमुद्रा । सर्वेष्ववनतेषु फलमुद्रा । हूं । अङ्गुष्ठाग्रात्कुञ्चिततर्जन्यां नास्थितं अङ्कुशमुद्रा । तदेव तर्जनीं दृढमुष्टावस्थितं मुष्टिमुद्रा । तदेव सूच्याग्रस्थितौ तिर्यक् शूलमुद्रा । उभयतर्जन्योपेतं महाशूलमुद्रा । एकाङ्गुष्ठोच्छ्रितं एकलिङ्गमुद्रा । तदेव मुद्रा हृदये स्थापयेत् । सर्वार्थमुद्रा भवति । तदेव हस्तौ सम्पुटाकारे यमलं कृत्वा उपर्युपरि यमलमुद्रा । तदेव कुड्मलाकारं विकाश्य मूर्ध्नि क्षिपेत् उत्पलमुद्रा । तदेव पूर्णमासाकारं पूर्णमुद्रा । मूर्ध्नि स्थिता तदेवाथ मुष्ट्योपरि स्थितं मञ्जुश्रियः वर्मिमुद्रा । पुनः चित्रीकृतौ करौ स्वस्तिकं मञ्जुश्रियस्योत्थितं सर्वाङ्कुशाग्रतः गर्भं वन्दितव्यम् । तदेव हस्तौ विपरीतवेष्टितं मध्यमाङ्गुलिप्रसारिताग्रम् । इयमपरा कार्त्तिकेयस्य मञ्जुश्रियः शक्तिमुद्रा । ध्वजा पताका च पूर्ववद् ज्ञेया । तदेव हस्तौ सम्पुटीकृत्य विकासयेत् । इयमपरा पद्ममुद्रा मञ्जुश्रियः । तदेव हस्तौ तिर्यगवस्थितौ मुष्टीकृतौ स्वस्तिकाकारं कारयेत् । अङ्गुलीभिश्चतुर्भिश्चतुर्दिक्प्रसारितौ प्रसारितौ मध्यमुविन्यस्तैः । इयमपरा मञ्जुश्रियः स्वस्तिकमुद्रा । तदेव हस्तौ करपल्ल-

वाकारौ अन्योन्यविश्लिष्टौ अङ्गुलीभिः । इयमपरा पल्लवमुद्रा । तदेव मुष्ट्यौ कृतौ । इयमपरा सर्वबुद्धास्पदमुद्रा । मञ्जुश्रियः तदेव धर्मभेरीमुद्रा । तदेव हस्तौ सम्पुटीकृतौ मध्ये सुषिरौ तर्जन्या परिवेष्ट्य मूलाङ्गुष्ठतलविन्यस्तौ अङ्गुष्ठावनतौ शङ्खाकारकृतचिह्नौ । इयमपरा मञ्जुश्रियः धर्मशङ्खमुद्रा । चक्रं पूर्ववत् । धर्मचक्राकारं इयमपरा मञ्जुश्रियः धर्मचक्रमुद्रा । तदेव मुद्रं ललाटे न्यस्तं नृत्ययोगं कृत्वा क्षिपेदवसव्ययोगेन । इयमपरा महाक्रीडाविकुर्वाणमुद्रा । मूलमन्त्रेणैव महाभयेभ्यो प्रयोक्तव्या नश्यन्ते अविकल्पत इति ॥

एवमनेन प्रयोगेणासङ्ख्येयानि मुद्राणि भवन्ति । असङ्ख्येयाश्च मुद्राकल्पमन्त्रतन्त्राश्च । असङ्ख्येयानि च द्रष्टव्यानि । महाप्रभावोद्गतस्वयम्भुवोद्भवाः । तानि च सर्वे प्रयोक्तव्यानि । इह कल्पविसरे सर्वाणि च शुचिवस्त्रान्तरावनद्धेन प्रयोक्तव्यानि । यथा असमयज्ञैः सत्त्वैर्न दृश्यन्ते । एवं महाप्रभावानि । अन्यथा समयव्यतिक्रम इति । एता साधनोपयिकानि करमुद्राणि हस्तविन्यस्ता नृत्तगीतप्रयोगैश्चानेकानि भवन्ति । रुतविशेषैश्च सत्त्वानां क्रमशः कथित एवमधुना मण्डलसाधनोपयिकानि महामुद्राणि भवन्ति ॥

सर्वबुद्धानां तथा स्तूपा भुवि धातुपरं पटे ।
बोधिसत्त्वानां तथा पद्म श्रावकाणां परिमण्डलम् ॥
चतुरश्रः प्रत्येकबुद्धानां कथितां त्रिमण्डलो ।
नानावाहननाना विविधाभरणविभूषणा ॥
नानाप्रहरणाश्चैव देवयक्षग्रहापराम् ।
नृणां पुरुषमतः स्यात् ऋषीणां दण्डकमण्डलुः ॥
यस्य यो प्रहरणं नित्यं यो वा वाहनभूषणा ।
तस्य कुर्यान्मुद्रा संक्षेपान्मण्डलेष्विह ॥
आदित्यचन्द्रौ तदा कुर्यान्मण्डलोपरिमण्डलौ ।
संक्षेपाद् यस्य यो भूमि तदेव मनसाह्वये ॥
विविधाः प्राणिनो प्रोक्ता तेषां तेषां तदा न्यसेत् ।
बहुप्रकारा सत्त्वाख्या बहुमुद्राश्च प्रकीर्त्तिता ॥

तेषां कर्मतो कुर्याद् विधानेन मण्डले ।

ब्रह्मस्य पद्मं शक्रस्य वज्रं. वरुणस्य पाशं रुद्रस्य शूलं दुर्गस्य पट्टिशं ऋषिस्य कमण्डलु यमस्य दण्डं धनदस्य गदा कुबेरस्य खड्गं हुताशनस्याग्निकुण्डं पृथिव्या कलशः एवमादयो यथा यस्य प्रहरणानि आभरणानि च लोकेऽस्य दृष्टानि तानि सर्वत्र यथानुस्मरतः विधिना तानि सर्वाणि सर्वमण्डलेषु प्रयोक्तव्यानि कल्पोक्तेन वा विधानेनालिखितव्यानि सर्वमण्डलानि सर्वसत्त्वानां अर्थाय हिताध्याशयेन चेतसा सर्वसत्त्वानां करुणायमानेन उत्पादितबोधिचित्तेन सर्वसत्त्वानुकम्पयमानेन सर्वमण्डलान्यभिलिखितव्यानि सर्वमण्डलाभिषेकाभिषिक्तैः महामण्डलाभिषिक्तैर्वा। आर्यमञ्जुश्रियः दृष्टमण्डलाभिषिक्तेन । अन्यत्रवश्यं सर्वमण्डलां लिखेत । आर्यमञ्जुश्रीः मनसि कर्तव्यः । यत् कारणम् । अभिषिक्तो मया सर्वबुद्धैश्च गङ्गासिकताप्रख्यैः सर्वमन्त्राणां गम्भीरतत्त्वार्थनयधर्मदेशना कुमारबालरूपिणा मन्त्ररूपेण सत्त्वानामर्थं करिष्यसीति ॥

न मन्त्रमुद्रसंयुक्तं न कुर्याद् धर्मसमाहितम् ।
अहितं कुर्यान्नात्र नाहितं हितमीप्सितम् ॥

मुद्रामन्त्रसमायुक्तो अहितं चैव निवारयेत् ।
हिताहितं सदा सर्वं अहितं चैव निवारणम् ॥

हितैव सर्वमन्त्रो कुर्यान्मन्त्रमुद्रितो ।
न मुद्रमन्त्र तत्कुर्यान्न मन्त्रं मुद्रितं तथा ॥

मुद्रार्थसंयुक्तो सफलार्था साधयिष्यते ।
सफलं मुद्रसंयुक्तो मन्त्रो मुद्रफलोदयः ॥

साधयेत् कर्मविस्तारं मुद्रसमं चिन्तता ।
शान्तिका ये तु मुद्रा ये मन्त्रा चैव शान्तिके ॥

मन्त्रमुद्रसमायोगा शान्तिकं कर्ममारभे ।
पौष्टिकेषु च मन्त्रेषु बध्नीयान्मुद्रसम्भवम् ॥

पौष्टिकं मुद्रमित्याहुः कथिता मन्त्रयोजिता ।
शान्तिके शान्तिकं कुर्यात् मुद्रमन्त्रेष्विहोदितैः ॥

जिनैः जिनमन्त्रमुख्यैस्तु मुद्रैश्चापि विभागतः ।
शीतलेषु च सर्वतुर्सर्वकर्मांश्च साधयेत् ॥
पुष्ट्यर्थं कथिता मन्त्राः अब्जकुले तु समुद्भवा ।
मन्त्रतन्त्रानि तीक्ष्णैः मुद्रैश्चापि तयोदितैः ॥
विख्यातैः कथितैर्मन्त्रैः मुद्रैश्चापि महर्द्धिकैः ।
अब्जके तु समादिष्टैः शुचिभिश्चैव दीपितैः ॥
प्रशस्तैः मङ्गलैश्चापि आरोग्यार्थसुपुष्कलैः ।
क्रोधयुक्तैस्तथा मन्त्रैः मुद्रैश्चापि वर्णितैः ॥
भोगार्थसम्पदोद्दिष्टैः निर्मलैश्चापि शोभनैः ।
शुक्लैः सितमुद्रैस्तु मन्त्रमुद्रसमोदितैः ॥
साधयेत् सम्पदां मन्त्रां भोगकारा जन्मनि ।
तथाविधैः मन्त्रमुद्रैस्तु साधिता सफलोदया ॥
क्रोधमन्त्रा तथा प्रोक्ता मन्त्राद्या प्राणोपरोधिका ।
कथिता वज्रिणे तन्त्रे जिनाब्जे च समुद्भवे ॥
तेजिनो बहुधा उग्रा दुष्टसत्त्वदमापहा ।
नियुक्ता प्राणहिंसायां न कुर्यात् तां तु धीमता ॥
मुद्रा च दण्डदमनवज्रशूलाभिपट्टिशा ।
विविधा प्रहरणांश्चैव महाशूलास्तु यमान्तके ॥
संयुक्ता मन्त्रिभिः क्षिप्रं कृत्वा प्राणापहं ध्रुवम् ।
तन्न कुर्याच्च तं धीमां सर्वप्राणोपरोधिनम् ॥
भजेन्मन्त्रतन्त्रज्ञः क्रूरं क्रूरसमुद्रितम् ।
मुद्रा क्रूरतरः प्रोक्ता क्रूरमन्त्रेषु योजिता ॥
क्रूरसत्त्वैः यथा सिद्धा क्रूरकर्मान्तचारिभिः ।
विविधां नारकां दुःखां प्राप्नोतीह स दुर्मतिः ॥
न कुर्यात् क्रूरमन्त्रेभ्यो दुःशीलानां चाभिचारुकम् ।
क्रूरमन्त्र तथा मुद्रं न दद्युः सर्वतो जनाः ॥

यस्मात् फलमनिष्टं वै रत्नभूये पुनः पुनः ।
न विद्या सुखं तदा मन्त्री क्रूरक + + ॥
+ + + + + + + + + + + + + + मगोदिना ।
त्रिधा + + + + + + + + + + सिद्धिषु दृश्यते ॥
इष्टं इष्टफलायचं + + + + + + + + + + ।
होमं क्रूरकर्मेषु तस्माद्धर्मा विवर्जयेत् ॥
मुनिश्रेष्ठो स योगा + + + + + + + + + + ।
+ + + + अब्जिनो गीता हीना क्रूरकर्मभिः ॥
गीता वज्रकुले मन्त्रा त्रिधा ते परिकीर्तिता ।
हीनोत्कृष्टम + + + + + + + + + + + + ॥
+ + मुद्रसमुद्देशं बहुमन्त्रार्थविस्तरम् ।
कथिता जिनवरैः पूर्वं अधुना ये इहोदिता इति ॥

बोधिसत्त्वपिटकावतंसकात् आर्यमञ्जुश्रियमूलकल्पात्
चतुस्त्रिंशतिमः महामुद्रापटलविसरः
परिसमाप्त इति ।

---

## अथ सप्तत्रिंशः पटलविसरः ।

अथ खलु भगवां शाक्यमुनिः पुनरपि शुद्धावासभवनमवलोक्य मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । अस्ति मञ्जुश्रीः! त्वदीये मूलकल्पे अपरमपि मुद्रा परमगुह्यतमम् । सर्वेषां मुद्रातन्त्रविधानं सर्वमन्त्राणां सम्मतं सर्वमन्त्रैश्च सह संयोज्य सर्वकर्मप्रसाधकं सम्यक् सम्बोधिमार्गविशोधकं सर्वभवमार्गविनाशकं सर्वसत्त्वोपजीव्यं आयुरारोग्यैश्वर्यसर्वाशापारिपूरकं सर्वबोधिपक्षधर्मपरिपूरकं सर्वसत्त्वसन्तोपणकरं सर्वसत्त्वमनाशाभिरुचितसफलाभिकरणं सर्वकर्मकरं सर्वमन्त्रानुप्रसाधकं सर्वमुद्रामन्त्रसमेतम् । शृणु कुमार! मञ्जुश्रीः! ।

शादावेवोष्णीषलक्षणं भवति । प्रमृनसमोहानोभयपाणिना जिह्वा आनामिकाङ्गुल्यौ करमध्ये नखे नखं परिधाय अङ्गुष्ठाग्रेणोपगूढाः कन्यसौ सूच्याकारेण संहताग्रा तथैव मध्यमा समनखशिखासंसक्तमध्यगौ प्रदेशिन्यौ सूच्याकारसमन्तावभासोष्णीषमहालक्षणं नाम महामुद्रा । भवति चात्र मन्त्रः — आः मः हूं । तदेव प्रदेशिन्यौ सञ्चार्य नखेन नखमालभेत् । मण्डलाकारसूच्याभिः कुदृष्टिशल्यविपर्यासदाहनं नाम महाधर्मचक्रमुद्रा । मन्त्रं चात्र भवति — ॐ धुन पातय छिन्द चक्रे वज्रिणि हूं समयिरत्नो भागे प्रदेशिन्यो निर्गुगुगुल्याकातृकं चतुर्मारारिशयनी । वज्रवीरा चलाचलमहा महीक्लेशासनी नाम महामुद्रा । मन्त्रं चात्र भवति — ॐ वज्रानानि हूँ फट् ।

पर्यंक् तु मुद्रा मन्त्रा च संयुक्ता सर्वकर्मसु ।
नश्यन्ते सर्वविघ्ना वै शरदैव यथाम्बुदा ॥

चतुर्मारकृता ये च ये च विघ्ना ससुरासुराः ।
नश्यन्ते दृष्टमात्रं वै मुद्रं पर्यमुत्तमम् ॥

परतस्तुल्यमुद्दिश्य तृतीया मुक्तप्रदेशिनी ।
सङ्कुचिताग्र्या शुभा चैव मुष्टिस्तथागती स्मृता ॥

त्रैलोक्येन महामहेश्वरगभस्तिमालिनी नाम महामुद्रा । मन्त्रं चात्र भवति — ॐ विजये हः । तथागतमुष्टिमुद्रा च । एभिरन्यतमैर्मुद्रै

हस्तद्वयेनावबध्वा साधनकाले पूर्वसेवाकाले वा सकृदुच्चार्य यावदिच्छं जपेत् निषण्णो स्थितो वा । एवं सर्वविघ्नविनायकाः अवतारं न लभन्ते । सिद्धिश्चाभिमुखीभवति ॥

ता एव प्रदेशिन्यः सञ्चार्य मध्यमयोपरि संसक्ताग्रां कारयेत् । उद्गतोष्णीषमुद्रा । मन्त्रं चात्र भवति — ॐ ज्वलोज्ज्वल दीप्तोद्गतोष्णीष धुन धुन हूँ ॥

ता एव प्रदेशिन्यो सञ्चार्य मध्यममूच्या सदा नखशिखरसंसक्ता निर्भुग्नगुल्फकुण्डलाकारमुद्रा सितातपत्रोष्णीष । मन्त्रं चात्र भवति — ओं म म म म हूं निः ॥

ता एव प्रदेशिन्यौ परतस्तुल्यमुच्छ्रय आश्लेष्य मध्यममूच्ये तेजोराशिमुद्रा । मन्त्रं चात्र भवति — ओं तथागतोष्णीष अनवलोकितमूर्ध्नि तेजोराशि हूं ज्वल ज्वल एक एक दर विदर च्छिन्द भिन्द हूं हूं स्फट् स्फट् स्वाहा ॥

ता एव प्रदेशिन्याग्रसंसक्तमध्यममूच्ये मण्डलाकारो जयोष्णीषमुद्रा । मन्त्रं चात्र भवति — ओं जयोष्णीष ज्वल ज्वल बन्ध बन्ध दम दम ङूँ ङूँ ङूँ हः हन हूं जयोष्णीषमन्त्रा ॥

तथैव प्रदेशिन्याग्रा सञ्चार्य मध्यमध्यममूच्या नखस्योपरि तृतीयभागे श्लिष्टा चक्रवर्तिमुद्रा । ओं नमो अप्रतिहततथागतोष्णीषाय अनवलोकितमूर्ध्नि चक्रवर्ति हूं ज्वल ज्वल धक धक धुन धुन विधुन त्रासय मारयोत्सादय हन हन अं अं अः अः कः कः मोंखिनि मोंखिनि कुण्डलिनि अपराजितास्त्रधारिणि हूँ फट् । चक्रवर्ति ता एव प्रदेशिन्याग्रा सञ्चार्य मध्यममूच्या नखस्याधस्तात् तृतीयभागे संयुक्ता मन्त्राधिपस्य चक्रवर्त्तिने मुद्रा । ता एव प्रदेशिन्याग्रा सञ्चार्य मूच्या नखस्याधस्तात् संसक्ता मन्त्राधिपस्य मुद्रा । ता एव प्रदेशिन्याग्रा सञ्चार्य मध्यममूच्या नखपर्वयोरन्तरे संसक्ता महाचक्रवर्त्तिने मुद्रा । ता एव प्रदेशिन्याग्रा सञ्चार्य मध्यममूच्य

तृतीये पर्वे अधस्तात् संसक्ता कुण्डलाकारेण महाचक्रवर्तिने मुद्रा । ता एव प्रदेशिन्याग्रा सञ्चार्य तृतीये पर्वे मध्यमसूच्या पर्वयोरन्तरे संसक्ता मन्त्राधिपस्य महाचक्रवर्तिने मुद्रा । ता एव प्रदेशिन्याग्रा निर्भुग्नगुल्फसत्रिकं मध्यमसूच्या मध्यमपर्वयोरधस्तात संसक्ता पर्वतृतीयेन अपराजितोष्णीषनानार्गेन हृदयमुद्रा । मन्त्रं चात्र भवति---ॐ अपराजिता धिक् ॥

ता एवोष्णीषमूलमुद्रायामन्यतमेन वा सोपचारविन्यास सर्वकर्माणि कारयेदङ्गुष्ठाग्रैश्चलितैरनामिका परामृज्योत्कर्षयेदावाहनम् । मन्त्रं चात्र भवति---नमो भगवते अप्रतिहतोष्णीषाय एहि एहि भगवं! धर्मराज! प्रतीच्छेयं अर्घ्यं गन्धं पुष्पं धूपं बलयं दीपं च । मां चाभिरक्षाप्रतिहतबलपराक्रमाय स्वाहा । आवाहनं शुक्लपुष्पैः स्वरूपेणार्घ्यपाद्यमाचमनीयमासनोपविशने तदानेनैव दिशि विदिशि अध ऊर्ध्वे च बन्धयेत् ॥

ता एवानामिकौ अङ्गुष्ठाग्रैरपमृज्याथ नामयेत् । मध्यमे पर्वे स्पृश्योत्क्षिपेत् । विसर्जनार्घेण स्वदेवताया अपसव्येन भ्रामयेत् । मुद्रा दिशाबन्धा इुक्ता भवन्ति । मन्त्रं चात्र भवति — नमोऽप्रतिहतोष्णीषाय गच्छ गच्छ भगवं! धर्मराज! प्रतीच्छ मयार्घ्यं गन्धं पुष्पं धूपं मां च रक्षाप्रतिहतबलपराक्रमाय । मुद्रा मन्त्रविसर्जनार्घेण ॥

ता एव प्रदेशिन्यौ अधस्तात् तृतीये पर्वे मध्यमसूच्ये संसक्तावन्योन्य अङ्गुष्ठौ सह कन्यसेः निःपीडितमुष्टिः मध्यमसूच्यौ । मन्त्रं चात्र भवति — नमो भगवते अप्रतिहतोष्णीषाय ॐ ॐ ह्रौं बन्ध हूँ फट् । अप्रतिहतोष्णीष तेजोराशे । मुद्रामन्त्रा सर्वबन्धादिषूपयुज्यते सर्वकर्मिकः ॥

ता एव प्रदेशिन्यौं आकुञ्चिताग्रा मध्यमसूच्या तृतीयपर्वे दीपिद्संसक्ता विकरणोष्णीषमुद्रा । मन्त्रं चात्र भवति — नमो भगवते अप्रतिहतोष्णीषाय विकरण धुन धुन हूँ विकरणोष्णीषः भगवतो विद्याधिपते महाविद्याराजा उष्णीषतन्त्रे सर्वविघ्नविनायकोपघातेष्वभिषेकमात्मरक्षादिशाबन्धमण्डलबन्धादिषु सर्वकर्मेषु प्रयुज्यते ॥

ता एव प्रदेशिन्यौ विकसिताकुञ्चिताग्रा चलिताङ्गुष्ठौ अग्नेरावाहनं पश्चाद्धोमयामीति । एष एव विसर्जनं निक्षिप्तः प्रदेशिन्यां ज्वालामालिन्योष्णीषमुद्रा । अप्रतिहतः सर्वकर्मसु । मन्त्रं चात्र भवति — नमो भगवते अप्रतिहतोष्णीषाय एह्येहि तेजोमालिने अग्नये स्वाहा ॥

ता एव प्रदेशिन्यौ आकुञ्चिताग्रा मध्यमाङ्गुल्या तृतीये पर्वे मध्यमपर्वयोरन्तरे संसक्ता बलोत्कटोष्णीषमुद्रा । मन्त्रं चात्र भवति— नमो भगवते अप्रतिहतोष्णीषाय इमं गन्धं पुष्पं धूपं बलिं दीपं च प्रतीच्छ हर हर सर्वबुद्धाधिष्ठिते धर्मराजाप्रतिहताय स्वाहा ॥

गन्धादिषु मन्त्रः — विपर्यस्तानामिके तृतीये तृताङ्गुष्ठ संसक्ता प्रदेशिन्यः सूच्याकारः वज्रतेजोष्णीषमुद्रा । अप्रतिहतः सर्वविनायकानाम् । अनेन निग्रहं कुर्यात् सहायानां दिक्पालानां च । एवमेभिर्मन्त्रमुद्रैः रक्षा जपकाले साधनकाले मण्डलेऽपि सर्वकर्माणि कर्तव्यानि । मन्त्रं चात्र भवति — नमो भगवते अप्रतिहतोष्णीषाय सर्वविघ्नविध्वंसनकराय त्रोटय स्वाहा ॥

अनामिकयोरङ्गुष्ठमूले कुण्डलाकारस्तथैव च प्रदेशिन्यौ सूच्याकारः सर्वत्राप्रतिहतोऽपराजितोष्णीषमुद्रा । मन्त्रं चात्र भवति — नमो भगवते अप्रतिहतोष्णीषाय सर्वत्रापराजिताय शमये शान्ते दान्ते धर्मराजभाषिते महाविद्ये सर्वार्थसाधनि स्वाहा । घृतहोमादिषु शान्तिकपौष्टिकानि कर्माणि कुर्यात् ॥

एतावनामिकायाः कुण्डलयोः प्रदेशिन्यां कुञ्चिताग्रा प्रतिहतेन शङ्करोष्णीषमुद्रा । मन्त्रं चात्र भवति — नमो भगवते अप्रतिहतोष्णीष ओं शङ्करे स्वाहा । रक्षा सर्वकर्मसु ॥

अङ्गुष्ठाग्रौ अनामिकयोस्तृतीये पर्वनाक्रान्ता तथैव प्रदेशिन्यौ सूच्या वज्राप्रतिहतसमयोष्णीषमुद्रा सर्वत्र समयसाधारणः । मन्त्रं चात्र भवति — नमो भगवते अप्रतिहतोष्णीषाय । ओम् शङ्करे समये स्वाहा ॥

अङ्गुष्ठाग्रौ अनामिकयोर्मध्ये पर्वगाक्रान्ता प्रदेशिन्यौ कुञ्चिताग्रा मध्यमसूच्या मध्यमपर्वसंसक्ताप्रतिहतमहासमयोष्णीषमुद्रा देवा-

सुरेषु युज्यते समये स्थापिता। मन्त्रं चात्र भवति — नमो भगवते अप्रतिहतोष्णीषाय ॐ शङ्करे महासमयं स्वाहा । अनया मण्डलबन्धं कृत्वा जपेच्चक्रवर्त्तिनमपि समये तिष्ठ तिष्ठ । अन्यांश्चक्रवर्तिनांश्चाभिभवति । तत्रैव स्थाने जपं कुर्वे सर्वलौकिकलोकोत्तराणां मन्त्राणां असत्त्वादन्योन्यं विद्याप्रभाववलविघातं कर्त्तुम् । एकस्मिन् स्थाने सर्वजापिनाम् । एवमाद्या उष्णीषराजानः असङ्ख्येयानि भवन्ति । विस्तरेण कर्त्तव्यं सर्वतथागतकुलम् ।

इह हि मञ्जुश्रीः कल्पराजे अपरिमाणानि मन्त्राणि भवन्ति । मुद्राश्चैव विविधाकारा । संक्षेपतोऽहं वक्ष्ये । यदि विस्तरशो कथेयम् अशक्यं सर्वमानुष्यैः अमानुषैश्च कल्पसहस्रेणापि कालप्रमाणेनोद्गृहीतुं धारयितुं वा । तस्मात् तर्हि मञ्जुश्रीः संक्षेपतः कथयिष्यामि समासेनोपधारय ।

हृदयस्य मुने मुद्रा कथ्यते प्रवरा इह ।
ततो देवातिदेवस्य मुद्रा वै चक्रवर्त्तिनः ॥

अवलोकितचन्द्रस्य बोधिसत्त्वस्य धीमतः ।
वज्रपाणेस्ततो मुद्रा यक्षेन्द्रस्य प्रकीर्त्तितः ॥

ततोऽन्येषां तु मुद्राणां महतामभितौजसाम् ।
दूतदूतीगणां सर्वां चेटश्चेटी तथा पराम् ॥

यक्षा यक्षीस्तथा देवां नागनागी तथापराम् ।
किङ्करः किङ्करीणां च पिशाच पिशाचीनां च ॥

महर्द्धिका राक्षसीनां तथान्यां सुरयोषित् ।
दैत्यमङ्गनां सिद्धविद्याधराणां च सर्वेषां च ॥

अमानुषाणां नामानुष्यांश्चापि सर्वेषां त्रिभवे जन्मनिःसृताम् ।
सर्वेषां तु जन्तूनां मुद्रा ह्युक्ता पृथक् पृथक् ॥

मन्त्रास्तु विविधाकारा नानाकर्मसमाधिका ।
राजकुले मानिकुले चापि तेषां मुद्रा पृथक् पृथक् ॥

अर्हप्रत्येकबुद्धानां उभौ मुद्रौ शुभोदयौ ।
सर्वेषां बोधिसत्त्वानां दशभूमिप्रतिष्ठिताम् ॥

मुद्रा हृदयमन्त्रा च एकैकः परिकीर्त्तिता ।
दिव्ययक्षकुले चापि ऋषिगन्धर्वपूजिते ॥

कुले सप्तमके प्रोक्ता मुद्रा गन्धर्वमाश्रिता ।
तथाष्टमके मुद्रा कुलेभ्यो परिकीर्तिता ॥

सर्वे मुद्रा समाख्याता अपराश्च सुगतादया ।
पृथक् पृथक् मन्त्रेषु लौकिकेषु समागते ॥

मुद्रासहितो मन्त्रः दीप्तो भवति कर्मसु ।
मुद्राक्षेपादिकुशलं नानुयान्ति विनायकाः ॥

अथ खल्वेषां महामुद्रादीनां लक्षणं भवति । बुद्धानां भगवतां हृदयमुद्रालक्षणं भवति । हस्तद्वयेनान्योन्यमङ्गुलीः सन्नियम्याङ्गुष्ठौ दर्शयेत् । सैषा तथागतानां हृदयमुद्रा । एषैव दक्षिणेनाङ्गुष्ठेन एकैकदर्शितेन पद्मधरस्य मुद्रा भवति । वामेतरस्य पूर्वमुष्टिं कृत्वा मध्यमाङ्गुलियुगलं प्रमुञ्च प्रसृतं कृत्वैकतः वज्राकारम् । एषा वज्रधरस्य मुद्रा । एकसूचीमवनाम्य एषा गन्धहस्तिने बोधिसत्त्वस्य मुद्रा पुनरेवोत्क्षिप्य मण्डलाकारं कुर्यात् । एष गजगन्धस्य मुद्रा । उभयोरप्येकं पर्व कुञ्चयेत् । एषा मणिकुले मुद्रा । सर्वेषां मणिचराणां जम्भले जलेन्द्रादीनां मन्त्रैः तैरेव योजयेत् । तर्जनीयुगलं द्विपर्वं कुञ्चितान्योन्यनखसंयुक्तम् । एषा यक्षकुले मुद्रा पञ्चकादीनां यक्षमहर्द्धिकानाम् । अन्योन्यनखसंयुक्तं अङ्गुष्ठं नखोपरि धारयेत् । तथैव हस्तौ पूर्ववत् कारयित्वा मध्यमाङ्गुलियुगलं ऽ ध्य सूचिकाकारं कारयित्वा एषा सर्वदेवानां मुद्रा दिव्यकुले अकनिष्ठादीनां दिवौकसाम् । भूयस्तथैव हस्तौ संयम्य मुष्टिं बध्वा अङ्गुष्ठौ दर्शयेत् सैषा प्रत्येकबुद्धार्यश्रावकानां मुद्रा ॥

इत्येतामष्टौ मुद्रासु कुला चाष्टसमावृता ।
सर्वेषां जिनपुत्राणां मुद्रामेकं तु वक्ष्यते ॥

प्रसृताञ्जलिविन्यस्तं ईषितसङ्कुचितं पुनः ।
स एषा कथिता मुद्रा बोधिसत्त्वां महीयसाम् ॥

चिन्तामणिः खखरकं सङ्घाटी पात्रचीवरम् ।
दंष्ट्राभयहस्तं च मुद्रेताः समकं मुनेः ॥

दृष्टिमैत्रीप्रभाजालदशनतोर्णं सुगतः स्थितिः ।
इमास्यमा परा मुद्रा जिनस्यात्मशरीरजा ॥

द्वौ सप्तकौ गणावेतौ मुद्रा पञ्च मया स्मृता ।
हृदयस्य मुनेः सहितानि विंशत्युक्तादिस्वयम्भुवेः ॥

पुरा कथिता ह्येते मुद्रा आदिजिनैः तदा ।
परिवारः समाख्यातो विंशकश्चक्रवर्त्तिनः ॥

परमं परसङ्ख्याता मुद्रा मन्त्राश्च निश्चिता ।

उद्धतं कुण्डलीकृत्य चिन्तामणिमुद्रा । पर्यङ्के वामदक्षिणे मुष्टिमंसदेशे धारये । खखरकमुद्रा भवति । हस्तसम्पुटेनान्योन्यमभिमुखं सङ्घाटीमुद्रा भवति । पात्रं सम्पुटाधारः चीवरं वामहस्तेन दंष्ट्रा हृदयमुद्राया वाममेकमङ्गुष्ठमुन्नतम् । अभयहस्तमभयावनतः वामचीवरावलम्बतः अभयहस्तः सम्पुटे मध्यमाङ्गुलियुगले तर्जन्यौ बहिः कुञ्चितौ निवेशयेत् मध्याङ्गुष्ठौ । एषा बुद्धलोचनमुद्रा भवति । एषैव एवा पर्यकुञ्चिते तर्जनी एकतः कुर्याद् बुद्धमैत्री । अञ्जलि विरलाङ्गुलिं कृत्वा तर्जन्यनामिका गोपयेत् सूचीत्रयेण । मामकी मुद्रा भवति । अञ्जलिं कृत्वा तर्जनीमध्यमाङ्गुलिबहिः तृतीयपर्वे कुञ्चिते सन्दध्यादङ्गुष्ठौ पृथक् अङ्गुल्याकारेण भोगवतीमुद्रा । वामहस्तेन तर्जन्या मध्यमया च विजया । दक्षिणया त्र्यङ्गुले वज्रं कटिदेशे धारयेत् ॥

एवमेवाष्टौ महामुद्रा आत्मनां शिरसि विद्याराजमुद्रा बध्वा सर्वकर्माणि कारयेत् । समये वा मण्डले पुष्पाणि क्षिपेत् । पूर्वनिर्दिष्टेन वा विधिनानेन वा कुर्यात् । यथेप्सतः सर्वकर्माणि कारयेत् । विद्यामन्त्राभिहितानि समयानि भवन्ति मुद्रैः समुद्रितानि मुद्राप्रभावानि । यन्मुद्रं सहसा अस्थाने बध्नीयात् स एवास्य समयभङ्गो भवति । यद् वज्रं तच्छूलम् । त्रिशूलवज्रयोर्विशेषो नास्ति । यदूर्ध्वं तद् वज्र-

धरस्य मुद्रा भवति। अधरस्ताच्च महेश्वरस्य। मध्ये आचार्यगुरुदक्षिणीयां सर्वेषां च मनुष्याणां एकाङ्गुल्मिमुच्छ्रिते सर्वेषां मनुष्याणां द्विपदचतुष्पदबहुपदापदविभवसंस्थितानां सत्त्वानां मुद्रा भवति। द्विरुच्छ्रिते सर्वेषां यक्षयक्षीणां मुद्रा भवति। त्रिमुच्छ्रितैः सर्वविद्याधरविद्याधरीणां मुद्रा भवति। चतुरुच्छ्रितैः समपाणितलविन्यस्तैः ससुरासुराङ्गनानां मुद्रा भवति। कृताञ्जलिविन्यस्तौ हस्तौ शोभनाकारसंस्थितौ सर्वेषां रूपावचराणां देवानां मुद्रा भवति। तदेव हस्तौ आरूप्यावचराणां देवानां मुद्रा भवति। तदेव हस्तौ सुषिरसम्पुटाकारौ मुष्टिनिबन्धनौ कामधात्वेश्वरप्रभृतीनां सर्वेषां कामधातुस्थितानां सनरतिर्यक्प्रेतयामलौकिकानां सत्त्वानां मुद्रा भवति। तामेव मुद्रामेकमङ्गुल्मिमुत्सृज्य सर्वेषां पिशाचपिशाचीनां मुद्रा भवति। द्विमुत्सृतै राक्षसराक्षसीनां। त्रिमुत्सृतैः सर्वक्रव्यादादीनां ग्रहमातरकूष्माण्डादीनां पिशिताशिनां सर्वेषां च डाकिनीनां व्यन्तरादीनां च सकश्मलां चतुर्भिरङ्गुलीभिः सङ्कुचितैः सर्वकश्मलां मुद्रा भवति। मुद्रैराकृष्टैराकर्षणं मुद्रैरुत्सृष्टैर्विसर्जनम्। स्वचित्तेन सर्वकर्माणि कारयेत्॥

एभिरेव मुद्रैः यथेष्टतः स्वकं स्वकं मन्त्रं नियोजयेत्। नान्येषां नान्यकर्माणि कारयेत्। तस्मिं तस्मिं नियुञ्ज्याद् यस्मिं यस्मिं मन्त्रा भवन्ति।

अनुल्लङ्घ्या ह्येते मुद्रा सर्वबुद्धैरधिष्ठिता।
अशक्ता सर्वसत्त्वा वै मुद्रां द्रष्टुमपि कोपितुम्॥

मुद्रोलङ्घनाद् विनाशमाप्नुवन्ति। मुद्राणां विनाशात् समयभ्रंशः सर्वविद्याव्यतिक्रमश्च निष्ठायां रौरवे गतिः अवीच्यायां वा महानरकोपपत्तिः गाढतरमेवाप्नुवन्ति विघ्नकर्तारः। ये च मुद्रासमयमधितिष्ठन्ते तेषां चिरसौख्यमनल्पकं भवति महादिवौकसोपपत्तिश्च गतिनिष्ठायां नियतं बोधिपरायणा भवति। संक्षेपतो मुद्रा बहुप्रकारा प्रकाशिता आदिबुद्धैः बोधिसत्त्वैश्च महर्द्धिकैः। न शक्यमस्य पर्यन्तं गन्तुं सङ्ख्यागणनां वा कर्तुम्। सर्वसत्त्वैश्च उद्ग्रहीतुम्। संक्षेपतः

वामेतरस्य पूर्वं मुष्टिं कृत्वा मध्यमाङ्गुलियुगलं प्रमुचे प्रसृतं कृत्वैकतः । उभयोरप्येकं पर्वं कुञ्चयेत् । तर्जनीयुगलं द्विपर्वं कुञ्चितः अन्योन्यनखसंयुक्तं अङ्गुष्ठनखोपरि धारयेत् । एष चक्रवर्तिमुद्रा सर्वकर्मिका प्रवरा सर्वमन्त्राणां निर्दिष्टा लोकतायिभिः । पूर्वनिर्दिष्टेन एकाक्षरचक्रवर्तिना संयुक्ता सर्वकर्मिका भवति । अनेन साधितेन सर्वं तथागतकुलं सर्वांश्च लौकिकलोकोत्तराः मन्त्राः सिद्धा भवन्ति । अनेन जप्यमानेन सर्वमन्त्रा जप्ता भवन्ति ॥

अन्यदवश्यं साधकेन पूर्वतः अस्मिं कल्पराजे प्रचोदिते मन्त्रवरे अष्टसहस्रं जापः कर्तव्यः । एवमेते सर्वविद्याः आमुखीभवन्ति आशु सिद्धिं प्रयच्छन्ति । क्षिप्रं च वरदा भवन्ति । नियतं बोधिपरायणः पद्मधरमुद्रायाः एकाक्षरावलोकितेश्वरहृदयेन संयुक्तः सर्वकर्मा करोति । पण्डरवासिन्या वा विद्यामुद्रेण वा संयुक्ता तथैव सर्वकर्मा करोति । वज्रधरस्य मुद्रया तस्यैव एकाक्षरहृदयेन संयुक्तः तथैव सर्वकर्मा करोति । मामक्या वा महाविद्यया ॥

एवं राजकुले एकाक्षरराजगन्धर्वबोधिसत्त्वहृदयेन एवं तेनैव मुद्रया मणिकुले यक्षकुले दिव्ये आर्ये तेष्विह एकाक्षरहृदयैः तेष्वेव मुद्रैः सर्वकर्माणि कर्तव्यानि । एवं सर्वत्र सर्वमुद्रैः सर्वमन्त्रैश्च सर्वकर्माणि कर्तव्यानि । यथायुक्तितः विद्यामन्त्रबलाधाना न्यसेत् । नान्यतः कर्माणि कर्तव्यानि ॥

एवं दक्षिणकरविन्यस्तं स्वस्त्योद्यतः ब्राह्मणस्य सहाम्पतेः एकलिङ्गमुद्राया महेश्वरस्य चक्रमुद्राया विष्णोः अञ्जलिराकोशविरलविन्यस्तः गरुत्मनः एवं ऋषीणां शापोद्यतहस्तमुद्रं एवं गन्धर्वाणां ससुरासुराणां वामहस्तमङ्गुष्ठाभ्यन्तरीकृतमुखमुपदर्शनमष्टिस्थितं चतुःकुमार्यमुद्रा तेनैव मन्त्रेण एवं कार्तिकेयस्य शक्तिमुद्रया एवं यमवरुणकुबेरयक्षराक्षसपिशाचमहोरगादीनां सर्वेषां त्रिभवसंस्थितानां सत्त्वानां सर्वगतिपर्यापन्नानां सत्त्वधातुसन्निःश्रितानां सर्वेषां ग्रहमातरक्रव्यादकश्मलादीनां सत्त्वानां सर्वतः सर्वेषां मुद्रान्युक्तानि । मन्त्राश्चैव सर्वतः नियुज्यानुपूर्वशः क्रमशः सर्वतः सर्वं भवति नान्यतः ॥

आदौ तावत् साधकेन अस्मिन् कल्पराजे तथागतगतिः शुभा महामुद्रा मन्त्राश्च तदङ्गा निश्रिता भागेममन्त्रमद्रगदास्थानप्राप्तविमलगतेः त्वदीया मञ्जुश्री उत्पलमुद्रा एतेषां च बोधिसत्त्वानां च मुद्रा अवश्यं साधकेन पूर्वाभिमुखस्थितेन आदित्याभिमुखेन प्रातरुत्थाय शुचिना शुचिस्थानस्थितेन एतेषां मुद्राणामन्यतरं बध्वा आत्मशिरस्योपरि क्षिपेदूर्ध्वम् । एतेषामन्यतमं च मन्त्रं जपेदष्टशतम् । सर्वव्याधिविनिर्मुक्तो भवति । दीर्घायुषः सर्वविघ्नैश्च नाभिभूयते । सर्वसत्त्वानामधृष्यो भवति । सर्वमन्त्राश्चाभिमुखीभवन्ति । आशु सिद्धिं प्रयच्छन्ति । सर्वबुद्धैश्चाधिष्ठितो भवति । नियतं बोधिपरायणो भवति । मञ्जुश्री कुमारभूतश्चास्य कल्याणमित्रो भवति यावदाबोधिमण्डात् । कतमा च ते मुद्रा मन्त्राश्च भवन्ति ॥

आदौ तावन्महावीरमुद्रा वक्ष्यते । हस्तद्वय सम्पुटं कृत्वा अन्तरिताङ्गुलिमङ्गुष्ठमुन्नतौ पर्वतृतीयभागाकुञ्चितौ एषा महावीरमुद्रा सर्वतथागतैर्भाषिता । मन्त्रं चात्र भवति — आः वीर हूं खं । अनेन मन्त्रेण संयुक्तः मुद्रोऽयं सर्वकर्मकृत् ॥

तदेव हस्तद्वयं सम्पुटं कृत्वा भूयो विकसितमङ्गुलीभिः समन्ततो विकसितां वज्राकारम् एषा विकासिनी नाम मुद्रा वरा आदिबुद्धैः प्रकाशिता । मन्त्रं चात्र भवति— ॐ गगनसम्भवे दीप्त दीप्त ज्वालय ज्वालय बुद्धाधिष्ठिते विकाशय वि[illegible]शय सर्वबुद्धान् । हूं हूं विकासिनि फट् फट् स्वाहा । एषा विकासिनी मुद्रा । अनेन मुद्रेण संयुक्ता सर्वकर्मिका भवति । ग्रहाविष्टानां प्रज्ञापयति । जल्पापयति ग्रहगृहीतां क्रव्यादकश्मलगृहीतानां विषमूर्छितानां वा यथा यथा प्रयुज्यते, तथा तथा तत् सर्वं करोति । एष संक्षेपतः सर्वार्थसंसाधनी विद्याविकासिन्या मुद्रया युक्ता असिद्धा च क्षिप्रमर्थं करोति ॥

हस्तद्वय सम्पुटं कृत्वा अन्तरिताङ्गुलिसमं कारयेद् हृदयमुद्रा । हृदयं सप्तवारां हृदयमभिमन्त्र्य मोक्तव्या । एवं सर्वत्र । मन्त्रं चात्र भवति — ॐ गोदरे वीर स्वाहा । तथागतहृदय ॥

तदेव हस्त सम्पुटं विस्फुरिताङ्गुलिमन्योन्यसर्वाग्राङ्गुलिमध्ये सुषिरा उष्णीषमुद्रा। मन्त्रं चात्र भवति — ॐ ह्रौं बन्ध स्वाहा। एष सर्वकर्मिकः॥

दक्षिणहस्तेनाङ्गुष्ठं मुक्तं मुष्टिं बध्वा खखरकमुद्रा। मन्त्रं चात्र भवति — ॐ धुनाजितरण हूँ। खखरकमन्त्रा सर्वकर्मिकः॥

अनेनैव मुद्रया संयुक्त वामं चीवरसंसक्तं कृत्वा चीवरमुद्रा। मन्त्रं चात्र भवति — ॐ रक्ष रक्ष सर्वबुद्धाधिष्ठितात्मचीवर स्वाहा। तथागतचीवरः। अनेनैव मुद्रेण सर्वकर्मा करोति। चीवरं चास्याभिमन्त्र्य प्रावरेत्, सुभगो भवति। महारक्षा कृता भवति। सर्वग्रहमातरपिशिताशिनक्रव्यादसकश्मला सर्वविघ्नाश्च दृष्टमात्रा प्रपलायन्ते॥

वामाङ्गुष्ठदक्षिणकनिष्ठिकान्योन्यासक्तौ कृत्वाधः हस्तसम्पुटाधारः पात्रमुद्रा। मन्त्रं चात्र भवति — ॐ लोकपालाधिष्ठित धर धारय महानुभाव बुद्धपात्र स्वाहा। अनेनैव मुद्रेणायं मन्त्रः संयुक्ता सर्वकर्मिकाः भोजनकाले स्मर्तव्यः। सर्वगरविषा न प्रभवन्ति॥

करयुगावनद्धमुष्टौ तर्जन्यौ मध्यकुञ्चितौ। एषा सा चिन्तामणिमुद्रा। मन्त्रं चात्र भवति — ॐ तेजो ज्वल सर्वार्थसाधक सिध्य सिध्य चिन्तामणिरत्न हूँ। चिन्तामणिरत्नम्। अनेनैव मुद्रेण संयुक्तो सर्वकर्मकरं शुभम्। अनेन चाभिमन्त्र्य सर्वाभरणालङ्कारविशेषां आबन्धीत चात्मनो महारक्षा कृता भवति। परमसुभगश्च भवति। स्वयमलङ्कृत्य धर्मे चाभिमन्त्र्य सङ्ग्राममवतरेन्न चास्य काये शस्त्रं निपतति। अधृष्यो भवति सर्वशत्रूणाम्। स्वसैन्यं पालयते। परसैन्यं चाक्रामति॥

एवमादीनि कर्माणि अपरिमाणानि असिद्ध एव करोति। पद्मरागमरकतादीनामन्यतम रत्नविशेषं गृहीत्वा अष्टशताभिमन्त्रितं कृत्वा ध्वजाग्रे आत्मनो शिरसि वा हस्तिस्कन्धे वा संग्रामशीर्षेणावतीर्णोनावन्धयितव्यम्। नियतं परसैन्यमयुद्धेनैव दृष्ट्वा भङ्गमुपजायते। महास्तम्भितत्वं वा भवति। भग्नसैन्या वा प्रपलायन्तेऽधिपतिस्तेषाम्॥

अन्योन्यासक्ताङ्गुलिमुष्टिं कृत्वा मध्यमाङ्गुलिस्थाने तयोस्तृतीयपर्वभागे मध्यकुञ्चिते तर्जन्योन्य स एषा धर्मचक्रमुद्रा । मन्त्रं चात्र भवति — ॐ छिन्द भिन्द हन दह दीप्त चक्र हूँ । धर्मचक्र ॥

वामपादयुक्तदक्षिणजानुर्भूमिस्थं वामेन पृष्ठतः प्रसारिते प्रहारहस्तेन दक्षिणेनाहुङ्कृतेन सावष्टम्भः । एषा अपराजितमुद्रा । मन्त्रं चात्र भवति — ॐ हुलु हुलु चण्डालि मातङ्गि स्वाहा । अपराजिता धर्मचक्रापराजितमन्त्रः । एभिरेव मुद्रैः संयुक्तैः सर्वकर्मिका भवति । संक्षेपतः सर्वदुःखानि छिन्दति । यथा यथा प्रयुज्यते तथा तथा सर्वकर्माणि कुर्वन्ति ॥

वेण्योत्सङ्गे तथैव हस्तं कृत्वा दक्षिणेन धर्मदेशनाहस्तेन तथागतशक्तिमुद्रा भवति । मन्त्रं चात्र भवति — ॐ विजये महाशक्ति दुर्धरि हूँ फट् विजयिनि फट् मङ्गले फट् । तथागतशक्तिः । अनेनैव मुद्रेण संयुक्ता सर्वकर्मिका भवति । सर्वविघ्नां सर्वदुष्टां सर्वशत्रूं सर्वदेवांश्च स्तम्भयति । एषा अपर्यन्तगुणा यथा यथा प्रयुज्यते तथा तथा सर्वकर्माणि करोति ॥

तथैव हस्तौ परस्पराङ्गुलिरुत्तानौ करौ तर्जन्याग्रौ सूच्याकारेण मीलितौ विपर्यस्तमधोमुखं ललाटे न्यसेत् । एषा ऊर्णामुद्रा बुद्धानां भगवतामादिबुद्धैः प्रकाशिता । मन्त्रं चात्र भवति — नमः सर्वतथागतेभ्योऽर्हद्भ्यः सम्यक्सम्बुद्धेभ्यः । हे हे बन्ध बन्ध तिष्ठ तिष्ठ धारय धारय निरुन्ध निरुन्ध ऊर्णामाणि स्वाहा । तथागतोर्णामन्त्रः । अनेनैव मुद्रेण संयुक्ता सर्वकर्मिका भवति । गोरोचनया ललाटे तिलकं कृत्वा जपता शत्रुमध्येऽवतरेत् । अधृष्यो भवति । सर्वदुष्टैश्च न हिंस्यते । सङ्ग्राममध्यं वा अवतरेत् । परसैन्यभङ्गं दृष्ट्वा करोति । नाद्यत्वा अपरिमाणां कर्मा करोति । अपरिमाणैश्च बुद्धैर्भगवद्भिर्भाषिता ॥

अञ्जलिं निरन्तरमन्योन्यासक्तां कृत्वा तर्जन्यान्योन्यमध्यकुञ्चितौ अङ्गुष्ठाङ्गुलौ । एषा तथागतलोचना मुद्रा । मन्त्रं चात्र भवति — ॐ रु रु स्फुरु ज्वल तिष्ठ सिद्धलोचने सर्वार्थसाधनि स्वाहा ।

एषा तथागतलोचना मन्त्रा अनेनैव मुद्रेण संयुक्ता सर्वकर्मिका भवति। अक्षीण्यभिमन्त्र्य शत्रुमध्यमवतरेत्। दृष्टमात्रा विगतरोषा भवन्ति। मैत्रचित्ता हितैषिणो भवन्ति। मित्रत्वमधिगच्छन्ति। सङ्ग्रामशीर्षे वा अक्षिणी मभिमन्त्र्य परसेनां निरीक्षयेत् सौम्यचित्ता भवन्ति। न प्रतिप्रहरसमर्था अयुद्धेनैव निवर्तन्ति। साहाय्यं तावत् प्रतिपद्यन्ते॥

उभौ हस्तौ तथैव पुस्तकाकाराङ्गुलिरचितौ अन्योन्याग्राश्लिष्टौ तिर्यक् स्थितौ। एषा प्रज्ञापारमिता मुद्रा। मन्त्रं चात्र भवति—नमो भगवति चारुदर्शने ॐ थ। एषा भगवती प्रज्ञापारमिता अनेनैव मुद्रेण संयुक्ता सर्वकर्मिका भवति। मन्त्रं जपता हृदयं परामृशेत् स्मृतिमां भवति। दुष्टारिमध्ये जपं कुर्वन् तेषां चित्तमपहरति। सङ्ग्राममध्ये वा द्विपदचतुष्पदादीं सत्त्वां प्रत्यर्थिकां विमोहयति। चित्तविक्षेपं वा करोति संक्षेपतः। एषा भगवती यथा यथा प्रयुज्यते तथा तथा सर्वकर्माणि करोति। संक्षेपतः अपर्यन्तगुणा अपर्यन्तं चास्य कल्पं भवति। अपर्यन्तास्तथागतानां मुद्रा मन्त्राश्च भवन्ति। यथा सन्निपातपरिवर्ता चोक्तं तथागतानां परिवाराः तेऽत्र सर्वे मुद्रा मन्त्राश्च प्रयोक्तव्या। अन्यत्र चासङ्ख्येयानि कल्पानि भवन्ति। मुद्रा मन्त्राश्च तेऽस्मिं कल्पराजे नियोक्तव्या॥

एवं पद्मकुले पद्ममुद्रेण सहिता। मन्त्रं भवति — ॐ जिः जिः जिनाङ्गभृङ्गयभेदिने स्वाहा। एष मन्त्र अवलोकितेश्वरस्य बोधिसत्त्वस्य पद्ममुद्रया संयुक्तं सर्वकर्मिकं भवति। अनेन जप्तेन सर्वं पद्मकुलं जप्तं भवति। अनेन सिद्धेन सर्वं पद्मकुलं सिद्धं भवति। पण्डरवासिन्या वा महाविद्यया। मन्त्रं चात्र भवति — ॐ कटे विकटे निकटे कटङ्कटे कटविकटकटङ्कटे स्वाहा। मुद्रेणैव योजयेत् पद्ममुद्रेण वा सर्वकर्मिका भवति। रक्षा च कर्तव्या सर्वश्मशानगतेन॥

एवं तारा भृकुटी चन्द्रा हयग्रीवस्येति विद्याराजसन्निपातपरिवर्ते वा ये कथिताः सर्वगसङ्ख्यं चा पद्मकुलं प्रयोक्तव्यम् मुद्रा मन्त्रैश्च कल्पविस्तरैः॥

एवं ध्वजकुल उभयवज्रमुद्रसहितम्। मन्त्रं चात्र भवति — हूँ। एष वज्रपाणेः साक्षादनेन साधितेन सर्वं वज्रकुलं सिद्धं भवति।

अनेन जप्तेन सर्वं जप्तं भवति । उभयवज्रमुद्रासंयुक्तेन पूर्वनिर्दिष्टेन साधकेच्छया सर्वकर्माणि करोति । विरुद्धान्यपि जिनवरैः सत्त्ववैनेयवशात् । अतिक्रूरतरोऽयं महायक्ष मामकया वा कुलन्धर्या महाविद्यायाः सर्वकर्माणि करोति । मन्त्रं चात्र भवति — ॐ कुलन्धरि बन्ध बन्ध हुं फट् । एषा सर्वकर्मिका मामकी नाम महाविद्या सर्वबुद्धैर्निर्दिष्टा पूर्वप्रयुक्तेन मुद्रेण मामकयाया महाविद्यया संयुक्ता सर्वकर्मिका भवति । साधकेच्छाया निदानपरिवर्ति पूर्वनिर्दिष्टे वज्रपाणिपरिवारेण सर्वं वाशेषं वज्रिकुलं मुद्रामन्त्रमन्त्रसंयोगैश्चात्र प्रयोक्तव्यम् ॥

एवं राजकुले गजगन्धस्य बोधिसत्त्वस्य मन्त्रं भवति — ॐ गजाह्वये हूँ खचरे स्वाहा । पूर्वनिर्दिष्टेन मुद्रेण संयुक्तः सर्वकर्मिकः । एवं पूर्ववत् सर्वं गजकुलः सिद्धो भवति ॥

एवं समन्तभद्रस्य मन्त्रः —ॐ समासमजिनसुत मा विलम्ब हूँ फट् ॥

महास्थानप्राप्तस्य मन्त्रः—तिष्ठ तिष्ठ महास्थाने गतबोधः समयमनुस्मर हूँ फट् फट् स्वाहा ॥

विमलगते मन्त्रः — ॐ विमले विमले विमल मुहूर्तं धक धक समयमनुस्मर स्वाहा ॥

गगनगञ्जस्य मन्त्रः सर्वबोधिसत्त्वस्य ...क्तः सर्वकर्मिको भवति । एवमपायजहरादामरुदितक्षितिगर्भरत्नपाणिमैत्रेयप्रभृतीनां दशभूमिमनुप्राप्तानां सर्वमहाबोधिसत्त्वानामसङ्ख्येयानां मुद्रा मन्त्राश्चासङ्ख्येया भवन्ति । तस्मिं कल्पराजे नियोक्तव्यानि भवन्ति । सविस्तरता सर्वलौकिकलोकोत्तरोत्तरता सर्वलौकिकाश्च सर्वमन्त्रमुद्राकल्पविस्तरो महासमयासमयमनुप्रविष्टा सर्वकल्पविकल्पा त इह कथितानि स...याश्च ते इह सर्वमन्त्राः ॥

ए... मणिकुलयक्षकुलदिव्यार्यकुलेष्वापि प्रयोक्तव्यानि । सर्वतन्त्रमन्त्रमुद्राश्च त्र्यध्वाश्रिता एक एव कुलं भवति नान्यं यदुत तथागतकुलम् । त्वं च मञ्जुश्रीः ! कुमार ! तथागतकुले द्रष्टव्यः । सर्वबुद्धबोधिसत्त्वार्यश्रावकप्रत्येकबुद्धाः सर्वाश्च लौकिकलोकोत्तराः साश्रवानाश्रवमन्त्रा मुद्राविकल्पास्तथागतकुलानि प्रविष्टा इति धारय ।

न तद् विद्यते मञ्जुश्रीः! सर्वविमुद्रातन्त्रमन्त्ररहस्यं यस्तथागतकुले तथागतसमये अनुप्रविष्टः। प्रविष्टमेव मञ्जुश्रीः! कुमार! धारय। यस्मात् तथागत अग्रमाख्यायते तस्मात् तथागतकुलं अग्रमाख्यायते। एवं तर्हि मञ्जुश्रीः! अयं कल्पराजा अग्रं न कुलाग्ररत्नः आदिम-द्भिर्बुद्धैः प्रकाशितं देशितं प्रस्थापितं विवृण्वीकृतम् भगवां संकुसुमितराजेन भगवता शालराजेन्द्रेण भगवता सङ्कुसुमितगन्धोत्तमराजेन भगवता रत्नकेतुना भगवता अमिताभेन भगवता पुण्याभेन कुसुमोत्तमेन सङ्कुसुमेन सुपुष्पेण अमितायुर्ज्ञानविनिश्चयराजेन्द्रेण कनकमुनिना काश्यपेन क्रकुत्सन्देन शिखिनाविश्वभुवा भगवता कोनाकमुनिना मयाप्येतर्हि शाक्यमुनिना प्रकाशितवां प्रकाशिष्यन्ते च ॥

एवमेतद् बुद्धपरम्परायातं अयं तव मञ्जुश्रीः! कुमार! कल्पराजा तथागतकुलाग्ररत्नभूतं महानुशंसं नियतं धर्मधातुनिश्रितं न शक्यमस्यानुशंसं कल्पसहस्रेणापि कथयितुं महागुणविस्तारा विस्तरशः कथयितुम्। दृष्टधर्मवेदनीयाः साम्परायिकबोधिपरायणाश्च वक्तुं सर्वसत्त्वैर्वा श्रोतुम्। त्वत्सदृशैरेवमस्यापरिमाणा महागुणविस्तारफलोदया दृष्टधार्मिकसाम्परायिकाश्च भवन्ति। यः कश्चित् श्राद्धे अविचिकित्सः धारयेद् वाचये स्मि तत्रेऽभियुक्तो विकल्पतः मन्त्रं साधये जपेद् वापि मुद्रां वापि बध्नीयात् सततामियुक्तश्च भवेत्। स दृष्ट एव धर्मैरष्टौ गुणानुशंसां प्रतिलभते। अस्खलितश्च भवति सर्वप्रत्यर्थिकैः। अपितु भयं चास्य न भवति। विषं चास्य काये नाक्रामति। शस्त्रं चास्य काये न पतति। बुद्धबोधिसत्त्वैश्चाधिष्ठितो भवति। दीर्घायुः सुखमेधावी भवति। मञ्जुश्रियश्चास्य कुमारभूतः कल्याणमित्रो भवति। रात्रौ चास्य प्रत्ययं स्वप्ने दर्शनं ददाति। सर्वमन्त्राश्चैनं रक्षन्ते। मुद्रां चास्य स्वप्ने कथयन्ति। दुष्प्रराधृं दुष्टसत्त्वानां चाहितैषिणामवध्यो भवति। नियतं बोधिपरायणः॥

इमेऽष्टानुशंसा श्राद्धस्याविचिकित्सतोऽभियुक्तस्य द्रष्टव्याः। गृहेणो वा प्रव्रजितस्य वा स्त्रियस्य वा पुरुषस्य वा महासत्त्वानां शासनोपकारिणाम्। नान्येषां पापकर्मप्रवृत्तानां विपर्यस्तमधस्ताद् भवति

रौरवादिषु । यदुक्तं पूर्वाह्णे मुद्राबन्धः दीर्घायुष्यता जपेनेति । तथागत-मन्त्रपरिवारेण हृदयोष्णीषाद्यालोचनायाः मुद्राः सर्वकर्तव्यम् । मञ्जु-श्रियः कुमारभूतस्य दीयमुद्रामन्त्रैर्वा तुल्यवीर्या ह्येते तुल्यप्रभावा । यदुक्तं शुचिना शुचिवस्थानस्थितेनेति । स्थानं मध्यं भूप्रदेशं अशल्योपरुद्धं अपतितगोमयोपलिप्तं सुगन्धशुक्लपुष्पाभिकीर्णम् । तत्र स्थितः मन्त्रं जपे । मुद्रां बध्नीयात् । नान्यत्र नान्येषामन्यतरमेकं जपेन्मुद्रसहितम् ॥

यदुक्तं शुचिनेति अस्तं गते भानोः स्नायीत शुचिना जलेन निःप्राणकेन

प्रत्यग्राम्बरनिवासी उष्णीषकृतरक्षः ।
ग्राम्यधर्मविवर्जी शुचिचौक्षरक्षरतः शुभ ॥
उष्णीषकृतरक्षा वै श्वक्रवन्धानुवर्तिनः ।
ध्यात्वा तथागतां तत्र स्वप्ने यामविनिर्गते ॥

कन्याकार्तितसूत्रेण ब्राह्मण्या वा अरतिसम्भवाया गृहीत्वा अष्टशताभिमन्त्रितं कृत्वा अनेन मन्त्रेण — ॐ हर हर बन्ध बन्ध शुक्रधारणि सिद्धार्थे स्वाहा — मामवयया मुद्रासंयुक्ता मन्त्रं जपेत् । ततः सूत्रकं कट्यां बन्धयेत् । त्रिगुणपरिवेष्टितं कृत्वा शुक्रबन्धः कृतो भवति । कामधात्वेश्वरोऽपि शक्तः स्वप्ने मनोविघातमुत्पादयितुम् । किं पुनः स्वप्नविनायकाः । विधिना नाविधिना सरागस्य न वीतरागस्य कामधात्वेश्वरस्यापि कृष्णिरे दुहितरश्च अशक्ता मनोविघातमुत्पाद-यितुं विविधरूपधारिण्यः रागिणाम् । किं पुनः तदन्यः स्त्रियः मानु-षामानुषांङ्गनाः ॥

एवं विधिना प्रातरुत्थाय विसर्ज्य दन्तधावनं मुखं प्रक्षाल्य शुचिना जलेन स्नात्वा निःप्राणके विमलोदकेन पूर्ववद् विधिना पू-र्वाभिमुखस्थितेन मुद्रां बन्धीयात् । मन्त्रांश्च जपेत् । दीर्घायुषो भवति सर्वकर्मसमर्थः । महाव्याधिभिर्मुच्यते । सर्वजनप्रियो भवति । अमित्रा-णां प्रत्यङ्गिरमुपजायते । दृष्टमात्राश्च सर्वग्रहक्रव्यादकश्मलादयः प्रप-लायन्ते । परबलं स्तम्भयति । दर्शनमात्रेणैव सर्वकर्मा करोति शुचि-नाशुचिना विधानेनाविधानेन ॥

एवमस्य भगवच्छ्रेष्ठा मुद्रागणपरिवृतोऽयं कल्पराजा । अगण्यैश्च बुद्धैर्भगवद्भिर्भाषिता भाषिष्यन्ते च। मयाप्येतर्हि शाक्यमुनिना तथागतेनार्हता सम्यक् सम्बुद्धेन भाषितो महता पर्षन्मण्डलमध्ये। त्वमपि कुमार! मञ्जुश्रीः! सन्नियुक्तोऽयं शासनपरिसंरक्षणार्थं धर्मधातुचिरसंरक्षणार्थं च मयि परिनिर्वृते धर्मकोटिनिश्रिते भूतकोटिपर्यवसाने शान्तीभूते महाकरुणावर्जितमानसेन सत्त्वानां हितार्थाय भाषितोऽयं मया युगान्ते महाभैरवे काले वर्तमाने रत्नत्रयापकारिणां दुष्टराज्ञां दुष्टसत्त्वानां च निवारणार्थाय विनयनार्थाय च भाषितोऽयं कल्पराजा विस्तरविभागशः सर्वसत्त्वानामर्थायेति ॥

आर्यमञ्जुश्रियमूलकल्पाद् बोधिसत्त्वपिटकावतंसकात्
महायानवैपुल्यसूत्रात् पञ्चत्रिंशतिमः
मन्त्रमुद्रानियमकर्मविधिपटलविसरः
परिसमाप्त इति ॥

---

# अथाष्टात्रिंशः पटलविसरः।

अथ खलु भगवां शाक्यमुनिः पुनरपि शुद्धावासभवनमवलोक्य मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म। शृणु मञ्जुश्रीः!

संक्षेपतः मुद्राणां लक्षणं मन्त्राणां च सविस्तरम्।
संक्षेपतश्च मण्डलानां विधिः समयानुवर्तनम्॥
+ + + + + + + + मुद्रास्थानं च तेषु वै।
सरहस्यं सर्वमन्त्राणां सर्वमन्त्रेषु मण्डलम्॥
एतत् सर्वं पुरा प्रोक्तं सर्वबुद्धैर्महर्द्धिकैः।
मन्त्राणां गतिमाहात्म्यं कथितं सर्वकुलेष्वपि॥
आदिमद्भिः पुरा बुद्धैः सत्त्वानां हितकारणात्।
प्रवर्त्य मन्त्रचक्रश्च धर्मचक्रमनुत्तरम्॥
शान्तिचक्रानुगा याता भूतकोटिं समाश्रुताः।
शान्तिं जगाम सर्वे ते बुद्धा लोकमहर्द्धिका॥
एतत् सर्वं पुरा ख्यातमादिमाद्भिस्तथागतैः।
अहमप्यपश्चिमे लोके देशेयं त्वयि मञ्जुश्रीः॥
एतत् कृत्वा तदा वाच्यं बुद्धस्येदं महाद्युतेः।
कुमारो मञ्जुघोषो वै प्राञ्जलिं कृतमग्रतः॥
उवाच वदतां श्रेष्ठं सम्बुद्धं द्विपदोत्तमम्।
वदस्व धर्मं महाप्राज्ञ! लोकानां हितकारणम्॥
संक्षेपार्थमविस्तारं गुणमाहात्म्यफलोदयम्।
एवमुक्तस्तु मञ्जुश्रीस्तूष्णींभूतस्तस्थुरे॥
अथ ब्रह्म... श्रीमां कलविङ्करुतस्वनः।
कथयामास तत् सर्वं मुद्रामण्डलसंस्थितम्॥
मन्त्रं तन्त्रं तदा काले शुद्धावासोपरि स्थितो।
कथयामास सम्बुद्धः शाक्यसिंहो नरोत्तमः॥
शृणु त्वं कुमार! मञ्जुश्रीः! मुद्राणां विधिसम्भवम्।
मन्त्राणां तन्त्रयुक्तीनां गुणमाहात्म्यविस्तरम्॥

आदौ सर्वतथाचिह्नं सत्त्वासत्त्व यथा च तम् ।
आकारं चरितं चेष्टा सर्वमिङ्गितभाषितम् ॥
द्विहस्तपादयोर्मूर्ध्ना एकहस्ताङ्गुलयोजना ।
सर्वं तं मुद्रमिति प्रोक्तं आदिबुद्धैः पुरातनैः ॥
फलशं छत्रं तथा पद्मं ध्वज पताकं तथैव च ।
मत्स्य वज्र तथा शङ्खः कुम्भश्चक्रस्तथैव च ॥
विविधा प्रहरणा लोके यावन्तस्ते परिकीर्तिता ।
उत्पलाकारमुद्रं च सर्वे ते मुद्रानुमण्डले ॥
अनुपूर्वमिह स्थिता तथैते विधियुक्तमुदाहृता ।
सदृशाकारस्वरूपेण सर्वासां चैव लिखेत् सदा ॥
मण्डले मुद्रमित्युक्त्वा सामान्येष्वेव सर्वतः ।
यथास्थानसुविन्यस्तं मुद्रास्ते परिकीर्तिताः ॥
मण्डलेष्वेव सर्वेषु स्वाकारं चैव योजयेत् ।
चक्रवर्ती तथा चक्रं उष्णीषे सितमुद्भवे ॥
सितातपत्रं मुख्येन मण्डले तु समालिखेत् ।
बुद्धानां धर्मचक्रं वै पद्मं पद्मकुले तथा ॥
वज्रं वज्रकुले प्रोक्तं गजं गजकुलोद्भवे ।
तथा मणिकुले कुम्भं नियुञ्ज्यात् सर्वमण्डले ॥
दिव्यार्यौ च कुलौ मुख्यौ श्रीवत्सस्वस्तिकौ लिखेत् ।
आलिखेद् यक्षकुले श्रेष्ठे फलं फलजसम्भवम् ॥
महाब्रह्मे हंसमालिख्य शक्रस्यापि सवज्रकम् ।
महेश्वरस्य लिखेच्छूलं वृषं चापि समालिखेत् ॥
त्रिशूलं पट्टिशं चापि स्कन्दस्यापि सशक्तिकम् ।
विष्णोश्चक्रमालिख्य गदांश्चापि सदानवाम् ॥
नानाप्रहरणा देवा विविधासनसम्भवाम् ।
याना च विविधाश्चापि तेषां मध्यं लिखेत् सदा ॥

सरूपसंक्रान्तिप्रतिबिम्बं यथास्थितम् ।
एषामन्यतरं प्रोक्तं लिखेत् सर्वत्र मण्डले ॥

एकद्विकसमायुक्ता तृप्रभृत्यमसङ्ख्यका ।
मण्डला जिनवरैः प्रोक्ता वेदिकापङ्क्तितत्समा ॥

यदोद्दिश्य मण्डलं प्रोक्तं तं मध्ये तु निवेशयेत् ।
आलिखेज्जिनकुले गर्भे बुद्धं वापि सुमध्यमे ॥

अभ्यन्तरस्थं तदा बिम्बं शास्तुनो चापि मालिखेत् ।
द्वितीयं पद्मकुले न्यस्तं तृतीयं वज्रकुलं लिखेत् ॥

एवं सर्वं तदालिख्य अनुपूर्व्या सुरासुराम् ।
सर्वभूम्यां ततः पश्चाद् यक्षराक्षसमानुषाम् ॥

तीर्थिकानां ततो लिख्य अनुपूर्व्या यथास्थितम् ।
दिक्पालां च तथालिख्य सर्वांश्चैव विविधागताम् ॥

संक्षेपादेकबिन्दुस्तु द्विप्रभृत्यमसङ्ख्यकाम् ।
आलिखेन्मण्डलं यावदपर्यन्तं दिशमाश्रुतम् ॥

अप्रमेय तदा प्रोक्ता क्ष्मातलो मण्डलेऽस्य वै ।
एकबिन्दुप्रभृत्यादि अपर्यन्ते वसुधातले ॥

मण्डलस्य विधिः प्रोक्तो निर्दिष्टं त्रिविधस्य तु ।
उत्तमं मध्यमं चैव कन्यसं चैव कीर्तितम् ॥

उत्तमे उत्तमा सिद्धिर्मध्यमे मध्य उदाहृतम् ।
कन्यसे क्षुद्रासिद्धिस्तु कथितं जिनवरैः पुरा ॥

त्रिधा सर्वे मनोभिश्च सिद्धिरुक्ता जिनोत्तमैः ।
महासत्त्वैर्महासिद्धिर्मध्यसत्त्वे तु मध्यमा ॥

तृतीया क्षुद्रजन्तूनां क्षुद्रकर्म उदाहृतम् ।
चित्तं प्रसादे बुद्धत्वं उत्तमे सफलोदयम् ॥

नियतं प्राप्यते सत्त्वो मण्डलादर्शनेन वै ।
मध्यचित्तस्तदा काले प्रत्येकं बोधिमाप्नुयात् ॥

इतरे नियतं प्रोक्ता श्रावकत्वमनादरात् ।
अवन्ध्यं फलमाहात्म्यं गतिशान्ति उदाहृतम् ॥

मण्डलादर्शनस्वर्गं नियतं तस्य भविष्यति ।
एव मुद्रवरां सर्वां मन्त्राश्चैव सविस्तराम् ॥

नियुक्तास्त्रिविधाश्चैव त्रिःप्रकारा सुखावहा ।
मुद्रा मण्डला प्रोक्ता मन्त्राणां कथ्यते हितम् ॥

एकाक्षरप्रभृत्यादि यावत्सङ्ख्यं प्रमाणतः ।
कथिता वचना मन्त्रे यावन्त्यस्ता प्रकीर्तिताः ॥

वाक्प्रलापा रुदितं हसितं क्रन्दितं तथा ।
सर्वजल्पप्रजल्पं वा सर्वमन्त्रहितं भवेत् ॥

त्रिविधा ते च मन्त्राश्च त्रिप्रकारा समोदिता ।
यथैव मण्डले ख्यातः मुद्रामन्त्रेषु वै तथा ॥

त्रिधिरेषा समायुक्ता निर्दिष्टा लोकनायकैः ।
तथैव तत् त्रिधा याति अनेकधा चापि सहस्रधा ॥

त्रिविधं त्रिःप्रकारं तु त्रिधा चैवमसङ्ख्यकाः ।
चित्तायतं हि मन्त्रं वै न मन्त्रं चित्तवर्जितम् ॥

चित्तमन्त्रसमायुक्तः संयुक्तः साधयिष्यति ।
तथागतकुले ये मन्त्रा ये च पद्मकुले तथा ॥

ये च पद्मकुले गीता कुलेष्वेव च मापरैः ।
सलौकिका सर्वमन्त्रा वै सर्वे त इह निःसृताः ॥
जिने जिनसुतैर्यो मन्त्रो भाषितः सत्त्वकारणात् ।
तां जपेद् योऽभियुक्तश्च नियतं बुद्धो हि सो भवेत् ॥
मध्यस्था ये तु मन्त्रा वै तं जपेद् योऽभिजापिनः ।
प्रत्येकबुद्ध आख्यातो नियतं तस्य गोत्रतः ॥
येऽन्यमन्त्रे प्रवृत्ता वै प्रत्येकार्हभाषितैः ।
सलौकिकैश्च सर्वे वै अभियुक्तो मन्त्रजापिनः ॥

स भवेन्नियतं गोत्रस्थो श्रावकाणां महर्द्धिकाम् ।
तत्रापि कर्म प्रयोक्तव्यः उत्कृष्टेऽधममध्यमे ॥

शान्तिके बुद्धबोधिः स्यात पौष्टिके चापि खड्गिनाम् ।
इतरैः क्षुद्रमन्त्रैस्तु श्रावको बोधिरुच्यते ॥

तत्रापि चित्तं द्रष्टव्यं तत् त्रिधा परिभिद्यते ।
पुनश्च भिद्यते बहुधा असङ्ख्यं चापि भेदत इति ॥

आर्यमञ्जुश्रियमूलकल्पाद् बोधिसत्त्वपिटकावतंसकात्
महायानवैपुल्यसूत्रात् षट्त्रिंशतिमः मुद्रामण्डल-
तन्त्रसर्वकर्मविधिपटलविसरः
परिसमाप्त इति ।

## अथैकोनचत्वारिंशः पटलविसरः ।

अथखलु भगवां शाक्यमुनिः पुनरपि शुद्धावासभवनमव-लोक्य सर्वांश्च लोकधातुं बुद्धचक्षुषा सर्वसत्त्वानामवलोक्य पुनरपि मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । अस्ति मञ्जुश्रीः! त्वदीयमन्त्रतन्त्रमुद्रापटलविसरे सर्वलौकिकलोकोत्तरसमयमण्डलानुप्रविष्टे सामान्याविधानचर्यानिर्हारे समनुप्रवेशसत्त्वामाथये अचिन्त्याचेष्टित सर्वमन्त्राणां सर्वमुद्राणां सर्वमण्डलानां सर्वसत्त्वानां सर्वमन्त्रानुप्रविष्टानां निधाननिर्देशचर्या समासतो व्याचक्षते । तच्छ्रूयताम् ॥

अथखलु मञ्जुश्रीः कुमारभूतो बोधिसत्त्वो महासत्वः भगवतश्चरणयोर्निपत्य अध्येपयति स्म । अध्येपयतु मे सुगतः अस्माकमनुकम्पायै लोकस्यानुग्रहाय । तद्भ भविष्यति महतो जनकायस्यार्थाय हिताय सुखाय लोकानुकम्पायै । तद्भ वदतु मे सुगत! सर्वमन्त्राणां जपहोमआप्यायनपूजननियमसर्वतन्त्रमुद्रेषु . समयप्रवेशानुनिगमसाधनोपयिकविधानं सर्वमण्डलेषु सर्वलौकिकलोकोत्तरनिधिविशेषणोपायिकपटलविसरम् ॥

एवमुक्ते भगवां मञ्जुभाणी तदन्तरमभूत् सर्वज्ञ वांग्यं तूर्णां तस्थौ तदन्तरम् ॥

तुष्टः मञ्जुरवो धीरः सुगतज्ञ प्रतीच्छयम् ।
सर्वबुद्धाश्च सर्वत्र सर्वधातुसमागता ॥
बोधिसत्त्वास्तु सर्वे वै सर्वश्रावकखड्गिणः ।
सर्वसत्त्वा त्रिधा ये च अनादिभवचक्रके ॥
निबद्धा योनिजा ये च गतिपञ्चसुयोजिता ।
सर्वभूतगणाध्यक्षा राक्षसोरगमानुषा ॥
दैत्यदानवयक्षाश्च कूष्माण्डकटपूतना ।
देवमुख्या गणाध्यक्षा मातराश्च महर्द्धिकाः ॥
सर्वे ग्रहगणा लोके चन्द्रसूर्या परेस्तथा ।
ब्रह्मेन्द्रधनदा रुद्रा विष्णुस्कन्दविरूढका ॥

धृतराष्ट्रकुबेराश्च सर्वे वै वसवस्तथा ।
सर्वभूताश्च सर्वत्र सत्त्वधातुसमाश्रिताः ॥

शुभाशुभफलै कर्मैः निबद्धा गतिसूत्रके ।
मुक्तामुक्तश्च सर्वत्र आगता समये स्थिताः ॥

बुद्धाधिष्ठानबला ऋद्ध्या शृण्वन्तेह त्रिधा स्थिताः ।
शुभयोनिजसम्भूता अशुभैश्चैव स्वकर्मभिः ॥

शृण्वन्ते सर्वबुद्धा वै शुद्धावासपुरे तदा ।
तदा धर्मं सौगतं चार्यं अग्रधर्मशुभोदयम् ॥

मन्त्रमुद्रत्रिधायुक्तं नियतं चापि कीर्तितम् ।
क्षेमं शिवतमं मार्गं आर्याष्टाङ्गिकं तदा ॥

त्रिधा कर्मपथं श्रेष्ठं निर्वाणपुरगामिनम् ।
दानशील तदा ध्यानं त्रिधा मार्गोपदेशितम् ॥

भगवानुवाच सर्वज्ञ मन्त्रमार्गाङ्गप्रवर्तनम् ।
ईषस्मितमुखो धीर मञ्जुघोषं निरीक्ष च ॥

वाक्यं च शुभया युक्तं इदं ब्रह्मस्वरो तदा ।
शृण्वन्तो भूतगणाः सर्वे स्थिता सौम्या विशारदाः ॥

मा वो समयाद् भ्रंशो भविष्यति अनर्थकम् ।
अहितं दीर्घरात्रं वो बुद्धवाक्यमजानकाः ॥

पतिष्यथ तमस्यन्धे वत्स दूरीभविष्यथ ।
इदं वः श्रेयसे युक्ता मन्त्रमुद्रा समीरिताः ॥

करिष्यथा सदा लोका सदानुग्रहनिग्रहम् ।
मन्यथा मत्क्रियायुक्तं क्रोधो वै च यमान्तकः ॥

करिष्यति न सन्देहः सदा निग्रहनां युगे ।
आदौ पुष्पाभिकीर्णे वै विविक्ते विजने सदा ॥

कर्तव्ये मण्डले बुद्ध्या ध्यानेनानुज्य सर्वतः ।
आदौ च सर्वबुद्धानां पद्मं ध्यायेन बुद्धिमाम् ॥

द्वितीयं पद्ममुद्यन्तं अर्कस्यैव महाद्युतिम् ।
तत्रस्थो मञ्जुवरः श्रीमां कुमाराकारचिह्नितः ॥
पञ्चचीरकमूर्धानो जानुकर्णककोर्परः ।
फलितः कृताञ्जलिपुटो बालो पृच्छन्तं सुगतं विदुम् ॥
वाचं च शुभया युक्तां वदन्तो सुगतालये ।
यो वै सर्वबुद्धानां महापद्मं स्फटिकोज्ज्वलम् ॥
वैदूर्यमयं पद्मं किञ्जल्कं हेमजोद्भवम् ।
महामरकतीनालां कर्णिकां सह हेमजम् ॥
महाविटपसंघातं महारत्नविभूषितम् ।
पद्मरागमयैः कलिकैः अनेकाकारसुभूषितैः ॥
अश्मगर्भमयैर्दिव्यैः अङ्कुरैश्च विभूषितम् ।
पद्मं मुनिवरे ध्यात्वा महोच्चं गगनाश्रितम् ॥
तस्मान्न्यूनतरं पद्मं समाचिह्नं सुशोभनम् ।
तन्मनः धामतो ध्यायेन्मन्त्री प्रत्येकार्हश्रावकाम् ॥
तस्मान्न्यूनतरं पद्मं तृतीयं चित्तेन यत्नधीः ।
चतुर्थं पद्ममावर्तं तस्माद्ध्रस्वतमं विदुः ॥
ध्यायीत पञ्चमं पद्मं ह्रस्वाद्ध्रस्वतमं सदा ।
समाकारसमोद्योतं व्योमं संस्थितसर्वतम् ॥
कुर्यात् तस्य विदो पद्मं चित्तया सप्तगे स्थितम् ।
नच्यणाणेः तथा पद्मं उद्गन्तं रन्गैशा ॥
दाक्षिणेन विदोः पद्मे तथा मञ्जुरवः सदा ।
ततो ह्रस्वतरं पद्मं लोकीशस्य महात्मनः ॥
तृतीयं पद्ममित्येव समन्तद्योतिलाभिने ।
चतुर्थं पद्ममित्येव अक्षयप्रतिभानता ॥
ईपिदु विमलगते ह्रस्वं कमलं पञ्चमतान्विते ।
तस्मात् षष्ठतमो यो पद्मः आर्यं चाधर्मसंज्ञितम् ॥

अधश्चैव समन्ताद् वै उदधिं चापि चिन्तयेत् ।
महानागेऽर्धनिर्यान्तोऽनन्तः नन्दोपनन्दकौ ॥

सर्वश्वेता महानागाः सर्वालङ्कारभूपिताः ।
अम्भोर्जाता स्मितमुखो गगनालम्बनदृष्टयः ॥

सप्तशीर्षमहाभोगो मणिकुण्डलभूपिता ।
पुरुषाकारदिव्यास्तु अर्धभोगोरगस्तथा ॥

सप्तस्फटा ससौम्यास्तु अर्धचक्षुर्गतोर्ध्वगामी ।
वामतो मुनिवरा पद्मे पञ्चमुष्णीषसंस्थिनाम् ॥

चक्रवर्ति तथाद्यन्तां शस्त्रायुधसुतेजिताम् ।
एकाक्षरश्चक्रवर्तिस्तेजोराशिः सितोन्नतः ॥

अभ्युन्नतो जयोष्णीषविद्याराजमहर्द्धिकः ।
वज्रपाणिश्च यक्षेशः अधश्चैव सुचिन्तयेत् ॥

एतेषु चित्तं धीमां रूपिभिः सर्वदा सदा ।
आत्मनश्च धियो युक्तो मन्त्रविन्मन्त्रराड् जमे ॥

तत्रस्थं नियमस्थं वै पद्मपत्रोपविष्ट वै ।
ध्यायीत अधश्चात्मानं पर्यङ्केनोपविष्ट वै ॥

सर्वपापांश्च देशी मुनिनामन्तिके सदा ।
तत्रस्थो नियमजो रूपी अभ्येष्य मुनिवरां वराम् ॥

भर्गिनक्तानूनर्तन्तां गिरन्तां मृगतातगजाम् ।
तेषां पुण्यपानुत्प् मनुष्यांश्च जापकाः ॥

सुशुक्लमाल्लतीकुसुमां पुन्नागं नागकेसराम् ।
चम्पकाशोकतिलकां तगर्यांश्चैव समल्लिकाम् ॥

क्षिपेत् पुष्पाञ्जलिं दिव्यां सव्यांश्चैव सुशोभनाम्
सभूतामप्यभूतां वा श्रिया युक्तां सुशोभनाम् ॥

विविधां पूजावरां कुर्युर्विद्या चैव मनोरमाम् ।
विविधां धूपवरांश्चैव तथा गन्धानुलेपनाम् ॥

चित्तेनैव तु तत् कुर्यात् सभृता मध्यभावनः ।
निवेद्य बलिमन्त्रैर्वै प्रदीपांश्चैव तदा न्यसेत् ॥

विविधाकारसम्पन्ना विचित्रश्चित्रभोजनाम् ।
अनेकाकारसम्पन्नां दध्योदनमशालिकाम् ॥

यवगोधूममुद्गैश्च खाद्यभोज्यसुभूषितैः ।
निवेद्य सुगते भक्त्या दद्याच्चात्मानमेव तु ॥

तल्पेन नान्यथा चापि चित्त गेनापि शिष्यते ।
एषा श्रद्धा मया पूजा सर्वपूजेषु शिष्यते ॥

यं ध्यात्वा जापिनः सर्वे नियतं बोधिमवाप्नुयात् ।
सफला मन्त्रसिद्धिश्च जायते च न संशयः ॥

इहैव जन्म निःसत्त्वा सिध्यन्ते मन्त्रदेवता ।
अन्यजन्मान्तरे चापि केचित् सिद्ध्यन्ति मानवाः ॥

विचित्रां भोगसम्पत्तिं विशेषांश्चापि पुष्कलाम् ।
विविधा कालमनोवाग् ध्यानं चापि त्रिधा पुरा ॥

बुद्धैर्बुद्धशतैश्चापि प्रत्येकार्हश्रावकैः ।
त्रिःप्रकारा तथा बोधिः प्राप्नुवन्तो यशस्विनः ॥

एतैस्त्रिप्रकारैस्तु मन्त्रसिद्धिरिहोदिता ।
त्रिप्रकारैस्तु सत्त्वाख्यं उत्तमाधममध्यमे ॥

त्रिधा कर्मसमुद्दिष्टम् ।
प्रणीतं ध्यानतां प्रोक्तं मध्यमं शीलजं स्मृतम् ॥

कन्यसं दानजं मुख्यं तच्चैव तु पुनस्त्रिधा ।
प्रणीतं धर्मदानं तु मध्यमं तु गतं तथा ॥

वाक्यमामिषदानं तु कन्यसे व तु कीर्त्यते ।
शीलं चापि त्रिधा प्रोक्तमित्युवाच मुनिः पुरा ॥

बुद्धत्वपरिणामाख्यं अग्र्यं शीलमिति स्मृतम् ।
प्रत्येकबोधौ मध्यं तु कन्यसं श्रावकोद्भवम् ॥

एतल्लोकोत्तरं शीलं लौकिकं तु प्रकथ्यते ।
तच्चापि त्रिविधा ज्ञेयं सामन्तान्तिककारणम् ॥
मुमुक्षुबुद्धिभिर्भक्त्याधिज्ञस्या अभिज्ञगम्यता ।
श्रेष्ठा ज्येष्ठस्तथा लोके कथ्यन्ते ऋषिवरैः सदा ॥
एतदग्रमयं लोके शीलमाहुर्मनीषिणः ।
मध्यमं देवज ज्ञेयं कन्यसं तु नृपद्गमम् ॥
तच्चापि त्रिप्रकारैस्तु त्रिधा कर्मसु योजितैः ।
त्रिधा च त्रिविधैश्चैव पुनर्युक्तं त्रिद्विसप्तपञ्चशः ॥
त्रिसप्तं सप्तति तच्चापि त्रिधा भिन्नम् ।
प्रादुर्भूतोऽङ्कुरोऽङ्कुराः ध्यानजं चैवमत्यन्तो ॥
सुरेश्वरौ पुनः त्रीणि पुनरष्टाष्टभूषितम् ।
यथैव पूर्वनिर्दिष्टं ध्यानेष्वेव च कथ्यते ॥
एवं तरङ्गवद् भिन्नं पुनर्ज्वालेव गच्छति ।
बुद्बुदाकारवद् ज्ञेयं क्षणोत्पत्तिप्रभङ्गुरम् ॥
एवमेवाद्यप्रयोगेन शतधा भिद्यते पुनः ।
सहस्रशश्च सदा ज्ञेयमसंख्येयाद्यलक्षितम् ॥
साध्यते ध्यानजं कर्म अग्र्यं मानसोद्भवम् ।
तस्माद् ध्यानवतं मन्त्रं चित्तं बोधाय नामितम् ॥
अयनेनैव ते सिद्धिं लप्स्यन्ते मन्त्रदेवताम् ।
तस्मात् सर्वप्रयत्नेन जापिभिः सिद्धिलिप्सुभिः ॥
कर्तव्या मानसी पूजा बुद्धानां सर्वतः सदा ।
इहैव जन्मनि सिद्धिं नित्यं ध्यानरतस्य तु ॥
सर्वत्राप्रतिहतो ह्येष ध्यानजो शीलसंवरः ।
दानतो विभवो धर्मः शीलतो सुखसंदयम् ॥
उत्पत्तिध्यानाद्दाना श्रेय ।
एतत् संक्षेपतो युक्तं जापिनां मन्त्रसिद्धयं ॥

यं बुद्ध्वा मन्त्रिणः सर्वे क्षिप्रमन्त्रेषु सिद्धये ।
क्षिप्रं चानुत्तरां बोधिं प्राप्नुवन्ति न संशयमिति ॥

बोधिसत्त्वपिटकावतंसकान्महायानवैपुल्यसूत्रात् आर्यमञ्जुश्रियमूलकल्पात्
सप्तत्रिंशतिमः महाकल्पराजपटलविसराद् उत्तमसा-
धनोपयिकसर्वकर्मार्थसाधनतत्त्वेषु

प्रथमः ध्यानपटलविसरः

परिसमाप्त इति ।

---

## अथ चत्वारिंशः पटलविसरः ।

अथखलु भगवां शाक्यमुनिः शुद्धावासभवनमवलोक्य मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । अस्ति मञ्जुश्रीः! त्वदीये महाकल्पराजे पटलविसरे ध्यानजेऽनाश्रवे परमशिवशान्तीभूते अत्यन्तभूतकोटिधर्मधातुप्रविष्टे सर्वतथागतधर्मनेत्रीमनुगते परमनिर्वाणमार्गो सानुप्रविष्टे आर्यपथक्षेमशान्तीभूते महाधर्मनैरात्म्यशून्यतास्वभावमनुप्रविष्टे सर्वलौकिकलोकोत्तरतत्त्वावतारध्यानानुगतमनुप्रविष्टे सर्वमन्त्रचर्यासाधनविधिसमासक्रीडानाटकपालचर्यानिस्फूर्यानानुगतसन्तो - षणसत्त्वचर्यानुगतैः । कतमं च तत् ॥

शृणु त्वं मञ्जुरव! धीमां सर्वसत्त्वानुवर्तनम् ।
ध्यानं सर्वज्ञता ज्ञेयं सर्वमन्त्रार्थसाधनम् ॥

पूरणं सर्वमन्त्राणां शोधनं पापकर्मिणाम् ।
यं ध्यात्वा च जनाः सर्वे सिद्धिं प्राप्स्यन्त्यनाविलाम् ॥

सर्वाकारवरोपेतां ध्यानसौख्यमचिन्तिताम् ।
बोधित्वं त्रिविधं प्राप्य उत्तमाधममध्यमाः ॥

अतुलां मन्त्रसिद्धिं च अस्तुवन्ति जना भवेत्।
सर्वार्थसाधनं लोके यशःकीर्तिसुखोदयम्

दीर्घायुष्कतां लोकेऽस्मिं देवानां च महद्गतिम् ।
सर्वाशावाप्तितां क्षिप्रं प्राप्नुवन्ति न संशयः ॥

क्षिप्रपश्चानुत्तरां बोधिं लप्स्यते ध्यानचिन्तकाः ।
सर्वसत्त्वाहितश्चाग्रं सर्वमन्त्रेषु कीर्त्यते ॥

स्मरणादेव मन्त्रेषु सर्वतन्त्रेषु च पुनः ।
सिद्धयः सिद्धिहेतूनां क्षिप्रमाशानिबन्धनम् ॥

आशास्यं भुवि तां मर्त्या पुनर्गच्छन्ति देवता ।
आजहार पुरं दिव्यं देवतामन्दिरेष्विह ॥

तिष्ठन्ते मन्त्रराट् सर्वे तन्मुखापिध्यायिनं ।
आगत्य च पुनः सर्वे देवतामघर्षापणाम् ॥

कथयन्ति यथातथ्यं शुभाशुभफलोद्भवम् ।
तासां प्रबुद्धः स्वप्ने प्रत्यक्षं वाथ जापिने ॥
शुभोदयं फलं कर्म प्रत्यक्षं वापि देवताम् ।
पश्यन्ते स्वप्नगताः सर्वे मन्त्रिणा वापि तदन्तरे ॥
इतरां चापि न पश्यन्ते जापिनो मन्त्रलौकिका ।
ध्यानेन पापं क्षीयेत जपे चापि सुपुष्कले ॥
सिध्यन्ते मन्त्रराट् सर्वे अचिरात् तस्य मन्त्रिणः ।
प्रभावा ध्यानयोगस्य अचिन्त्याद्भुतचेष्टिता ॥
एवमुक्तस्तु धीरेण शाक्यसिंहेन तापिना ।
भून्मञ्जुरवस्तूष्णीं शुद्धावासपुरे तदा ॥
सर्वे देवगणा मुख्या त्रिधा धातुसमाश्रिता ।
अमुचद् वाक्यवरं शुद्धं सर्वमन्त्रेश्वरं गुरुम् ॥
साधु साधु महावीर! साधु धर्मेश्वरो विभोः ।
यस्त्वं हि सर्वसत्त्वानां हितार्थं मन्त्रजापिनाम् ॥
ध्यानां च तत्त्वनिर्दिष्टं पूर्वनिर्दिष्टनामिति ।
इदानीं तु महावीर । + । + । + । + । + ॥
एवमुक्ताः सुराः स + अग्रा ह्यग्रतम हिताः ।
तूष्णीम्भूतास्ततस्तस्मिन शुद्धावासपुर पुरे ॥
इत्युवाच महाधीरो मुनिस्तेजो । + । + । ।
शुभया वाचाया दिव्यां लोकतत्त्वार्थदर्शनम् ॥
कथयामास सम्बुद्धः मधुराक्षरघोषजम् ।
श्रृणोथ भूतगणाः सर्वे स्थिता त्रिविधालया ॥
ध्यानं च भवनिर्देशं कथयन्तः समाहिताः ।
अनेकार्थमनानात्वं नगात्म्यं तत्त्वदर्शनम् ॥
सर्वमन्त्रार्थरिधिसार्थं विविधार्थं तु लौकिके ।
सर्वधर्मेश्वरा लोके येनायान्ति सुचिन्तिता ॥

क्षिप्रं च जापिनां सर्वं आशु मन्त्रार्थसिद्धये ।
आदौ ध्यायीत महावीरं रत्नकेतुं तथागतम् ॥

रत्नशैलनिषण्णं तु गुहायां रत्नजोद्यने ।
पद्मरागमयं दिव्यं महापद्मं महोन्नतम् ॥

भगवां तत्र निषण्णस्थं पर्यङ्के धर्मदेशितम् ।
ध्यायन्तं महावीरं पद्मसम्भवमेव तु ॥

पद्मोत्तरं च सम्बुद्धं पद्माभं चैव बुद्धिमाम् ।
ध्यायीत मुनिवरां पञ्च रत्नाभं च तथागतम् ॥

समतः सुप्रतिष्ठिता ज्ञेया गुहेष्वेव पञ्चसु ।
सर्वा शैलमयां साद्रि पद्मरागमयं क्वचित् ॥

भिन्नेन्द्रनीलसाभासं क्वचित् स्फटिकसन्निभम् ।
उच्छ्रयं मरकताभासं प्रमाणं चापि शताष्टकम् ॥

योजनानां सहस्रं तु लक्षषोडशविस्तरम् ।
उपरिष्टात्तु सम्बुद्धा अपर्यन्ता नरोत्तमा ॥

इत्यूर्ध्वमधः सर्वादिग्विदिशश्चापि सर्वतो ।
प्राप्तं मुनिवरैः सर्वं सम्बुद्धैर्द्विपदोत्तमैः ॥

चन्द्राभासं च निर्भासैः श्वेतपुण्डरिकासनैः ।
हंसगोक्षीरनिभासैः शङ्खकुन्देन्दुहिमप्रभैः ॥

सम्बुद्धैः सर्वमिदं व्याप्तं इत्यूर्ध्वमधस्ततस्तिर्यक्कम् ।
सद्व्योम्नि पुष्पवर्षैः सुरमुख्यैः समन्ततः ॥

अदृश्यकायसारूप्यैः उपरिष्टात् खसमागतैः ।
अथश्चात्मानं सदा चिन्तेत् पर्यङ्केनोपविष्टकम् ॥

पद्मपत्रे स्थितं मुख्यं शरीरं चापि निर्मलम् ।
अभिषिञ्चन्तं सदापश्यन्तं तोयधाराभि सर्वतः ॥

असङ्ख्येयैर्मुनिमुनिमुख्यैः सम्बुद्धैः द्विपदोत्तमैः ।
प्रसृतैर्दक्षिणाग्रकरैः समन्तादञ्जलिभिः सदा ॥

शुक्लतोया बहुभिः बहुधाराभिरूर्ध्वतः ।
समन्तात् सर्वतश्चैव मूर्त्तिं चात्मान एव तु ॥
अगाङ्गसलिलधाराभिः सुगन्धैर्लघशीतलैः ।
अच्छैरनाविलैश्चैव सर्वव्याधिहरैस्तथा ॥
जरामृत्युविनाशिन्यैः भिन्नस्फटिकसन्निभैः ।
तादृशैस्तोयधाराभिः आत्मानं चापि चिन्तयेत् ॥
अभिषिञ्च्यात्मतो चिन्त्या तैश्चाप्यायितमानसः ।
समन्ताद् वारिधाराभिस्ततो ध्यायी सुखी भवेत् ॥
सन्तुष्टमानसो धीमां पश्येद् ज्ञानं तदासनम् ।
चित्ते समाधितां लिप्स्ये पञ्चाभिज्ञासु चिन्त्यधीः ॥
एवं युक्तः सदा योगी पश्येद् धर्मां तदा स्वयम् ।
दिव्यं श्रोत्रं तथा ज्ञानं पूर्वजातिमनुस्मरम् ॥
ऋद्धिविक्रीडितं ज्योतिर्दिव्यं चक्षुरनावृतम् ।
पराचित्तगतिं चिन्तां सर्वसत्त्वाश्रयं तम् ॥
सर्वं ज्ञास्यनि योगीशो तदा युक्तः समाहितः ।
अनिवर्त्यः सदा बोधौ अनुत्तरायां न संशयः ॥
बुद्धभूमिगतां धर्मां प्रथमायामविकल्पतः ।
प्राप्स्यतेऽसौ सदा जापी आनिवर्त्योऽमृते पदे ॥
अनाभोगेनैव सम्यङ्मन्त्राः सिध्यन्ति सर्वतः ।
ये च लोकोत्तराः सर्वे अभिमुख्यैः प्रभाषिताः ॥
बोधिसत्त्वैस्तु सर्वत्र अब्जा वज्रोद्भवाश्च ये ।
लौकिका ये च मन्त्रा वै ब्रह्मरुद्रेन्द्रभाषिता ॥
यक्षमुख्यगणैः सर्वैः ।
मातृभूतग्रहगणैः यक्षराक्षसकिन्नरैः ॥
देवैर्नागगरुडैश्च सिद्धविद्याधरैस्तदा ।
कूश्माण्डैर्व्यन्तरैश्चापि कश्मलैः पिशिताशनैः ॥

परप्राणहरैश्चापि राक्षसैः प्रेतदुःस्वपैः ।
पिशाचैः भूतयक्षैश्च अनेकाकारजातिजैः ॥

ये मन्त्रा भाषिता लोके  ।
ते तस्य योगिनां यान्ति इपक नाशाय साधिना ॥

क्षिप्रं सिद्धितां यान्ति मन्त्रा सर्वार्थसाधकाः ।
वचनं तस्य वै मन्त्रः क्षिप्रं तत्त्वार्थदर्शिन ॥

ऋषयो ये च वै देवाः मानुषोद्भवाः ।
प्रसह्य वृत्ता मुख्याश्च स्त्रीपुंसाऽश्चापुंसकाः ॥

सर्वे महर्द्धिकाऽश्चापि उत्तमाधममध्यमाः ।
सर्वे लौकिका चापि ये मन्त्रा लोकपूजिता ॥

तैश्चाप्यथ सत्वैश्च मन्त्रैश्चापि मन्त्रजाः ।
भाषिता मुनिमुख्यैश्च सर्वे सिद्ध्यन्ति योगिने ॥

तन्त्रमन्त्रगताश्चापि ओषध्यो मणिभूषणाः ।
सर्वे मन्त्रवरा तस्य उत्तमाधममध्यमाः ॥

सर्वाशावाप्तये वापि अक्षरे क्षरते यदा ।
सिद्ध्यते तस्य वै युक्तस्य मन्त्रिणे एवं युक्तस्य मन्त्रिणे ॥

एवमुक्तस्य मन्त्रस्य धीमन्तस्य विशेषतः ।
प्रथमं चिह्नलिङ्गस्तु मन्त्राणां सिद्धिहेतवः ॥

शरीरं जायते श्रेष्ठं पद्माभासं सुखोदयम् ।
गात्रस्य शैत्यता चापि चन्दनेन्दीवरगन्धिना ॥

कर्पूरागरुसौगन्ध्यं पद्मकिञ्जल्कवर्णतः ।
वक्त्राद् रोमकूपेभ्यः गन्धो वान्ति सचाम्पकम् ॥

जातीयूथिकपुन्नागं नागकेसरवकुलम् ।
धानुष्कारी ससौगन्धी जातिमल्लिककोलजम् ॥

विविधां धूपमुख्या वा विविधा पुष्पजातयः ।
विविधा गन्धमुख्याश्च विविधा द्रव्यजातयः ॥

विविधां संगता गन्धाः शुभकर्मसमोचिताः ।
तेषां गन्धवरं हृद्यं अभिभूयोभिप्रवर्तते ॥

दिव्यं मान्दारवं गन्धं सकिञ्जल्कं सकोकणम् ।
सकस्तूर्यकं लोके अभिभूय तां प्रवायते ॥

ततश्चिह्नगिरां ज्ञात्वा गात्रे वै चापि शैत्यताम् ।
चित्तैकाग्रतां चैव सुखं चैव विवेकजम् ॥

प्रथमं ध्यानजं चैव चित्तं ज्ञात्वा तु तीरितम् ।
सुखदुःखमुपेक्षाय निवृते चापि विरागताम् ॥

उपेक्षं स्मृतिपारिशुद्धिं द्वितीये प्रेरयते जापी ।
तृतीयं चित्ततो ध्यानं चतुर्थं अश्रयतो व्रती ॥

यथा मुनिवरोद्दिष्टं ध्यानं सर्वतो शुभम् ।
तथा मन्त्रगतो जापी ध्यायेदेकाग्रमनोमयम् ॥

ये निर्दिष्टात्रावुद्धैस्तु वर्तमानमनागतैः ।
सम्बुद्धैः श्रावकैश्चापि सुत्रान्ताश्चापि कीर्तिताः ॥

तेषु योगेषु मन्त्रज्ञाः अनुपूर्व्या ध्यानमाचरेत् ।
निवर्त्य श्रावकीं बोधिं प्रत्येकजिनमुद्भवाम् ॥

महाकरुणानुभावीत महामैत्रीं चापि यत्नतः ।
यद् यद् गोत्रागतं चित्तं तथा चित्तं तु भावयेत् ॥

परहितचित्तान्मैत्री परदुःखकृपालुता करुणा ।
परतुष्टिर्मुदिता परदोषमुपेक्षणमुपेक्षा ॥

इत्युवाच महाभागा सम्बुद्धा द्विपदोत्तमा ।
अनित्यदुःखमनात्माशून्य तत्त्वं शिवं पदम् ॥

क्षेमं शिवं परं स्थानं निर्दिष्टं लोकनायकैः ।
क्षणिकः सर्वसंस्काराः त्रिविधास्तत्त्वेप्वचेष्टिता ॥

त एवासंस्कृता धर्मास्त्रिविधा बोधिसंस्थिता ।
त एव शिवतमा लोके कथिता बोधिपरायणैः ॥

पुद्गलाभावनैरात्म्यं नीक्ष्णपतनवर्णितम् ।
तं नास्ति शिवे मार्गे क्षेमे बुद्धोपदेशिते ॥
अत्यन्तनिष्ठे धर्मेऽस्मिं भूतकोटिसमाश्रिते ।
धर्मधातुसमानं ते असिनास्मिन्निर्विराजिते ॥
शुभे धर्मोदये बोधौ त्रिप्रकारसमोदिते ।
अत्यन्तनिष्ठे मोक्षे च बहुधा भेदमाश्रिते ॥
सुप्रयुक्ते सुनिर्दिष्टे सर्वबुद्धैः सुदेशिते ।
मार्गे स्थितेऽथ मन्त्रज्ञः सर्वपापहरे शिवे ॥
ये धर्मा मुनिवरैः सर्वैः प्रतीत्योत्पन्ना शुभाशुभाः ।
सर्वे ते जातिभिर्योगे ध्यातव्या मुनिहेतुभिः ॥
श्रावकानां तु या शिक्षा अधिशीलानुप्रवर्त्तते ।
अधिचित्तं च यद् ज्ञानं श्रामण्यफलहेतुकम् ॥
अनास्रवं सस्रवं ज्ञेयं जापिभिः सर्वदा स्वयम् ।
ज्ञातव्यं खड्गिणा शिक्षा प्रत्येकार्हसम्भवाम् ॥
सर्वसत्त्वाख्यसत्त्वैर्व सुस्वरं त्रिदिनोदितम् ।
यथाजिनैश्च निर्दिष्टं मार्गतत्त्वानुगामिनम् ॥
साश्रवानाश्रवं ध्यानं संवरं च शुभोदयम् ।
यथावृत्ति यथालिङ्गं तथा शिक्षासु व्यवस्थितम् ॥
तद्धर्मासेवितो जापी मन्त्रसिद्धिं समश्नुते ।
ध्येयं च ध्यानजं पुण्यं पुण्यं ब्रह्मशुभोदयम् ॥
तस्य सिद्धिः सदा ज्ञेया ध्यानैः पुण्यैश्च बृंहितैः ॥
उपोह्य सर्वतो मन्त्री जपहोमरतो व्रती ॥
ध्यातव्यः सर्वतो मुख्यः जिनपुत्रो महर्द्धिकः ।
मञ्जुघोषो महावीरः कुमारकुमाकारसमन्वितः ॥
ईषित्स्मितमुखो देवो सव्यामाभोगमण्डलः ।
प्रसन्नमूर्त्तिः पद्मस्थः सगन्तरश्म्यावभासितः ॥

पूर्वनिर्दिष्टजे स्थाने स्वमूर्त्याभिषेकसेविते ।
उपरिष्टात् तारकाणां मध्ये जिनवरालये ॥

तत्रस्थं तु सुखासीनं ध्यायीत मञ्जुरवं शुभम् ।
सर्वबुद्धोर्ध्वकं दृष्टिं सनमस्कारं शुभं प्रभुम् ॥

वामे करविन्यस्तं नीलोत्पलं शुभम् ।
दक्षिणेन करे ह्युक्त शुचिस्थाने सदाशुभे ॥

सनमस्कारं सदा बुद्धं ईषच्छीलासबालिशम् ।
तं ध्यात्वा मुनिपुत्रं वै सदा मन्त्री पुनः पुनः ॥

तत्रस्थो ध्यानजो धीमां आतुरायां तु पश्यति ।
सर्वे ते व्याधिनिर्मुक्ता दृष्टमात्रेण मन्त्रिणा ॥

अधश्च पश्यत्पातालं सर्वे भूमिगता धना ।
वशिता सर्वमन्त्रज्ञः नित्योच्चाटनमन्त्रिणाम् ॥

यदूर्ध्वं समपश्येत् सिद्धां व्योम्नानुगामिनाम् ।
सर्वे वशयिता लोके सिद्धद्रव्याणि सर्वतः ॥

अथोत्तरां दिशां पश्येद् यक्षाध्यक्षांश्च सर्वदा ।
कूष्माण्डा वित्तदाश्चैव वित्तेशश्च महर्द्धिका ॥

ईशानो भूतपतिश्चैव ।
औषध्यो हेमजाः सर्वे रुद्रश्चैव महोमया ॥

किन्नरा मरुगन्धर्वा ऋषयो गरुडस्तथा ।
सर्वसत्त्वाश्रया ये च तथोत्तरा विदिशे ॥

विदिक्षु चैव सर्वत्र तथा स्थावरजङ्गमाः ।
सर्वे स्युर्वशमायान्ति दृष्टमात्रेण जापिने ॥

एवं पश्चिमतो ज्ञेयं वरुण महर्द्धिकः ।
महानागैः सदा सर्वे दृष्ट्वा यान्ति सम्मूर्च्छिता ॥

एवं वैवस्वतां लोकां यमश्चैव महर्द्धिकः ।
सर्वे ये राक्षसा दुष्टा घोररूपा महर्द्धिका ॥

ससुता भृत्यवर्गैश्च परप्राणहराः खगाः।
पिशिताशनरूपाश्च भीमरूपानुगाः सदा॥
व्यन्तरा कश्मलाश्चैव प्रेताप्रेतमहर्द्धिका।
पिशाचा भूतक्रव्यादा व्यालश्चैव महर्द्धिकाः॥
अनेकाकाररूपास्तु अनेकाकारयोनिजाः।
रूपा मनोजवाश्चैव सत्त्वा हिण्डन्ति मेदिनीम्॥
दारुणा रुधिरगन्धेन समन्ताद् योजनं शतम्।
सहस्रं पुनरायान्ति सप्तसप्तेऽनुगे सदा।
मानुषाणां विहेठन्तां पर्यटन्ति महीतले॥
आहारार्त्थिनः केचित् केचित् क्रीडानुगामिनः॥
सर्वे स्युर्वशमायान्ति दृष्टमात्रेण जापिने।
एवं पूर्वयां तथा दिक्षु पूर्वाध्यक्षादिशानुगः॥
सवितुः सर्वनक्षत्रा सज्योतिग्रहचन्द्रमा।
महोत्पादोपग्रहा सत्त्वे विराजाश्चैव दिशां पतिः॥
ससुतो सपरिवारो वै शस्त्री वा चापि सर्वतः।
सर्वे ते वशमायान्ति ध्यानेनावर्जित जिता॥
विदिक्षुश्चैव सर्वत्र सर्वे सर्वासु दिक्षुषु।
सुरश्रेष्ठा सुरश्चैव स्त्रीपुंसादये भुवि॥
सर्वसत्त्वा तथा लोके मानुषा अमानुषाद्भवा।
सर्वे ते वशमायान्ति ये सत्त्वा त्रिषु स्थावरा॥
ये तु धातुजा मुख्या तथा मध्यमकन्यसाः।
सर्वे ते वशमायान्ति अदृश्यो दृश्याश्च ध्यायिने॥
त्रिविधं ध्यानजं कर्म ज्येष्ठमध्यमकन्यसम्।
ज्येष्ठे उत्तमां बोधिं प्राप्य ध्यायी निवर्त्तते॥
अनुत्तरं च पदं शान्तं लोकं मार्गमदागिणाम्।
कन्यसा श्रावकी बोधिः प्राप्यते परनिश्रिता॥

प्रतीत्योत्पत्तिकधर्माणां हेतुसम्भूतलक्षणम् ।
तेषां निरोधधर्माणां एवं वादी नरोत्तमः ॥

साक्षात्क्रियेन महत्त्वं चतुरो पटलसम्भवाम् ।
हेत्वाभासविदं ज्ञानं शून्यता दुःखसम्भवम् ॥

नैरात्म्यधर्मता निष्ठं अत्यन्तं भूतकोटिजम् ।
निरोधमार्गवद् ज्ञेयमर्हत्वं चापि कन्यसम् ॥

आलयोद्घातनो वर्त्मापच्छेदो वदनात्मताम् ।
पिपासा प्रतिपच्छोपावर्त्मोपच्छेदोऽथ देहिनाम् ॥

कामतर्षा सहतृष्णां शोकशल्योऽथ देहिनाम् ।
रुध्यन्ते सर्वतो ध्याने मार्गेऽस्मि ध्यानजे हिते ॥

त्रिप्रकारं तथा कर्म अनेकाकारचिह्नितम् ।
त्रिधा चैव समुख्याणां त्रिविधा बोधिकीर्तिता ॥

कन्यसं श्रावके बोधिः प्रत्येकार्हखड्गिणाम् ।
मध्यमं च सदा लोके निर्दिष्टा जिनवरैः पुरा ॥

उत्तमं तु सदा बोधिं सम्यक सम्बुद्धतां गतिम् ।
एवमाद्या प्रयोगेन त्रिधा कर्मक्रियाक्रमम् ॥

शतधा भिद्यते तत्र सहस्रोऽथ मसङ्ख्यकम् ।
व्रीह्यङ्कुरवद् ज्ञेयं पुनः क्षेत्राङ्कुरवत् सदा ॥

ततोऽङ्कुराङ्कुरवन्नित्यं सन्तत्या सम्प्रकीर्तिताम् ।
बीजोपधवत् कर्म शुक्लधर्मसमन्वितः ॥

सत्त्वविज्ञानसन्तत्या पुनस्तोयतरद् भवत् ।
प्रवर्तते ध्यानजा धर्मा पुनर्ध्यायीत बुद्धिमाम् ॥

यथा ध्यानगता योगी शुद्धिं पश्येत सर्वतः ।
त्रिविधं त्रिप्रकारं तु अनेकाकारसम्भवाम् ॥

सिद्धिं मन्त्रयुक्तिं च समाधिं चैव कीर्तितम् ।
धारण्या बोधिसत्त्वानां त्रिविधेन समोदिता ॥

अनेकाकारवरोपेता मन्त्रास्तेन सुपूजिता ।
लौकिका लोकमुख्याश्च तथा लोकोत्तरा मता ॥
सौगतीनर्थमाख्याय ध्यानं ध्यानपरायणा ।
सिध्यन्ते सर्वमन्त्रा वै सर्वसत्त्वार्थसाधनाय ॥
प्राप्नुवन्ति जनाः सर्वे ध्यानजां सर्वतो हिताम् ।
यशः कीर्तिर्यथायुष्यं सर्वव्याधिप्रणाशनम् ॥
मार्गतत्त्वार्थदं ज्ञानं जीवितं चापि सुसत्फलम् ।
प्राप्नुवन्ते नराः श्रेष्ठाः नित्यं ध्याने समाहिताः ॥
एष योगः समासेन निर्दिष्टो मुनिवरैः पुरा ।
अधुना च मयोक्तेदं त्रिविधयोगं समाहितम् ॥
मयाप्यनुत्तरां बोधिं सम्प्राप्ते मऽस्मिन् पदम् ।
एभिरेव समायोगैः मन्त्राश्चापि सुपूजिताः ॥
ध्यानकर्मसमैः दिव्यैः शुभैश्चापि समाधिभिः ।
प्राप्यमनुत्तरं ज्ञानं बुद्धत्वं भगवानाह ॥
अपरं तु प्रवक्ष्यामि तन्मे निगदतः शृणु ।
क्रीडार्थं सर्वमन्त्राणां क्रीडाशतकर्मजम् ॥
ध्यानजेनैव प्रयोगेण शृणु मञ्जुरवो जनाः ।
सदा हिताहितं ज्ञेयं मन्त्रिणां च निकुर्वणम् ॥
ध्यानजेनैव योगेन कुर्याद् बालिशबुद्धिनाम् ।
आदौ तावत् सदा ध्यायेन्महानागोच्छ्रयं जले ॥
महोदधिः समन्ताद् वै शैलराजविभूषितम् ।
रत्नशृङ्गं महोच्चं वै चतुरन्तमयं शुभम् ॥
तत्रासीनं महात्मानं बुद्धं त्रैलोक्यविश्रुतम् ।
सुनेत्रं धर्मभूयिष्ठं अमिताभं च जिनोत्तमम् ॥
जिनपुत्रं सदा श्वेतं लोकेशं च यशस्विनम् ।
पद्मकेतुं महासत्त्वं महाकरुणजोद्भवम् ॥

गुनेत्रे मुनिवरे स्थाने कुमारं बालरूपिणम् ।
सदा मञ्जुरवं विन्द्याद् विचित्रां भूतिलक्षणम् ॥
इन्दीवरकरं वामे दक्षिणे मृगनानभम् ।
जले योऽत्र महानागो अनन्तो नाग नामतः ॥
सर्वश्वेतस्तथा नित्यं सप्तशीर्षजैः स्फटैः ।
तं ध्यात्वा चिन्तयेज्जापी विचित्रालङ्कारभूषितम् ॥
मृगतात् सम्प्रतीच्छन्तं तन्मुखं चापि चिन्तयेत् ।
एवं नन्दोपनन्दौ च नागराजौ महर्द्धिकौ ॥
तत्प्रमाणोच्छ्रितौ वृद्ध्या द्विगुणं चापि सर्वतः ।
अनन्तकर्कोटकस्तुल्यैः पद्मश्चापि महर्द्धिकः ॥
कुलिकः शङ्खपालश्च कपिलश्चापि वर्णतः ।
महापद्मोऽथ नागेन्द्रः पद्माभश्च लते सदा ॥
वासुकिस्तक्षकश्चैव ईपित्किञ्जल्कवर्णतः ।
पद्माभौ सर्वतो ज्ञेयौ विचित्राकारभूषणौ ॥
शङ्खश्चैव महानागो शुक्लाभो वर्णतः शुभौ ।
शङ्खपालो मणिर्नागः श्वेताभो ईपि वर्णतः ।
सागरश्च महानागः मुचिलिन्दश्चैव विश्रुतः ॥
कृष्णनागोऽथ सर्वत्र कृष्णवर्णाः प्रकीर्तिताः ।
सर्वे तुल्यप्रमाणास्तु नन्दोपनन्दोऽथ सुर्च्छ्रितौ ॥
एलपत्रोऽथ नागेन्द्रो भोगवां लोकविश्रुतः ।
सागरो ह्युरगाध्यक्षः अचिन्त्याद्भुतचेष्टितः ॥
करोति त्रिविधां कर्मां शुक्लांश्चैव निबोधताम् ।
मृतकं विपसुप्तां वा सागरे नैव कारयेत् ॥
वस्त्रेनावृत कृत्वा वै ध्यानयोगेन धीमता ।
आकृत्य सागरे स्थाने शीघ्रमुत्तिष्ठते मृतः ॥
विपसुप्तस्य सदा गो पादेनाक्रम्य चालयेत् ।

तं न्यसेत् सागरे स्थाने निर्विषो भवति तत्क्षणात्।
एवं ज्वरपिशाचांश्च क्रव्यादां व्यन्तरां शुभाम्॥
रक्षसां प्रेतकूष्माण्डां पिशाचोरगमातराम्।
ग्रहश्चैव सदा लोके परप्राणहरां नराम्॥
विचित्रा श्रमणाश्रिता।
मानुषिं तनुमाश्रित्य तिष्ठन्ते भुवि मानुषाम्॥
गृह्णन्ते बालिनां सत्त्वां तेषां ध्यानेनानेन चिन्तयेत्।
सागरस्य तु नागेन्द्रा चिन्त्यादग्रतोत्थितम्॥
ध्यायीत मातरं सत्त्वं क्षिप्रं मुञ्चति बालिसम्।
एवं दृष्टमदृष्टानां कीटलूतोत्थितां नृणाम्॥
दद्रुकिटिमकुष्ठानां पामाकण्डूविचर्चिकाम्।
अन्यां चोत्थितां चैव नित्यं भगन्दररोहिताम्॥
प्लीहमेदोदरां चैव तथा पद्मं सुपद्मकम्।
यक्षाणां सपद्मकं चैव तथा पद्मोत्तरं कृशम्॥
ज्वररोगगतां सर्वां बाध्यन्तां नृजबालिसाम्।
सर्वां सागरे स्थाने सन्यसेत् पन्नगोत्तमे॥
विविधायासदुःखानां सर्वव्याधिगदार्त्तिनाम्।
सन्यसेत् सागरे स्थाने ध्यानचिन्त्याहितेन वै॥
क्षिप्रं मोचयते नागः सुगताज्ञां प्रतीच्छकः।
एवञ्चमुरगैः सर्वैः सर्वकर्मकरैः शिवैः॥
उरगाध्यक्षैस्तदा सर्वं व्याप्तमम्भोदातिर्यगम्।
समन्तात् सर्वतो श्रेष्ठा उरगाध्यक्षा महर्द्धिकाः॥
समयज्ञा मञ्जुघोषस्य आज्ञे दीक्षणतत्पराः।
दैवयक्षाश्रिता नित्यं मानुषाणां शुभोदयाः॥
व्यतिमिश्रैस्तु कर्मज्ञैर्व्यतिमिश्रफलोदया।
काले वर्षधरा नित्यं धार्मिकां वृत्तिमाश्रिताम्॥

समन्तात् तोयधाराभिः ।
सस्यौषध्ये तथा व्रीह्यां निष्पन्ने फलति हैतुकम् ॥
मेघरूपेण माश्लिष्टा पर्यटन्ति महीतले ।
महर्द्धिका महेशाख्या कल्पस्था महोदया ॥
तेषां भोगवती नाम पुरी अम्भोदमाश्रिता ।
यदा धर्मपरा मर्त्या जम्बूद्वीपेषु सर्वतः ॥
ततो तिष्ठन्ते महानागाः परिवाराश्च तेषु वै ।
तदा देवासुरे युद्धे अनुभूय जयैषिणः ॥
जम्बूवृक्षगता तस्थुः जम्बूद्वीपं च मध्यतः ।
पुनः पुनर्नरां भेजे सर्वत्राप्रतिगोचराः ॥
सर्वशुक्लगतां कर्मा तेषु नागेषु योजयेत् ।
कुर्वन्ति समये भ्रष्टा ये नागा जलमाश्रिता ॥
कीटवोपद्रुतां सर्वां विषां स्थावरजङ्गमाम् ।
मुमुचुः सर्वतो नागा आसुरो पक्षमाश्रिताः ॥
प्रमाथी झलुझलुश्चैव कपर्दी चापि महोदधिः ।
भीमो भीषणश्चैव दुर्मुखो बहुमुखस्तथा ॥
एते चान्ये महानागा अतिदर्पाभिमानिनः ।
कृष्णकर्मे स्थिता नित्यं व्यतिमिश्रेण वा परे ॥
महेशाख्या भीमरूपाश्च विषोग्रथिजनाजने ।
अधर्मिष्ठा यदा मर्त्या जम्बूद्वीपनिवासिनः ॥
तदा महाभयं कुर्युर्विषमूर्च्छातिदारुणम् ।
छर्दिर्भ्रमिश्च जायेत महामार्योपद्रवां बहूम् ॥
दुष्टशरीसृपां लोके विसृजन्त्यहितोदया ।
एवं ते च महानागा बहुप्रकारोपद्रवाशुभा ॥
अनावृष्टि अनावृष्टिं विसृजन्त्यहिते रता ।
तेषां च दर्पनाशाय इदं ध्यानं समारभेत् ॥
मञ्जुघोषं महाधीरं बोधिसत्त्वं महर्द्धिकम् ।

वामोत्पलकरं सव्यं दक्षिणेन वरप्रदम् ।
भिन्नगोरोचनाभासं हेमकुङ्कुमविद्रिपम् ॥

गरुडं पक्षिराजानं आरूढं सुगतात्मजम् ।
ध्यायीत मस्तके तेषां दंष्ट्रिणां सर्वविषोत्कटाम् ॥

ततस्ते भिन्नहृदयाः त्रस्तोद्विग्नमानसाः ।
पुनर्निवर्त्य गच्छन्ते प्रविशन्ते च स्वालयम् ॥

उत्पातां बहुविधां दृष्ट्वा अशुभांश्चैव सशब्दकाम् ।
एवं ध्यायीत मन्त्रज्ञ मञ्जुघोषं समाहितः ॥

बहुप्रकारा मन्त्रज्ञ नागदंष्ट्रां प्रकल्पयेत् ।
अनेकाकाररूपास्तु अण्डजांश्च प्रदंशिनाम् ॥

वक्ष्ये सम्यग्बुद्ध्या शास्त्रदृष्टेन कर्मणा ।
तद्गोत्रजश्च उरगा वै दशन्ते भुवि मानुषाम् ॥

तेषां विधिदृष्टेन शास्त्रेणैव गरुत्मना ।
कुर्यात् सर्वाणि कर्माणि पक्षिराजेन देहिनाम् ॥

कृष्णशुक्लादयो नागा ये नागा भुवि मण्डले ।
विचरन्ति महीं कृत्स्नां सूर्यरूपेण देहिनाम् ॥

साध्यासाध्ये ततो ज्ञात्वा विषं च चतुरो हिताम् ।
पित्तश्लेष्मगतं चैव वायुव्यतिविमिश्रिताम् ॥

श्लेष्मणा वारुणेत्याहुः शुक्लवर्णोऽथ मण्डलः ।
पित्तमग्नेयजं नाम त्रिकोणाकारसम्भवाम् ॥

अग्निवर्णं सदा रक्तमीषद् बाहुभपिङ्गलम् ।
कुलस्थमिव बन्धान्तं चतुरश्रं व्यतिमिश्रितम् ॥

माहेन्द्रमिति तं ज्ञेयं कृष्णवर्णं महोन्नतम् ।
श्लेष्माणां च गजेत्याहुः पित्तजं द्वेषसम्भवम् ॥

मोहं वायुजं ज्ञेयं व्यतिमिश्रं कृष्णवर्णितम् ।
तदेव सात्त्विकं विन्द्याच्छ्लेष्मणं शुक्लवर्णितम् ॥

राजतं पैत्तिकं ज्ञेयं पीतरक्तावभासितम् ।
तामसं वातिकं ज्ञेयं व्यतिमिश्रहितोत्वतम् ॥

व्यन्तरेष्वपि सर्वेषु कीटविस्फोटकादिषु ।
सरीसृपेषु च सर्वत्र व्यतिमिश्रं लिङ्गमीक्षयेत् ॥

कृष्णाभं तत्रमुद्यन्तं मञ्जुघोषं सुचिन्तयेत् ।
गरुत्मस्थं सुखासीनं बालरूपं सुखोदयम् ॥

चिन्तयेद् व्यन्तरैर्दुष्टं मानुषेषादसन्धिषु ।
ततोऽर्द्धे चिन्तयेद् दिव्यं कुमारं बालरूपिणम् ॥

विश्वरूपं महात्मानं गरुत्मत्तोपरिस्थितम् ।
तदासीनं महाभागं शरत्काण्डाकारविद्विपम् ॥

ऊरुभ्यां चिन्तयेद् धीमान् नाभिस्याद्ध्योमगम् ।
पीताभं चिन्तयेद् ध्यायी उरःस्थाने सुसुप्तिगम् ॥

मञ्जुघोषं महावीर्यं पक्षिराजाग्रवाहनम् ।
शिरःस्थाने तथाचिन्त्यः ध्यायीत गरुडध्वजम् ॥

शुक्लाभं वैनतेयस्थं वहिस्थं चाथ चिन्तयेत् ।
सात्त्विके विषमूर्च्छा तु श्लेष्मं वमन्ति सर्वतः ॥

लाला च स्रवतेऽजस्रं निमज्जते च मुहुर्मुहुः ।
तं विद्यात् सात्त्विकं दष्टं शुक्लपक्षाहितो भवेत् ॥

भ्रमते कम्पते चैव स्तब्धे क्षोभे सर्वेश्वरः ।
विषे च पित्तजे मूर्च्छा दाघो जायति दारुणम् ॥

राजसे दंष्ट्रिणे दष्ट्रे एतद् भवति चेष्टितम् ।
तामसे तमसं मोहः मूर्च्छा निद्रा च जायते ॥

व्यतिमिश्रैर्व्यतिमिश्रं तु चेष्टा भवति दारुणम् ।
सत्त्वे भवति शुक्लाभः दंष्ट्रे भवति मानुषे ॥

राजसी पीतवज्ज्ञेयः छविवर्णाश्च किञ्चन ।
कृष्णवर्णाथ मोहात्मा छविवर्णाथ जायते ॥

व्यतिमिश्रे धूम्रवर्णस्तु आपाण्डुश्चापि कचित्तथा ।
सात्त्विको राजसश्चैव शुक्लपक्षाहिजोद्भवा ॥
तामसो मिश्रिणश्चैव अहिजा कृष्णवर्णिनाम् ।
तत्कुलाकुलिनो ह्येते उरगाध्यक्षेश्वरो सु वे ॥
आसुरं पक्षमाश्लिष्टा विचरन्ति महीतले ।
दंशतेषां मानुषां लोके अधर्मिष्ठा नागजातयः ॥
क्रूराः क्रूरतरा लोके आहारार्थपरा सदा ।
केचिद् विहेठनार्थाय दंष्ट्रिणो प्राणहरा परे ॥
विषनिर्नाशनार्थाय सर्वदंष्ट्रोपजीविनाम् ।
इदं ध्यानवरं मुख्यं यथालिङ्गानुवर्तिनम् ॥
सन्न्यसेत् प्राणिनां चिन्त्या क्षिप्रं मुञ्चति तद्विषम् ।
सर्वदा सर्वकालं तु सर्वव्याधिषु योजयेत् ॥
सर्वोपद्रवां हन्ति ध्यानेष्वेव प्रतिष्ठिता ।
यथा नागा तथा सत्त्वा राक्षसा ग्रहमातरा ॥
परप्राणहराश्चैव दुष्टचित्ताथ मानुषाः ।
सर्वव्याधिमता लोके लिङ्गेष्वेव तु योजयेत् ॥
ध्यानं ध्येयं तथा मुक्ति कर्म चापि सदा न्यसेत् ।
कुमाररूपं माङ्गल्यं पवित्रमघनाशनम् ॥
मञ्जुघोषं महावीरं जिनपुत्रं महर्द्धिकम् ।
सगरुत्मन्ते सुखासीनं उदयन्ते रविमण्डले ॥
ध्यायीत सर्वतो मुख्यं मन्त्रनाथेश्वरं विभुम् ।
सर्वत्र चिन्तितो ध्यानसर्वव्याधिप्रनाशनः ॥
सर्वकर्माणि कुर्वीत सर्वसत्त्वेषु सर्वदा ।
सर्वं स्तम्भयते ह्येष सर्वं शोभयते शुभम् ॥
सर्वमन्त्राश्च लोकानां अस्मिन् ध्याने निवोधिता ।
सिद्धिं गच्छन्ति ते क्षिप्रं परकल्पेऽपीहोदिता ॥

ये च ताथागता मन्त्रा वज्राब्जकुलयोरपि ।
शक्रेन्द्रब्रह्मरुद्रयोः ॥
आदित्यवसवेन्द्राणां नक्षत्रग्रहज्योतिषाम् ।
गरुडोरगयक्षाणां ऋषिमुख्या सपूतनाम् ॥
सर्वमन्त्राश्च सिद्ध्यन्ते अस्मिं कल्पे तु ध्यायिने ।
परतन्त्रविधानेऽपि स्वतन्त्रेणाऽप्यन्तरेण वा ॥
कुर्यात् कर्मसिद्धिं च क्षिप्रं ध्यानगतेन वै ।
आदित्यमण्डले ध्यात्वा उदयन्ते विश्वरूपिणम् ॥
कुमारं बालिशाकारं शिशुभूषणभूषितम् ।
आरूढमण्डले दीप्तं गरुत्मन्तेऽथ वैनते ॥
मीदृशाकारमव्यक्तं भूर्जे चापि सुचिन्तिते ।
दृष्ट्वा परबलस्तम्भं जायते च मनीषितम् ॥
सर्वे च दृष्टाः स्तभ्यन्ते नृत्यन्ते च परस्परम् ।
हसन्ते आतुराः सर्वे ग्रहाविष्टाश्च देहिनाम् ॥
ज्वरार्ता मूर्च्छिता ये च उत्तिष्ठन्ते द्रुतं ततः ।
क्रन्दन्ते विविधा आर्ता भीमनादं करोति वै ॥
ग्रहमातरकूष्माण्डैः गृहीतानां भुवि मानुषाम् ।
एभिर्लिङ्गैस्तदा मन्त्री लक्षयेदेतां समाहितः ॥
इच्छया मोचयेत् क्षिप्रं विषसङ्क्रमणं तु वै ।
क्रीडापयति भूतानां तदा योगी रिरिंसया ॥
आदित्यमण्डले नाडी प्रयोक्तव्या विषमूर्च्छिते ।
रविनाडीप्रयोगेण सर्वप्राणि स चालयेत् ॥
निर्विषो भवते सुप्तः विषस्थावरजङ्गमः ।
ततोत्तिष्ठते क्षिप्रं विषसुप्तो न संशयः ॥
अन्यश्च वर्द्धते क्षिप्रं विषार्त्ता भुवि भूतले ।
पुनरन्यो पुनश्चापि अन्यादन्यतरोऽपि वा ॥

एवम्प्रकारैः सर्वत्र शतशोऽथ सहस्रः ।
यावन्नाडीप्रयोगेण तावद् भूतानि पाचयेत् ॥

वस्त्रकुड्यस्तथा कुम्भे असमनोयहुताशने ।
क्षणेन चालयेन्नाडीं तत्रस्थं विषमाविषे ॥

सर्वे ह्यातुराः स्वस्थास्तत्क्षणादेव भूतले ।
एवमाद्यप्रयोगेण कुर्यात् सर्व शताग्रतः ॥

असङ्ख्यं च विधिं कुर्यात् परमन्त्रास्त्रेतेन वा ।
एष प्रयोगः समासेन ध्यानो ह्युक्तोऽथ जापिनाम् ॥

प्रयोक्तव्यः कल्पनिखिलः परतन्त्रो गरुत्मनः ।
मतं सङ्कल्पजं प्रोक्तं शैवं चापि विशेषतः ॥

सर्वे च लौकिका मन्त्रा प्रयोक्तव्या ध्यानविस्तरे ।
इह मञ्जुरवे कल्पे ध्यानेनैव विशेषतः ॥

सर्वतन्त्रप्रयोगैश्च मन्त्रैश्चापि सुपूजिते ।
मतयो येऽपि कल्पार्थाः प्रयोक्तव्या इह ते सदा ॥

योगेऽस्मिन् ध्यानये दिव्ये कल्पराजोदिते इह ।
ध्यानेन सर्वे नियोक्तव्या युक्तिहेतुनिरञ्जने ॥

सूक्ष्मश्चित्तविषये मन्त्रसिद्धिनिबन्धने ।
मुनिपुत्रोदिते शुद्धे सर्वबुद्धार्थमोदिते ॥

जापिनो ध्यायते नित्यं सर्वसिद्धिसुपुष्कला ॥

इति बोधिसत्त्वपिटकावतंसकान्महायानवैपुल्यसूत्राद् आर्यमञ्जुश्रियमूल-
कल्पाद् अष्टत्रिंशतिमः महाकल्पराजपटलविसराद् द्वितीयसर्व-
लोकतत्त्वार्थतारकीडाविधिसाधनोपयिक-
सर्वकर्मध्यानपटलनिर्देशः
परिवर्तः समाप्तः ।

# अथ एकचत्वारिंशः पटलविसरः ।

अथ खलु भगवां शाक्यमुनिः, पुनरपि शुद्धावासभवनमवलोक्य, मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । अस्ति मञ्जुश्रीः ! सर्वबुद्धानुमोदिते त्वदीयमहाकल्पराजमहाविसरे महामन्त्रचर्यानुवर्तके सर्वसमयानुप्रविष्टे महामूलकल्पप्रतिष्ठास्पदभूते पञ्चमसर्वभूतरुतज्ञानाभिज्ञानं सर्वभूतरुतज्ञानाचिन्त्यगोचरं एष ते पक्षिराट् गरुत्मा स्वमन्त्रचर्यानुवर्तनरुतज्ञानाभिज्ञानां सर्वमन्त्राणां सर्वमन्त्राणां सर्वकल्पानां स्वसमयमनुप्रविष्टसर्वलौकिकानाम् एष एव ते भाषिष्यति सर्वतिर्यग्योनिगतानां सर्वपक्षिराजगरुत्मनां सर्वमन्त्रकल्पगोचररुतज्ञानं च चरितं चेति ॥

अथ खलु तस्मात् पर्षन्मण्डलाद्वै वैनतेयो गरुत्मा बोधिसत्त्वाधिष्ठानेनानेकैर्गरुडशतसहस्रैः परिवृतः उत्थायासनात् पर्षन्मण्डलं प्रदक्षिणीकृत्य, येन मञ्जुश्रीः, तेनोपसङ्क्रम्य, महाबोधिसत्त्वस्य पादौ कृताञ्जलिपुटः, मञ्जुश्रियमेतदवोचत् —

'अहं महाबोधिसत्त्व ! अस्मिं महाकल्पराजे सत्त्वानामर्थाय हिताय सुखाय कर्मान्तरशतं सरहस्यं भाषिष्ये । तत् साधु महाबोधिसत्त्व ! अनुमोदतु ।'

अथ मञ्जुश्रीर्वैनतेयमेतदवोचत् — 'भाष भाष महासत्त्व ! सत्त्वानुकम्पया ।'

अथ वैनतेयो बुद्धाधिष्ठानेन स्वकीये आसने निषद्य, प्रहृष्टमनसि कर्मोत्तरशतं सरहस्यं भाषति स्म ।

नमः समन्तबुद्धानामप्रतिहतशासनानाम् । तद्यथा — ओम् शकुन ! महाशकुन ! वितितपक्ष ! सर्वपन्नगनाशक ! खख खाहि खाहि ! समयमनुस्मर । हुम् तिष्ठ बोधिसत्त्वो ज्ञापयति स्वाहा । कर्मोत्तरशतं भाषते स्म ।

नागाकर्षणं , नागदमनं , नागनिग्रहणं , दष्टमदष्टावेशनं , वाचया सर्पमावाहानं , सर्पनिग्रहकरणं , विषक्रीडनं , सर्वविषक्रामणं , वाचा मनसा बुद्ध्या वा, पोपधिको त्रिरात्रोपितः, शुक्-

द्वादश्यां नदीतीरे शुचौ देशे पञ्चरङ्गिकसूत्रेणाष्टहस्तं मण्डलकं कृत्वा, अष्टपत्रप्रतिष्ठितं, तत्र मध्ये भगवां धर्मं देशयमानः लिखेत् । तस्य दक्षिणेनार्यमञ्जुश्रियं कृताञ्जलिपुटो भगवतो मुखमवलोकयमानं लिखेत् । भगवतो बुद्धस्य वामे नारायणं चतुर्भुजं लिखेत् सर्वप्रहरणहस्तम् । तत्समीपे गरुडं विकृतरूपम् । तदनन्तरं विनताभरणं च लिखेत् । आर्यमञ्जुश्रियस्य पृष्ठतः आर्याक्षयमतिं सुधनं सुभूतिं च लिखेत् कृताञ्जलिपुटा । एवमभ्यन्तरमण्डले लेख्य, पूर्वद्वारे बाह्यतः शुक्लभस्मना वज्रं समालिखेत् दक्षिणेन कृष्णवर्णिकया खड्गम् उत्तरेण पीतवर्णिकया गदं लिखेत् । पश्चिमेन रक्तवर्णं पाशं समालिखेत् ॥

एवं बाह्यमण्डलेभ्यः मूलमन्त्रेण सर्वदेवाह्वाननं कृत्वा, सर्वपुष्पैः सर्वगन्धैरभ्यर्च्य, गुगुल्धूपं, त्रिमधुरेण च बलिं दत्त्वा, तेषामग्रतः खदिरसमिद्भिरग्निमुपसमाधाय, सर्वसत्त्वेभ्यः कारुण्यचित्तमुपस्थाप्य, नागासनोपविष्टः सर्पकण्टकानां दधिमधुघृताक्तानामष्टसहस्रं जुहुयात् ॥

ततः सिद्धिनिमित्तं सर्पा आगच्छन्ति । अर्घ्यो देयः । एवं सिद्धिर्भवति । स्वमन्त्रमावर्त्य वदेत् — 'मम सिद्धिं विधाय गच्छत ।' ततो गच्छन्ति ॥

ततो विसर्ज्य मूलमन्त्रेणैव समभ्युक्षयेत् । ततः कर्म समारभेत् । सर्वं च बलिद्रव्यमप्सु क्षिपेत् । पश्चाद् नानामात्रेण सर्वविषकर्माणि करोति ॥

विद्वेषणं कर्तुकामः सर्पास्थीनि विषाक्तामेकविंशत्याहुतिं जुहुयात् । विद्वेषो भवति ॥

उत्सादयितुकामः सर्पनिर्मोकखण्डानामेकविंशत्याहुतिं जुहुयादुत्सादयति । काकपक्षाणामेकविंशत्याहुतिं जुहुयात् सद्यः काकवद् भ्रमति । स्त्रीपुरुषवशीकरणे सर्पपाणां घृताक्तानामेकविंशत्याहुतिं जुहुयाद् वश्या भवन्ति । राजानं राजमात्रं वशीकरणे परमान्नस्य घृताक्तस्य एकविंशत्याहुति जुहुयाद् वशो भवति । लोष्टकमभिमन्त्र्य, अग्नौ प्रक्षिपेत् न तपति । तृणेन मोक्षः । उक्तेन मत्स्या न वध्यन्ति । चेतनमचेतनं वा सत्त्वं छोटिकया आकर्षयति ।

सर्वव्याधिने उदकाभिषेचनेन स्वस्थो भवति । दण्डमभिमन्त्र्य द्वारमाहरेत्, अपावृतं भवति । तेन दण्डं नीलपत्रप्रावृतं गृह्य सङ्ग्रामे गच्छेत्, परसैन्यं दर्शनाद्भिद्यति । स्वशाटके ग्रन्थिबन्धनेन सर्वमन्त्राः स्तम्भिता भवन्ति । मुक्ते मोक्षः । सर्पवदनं भस्मना पूरयेत् । यस्य नामं गृह्य करोति, स मूको भवति । गण्डविपं सकृष्णजप्तेन उदकेन हनेत् । गण्डं सङ्कुचति । पतति च परविद्या । अनेन बध्नीत । तथैव मोक्षयति । इष्टकमभिमन्त्र्य मावर्त्त्ये जपेत् । परबद्धग्रन्थि स्तोभयति । एवं वर्षापयितुकामः पूर्वोक्तं मण्डलकं लेख्य, पूजां कृत्वा, अग्निमुपसमाधाय, वरुणसमिधानामष्टसहस्रं जुहुयात्; आढकं वर्षति । एवं यावद्दशाढकं वर्षति । पिप्पलामभिमन्त्र्य हस्तेन गृह्य, यावद्दिशं क्षिपति; तत्र अशनं सङ्क्रामति । अग्निदाहेऽप्येष एव विधिः । उदकमवतरणमेवं कर्तव्यम् । नागानुत्सारयति । मृन्मयं सर्पं कृत्वा यमिच्छति तं दशापयति । अङ्गारसर्पस्य एष एव विधिः । पुनरपि मोक्षयति । सर्षपान् सप्तजप्तान् चतुर्दिशं क्षिपेत् । सर्पा आगच्छन्ति । मण्डलबन्धः कार्यः । पानीयेनाभ्युक्ष्य विसर्जयेत् । उदकेन मोक्षणं लेष्टुना नागाकार्पणं पांसु परिजप्य उदके क्षिपेत्; निर्विष भवन्ति । धनुं गृह्य अलोहाश्चत्वारः शराः चतुर्दिशं क्षेप्तव्या । सर्पं शरचलितं गृह्य आगच्छन्ति । स च नागो वक्तव्यः । विपं प्रतिपिबेति । पिबति दष्टकोत्तिष्ठति । अथ सर्पाणि शङ्कयितुं पानीये पानीयेनाभ्युक्ष्य तस्य तस्य शराः पतन्ति । सर्पश्चाक्षतो भवति । वल्मीकमृत्तिकया चत्वारो नकुला कर्तव्या । पानीयमभिमन्त्र्याभ्युक्षयेद्; गत्वा सर्पापहाया गच्छन्ति । आगता वक्तव्याः — 'विपं प्रतिपिबस्वे'ति । पिबन्ति मृतक उत्तिष्ठति । अङ्गारमभिमन्त्र्य, रेखां कृत्वा, अर्कलतया ताडयेत्; ततः सर्पो नद्यैराकृष्यमाणो आगच्छति । विपं प्रतिपिबेति पिबति । दष्टको निर्विपो भवति । ध्वजं छत्रं वाभिमन्त्रयेत् । यावन्तो मृतकाः विपपीतकाश्च सर्वे निरीक्ष्य निर्विपा भवन्ति वादित्रमभिमन्त्र्य वादयेत् । श्रुत्वा निर्विपा भवन्ति । पांसुना पञ्चरङ्गिकेण मण्डलमालिख्य तालशब्दं दातव्यम् । ततो नागाः सर्पाश्चतुर्दिशमागच्छन्ति । ते मण्डलं प्रविशन्ति । न भेतव्यम् । शिखाबन्धमात्मरक्षां च कारयेत् ।

अक्षिण्यभिमन्त्र्य क्रुद्धो निरीक्ष्य नागाङ्गुष्ठं विलिङ्गेन । तत्क्षणादेव पतति । सर्प इव रूपेण कुरुते । मुक्ते मोक्षः । एवं नानया दष्टमदष्टं वा वेशयति मोक्षयति । विष्णुनिर्माल्यमभिमन्त्र्य यत्र रथ्यायां गृहे वा क्षिपति, तत्क्षणादेव सर्पो मानुषं दशति । पानीयेनाभ्युक्षिता निर्विषा भवन्ति । हस्तोत्क्षेपेण षाण्मासिकमुपस्तोभम् । आत्मान अभिमन्त्र्य सर्पैर्यथेष्टं दंशापयेत् । विषोऽस्य न क्रमते । कटककेयूरकुण्डलैरात्मान रलङ्करोति । पांसुमभिमन्त्र्य कर्णे जपेत् । उदकेनापि व्यजनेनापि मनसा सिद्धिर्मन्त्रमावर्त्य भूमौ पांसुं दद्यात् । मृतक उत्तिष्ठति । महामांस घृतेन सह धूपः पुष्टिकरणम् । मानुषास्थिचूर्णं काकोलूकपक्षाणि च धूपः मारणम् । मदनं तुषबीजानि उत्सादनो धूपः । सर्षपराजिकाधूपं ज्वरकरणं, कोद्रवबिडालविष्ठं विद्वेषणं, कपालचूर्णमधूकचूर्णं चैकतः कृत्वा मधुना सह धूपः उत्सादने । मोरङ्गी एरण्डनालं उत्सादने धूपः । गोपित्तं मानुषास्थि च घृतेन शत्रोर्मारणे धूपः ।

मत्स्याण्डं प्रसन्ना च कर्पासास्थिसमन्वितम् ।
देशान्तरगतस्य धूपः शीघ्रमानयति नरम् ॥
विदलानि मयूराणां मांसं कुक्कुटाण्डस्य तु ।
एष प्रविशतस्य धूपो देयः अकार्षणमतः परम् ॥
भल्लातकस्य बीजानि तिलतैलेन योजयेत् ।

एषाकर्षणधूपः दद्यादाकर्षणस्य । घृतगुग्गुलुं दद्यात् । धूपो रोगनाशनम् । तिलसर्षपैर्धूपं दत्वा तान्येव जुहुयात् । सप्तरात्रं त्रिसन्ध्यं यस्य नाम्ना वशः । लवणं राजिकाहुतिमष्टसहस्रं जुहुयात् । ... सप्तरात्रम् । महापुरुषवशीकरणम् । कपालचूर्णं सहस्राभिमन्त्रितं कृत्वा यमिच्छति तं चूर्णेन संस्पृश्य वशमानयति । श्मशानभस्मसहितेन यं चूर्णयति तं ज्वरेण गृह्णापयति मोक्षयति । नकुलरोमाणि सर्षपाणि च सर्पनिर्मोकं यस्य नाम्ना धूपं दहति स सर्वलोकविद्विष्टो भवति । तिलैर्वशीकरणं, अर्थोत्पादनानि च कुरुते । बिल्वपत्रैर्धूपनाद्वैर्वशमानयति । सर्वलोकमण्डलकानां नामग्रहं ... जुहुयात् । देवां

वर्षापयति। मृण्मयं गरुडं कृत्वा करसम्पुटेन गृह्य अंसमात्रमुदकमव-
तीर्य अर्द्धरात्रे जपेत्, यस्य नाम्ना स वशो भवति। श्मशाने तण्डु-
लां प्रकीर्य देवहृदयं स्थाप्य प्रहरणं जपेत् वृत्तिं कल्पयति, सप-
रिवारस्य। नकुलमूषकरोमाणि कर्पासास्थिधूपः सर्वभूतवशङ्करः।
विषं भल्लातकं मधुना सह धूपः वशीकरणम्। कुक्कुटाण्डकपालानि
कटुतैलेन सह धूपं वशीकरणम्। पलाशं सुरसवीजानि मदनपुष्पाणि
धूपो वशीकरणे। शतपुष्पा देवदारुं पुरीषं मण्डूकं चटकस्य धूपो
वश्यार्थः। यवास्तिला दूर्वा च गोमूत्रेण धूपो वशीकरणे। हरितालं
काकजिह्वा च शोणितेन धूपः मूकीकरणे। मानुषरोमाणि गोमांसेनै-
कतस्तैलेन संयुक्तो धूपो रोगकरणे। काकपक्षोलूकपक्षाणि च निम्ब-
तैलेन उच्चाटने। गुग्गुलुघृतं सीधुसहितं धूपोऽयं सर्वसत्त्ववशङ्करः।
पत्रकं त्वचं तुरुष्कं धूपं सर्वसत्त्वानुबन्धनकरम्। आज्ञाकरो भवति।
तुरुष्कं चन्दनं कर्पूरेण सह अञ्जनं राजवशीकरणम्। पूजाबलिविधानं
कृत्वा विष्णुप्रतिमाया अग्रतः उपरिष्टान्महामांसाहुतीनष्टौ हुत्वाष्टस-
हस्रं जपेत् त्रिरात्रम्, द्रव्यं यमिच्छति। श्मशानभस्मना प्रतिकृतिं
कृत्वा महामांसधूपं दत्त्वा कुशविण्डकोपविष्टः अष्टसहस्रं जपेत् रात्रौ
श्मशाने, यमिच्छति तमानयति। आज्ञां करोति। उच्चाटने कर्पासतु-
षां जुहुयात् काकपक्षैः क्षणादुच्चाटनो भवति। श्मशान उदुम्बरस-
मिधाभिरग्निं प्रज्वाल्य कपालोपविष्टः सर्पकञ्चुकं जुहुयात्। अन्नम-
क्षयं भवति। श्मशानास्थिचूर्णं सर्षपसहितमष्टसहस्रं जुहुयात् यस्य
नाम्ना, स योजनशतादागच्छति। सर्वकामेषु कर्तव्यः। देवो श्वेतच-
न्दनेन विततपक्ष सर्वनागाभरणं तीक्ष्णघोरं विकृताननं विकृतनखं
पद्मोपविष्टं अधोदत्तदृष्टिं निम्नतरं काष्ठे कुड्ये भित्तौ वा पोषधिकेन
कर्मकारेण कारापयेत्। वितस्तिमात्रं कृत्वा तस्याग्रतः सर्वकर्माणि
कुर्यात्। पलाशे पुष्टिकामेन, वैल्वं वश्यार्थहेतुना, उदुम्बरं च पुत्रका-
माय, गोकामः शिरीषमयं, मधुकं वा द्रव्यकामः कारयेद् विधिवत्।
सूकरमांसेन फलकामम्। अश्वमांसेनापत्यं भवति। कृष्णसारमांसेन
श्रियार्थी, पृथुतमानुकीर्तिकामो वा स्त्रीकामः पृथिवीकामो वा, व्याघ्र-

मांसं व्यवहारादिविजयार्थी महामांसम् वशार्थी हस्तिबला राजवशिकरणे अतिबला राजामात्यवशीकरणे अश्वगन्धां जुहुयात् । उत्सादे हस्तिरोमाणि, पिचुमर्दमभिचारे तु एते काष्ठा प्रोक्ताः ॥

पटकरणं भवति । धातुसौवर्णं पौष्टिके प्राक्तिः । रजतादीं कीर्तिवृद्धये । काकपक्षहोमेनोत्सादयति । गृध्रपक्षैर्मारयति । कौशकपक्षैर्विद्वेषयति । मयूरपक्षैर्विद्वेषयति । मयूरपक्षैर्धनानि दद्यात् । तित्तिरिपक्षैः स्त्रीं मशुलिपक्षैः पुत्रां, काकपक्षैः सुवर्णम्, टिट्टिभिपक्षैर्मोहनम् । श्वमांसेनोत्सादयति, महिषमांसेनाकर्षयति, आभिचारुके महामांसेन, शान्तिके मृगरोमाणि कन्यार्थी उलूकरोमाणि देशघातेच्छा गलरोमाणि विद्वेषणे मानुषरोमाणि आभिचारुके मानुष्यरोमाणि शत्रुनाशने सर्वेष्वेव तेषु त्रिसन्ध्यं सप्ताहिको होमः । स्मरणमात्रेणाहं सर्वत्रिपकर्माणि करोमि । सततजपेन सर्वकर्माणि करोमि । यो मम भगवं अस्मिं कल्पराजे मन्त्रं साधयमानः त्रिसन्ध्यमुदीरायिष्यति, तस्याहं सर्वविषोपद्रवचिकित्सां करिष्यामि । पृष्ठतोऽनुबद्धो गमिष्यामि ॥

अथ तस्मिन् समये स्वरूपमुद्रां भावयति स्म । अङ्गुष्ठौ परस्परवेष्टितौ कृत्वा शेषाङ्गुल्यो पक्षवत् संस्थिता स्याद् । गरुडरूपमेव मम प्रोक्तं पिनाकिना मुद्रा ॥

अस्य सन्दर्शनान्नागा विद्रवन्ति भयार्दिता ।
अधोमुखास्तु अङ्गुल्यः मन्त्रेणानेन मन्त्रवित् ॥

'ॐ जः' ॥

नागदमनीति विख्याता नागानां दर्पनाशनी ।
पद्मकोशप्रतीकाशौ अङ्गुल्यः पार्श्वतः स्थितौ ॥

अङ्गुष्ठौ मध्यतः स्थाप्य निष्पीड्याङ्गुल्यं तु यत्नतः ।
नागदमनीति विख्याता दिव्या दिव्येषु कर्मसु ॥

अनामिका तर्जनी चैव मध्यमेन सुसंस्थितम् ।
अङ्गुष्ठौ वक्रसंस्थानं शेषा पार्श्वतः स्थिता ॥

गरुडनादेति विख्याता सर्वनागानुत्रासिनी ।
यानि च मयोक्तानि सर्वमन्त्रेषु साधनं ॥

लौकिके गारुडे शास्त्रे + + + + + + + + + + + ।
सर्वं तेऽनेनैव कर्तव्या सर्वसत्त्वानुकम्पया ॥

किञ्चित्कार्या अशेषास्तु मूलकल्पार्थसाधका ।
अस्मिं कल्पवरे नित्यं सर्वसत्त्वानुरागिणे ॥

प्रसिद्धाः सर्वकर्मार्थाः सर्वसत्त्वार्थपुष्कलाः ।
ते वै मन्त्रमुख्ये तु प्रयोक्तव्याः कर्मविस्तरे ॥

इह कल्पवरे मूले प्रतिष्ठा क्ष्मातलेन ते ।
समुपन्नसर्वभूतानामिह मन्त्रास्तैर्गुणैः ॥

विस्तरेशः सर्वतो दृष्ट्वा सर्वसत्त्वानुकम्पने ।
प्रसिद्धं सिद्धिकामानां हेतुयुक्तिसमाश्रिताम् ॥

कुर्युः सर्वतः सिद्धिः सर्वमन्त्रेषु देहिनाम् ।
सर्वसत्त्वाश्च सान्निध्यं कल्पेषु मनसेप्सितम् ॥

इतिहासपुरावृत्तं वर्तमानमनागतम् ।
कथयन्त्येष संयोगान्मन्त्रमुद्रसमीरणात् ॥

आकृष्टा एष भूतानां मन्त्रोऽयमपराजितः ।
ईशानः सर्वभूतानां रुद्रोऽयं सुरपूजितः ॥

तुम्बको त्र्यक्षराज्ञेयो कल्पस्थोऽथ महीतले ।
हिमाद्रिनिलयो नित्यं उमापतिमहेश्वरः ॥

त्रिशूली खड्गधृग् ज्ञेयः पिनाकी वृषभध्वजः ।
गणाध्यक्षः शूलिनश्चैव महेशाख्योऽथ महर्द्धिकः ॥

अक्षरोऽक्षरमित्याहुः कपर्दी तु गदायुधः ।
एष मन्त्रो महार्थस्तु सर्वभूतार्थकम्पकः ॥

कुर्यात् सर्वाणि कर्माणि सर्वकर्मेषु साधनम् ।
एष देवो महात्मा वै महादेवेति कीर्त्यते ॥

प्रसिद्धः सर्वकर्मार्थं फलहेतुसदामदे ।
तस्य मन्त्रं प्रवक्ष्यामि शृणुध्वं भूमिवासिनः ॥

"ॐ स्थः नमः सर्वबुद्धानामप्रतिहतशासनानाम् ।
त्रैलोक्यगुरूणामचिन्त्याद्भुतरूपिणाम् ॥
शिवोद्भवोद्भव भुवनत्रयपूजिताय हूँ हूँ फट् फट् ।"
एष मन्त्रो महामन्त्रः सर्वशत्रुभयप्रदः ॥

आयुषत् सर्वभूतानां कर्म शान्तिकपौष्टिके ।
सर्वेष्वेव हि कर्मेषु प्रयोक्तव्यो मनसोद्भवे ॥

सर्वभूतरुतज्ञानं अभिज्ञज्ञानचेष्टितम् ।
अभिज्ञवशिता चैवं सर्वशास्त्रज्ञतां समम् ॥

प्राप्नुयात् पुष्कलां चार्थां फलहेतुसमुद्भवाम् ।
यावन्त्यो लौकिका मन्त्रा सर्वांश्च सुपुष्कला ॥

तां सर्वां प्राप्नुयान्मन्त्री सिद्धमन्त्रस्तु बुद्धिमां ।
यावन्तो लौकिका मन्त्रा शैवाश्चापि सुपूजिता ॥

मन्त्रा गरुत्मने चापि सिद्धिहोमफलोन्मुखम् ।
सर्वैलौकिमन्त्रास्तु इन्द्ररुद्रोद्भवोद्भवा ॥

ते स्युर्मन्त्रराट् सर्वे निबद्धा विधिहेतुतः ।
याम्याग्निवायुतोयानां कुवेरो मातरो दया ॥

सङ्ख्या द्वादशका ह्येषा ब्रह्मेशानपूरकाः ।
सवितुः शक्रदेवानां पितामहगुपूजकां ॥

कामधात्वेश्वरा ख्याता ये मन्त्रामरचारिणाम् ।
सर्वे ते वशमायान्ति मन्त्रे नामीरिताधिप ॥

+ + + स्वयाम्यदाभिनां दिवौकसजलौकसाम् ।
दिङ्मन्दिराश्रया ये च विदिक्षु श्चापि चारिणः ॥

तदोर्ध्वं नभस्तले नापि अधः पातालभागकाः ।
पथोश्रयसमापन्ना फणिनो ये महर्द्धिका ॥

हिमाद्रिकुक्षिसंविष्टा विन्ध्यकुक्षौ समाश्रिता ।
महाधातुवरे चित्रे महाशैलेऽथ विश्रुते ॥

नानादेवगणाकीर्णे सिद्धचारणसेविते ।
अप्सरोगणसङ्गीते सुमेरौ रविरिवोज्ज्वले ॥

यत्रस्था येऽत्र नागा वै ये तु भूतगणाश्रया ।
विचित्ररूपिणो ये वा ततः स्था ये समागता ॥

सर्वे ते वशमायान्ति मन्त्रेणानेन योजिता ।
ये च दिव्यगणा मन्त्रा सर्वभूतभयप्रदा ॥

सर्वे ते वशमायान्ति मन्त्रेणानेन योजिता ।
गिरिगह्वरदुर्गेषु विचित्रैः कन्दरोदरैः ॥

मन्दिरैर्हेमसङ्काशैर्निवसन्ति महीतले ।
सर्वभूतगणाध्यक्षा । विविधा हारिणो जनाः ॥

+ + + + + + + + + निवासेष्वभिकीर्तितैः ।
दिव्यभूतगणाध्यक्षा विचित्राश्चैव रूपिणः ॥

सर्वभूतगणाश्चैव विचरन्ति महीतले ।
विविधाकारमुख्यास्तु विचित्रा रूपगताश्रया ॥

विविधाकारविचारस्थौ विविधाम्बरभूषणा ।
ते सर्वे मन्त्रमुख्येन पथेचारपश्यता ॥

अनेता सर्वमन्त्राणां लौकिकानां महर्द्धिकाम् ।
सर्वभूतवशं कर्त्ता प्रभुमन्तेश्वरो वरः ॥

सर्वमन्त्रेश्वरां मुख्यां यमरुद्रेन्द्रवासवाम् ।
मन्त्रनाथोऽथ मुख्यस्तु सर्वलौकिकमग्रजी ॥

विभर्ति सर्वतो मन्त्रां कल्पांश्चैव सुपुष्कलाम् ।
एष मन्त्रेश्वरो देव अधिपतिः सर्वमन्त्रराट् ॥

सर्वविघ्नेश्वरो मन्त्री स्मर्तव्यः सर्वजापिभिः ।
उग्रमुद्रेऽथ मन्त्राणां प्रभुरेव प्रगीयते ॥

सर्वस्मिं शैवतन्त्रे वै सर्वलौकिकचेष्टितैः ।
चरितं चापि भूतानां रुतं चापि जपेत् सदा ॥

मन्त्रिभिः सर्वकाले तै प्रयोक्तव्यः सिद्धिकांक्षिभिः ।
वैनतेयस्तदा पक्षी प्रणम्य जिनवरात्मजाम् ॥
मञ्जुश्रियं तथा नित्यं सर्वा बुद्धसुतान् तथा ।
उवाच मधुरां वाणीं पक्षिराट् स महाबलः ॥
भाष भाष महासत्त्व! गम्भीरार्थगुणनिश्चित! ।
धर्मनैरात्म्यतत्त्वस्य अग्रधर्मप्रतिष्ठित! ॥
मयोक्तं कल्पविस्तारं मूलमन्त्रार्थगोचरम् ।
अभिसंक्षेपतो ज्ञेयं सर्वमन्त्रेष्वराधिकम् ॥
लौकिकेष्वेव मन्त्रेषु प्रयोज्यः सर्वसाधने ।
नाभ्यन्तरपदं मन्त्रं मयोक्तं यं प्रशस्यते ॥
जिनपुत्रैस्तु महावीरैः सर्वश्रावकखड्गिभिः ।
नान्योत्कृष्टतमं मन्त्रं मयि बुद्धिः प्रयुज्यते ॥
ईषिस्मितमुखो धीर मञ्जुघोषमथाब्रवीत् ।
अथाह मधुरं वाक्यं शब्दार्थास्पदभूषणम् ॥
एष ते सुवर्णमाख्यातः धर्मस्वामी नरोत्तमः ।
विसृक्षुः सर्वमन्त्राणां धर्मनैरात्म्यदेशकः ॥
जगद्गुरुर्महावीरो बुद्ध आदित्यबान्धवः ।
प्रणेता सर्वमन्त्राणामग्रमन्त्रेश्वरो वरः ॥
प्रभुरेकमनार्थो धर्मधात्वीश्वरो गुरुः ।
सर्वसत्त्वानुकम्पार्थं अस्माकं च सुखोदयः ॥
धर्मकोटिगतो निष्ठो भूतकोटिमनालयः ।
एष ते सर्वमन्त्राणां कथयन्त्याशु महाद्युतिः ॥

बोधिसत्त्वपिटकावतंसकात् महायानवैपुल्यसूत्राद् आर्यमञ्जुश्रियमूलकल्पाद्
एकूनचत्वारिंशतिमो गरुडपटलपरिवर्तः ।

———

## अथ द्विचत्वारिंशः पटलविसरः ।

अथ खलु भगवां शाक्यमुनिः पुनरपि शुद्धावासभवनमवलोक्य, मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । अस्ति मञ्जुश्रीः! त्वदीयसर्वसाधनोपयिकमण्डलविधाने सर्वमन्त्रतन्त्रेषु मुद्रापटलसमयरहस्यम्, यैः सर्वसन्त्रासमयं नातिक्रमन्ति, समयसञ्चोदितमनुप्रविष्टा भवन्ति सर्वलौकिकलोकोत्तरमण्डलेषु सामान्यसाधनोपयिकसर्वमन्त्रतन्त्रेषु सर्वे मुद्राह्येते परमरहस्यतमा परमसौभाग्यतमा परमाश्चर्याद्भुततमाः । यैर्विना न शक्यन्ते सर्वमन्त्रा आराधयितुं साधयितुम् । पूर्वं सर्वतथागतैर्भाषितवन्तः । एतर्हि अहं च भाषिष्ये सर्वसत्त्वानामर्थाय हिताय सुखाय लोकानुकम्पायै महतो जनकायस्यार्थाय सर्वमन्त्रजापिनां महामन्त्रकोशनित्यौत्सुक्यधर्मधात्वाचिन्त्यमहायाननैरात्म्यधर्ममेघमनुप्रवेशनतायै - कतमं च तत् भाषिष्येऽहम् ॥

शृणु मञ्जुरव! सर्वगुह्यमुद्रासमोदिताम् ।
यथा तथा स्वयं वाच्यं पुरा गीतमृषिसत्तमैः ॥

कृत्स्नमुद्रागणं ह्यग्रं गुह्यमन्त्रार्थिनां सदा ।
सर्वकालेषु योज्येदं सर्वकर्मेषु मण्डलं ॥

अथ मञ्जुरवः श्रीमां विहसन् पङ्कजेक्षणः ।
निरीक्ष सुगतं श्रेष्ठं सर्वधर्मीश्वरं प्रभुम् ॥

कृताञ्जलिपुटो वीरः जिनपुत्रो महर्द्धिकः ।
उवाच मधुरां वाणीं दिव्यशब्दार्थभूषिताम् ॥

साधु साधु महाप्राज्ञ! धर्मचक्रानुवर्तकम् ।
धर्मतत्त्वार्थमन्त्रत्वं यस्त्वं भाषयसे विभोः ॥

एवमुक्त्वा तु सुगतं शाक्यसिंहं नरोत्तमम् ।
अथ मञ्जुरवः श्रीमां तूर्ष्णीं तस्थुस्तदन्तरे ॥

इत्याह भगवां बुद्धो धर्मधात्वेश्वरस्तदा ।
शृणोथ भूतगणाः! सर्वे! देवराज्ञा! महर्द्धिका! ॥

मण्डले भुवि मर्त्यानां दरिद्रा याथ दुःखिनाम् ।
आलिखन्तानां भुवि मुद्राणां सान्निध्यं नो भविष्यथ ॥

ये च वै सर्वबुद्धानां प्रत्येकार्हश्रवद्गिणाम् ।
श्रावकानां तु ये मुद्राः कथिता मुनिवरैः ॥

सर्वलौकिकमुद्रास्तु जिनाब्जकुलवज्रिण ।
सर्वमुद्रास्तु सर्वत्र सर्वकर्मेषु योजिता ॥

तानहमभिसंक्षेपाद् वक्ष्येऽहं सर्वमन्त्रिणाम् ।
यत् पूर्वं कथितं मन्त्रं सर्वं मण्डले च कर्मसु ॥

स्थानं होमो जपः कर्म तं तथैव प्रयोजयेत् ।
मण्डले आदितो लेख्य मुद्रोऽयं बुद्धनिर्मितः ॥

सितं छत्रोऽथ बुद्धानां समन्तज्वालोऽथ भूषणम् ।
पञ्चरङ्गिकचूर्णैस्तु समन्तान्मणिराजितम् ॥

विचित्ररङ्गोज्ज्वलं श्रेष्ठं इन्द्रायुधसमप्रभम् ।
एष मुद्रो महामुद्रो बुद्धानां मूर्द्धजो वरः ॥

तस्य दक्षिणतः पात्रं समन्ताज्ज्योतिमालिनम् ।
तदनन्तरे खखरकः दंष्ट्रा जीवरजो पर ॥

श्रीवत्सस्वास्तिकश्चककरकं चापि वर्णितम् ।
पुस्तको ध्वजमित्याहुः पताकं च तदन्तरे ॥

घण्टा पश्चिमजो मुद्रः कथितं लोकपुङ्गवैः ।
छत्रे वामतः पद्मं मणिमुद्रो तदन्तरे ॥

तदन्तरे वज्रमित्याहुस्त्रिसूच्याकारसम्भवम् ।
उत्पलं तु गतामुद्रः सलिलः सलिलाश्रितः ॥

तोयश्च तदन्त्ये वै तोयधाराभिनिःश्रितः ।
तदन्ते कुण्डलौ ज्ञेयौ भूपालौ शोभनौ तथा ॥

तदन्तेऽथ महाशैलः चतुरत्नोऽथ उज्ज्वलः ।
तदन्ते महोदधिर्लेख्यः विचित्रो रङ्गोज्ज्वलः ॥

तदन्तेऽथ महावृक्षः सफलो दलभूषितः ।
एष वृक्षो महामुद्रो वामपार्श्वे जान्तजाम् ॥

सितातपत्रोऽथ बुद्धानां मुद्रोह्युक्तो वरोग्रजः ।
मन्त्रेऽथ खड्गिनां ज्ञेयः प्रत्येकजिनयो वरः ॥

चीवरं मुद्रवरो ह्युक्तः सर्वश्रावकसम्भवः ।
आर्याणामर्हतां लोके दंष्ट्रा चैव प्रगीयते ॥

तत्फलोदधिगतां लोके श्रीवत्सो मुद्रगिष्यते ।
खखरकश्च महामुद्रः प्रत्येकजिनजोऽपरः ॥

धर्मचक्रोऽथ मुद्रो वै सर्वदृष्टिविदालकः ।
कथितं धर्ममुद्रं तु कारकाक्षेपजः स्मृतः ॥

प्रज्ञापारमितां लोके जिनधातुर्मुद्रोऽथ पुस्तकः ।
ध्वजपताका महामुद्रौ विघुष्टौ लोकपूजितौ ॥

सर्वाङ्कुष्टौ महावीर्यौ सर्वमुष्णीषसम्भवौ ।
घण्टापश्चिमो मुद्रः प्रत्येकार्हमूर्धजः ॥

बुद्धमुद्रे तु वामे वै पद्मो लोकेशसम्भवः ।
मुनिमुद्रस्तथा ज्ञेयः समन्तज्योतिलाभिने ॥

वज्रं वज्रिणेमुद्रा बोधिसत्त्वस्य धीमतः ।
उत्पलं मञ्जुघोषस्य कुण्डलः क्षितिगर्भिण्ये ॥

महातोयतो मुद्रः कथितो गगनालये ।
महाशैलोऽथ मुद्रेयं सर्वदृष्टिविदाल्निने ॥

महोदधि तथा मुद्र सुगतात्मज ! सागरे ।
महावृक्षस्तथा मुद्र उद्घुष्टो लोकविश्रुतः ॥

सर्वांश्च जिनपुत्रांस्तु मुद्रोऽयं त्रिभवालये ।
घण्टासमीपजे स्थाने आलिखेज्जिनवर्णितम् ॥

मुद्रं सर्वमुद्राणां चतुरश्राकारसम्भवम् ।
विचित्रं रङ्गजोपेतं चारुवर्णं विराजकम् ॥

समन्तान्मणाभिरूपितम् ।
ज्वालामालिनं दीप्तं पञ्चरङ्गोज्ज्वलं शुभम् ॥
पिण्डिकाकारमुद्यन्तं इन्द्रगर्भनिभं शुभम् ।
विराजन्तं महाद्युतिम् ॥
एष मुद्रो महावीर्यः सर्वमन्त्रालयः शुभः ।
त्रिविधानां तु मन्त्राणां ज्येष्ठमध्यमकन्यसाम् ॥
स्थानोऽयं मुद्रमुख्योक्तः सर्वकार्याभिसाधकः ।
एतद्भ्यन्तरं लेख्यो महामुद्रासर्वमण्डले ॥
यो यस्य मण्डले मन्त्रः संयोक्ता लोकविश्रुते ।
तदेव मध्ये आलेख्यं छत्रस्येव महीतले ॥
तन्मध्ये मण्डले चापि रूपकं मुद्रयेन वा ।
वरदा रूपका लेख्या मञ्जुघोषोदयस्तथा ॥
सर्वे वै मन्त्रनाथास्तु सर्वमन्त्रार्थता सदा ।
न चेद् भुवि मुद्राणामालिखेद् विधिनिर्दिष्टनाम् ॥
तन्त्यस्तौ पूर्णकुम्भस्तु विजयेन्माङ्गलीपिणः ।
बहिःस्था मण्डले चापि मुद्रामालिखेत् सर्वा ॥
यथोक्तैः पूर्वनिर्दिष्टैर्द्वितीये मण्डले सदा ।
स्थानेष्वेव सर्वत्र दिग्विदिक्ष्वापि सर्वतः ॥
आलिखेन् सर्वदेवानामृषियक्षराक्षसानाम् ।
मुद्रामालिखेद् भीमां पिशाचोरगराक्षसाम् ॥
पर्वताभ्यन्तरां सिद्धां किन्नरा कन्दराननाम् ।
क्रव्यादभ्यन्तरांशेन सकूष्माण्डं पूतना नारकोत्सहाम् ॥
सर्वसत्त्वां भूतांशेन रूपारूप्यकामजाम् ।
द्वितीये मण्डले नित्यं आरूप्यं सुरजोद्भवम् ॥
आलिखेन्मुद्रनित्याग्रं त्रिकोणाकारसम्भवम् ।
पूर्वायां दिशि मामृत्य रेखमाश्लिष्टमुज्ज्वल ॥

एतत् मुद्रमुख्यानामाख्यानां महर्द्धिकाम् ।
मुद्रा समाधिजेत्याहुरादिबुद्धैस्तु वर्णितम् ॥
ततोत्तरे तु तथा रेखे ब्रह्माणः पद्मजोद्भव ।
रूपावचरमित्याहुर्मन्त्रं त्रिभुवनालये ॥
तदेव दक्षिणा रेखा गर्भमण्डलतो बहिः ।
दक्षिणं दिशमाश्रित्य मुद्रः कामजो वरः ॥
निर्दिष्टो मुनिमुख्यैस्तु कामधात्वेश्वरे परे ।
मुद्रोऽयं निर्मितो लोके सर्वदेवगमन्दिरे ॥
रुद्रेन्द्रवसुमुख्यानां विष्णुतीर्थ्यां दिगम्बराम् ।
अर्कवासवसौपध्यां त्रिवस्त्रयमचिहितास् ॥
लोकपालां बहिस्तां तां यथामन्दिरदिक्षु ताम् ।
तथाचालिखेत् सर्वास्तथा मुद्रांस्तु योजयेत् ॥
यो यस्य वाहनः ख्यातः प्रहरणावेपधारिणम् ।
तं तथैव तथा मुद्रो निर्दिष्टो लोकपूजितैः ॥
एप मुद्रगणो ह्युक्तः सर्वलोकोत्तरः शुभः ।
लौकिकामथ सर्वत्र सर्वकर्मपु साधकः ॥
निर्दिष्टा मुद्रमुख्याश्च सर्वमुद्रोऽथ मन्त्रिणाम् ।
आलिख्य तु भुवि मर्त्यैस्तु जापिभिः सिद्धिकामदैः ॥
बोधितत्त्वालिप्सुरिति ॥

बोधिसत्त्वपिटकावतंसकात् महायानवैपुल्यसूत्रात्
आर्यमञ्जुश्रियमूलकल्पात् चत्वारिंशतिमः
महाकल्पराजविसरात्
सर्वकर्मसाधनोपयिकः
परिसमाप्त इति ।

———

## अथ त्रिचत्वारिंशः पटलविसरः ।

अथ भगवां शाक्यमुनिः पुनरपि शुद्धावासभवनमवलोक्य, मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । अस्ति मञ्जुश्रीः! त्वदीये मण्डलविधाने सर्वकर्मेषु सर्वतन्त्रमन्त्रेषु आह्वानन विसर्जन जप नियम होम साधन रक्षाविधानादिषु सर्वकर्मेषु महामुद्रं एक एव महावीरमसङ्ख्येयेषु सबुद्धकोटिभाषितं चाभ्यनुमोदितं च कतमं च तत् ॥

शृणुस्व मञ्जुरवा श्रीमां! गम्भीरार्थयुतत्त्वधीः! ।
यं बध्वा जापिनः सर्वे ॥

महामुद्रां महापुण्यां महामङ्गलसम्मतम् ।
महाब्रह्मसमं पुण्यं पवित्रं पापनाशनम् ॥

महाक्षेमङ्गमं श्रेष्ठं निर्वाणपदमच्युतम् ।
शिवं शान्तं तथा ज्येष्ठं शीतीभूतं परायणम् ॥

सर्वमुद्रेश्वरं ख्यातं सर्वमुद्रेषु मूर्धजम् ।
सर्वतन्त्रेश्वरं नाथं ख्यातं त्रिभवालये ॥

ऊर्जितं च त्रिधा दिव्यं भौमदिव्या येष्वपि ।
साक्षाद् बुद्धमिव चिह्नं सर्वसत्त्वाश्रयं विभुम् ॥

प्रपुष्टत्रिभवे नित्यं सर्वमुद्रैस्तु मुद्रराट् ।
रक्षार्थं जापिनां नित्यं सर्वकर्मेषु मन्त्रिणाम् ॥

रक्षोघ्नमगदं ख्यातं मङ्गल्यमघनाशनम् ।
उत्कृष्टं सर्वकर्मेषु दुष्टसत्त्वनिवारणम् ॥

दुर्दान्तदमको लोके महामुद्रोऽयं प्रगीयते ।
सर्वमन्त्रेषु युक्तो वै त्रिजन्मगतमन्त्रिणाम् ॥

बन्धुर्विज्ञान स सर्वत्र सर्वकर्मेषु मन्त्रिणाम् ।
त्रिधा योनिगतां मन्त्रामावाहयति तत्क्षणात् ॥

पुनर्नयति तां लोकं पुनर्नाशयते हि ताम् ।
पातयत्येव सर्वत्र कृत्स्नां चैव महीतले ॥

पुनः कीलयते मुद्रां बन्धनोत्कम्भनादिभिः क्रियैः ।
पीडनोत्सादनो मुद्रः शोषणो विध्वंसनस्तथा ॥

पुनर्जीवादनः ख्यातो मन्त्रिणां त्रिभुवनालये ।
शान्तिकेषु च कर्मेषु महामुद्रोऽयं प्रयुज्यते ॥

शुभोऽथ सर्वमन्त्राणां शुद्धो निर्मलपापहा ।
सर्वार्थसाधनो लोके प्रसिद्धः सर्वमग्रतः ॥

लौकिकानां च मन्त्राणामग्र्या लोकोत्तरास्तथा ।
श्रेष्ठाः सर्वकर्मार्थे तथा शान्तिकपौष्टिके ॥

नित्यं क्षेमङ्गमो मुद्रः प्रयुक्तः सर्वमन्त्रिभिः ।
नित्योऽयमपराजितो ह्युक्तः ग्रः सर्वमन्त्रैस्तु योजितः ॥

परम्परास्थो भूतकोटिस्थः धर्मधात्वेश्वरो निजो ।
अनक्षरोऽभिलाप्यश्च अक्षरो नित्यमक्षरो ॥

धर्मनैरात्मभूतस्थः अभूतो भूतमुद्भवः ।
विरजस्को नेञ्ज्यश्च निष्ठो शून्यः स्वभावनः ॥

अकनिष्ठस्तथा ज्येष्ठः शुभो निर्वाणगामिनः ।
पन्थानोऽनुत्तरां बोधो प्रत्येकार्हे सम्भवो ॥

धर्ममेघस्तथा शान्तः निःसृता सैन्यवारिजः ।
तत्त्वार्थपरमार्थज्ञ उभयार्थार्थपूरकः ॥

महामुद्रो महौजस्कः सर्वबुद्धैः समाद्रितो ।
महार्थो महावीर्यं एकवीरो महर्द्धिकः ॥

+ + + + + + सर्वकर्मार्थसाधकः ।
अनेकाकारवरोपेत अनेकाकारसम्भवम् ॥

सर्वज्ञपदमिदं ज्ञेयमशेषो शेषनैष्ठिकम् ।
ज्ञानं ज्ञेयं महोत्कृष्टं त्रिघुष्टं मुनिवराजितम् ॥

सर्वभूतसुराभ्यर्च्यं प्रत्येकार्हेश्च पूजितम् ।
महामुद्रोत्तमं धर्मं अच्युतं पदमुत्तमम् ॥

आदौ तावच्चतुर्थो देशे एकवृक्षे महानगे ।
महोदधितटे रम्ये पेच्यस्थण्डिलसमाश्रिते ॥

सरित् कूपे पुलिने वा देवमन्दिरशोभने ।
मारारेर्भवने चापि विहारावसथ मन्दिरे ॥
विजने सिक्तसंसृष्टे पुष्पप्रकरभूषिते ।
सुगन्धगन्धोदकासिक्ते सधूपे धूपधूपिते ॥
प्राङ्मुखः उदङ्मुखो वापि शान्तिकर्मपौष्टिकयोश्चापि ।
दक्षिणे रौद्रकर्मार्थे तं निबन्धीत सदा ॥
श्रीसौभाग्यवश्यार्थमाकर्षहेतुतः सदा ।
पश्चान्मुखं तु बध्नीयान्महामुद्रावरं परम् ॥
ऊर्ध्वदृष्टि यदा बुद्धे ऊर्ध्वं देवगतिर्भवेत् ।
अधः पातालं गच्छेदसुरेश्वरतां ततो ॥
शुचिदेहसमाचारः शुचिमन्त्रसमन्वित् ।
तदा मुद्रवरं युञ्ज्य स्नातोपस्पृश्य जपश्रीः ॥
उभौ च हस्तौ प्रक्षाल्यौ मृद्गोमयसुगन्धिनम् ।
शुचितोय सदा शुद्धे कृमिजन्तुविवर्जिते ॥
नवारिप्लुते शुचे शौचे उभे हस्तेऽथ पूजिते ।
संयोज्येथ मुष्टिस्थौ सम्पुटाकारवेष्टिनौ ॥
ईषच्छुषिरौ समन्तात् पद्मकुलौ उच्छ्रितौ ।
उभयाङ्गुष्ठमध्यस्थौ कनिष्ठाङ्गुलिनामितौ ॥
कृत्वाथ हृदयोद्देशे मुकुटस्थानगुण्ठिते ।
दर्शयेत् सर्वकर्मेषु साधने ॥
सर्वभूते वै क्षिप्रं कृतमात्रेण ईप्सितम् ।
एष मञ्जुरवो मुद्रः सर्वकर्मार्थसाधक इति ॥

बोधिसत्त्वपिटकावतंसकात् महायानवैपुल्यसूत्रात् आर्यमञ्जुश्रिय-
मूलकल्पात् एकचत्वारिंशतमः पटलविसराद् द्वितीयः
सर्वकर्मोत्तमसाधनौपयिकः महामुद्रपटल-
विसरः परिसमाप्त इति ॥

## अथ चतुश्चत्वारिंशः पटलविसरः ।

अथ खलु भगवां शाक्यमुनिः पुनरपि शुद्धावासभवनमवलोक्य सर्वतथागतधर्मवरोत्वचिन्त्यगुणव्यूहालङ्कारभूतकोटिनियुतसहस्रेयजिनमुद्रामुद्रितं सर्वसत्त्वचिह्नभूतं मुद्रापटलपरमगुह्यतमं सर्वलौकिकलोकोत्तरश्रेयसमन्त्रतन्त्रकल्पविकल्पितं सर्वसत्त्वैः परमार्थदर्शनपथप्रवृत्तिभूतं सर्वमन्त्रसर्वसंज्ञासाधारणभूतमिहैव जन्मनि सर्वसत्त्वानां सर्वाशापारिपूरकं सर्वबुद्धबोधिसत्त्वानामाराधनपरसुखहेतुकबोधिसम्भारपरिपूरणनिमित्तम् आह्वाननविसर्जनगन्धपुष्पधूपसर्वमाल्योपहाराविद्याविद्यावेशनदर्शनसर्वकार्यार्थसाधनसर्वदेवनागयक्षगन्धर्वासुरगरुडाकिन्नरमहोरगयक्षराक्षसपिशाचकूष्माण्डरौद्रसौम्यभावदमकाध्यक्षभूताधिपतिसर्वकार्यसन्दर्शनज्वलनाकाशगमनान्तर्द्धानवशीकरणबोधिसम्भारनिमित्ताश्चर्याद्भुतं सर्वमन्त्रतन्त्रार्त्थानुनीतं सर्वविद्याराजनमस्कृतं सर्वविद्यासाधकं सर्वबुद्धमात्रामाश्रितं यथेप्सितार्त्थसत्त्वमनोरथापरिपूरकं सर्वासां सर्वमन्त्राणां दृष्टधार्मिकहेतुनिष्पादकं संक्षेपतो यथा यथा युज्यते, यथा यथा साध्यते तथा तथा साधयते । एषा मञ्जुश्रीः ! परमार्त्थपटलसर्वबुद्धानां परमार्त्थगुह्यतमं भाषिष्ये । पूर्वं भाषितवां सर्वबुद्धैः भाषिष्यन्तेऽनागता बुद्धा भगवन्तः । एतर्ह्यहं भाषिष्ये, तच्छ्रूयतां महासत्त्व ! भाषिष्ये । तच्छ्रूयतां महासत्त्वै ! भाषिष्ये । साधु च सुष्ठु च मनासि कुरु मञ्जुरव ! मनोज्ञप्रतिभानवां वक्ष्येऽहं वक्ष्येऽहमिति ॥

शाक्यसिंह नरश्रेष्ठो सम्बुद्धो ऋषिसत्तमः ।
सत्त्वमर्त्थमभिज्ञाय परमार्त्थार्त्थदर्शनम् ॥

गुह्यमात्रार्त्थमुद्रा वै भाषसे मुनिपुङ्गव ! ।
शुद्धावासपुरे रम्ये शुद्धसत्त्वसमाश्रिते ॥

महापर्षद्वरे श्रेष्ठे वीतरागालये तदा ।
भाषिते कल्पराजे तु मञ्जुभागीततत्त्विते ॥

बुद्धपुत्रैस्तदामात्यैः परमार्थविदैर्विदैः ।
शाक्यसिंहस्तदा आह शृणुध्वं पर्षत् कथे ॥

बुद्धपुत्रस्तथा ज्येष्ठ महायानाग्रधर्मिणः ।
नाम्ना समन्तभद्रो वै इत्युवाच गिरां वराम् ॥

बालरूपी महारूपी कुमारस्त्वं वर्ण्यसे जिनैः ।
शाक्यस्य कुलजो दक्षः श्रीमां बुद्धो निरीक्ष्यते ॥

त्वं हि विश्वमहाप्राज्ञो लोकानुग्रहकाम्यया ।
त्वदीयं कल्पविसरं मुद्रामुद्रितं त्विदम् ॥

अध्येषय महावीर ! बुद्धपुत्र ! महर्द्धिक ।
सारभूतं कल्पस्यास्य महर्द्धिकम् ॥

एवमुक्तस्तु वीरेण बुद्धपुत्रेण धीमता ।
मञ्जुमां त्वरितो जात बालक्रीडाभिनिर्मित ॥

प्रणम्य सुगतं नाथं जगदेकान्तचक्षुषम् ।
उवाच मधुरां वाणीं करुणार्द्रम्रेडितेन तु ॥

कथयेयु भगवां बुद्धः प्रज्ञाबलतत्त्ववित् ।
कथं तु सर्वमन्त्रा वै सिद्ध्यन्ति जपिनां ध्रुवम् ॥

कथं वै ह्यविकल्पेन अमोघान गच्छन्ति प्राणिनाम् ।
सिद्ध्येयुः क्षिप्तजप्ताभिः सर्वार्त्थेषु न योजिता ॥

आ भवाग्राच्च संसारादा वीच्यान्ताश्च नारकाः ।
एतेष्वाश्रिता ये च प्राणिनोर्धैत्रिधातुका ॥

आहूयन्ते निगृह्यन्ते आवेश्यन्ते च पश्यताम् ।
सर्वकर्मार्त्थयुक्ते च तुष्टिपुष्ट्यर्थकारणैः ॥

दशभूम्याश्रिता ये च सौगते वर्त्मनि स्थिता ।
बोधिसत्त्वा विबुद्धाश्च प्रत्येका वा बोधिमाश्रिताः ॥

वीतराग महात्मन आहूयन्ते सुपूजिता ।
समयैर्मन्त्रिभिर्युक्ता इमैर्मुद्रैः समुद्रिता ॥

कथयन्ति यथाभूतं स्वतन्त्रा चापि दर्शिनम् ।
पूर्ववृत्तमवृत्तं वा वर्तमाने च योगिनः ॥
स्वर्गलोककथाचिन्त्या परदेहाश्रितापि वा ।
अनागतं च यथातत्त्वं निदर्शनं चापि वर्णितम् ॥
कथयन्ति यथान्यायं मन्त्रमुद्रसमीरिता ।
सिद्धिं चापि तथा क्षिप्रं दद्यान्मुद्रैश्च पूजिताः ॥
मन्त्रज्ञैः सर्वकर्मयुक्तः बलिहोमसुपूजिताः ।
कुर्यात् क्षिप्रतरं सिद्धिं बुद्धा बुद्धसुतास्तथा ॥
अर्हन्तोऽपि महात्मानः खड्गिणः सिद्धिदा सदा ।
लौकिका ये च मन्त्रा वै तथा लोकोत्तरा परे ॥
ये च सिद्धास्तथा यक्षा गन्धर्वा अथ किन्नरा ।
असुरा सुरा सदा सत्त्वा सर्वसत्त्वा त्रिधा स्थिता ॥
अपर्यन्तेषु दिक्स्थेषु लोकधात्वन्तरेषु च ।
गतिपञ्चसु ये सत्त्वा युक्तायुक्ताश्च सर्वदा ॥
सिद्धिं गच्छेयु तत् क्षिप्रं इमैर्मुद्रैः सुमुद्रिता ।
एष विख्यातः सुगतैर्मन्त्रज्ञैस्तु मुनिभिः विमलम् ॥
वितर्कं विधिवत् ज्ञेयं विस्तरं पटलोत्तमम् ।
सर्वबुद्धैस्तथा लोके श्रेयसार्थमुदाहृता ॥
मुद्रा पञ्चाशिकोत्साहः सर्वबुद्धैः प्रकाशिता ।
श्रेयसार्थं हि भूतानां मञ्जुघोषस्य धीमते ॥
सर्वतः शिरजा ज्ञेया मूर्धजास्तु तथागताम् ।
सा तु सर्वार्थदा ज्ञेया धर्मकोशप्रपूरणी ॥
पूरणार्थं तु मन्त्राणां मुद्राणां च महर्द्धिकम् ।
सर्वेषां लोकोत्तरां श्रेष्ठां लौकिकानां च सर्वदा ॥
मञ्जुघोषस्य तन्त्रे तु अग्रा अग्रतमा मता ।
प्रभावतः सर्वकर्माणि क्षिप्रं कुर्यार्थनामतः ॥

शुचिर्भूत्वा शुचौ देशे बध्नीयान्मुद्रवरं प्रभुम् ।
आदौ हस्तौ थ कृत्वा वै सुषिराकारसम्पुटौ ॥
आकोशनिरलाङ्गुष्ठौ न्यस्ताङ्गुठौ थ सूचितौ ।
पञ्चसूचिकविन्यस्तौ मुद्रा पञ्चशिखा भवेत् ॥
शिरःस्थाने सदा न्यस्ता एकसूच्याथ अङ्गुलैः ।
मुद्रा एकचीरा तु मूर्ध्नि स्थानेषु योजिता ॥
कन्यसाङ्गुलिविन्यस्ता सुश्लिष्टा मध्यमौ तथा ।
अङ्गुष्ठौ सूचितौ उभौ ॥
त्रिसूच्याकारसमायोगात् तृशिखा मुद्रमुदाहृता ।
सर्वैरङ्गुलिभिर्युक्तैः आकोशा सुषिरसम्भवैः ॥
शिरःस्थाने सदा न्यस्ता मुद्रा शिखरा भवेत् ।
स एव उच्छ्रिताङ्गुल्यौ ईषित् सङ्कुचिताग्रकौ ॥
महावीरा तु सा ज्ञेया महामुद्रा महर्द्धिका ।
एते पञ्च महामुद्रा पूर्वं जिनवरैस्तदा ॥
निर्दिष्टा सर्वमुद्राणां कथयन्ति मनीषिणौ ।
ज्येष्ठा मुद्रमुख्यनां । । । । । ।मुद्रिताम् ॥
लोकोत्तरां तु सर्वां वै लौकिकानां च सर्वतः ।
एता पञ्च महामुद्राः सयोगा सिद्धिहेतवः ॥
सुसिद्धा सिद्धतमा होता अग्रा ज्येष्ठाश्च भाषिता ।
मञ्जुघोषस्य मूर्धजा प्रधानाद्भुतचेष्टिता ॥
यावन्ति योगता मुद्रा सर्वेषां सिद्धिहेतवः ।
मुद्रा मुद्रेति विख्याता श्रीघनं किरात्ययोद्भवम् ॥
मञ्जुघोषस्य मूर्धजं महापुण्यतमं शिवम् ।
यं बध्वा महासत्त्वा नियतं बोधिमवाप्नुयात् ॥
महामुख्यावतंसं तं श्राद्धम् अविकलेन्द्रियम् ।
सदा यज्ञं प्राज्ञयुक्तं च विधिवत् कर्ममाचरेत् ॥

तादृशेन तु युक्तेन सत्त्वेनैव सुयोजिता ।
मुद्रेयं कुरुते ह्यर्था यथेष्टां चापि पुष्कलाम् ॥

उपदेशात्तु विद्वांसः मतिमन्तोऽर्थसाधकाः ।
आचार्यसम्मता लोके शिष्या ग्राह्यास्तु सर्वदा ॥

विधिवत् कर्मदृष्टेन पुरुषेणेह भक्तितः ।
महायानगतैर्नित्यं मुद्रेयं सम्प्रयुज्यते ॥

सर्वेषां तु मुद्राणां त्रिधा मन्त्रेषु योजिताम् ।
अग्रा ह्यग्रतमा लोके एते मुद्रा प्रभावतः ॥

सिद्ध्यर्थं सिद्धिकामानां तथा मन्त्रैः सुयोजिताम् ।
क्षिप्रमर्थकरा ह्येते सर्वसौख्यफलप्रदाः ॥

मञ्जुघोषः स्वयं तिष्ठेन्मुद्रैरेतैः समाहित ।
यस्मिं स्थाने तु वध्यैताः स्वयं मञ्जुरवः सदा ॥

रक्षा ह्यग्रां प्रकल्पीत जिनपुत्रो महर्द्धिकः ।
बालरूपी महात्मा वै विश्वरूपी महर्द्धिकः ॥

बहुरूपी च सत्त्वानां मुद्रारूपी थ देहिनाम् ।
बालिशानां तु सत्त्वानां संसारार्णवचारिणाम् ॥

तेषामर्थकरः क्षिप्रं मुद्रारूपेण तिष्ठते ।
मञ्जुघोषस्य शिरजाः सर्वमूर्ध्नि प्रतिष्ठिता ॥

सर्वार्थसम्पदा ह्येते जप्तमात्रैस्तु योजिता ।
मूलमन्त्रेण संयुक्ता हृदयस्यानुगतेन वा ॥

सर्वे सौगतिभिश्च मन्त्रैभिश्च सुयोजिता ।
ये तु अब्जकुले मन्त्रा वज्रिणे चापि कपर्दिने ॥

सर्वैश्च लौकिकैश्चापि मुद्रैर्युक्तार्थफलप्रदा ।
एते पञ्च महामुद्रा मन्त्रयुक्तार्थफलप्रदा ॥

त्रिकल्प्या मन्त्रगतां त्यज्य मुद्रैर्वाथ फलप्रदा ।
महारक्षा महापुण्या बद्धमात्रेण देहिनाम् ॥

स्मरितैरेभिर्महामुद्रैर्महारक्षा विधीयते ।
कः पुनर्जप्तमात्रैस्तु मन्त्रमुद्रासमाश्रितैः ॥

यावद् वा जापिनः सर्वे नियतं बोधिमाप्नुयात् ।
अपरे तु महामुद्राः शूलपट्टिशसम्भवाः ॥

महाशूलोऽथ मुद्राणां घोरदारुणमुच्यते ।
क्रोधराजेन मुख्येन यमान्तेनेह योजिता ॥

करोति विविधां कर्मां दारुणां प्राणरोधिनाम् ।
महाभयप्रदां मुद्रां विपस्यस्यापि महात्मने ॥

दुष्टसत्त्वां विनाशाय सृष्टास्तृभवालये ।
तैरेव योजिता मन्त्रा विविधां मुद्रमास्मृता ॥

तेषां विनाशनायैव सृष्टा जिनवरैः सदा ।
मन्त्रचर्यार्तर्थयुक्तायाः शासनार्थाय कल्पिता ॥

विहिता लोकनाथैस्तु मुद्रा तन्त्रार्त्थदर्शना ।
दुष्टसत्त्वप्रयुक्तानां गरकिल्बिपरोगदाम् ॥

तेषां निर्नाशनार्थैव उक्तां सर्वार्थकर्मिकाम् ।
यमशासननाशाय मृत्युपाशाय मोक्षणाः ॥

नित्यं प्राणहरा मुद्रा प्रयुक्ता मन्त्रयोजिता ।
यमदूतहरा पुण्या मृत्युनाशनी स्मृता ॥

यमशासननीतानामानेता प्राणदा स्मृता ।
सर्वरोगविनाशार्थं यमस्यापि भयप्रदा ॥

मुनिमुख्यैस्तथा युक्ता प्राणसन्धारणी हिता ।
शासनेऽस्मिन् प्रसन्नानां हिता रक्षा विधीयते ॥

सफला नाशनी दुष्टां गीता मञ्जुरवे हिता ।
सर्वार्थप्रापणी देवी महामुद्रा प्रगीयते ॥

महाप्रहरणे त्वाहुः अपरा मुद्रपरावरा ।
तथैव हस्तौ संन्यस्य तर्जन्यौ पाशसम्भवौ ॥

कन्यसौ मूलयेन्नित्यं मुष्टियोगेन योजितौ ।
हस्तौ सम्पुटितौ नित्यौ अङ्गुष्ठावुच्छ्रितावुभौ ॥

एष मुद्रा महापुण्या महाशूले समागता ।
विविधा लोकनाथैस्तु विचित्रप्रहरणोद्भवा ॥

यो यस्य चिन्तयेज्जापी शत्रोः प्रहरणानि वै ।
तेनैव च्छिन्दयेद् गात्रं चित्तोत्पादाच्च तद् भवेत् ॥

नियतं नाशयेच्छत्रुं मुद्रा मन्त्राश्च योजिता ।
निहन्याच्छत्रुगणां सर्वामन्त्राश्चापि महर्द्धिकाम् ॥

यमदूतगणां विघ्नां ग्रहांश्चापि समातराम् ।
पूतनास्कन्दरुद्रश्च प्रेतांश्चापि महर्द्धिकाम् ॥

जम्मा वैवस्वतां लोकां कृत्स्नां चैव सवासवाम् ।
यमान्तकक्रोधराजेन नान्यं मन्त्रं प्रयोजयेत् ॥

मुद्रैरेतैः प्रयुञ्जीन महाशूलसमैस्तदा ।
सर्वं वैवस्वतं हन्यात् कः पुनर्भुवि मानुषाम् ॥

सर्वप्रहरणी मुद्रां सर्वदुष्टां विनाशिनीम् ।
विहिता लोकमुख्यैस्तु सम्बुद्धैर्द्विपदोत्तमैः ॥

तथैव हस्तौ संन्यस्य मध्यमां शूल्य कारयेत् ।
तथैव हस्तौ कृत्वेह मुष्टियोगेन कारयेत् ॥

अङ्गुष्ठाग्रौ तु पीडितौ ।
सुषिरावाङ्गुलिसंयुक्तौ मध्याङ्गुल्यसमुच्छ्रितौ ॥

सूचिकाग्रौ तथा नित्यौ तर्जन्याङ्गुलिमाश्रितौ ।
एषा मुद्रा वरा घोरा शूलेत्याहुर्मुनिवराः ॥

महाशूला भवेत् साधुः तर्जन्याकुञ्चितावुभौ ।
विसृतैः पट्टिशा ज्ञेया महामुद्रवरा परा ॥

तदेव सङ्कुचाग्रौ तु अङ्गुल्यास्त्रिभिरुच्छ्रिता ।
एषं सा त्रिशूलमुद्रेति प्रवदन्ति मनीषिणः ॥

विचित्रप्रहरणा ज्ञेया अङ्गुष्ठावुभयोच्छ्रितौ ।
महाशूलसमा ह्येते महावीर्या भयानकाः ॥

पापसत्त्वविनाशाय तन्त्रेऽस्मिं मञ्जुरवे वरे ।
दुर्दान्तदमिता ह्येता महामुद्राद्भुतचेष्टिता ॥

रौद्रप्राणहरा ते विकृताकारसम्भवा ।
महाघोरतमा रौद्रा महाक्रूरतमाहिता ॥

महाघोरवरा ज्येष्ठा बहुरूपिण्यः प्रकाशिता ।
सर्वत्र जापिनो बुद्धा जराव्याधिविवर्जिता ॥

विचरन्ति इमां लोकां संसिद्धा जापिनः सदा ।
विहिता मृत्युनाशाय सम्बुद्धैर्मुनिपुङ्गवैः ॥

जराव्याधिविनाशिन्यः मृत्युनाशाय संसृजेत् ।
योजिता मन्त्रिभिः क्षिप्रं कृतान्तस्यापि भयानका ॥

सृजेत् प्रभुवरः श्रीमां शुद्धावासपुरे वरे ।
मुनिसत्तमजे मुद्रा शाक्यसिंहे नरोत्तमे ॥

न बुद्धा मन्त्र भाषन्ते न मुद्रा क्रूरकर्मिणाम् ।
सत्त्वकारणवात्सल्यात् सर्वज्ञार्थप्रपूरणा ॥

ऋद्धिविक्रीडनार्था वा बोधिगम्भारकारणा ।
उपायसत्त्ववैनेया महायानाग्रनियोजना ॥

महासंसारपूरणा ।
अधिमुक्ति वसां सत्त्वां मन्त्रमुद्रामुदाहृताम् ॥

आकाश चेति या बुद्धा न बुद्धा वाचाय कल्पिता ।
निःप्रपञ्चार्थयुक्तानां कुतः सङ्कल्पगोचरम् ॥

धर्मधातुसमा निष्ठा भूतकोटिसमा च या ।
मन्त्रयुक्तानां निष्ठा मुद्रा समुद्रिता ॥

कथयन्ति भवाङ्गानां मुक्त्यर्थं हेतवां सदा ।
सर्वज्ञमुद्रमाख्याता सर्वज्ञानार्थप्रपूरणा ॥

युक्तियुक्तार्थपूजार्थं मुद्रामुद्रमुदाहृता ।
बुद्धैश्च बुद्धपुत्रैश्च अचिन्त्याचिन्त्यगोचरैः ॥
सर्वज्ञदर्शिनो मुद्रा उष्णीषाद्याः प्रभाविताः ।
अवलोकितमुद्रा तु वज्रपाणे थ लौकिकाः ॥
कथिताः कथयिष्यन्ति श्रेयसार्थं हि देहिनाम् ।
यावद् बुद्धसुतैर्मुद्रा मुनिश्रेष्ठैश्च भाषिताः ॥
सर्वार्थपूरणा मुद्रा प्रभावाचिन्तचिन्तिता ।
विकल्पार्थं हि भूतानां त्रिधा मन्त्रास्तु भाषिता ॥
एक एव भवेन्मन्त्रः यो बुद्धैस्तु भाषितः ।
सौगतार्थं तु मन्त्राणां मन्त्रो ह्येकः प्रगीयते ॥
उष्णीषाधिपतिः श्रीमां एकवर्णोऽथ त्रि सदा ।
चक्रवर्ती भवेन्नित्यं तकारो रेफसंयुत ॥
ऊकारसहितो नित्यं युक्तोऽथ प्रगीयते ।
स भवेच्चक्रिणः श्रीमां बुद्धानां मूर्द्धजो वरः ॥
भापरं मन्त्रमित्याहुर्बुद्धपुत्रस्य श्रीमतः ।
प्रभावात् तत्समो ज्ञेयः मकारोऽन्त्यार्थे गीयते ॥
मञ्जुघोषस्य विख्यातः हृदयोऽयं बुद्धमूर्ध्नजः ।
प्रभावातिशयो ज्ञेयः महापुण्य महर्द्धिकः ॥
सर्वार्थपूरणो मन्त्रः ।
मुद्रा पञ्चशिखोपेतो उभयार्थार्थपूरणो ॥
मुद्रा पञ्चशिखा वापि मकारे चापि योजितो ।
परमार्थं बोधयेच्चार्थं इहैवार्थं तु भोगदो ॥
अपरं मन्त्रमित्याहुः ।
जकारं रेफसंयुक्तं अवोष्मार्थपूजितम् ॥
एष मन्त्रवरो ह्यग्रः अब्जकेतोऽथ मूर्ध्नजः ।
मुद्रे पद्मवरे युक्तो आर्या पुष्ट्यार्थजान्मिनाम् ॥

जापिनां कर्मसिद्धिं तु कुर्यात् सर्वार्थसम्पदाम् ।
अपरं वज्रिणे मन्त्रां हूङ्कारं वाहुगर्भजम ॥
एष मन्त्रवरो ह्यग्रः चण्डोऽथ गार्यते ।
प्रयुक्तो वज्रालये मुद्रे कुर्यात् प्रायार्थकर्मिणाम् ॥
दुर्दान्तदमको घोरो मन्त्रोऽयं नाशहेतवः ।
उक्तार्थे शासनार्थे च यथोक्तं विधिमाचरेत् ॥
न कुर्यात् पापकर्माणि सत्त्वनिग्रहमादरात् ।
न योजयेन्मन्त्रवरं नित्यं सौम्यसत्त्वेषु नित्यश ॥
नापराध्येऽल्पदोपेण सत्त्वनाशयतोत्सृजेत् ।
न कुर्यादादरान्मोहादल्पदोषेषु जन्तुषु ॥
शासने दुष्टचित्तानां अप्रसन्नां प्रसदनाम् ।
विनयार्थं तु सत्त्वानां दमनार्थं पिशिताशिनाम् ॥
निग्रहार्थं तु दुष्टानां सौम्यसत्त्वप्रसादनाम् ।
उक्तो मन्त्रवरो ह्यग्रः न कुर्यात् प्राणान्तिकं कदा ॥
सर्वलौकिकमन्त्राणां वज्रिणे च महर्द्धिकाम् ।
अग्रो मन्त्रवरो ह्युक्तः सर्वलौकिकदेवताम् ॥
अपरो मन्त्रवरो ह्येप सर्वलौकिकदेवताम् ।
मन्त्राणां मूर्ध्नजो ज्ञेयः शिव एकाक्षरो ह्यतः ॥
ईश्वरः सर्वलोकानां मन्त्राणां तु लौकिकां प्रभुः ।
परमेश्वरमित्याहुः स्वकारां ता विदुर्बुधाः ॥
सर्वमन्त्रास्तु गीयन्ते यावन्त्यो लौकिकाः स्मृताः ।
सर्वे ते यत्र वै मन्त्रे निवद्धा सर्वत्र पूजिता ॥
विहिता मुनिवरै ह्येता मुद्रा सर्वत्र योजिता ।
मता शिवतमा श्रेष्ठा लौकिकाग्रा समाहिता ॥
ईश्वराद्यान्तर्भृता वै विपश्यग्रहमातराम् ।
कटपूतनयक्षाद्यां राक्षसां पिशिताशिनाम् ॥

गरुडध्वजविष्णोश्च ब्रह्मणश्चापि कीर्तिता ।
मुद्रा ह्येताः समादिष्टा दुर्दान्तदमने हिता ॥
प्रशस्ता मङ्गला ह्येता मुद्रा युक्ता मनीषिभिः ।
वश्याक्षेपणभूतानां आकृष्टा हेतवोहिताम् ॥
विविक्ते तु सदा देशे शुक्लपुष्पैः सुशोभिते ।
सुमृष्टे सिद्धगन्धैस्तु श्वेतचन्दनकुङ्कुमैः ॥
जातीकुसुममालाभिः अभ्यर्च्य सुगतं प्रभुम् ।
शाक्यसिंहं महापुण्यं सर्वमन्त्रेश्वरं विभुम् ॥
सर्वज्ञं सर्वदा भक्त्या प्रणिपत्य तथागतम् ।
मन्त्रनाथं च लोकेशं वज्रिणं चापि शक्तितः ॥
मञ्जुश्रियं महात्मानं धर्मधात्वेश्वरं गुरुम् ।
सर्वं बुद्धसुतां बुद्धां अनुपूर्व्या समाहितः ॥
कुशविण्डे पल्लवे चैव सक्षीरे सार्द्रे सुशोभने ।
उपविष्टः प्राङ्मुखः शुचिः ॥
उदङ्मुखः शान्तिकर्मे तु पश्चादाह्वानने न मुखे ।
न कुर्युः सर्वकर्माणि यथादैवतमन्दिराम् ॥
प्रवृत्तः सर्वभूतेषु दयावां मुद्रकर्मणि ।
सर्वत्र योजिता मुद्रा कुर्यात् सर्वसाधनम् ॥
पूर्वाभिमुखे पौष्टिकं कर्म मन्त्राणामानयने ध्रुवम् ।
पश्चान्मुखे तु कुर्वीत वश्यार्थं सर्वभौतिकम् ॥
उदङ्मुखे शान्तिकं विन्द्यात् सर्वव्याधिप्रणाशने ।
दक्षिणे पापकर्मं तु न कुर्यात् प्राणान्तिकं सदा ॥
ऊर्ध्वं विघ्ननाशं तु उत्तिष्ठोत्तमसिद्धिदः ।
असुरपुरे कर्म पातालाधिपते तदा ॥
अधोमुखश्च कुर्वीत सर्वत्रामतिपूजिता ।
विदिक्षु च सर्वत्र यथा यथा च समास्मृता ॥

तेषु तेषु च कुर्वीत सिध्यन्ते सर्वदेहिनाम् ।
कुर्यात् सर्वत्र मुद्राणां विधिहोमसमा जपी ॥

तत्रस्थां सिद्धिमायान्ति तन्मुखाश्चापि मुद्रिता ।
विधिः श्रेष्ठः कथ्यतां तां निबोधनाम् ॥

शुचिर्नित्यशुचिर्भूत्वा सुखशौचसमाहितः ।
इमां मुद्रां प्रयुञ्जीत सर्वार्थी च सुसमाधिकाम् ॥

हस्तावुद्वृत्य गन्धैश्च श्वेतचन्दनकुङ्कुमैः ।
सुधूपैः माण्यङ्गरहितैः कर्पूरागरुचन्दनैः ॥

युक्तिकुङ्कुमसुख्यैश्च कुर्याद्भूमवरं विदा ।
निवेद्य विविधा कर्मां आचरेद् विधिवत् सदा ॥

आचरेत् पूर्वनिर्दिष्टं कर्म सर्वत्र कल्पभाषितम् ।
प्राङ्मुखोऽथ ततो भूत्वा उभौ हस्तौ सुसम्पुटौ ॥

मिश्रीकृतां ततोऽन्योन्यां अङ्गुल्या वेणितः स्थितौ ।
मध्यमौ कन्यसौ ज्येष्ठौ अनामिकाग्रौ च योजितौ ॥

अङ्गुष्ठौ निश्चलौ ज्ञेयौ समौ चापि प्रतिष्ठितौ ।
शिरस्थाने तदा कुर्या ललाटदेशे तु भक्तितः ॥

नमस्कारं तथा मन्त्रं पद्मवर्णाथ योगिनाम् ।
ॐ वाचयेद् नमः । वाक्यं स्वाहाकारवर्जितम् ॥

हुङ्कारापगतं श्रेष्ठं फट्कारापगतं सदा ।
पवित्रं मङ्गलं ज्येष्ठं हृदयं तु सदा जपेत् ॥

एष मञ्जुवर! श्रेष्ठ बालरूपिगुरुपिणे ।
पश्चान्मे विश्वरूपे तु हृदयोऽयं प्रकीर्त्यते ॥

षडेते षडक्षरा ज्ञेया मन्त्रा श्रेष्ठा हृदयोत्तमा ।
तेषामग्रतरा ह्येषा प्रवृत्तः सर्वकर्मसु ॥

इदं मुद्रोत्तमं मन्त्रं कुर्यात् सर्वकर्मसु ।
मूर्ध्नि स्थाने ततो दत्त्वा ललाटोदेशे तु युक्तितः ॥

मध्यमाङ्गुल्यं तु चालेद् वश्यार्थं सार्वभौतिकम् ।
अङ्गुष्ठाग्रावुभौ नाम्यौ आकृष्टार्थं च देवताम् ॥
तैरेव विसृतौ नित्यं विसर्ज्यं मन्त्रदेवताम् ।
मध्यज्येष्ठौ तथा श्रावकांश्च मुनिवरम् ॥
तर्जन्यौ कुञ्चितौ नित्यौ बोधिसत्त्वां कुलिशोद्भवाम्
दशभूम्येश्वरा ये च आह्वयन्ते न संशयम् ॥
कन्यसाङ्गुलिसंयुक्ता आकुञ्च्यात् सराह्वये ।
यक्षराक्षसप्रेतांश्च कूष्माण्डा कटपूतनाम् ॥
दैत्यदानवसङ्घांश्च यक्षिण्याश्च धनदप्रिया ।
मातृवत् कुरुते ह्येतां मुद्रेयं सम्प्रपूजिता ॥
अर्थानर्थौ तथा नित्यमिष्टानिष्टां फलप्रदाम् ।
महामुद्रेति विख्याता गीयते त्रिभवालये ॥
एष मुद्रमहामुद्रा बद्धा मूर्धेसु पण्डितः ।
अधृष्यः सर्वभूतानां भवते नात्र संशयः ॥
दूराद् दूरं नमस्यन्ति सर्वविघ्नविनायका ।
महाब्रह्मसमं पुण्यं नियतं बोधिमवाप्नुयादिति ॥

बोधिसत्त्वपिटकावतंसकान्महायानवैपुल्यसूत्रात्
आर्यमञ्जुश्रियमूलकल्पात् द्विचत्वारिंश-
तिमः महामुद्रापटलविसरः
परिसमाप्त इति ।

---

# अथ पञ्चचत्वारिंशः पटलविसरः ।

अथखलु भगवां शाक्यमुनिः पुनरपि मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । सर्वां च शुद्धावासभवनसन्निपतितां देवगणानामन्त्रयते स्म । शृण्वन्तु भवन्तो देवसङ्घाः! मञ्जुश्रियस्य कुमारभूतस्य महाऋद्धिविकुर्वणप्रातिहार्यविक्रीडितचेष्टितबालरूपस्वरूपनिदर्शनयथाशयत्वसन्तोषणमहायानाग्रधर्मप्रापणं सत्त्वपाकसंयोजनमुद्रामन्त्रमभावतन्त्रसत्त्वयोजनमभिप्रायसम्पूरणार्थं मुद्रापटलं परमगुह्यतमं सर्वमन्त्रतन्त्रकल्पेषु बीजभूतं सारभूतं परमरहस्यं महागुह्यतमं परमोत्तरतन्त्रेषु सर्वलौकिकलोकोत्तरेषु अप्रकाश्यं परमगोप्यं नाशिष्याणां च देयम् अश्राद्धानामनुत्पादितबोधिचित्तानां मत्सरिणामन्यतीर्थायतनभक्त्यानां महायानाग्रधर्मविद्वेषिणां सर्वमन्त्रतन्त्रेषु अगौरवजातानाम् । एतेषां प्रकाश्य अन्येषां प्रकाश्यमिति समयज्ञानां बुद्धशासने प्रतिपन्नानां सुरूपसुवेषश्राद्धमविकलचित्तसन्धानमहोत्साहा सर्वमन्त्रेषु च सगौरव सर्वबुद्धबोधिसत्त्वेषु प्रत्येकबुद्धार्यश्रावक सर्वदेव सब्रह्मचारी सप्रतीसादरजातेषु सत्त्वेषु महासन्नाहसन्नद्धेषु सकलसत्त्वधात्वोत्तारणाभ्युद्यमोद्यतेषु महाकारुणिकेषु क्षान्तिसौरभ्यसुवचस्केषु सत्त्वेष्वेतेषां देयमन्येषामदेयमित्याह च ॥

एक मुद्रागणः श्रेष्ठः प्रयुक्तो मन्त्रयोजितः ।
करोति कर्म विविधा मनेष्टा मनुयोजिता ॥
जापिभिः सर्वकालं तु प्रयोक्तव्यः सिद्धिमिच्छता ।
नाम्ना त्रैलोक्यविख्यातः बुद्धैः अजितः सदा ॥
स्त्रीसम्पन्करी घोष प्रथितः सर्वजन्तुभिः ।
श्रीवत्सा नाम मुद्राऽग्र प्रमुखोऽष्टशते भुवि ॥
मुद्राणामष्टशतं ज्ञेयं मञ्जुघोष! शृणोहि मे ।
पुरा जिनवरैर्गीतं बुद्धपुत्रैश्च धारितम् ॥
अहं वक्ष्ये प्रत्यहं वर्त्तमानमनागतम् ।
अर्थार्थं समनुमोघे रक्ष्येऽहं भुवनत्रये ॥

मञ्जुघोषस्तथा हृष्टः उवाच वदतां वरम् ।
देशयन्तु महात्मानो बुद्धाः सर्वत्र पूजिताः ॥
यं श्रुत्वा पुरुषाः प्राज्ञाः नियतं बोधिमाश्रये ।
सर्वेषां तु प्रवृत्तानां जपहोमव्रते स्थिताम् ॥
ध्रुवं मन्त्रास्तु सिद्धयेयुरिमैर्मुद्रैस्तु मुद्रिताः ।
अध्येष्येऽहं महावीरं शाक्यसिंहं नरोत्तमम् ॥
अस्माकं सत्त्वमर्थाय धर्मकोशार्थपूरणम् ।
महायानाग्रधर्मार्थे मन्त्रचर्यार्थसाधक ॥
दुर्दान्तदमकं पुण्यं पवित्रं पापनाशनम् ।
देशयन्तु महावीरा पटलं मुद्रसम्भवम् ॥
पूरणार्थं तु मुद्राणां सूचनार्थं तु देवताम् ।
अनुकम्पार्थं तु जापिनाम् ॥
एवमुक्त्वा तु मञ्जुश्रीः कुमारो बालरूपिणः ।
निरीक्ष्य सुगतश्रेष्ठं सुखी मञ्जुरवस्तदा ॥
उवाच मधुरां वाणीं मुनिश्रेष्ठो विनायक ।
कलविङ्करुतः श्रीमां मेघदुन्दुभिनिःस्वनः ॥
ब्रह्मस्वरेण वचसा वाचो मभ्याचचक्ष सः ।
शृणोथ भूतगणाः सर्वे कल्पार्थं मन्त्रदेवताम् ॥
समयं सर्वदेवानां मुख्यं मुद्राश्च दैवतम् ।
समतिक्रान्तबुद्धैस्तु प्रत्येकार्हतसाधकैः ॥
कः पुनरन्यसत्त्वैस्तु विद्यादैवतलौकिकैः ।
एष मुद्रागणज्येष्ठः सर्वमुद्रेषु कथ्यते ॥
यं तथा जापिनः सर्वे नियतं सिद्धयन्ति देवता ।
आदौ किसलयं नाम्ना द्वितीयं भवति मेखला ॥
तृतीयं सुमेखला चैव चतुर्थी गुमनगोद्भवा ।
पञ्चमी सङ्कलेत्याहुः षष्ठी रेखा प्रघुष्यते ॥

सुवर्णा सप्तमी ज्ञेया माला भवति चाष्टमी ।
नवमी अङ्कुशी ख्याता दशमी सप्तदशच्छदा ॥
एकादशी भवेत् कुन्ता मुकुन्ता द्वादशी भवेत् ।
कर्दमी त्रयोदशी चात्र पट्टी पञ्चदशी भवेत् ॥
षोडशी तु भवेद् यष्टिः मुष्टिः सप्तदशी विदुः ।
अष्टादश समाख्याता वज्रमाला प्रगीयते ॥
हेममालोनविंशा तु पद्ममाला थ विंशति ।
नागी नागमुखी चैव तृतीया भवति महामुखी ॥
वक्रा च वक्रसहिता छत्री भवति लोहिता ।
लोहिता चाष्टविंशा तु नीललोहितिका सिनी ॥
ज्योत्स्ना जनि तामर्गा द्वात्रिंशा कथिता भुवि ।
तारा सुतारा तारावर्ता सुमुद्रजापि ॥
घोररूपिणी विख्याता रात्री भयदा सदा ।
महाप्रभावेति विख्याता या मुद्रा भुवि लोचना ॥
सप्तत्रिंशतिमुद्रास्तु सङ्ख्या वेषा प्रगीयते ।
श्वेता पण्डरा चैव एवला मामकी च या ॥
महाभयहरी देवी भ्रुकुटी तु प्रगीयते ।
अजिता अपराजिता ख्याता जया विजया पराजिता ॥
साधकी साधनी चैव तारा श्वेतेति गीयते ।
घटकर्परमित्याहुः सुगनी गतिशोभिका ॥
पद्मी पद्मसुता चैव वज्री वज्रगणोद्भवा ।
स्त्रीसङ्ख्या गणो मुद्रैः पुरुषाणां तु प्रगीयते ॥
भद्रं मुद्रपीठं तु आसनं शयनं भुवि ।
स्वयम्भूशम्भुचक्रश्च कुलिशो मुसलस्तथा ॥
स्वस्तिको लिङ्गमुद्रश्च पक्षिराड् गरुत्मनः ।
मुद्रो गरुडध्वजो ज्ञेयः विष्णुरुद्रसवासवः ॥

ब्रह्मा पद्मोद्भवः श्रीमां श्रीसम्पुट एव च ।
तथ्यं यमलमुद्रं च मयूरासनमेव तु ॥

विदितं सर्वदिग् धीमां कार्त्तिकेयार्थदः सदा ।
कुमारस्यानुचरो ज्ञेयः मञ्जुघोषस्य ॥

तस्य मुद्रं महावीर्यं ता ताः शक्तिधरः सदा ।
मयूरासनमुद्रं तु तस्यैवैतत् प्रयुज्यते ॥

अनेन बद्ध्वा मन्त्रेण कार्त्तिकेयस्य युक्तितः ।
यावन्तो लौकिका मुद्रा शैवाश्चैव सवासवाः ॥

सर्वे भवन्ति बद्ध्वा वै वश्यार्थं हि प्रयुज्यते ।
एष मुद्रा करो ह्यर्थां पुष्कलां साधु चेष्टिताम् ॥

प्रसन्नो बुद्धपुत्रस्य मञ्जुघोषस्य धीमतः ।
बुद्धशासनमवतीर्णो बालरूपी महर्द्धिकः ॥

कार्त्तिकेयोऽथ विख्यातः मन्त्रमुख्येऽथ लौकिकं ।
सर्वेषां च प्रयोक्तव्यो बालिशानां विशेषतः ॥

ग्रहमातरकूष्माण्डैः गृहीता कटपूतनैः ।
दैत्यदानवयक्षैश्च पिशाचोरगराक्षसैः ॥

क्रव्यादैर्मानुषैश्चापि नित्यं चापि विमोक्षकः ।
रौद्रसत्त्वेऽथ दुष्टेभिः पिशिताशनव्यन्तरैः ॥

मुद्रितेभिश्च मनुजैर्मुद्रोऽयं सम्प्रमोक्षकः ।
सर्वसत्त्वार्थयुक्तश्च प्रयुक्तः सुखदः सदा ॥

संक्षेपेण तु उक्तोऽयं विस्तरश्चैव संज्ञकम् ।
अपरं मुद्रं प्रवक्ष्यामि यं बद्ध्वा सुखी भवेत् ॥

जापिनः सर्वकर्मेषु प्रयुक्तस्याप्यमोघवाम् ।
नाम्ना बुद्धासनो नाम महामुद्रा प्रकथ्यते ॥

विस्तरः सर्वतन्त्रेषु पठ्यते तां निबोधत ।
यं बद्ध्वा जापिनः सर्वे नियतं बोधिपरायणाः ॥

कः पुनः सिद्धिकामानां भोगालिप्सपरायणम् ।
पूर्वत्र चौक्षसमाचारः स्थित्वा च प्राङ्मुखः शुचिः ॥
उभौ हस्तौ समौ कृत्वा अञ्जल्याकारमाश्रृतौ ।
कुर्याद् विकासितौ चाग्रे उभावङ्गुष्ठनामितौ ॥
मध्यमाङ्गुलिमाश्लिष्टौ कुण्डलाकारचिह्नितौ ।
पर्यङ्कोपविष्टे तु नाभिदेशे तदा न्यसेत् ॥
एष मुद्रावरः श्रेष्ठः सर्वकर्मेषु योजितः ।
उत्तमेषु च उत्तिष्ठे नाधमे मध्यमेऽपि वा ॥
क्षिप्रमर्थकरो ह्येष सिद्धः सर्वत्र युज्यते ।
महापुण्यो पवित्रोऽयं मङ्गल्यमघनाशनः ॥
सर्वपापहरः पुण्यः मुद्रोऽयं सिद्धिहेतवः ।
द्वितीयमपरं मुद्रा महामुद्रा प्रकल्प्यते ॥
नाम्ना शत्रुञ्जयी नाम सर्वविघ्नविनाशिनी ।
यं बद्ध्वा शत्रवः सर्वा वशं कुर्यान्न संशयः ॥
सर्वेच्छोपमायान्ति गच्छन्ते वाथ दासताम् ।
रागो द्वेषश्च मोहश्च स्वपक्षः सगणैः सह ॥
लोभमात्सर्यमानश्च विचिकित्सा कथंकथा ।
प्रमाद्यो माया कौसीद्यं साठ्येष्या कुमार्गता ॥
मिथ्यादाष्टिदशे माने दन्ते स्तम्भे च लुब्धता ।
दशा कुशलपथा कर्मा सर्वे ते शत्रवः स्मृताः ॥
एष शत्रुगणः प्रोक्तो बुद्धैर्बुद्धसुतैस्तथा ।
एष मार्गेष्ववस्थाभिः प्राणिनो य च माश्रृता ॥
बुद्धशासनहन्तारः तेषां मुद्रा प्रयुज्यते ।
इयं मुद्रा महामुद्रा गीतं बुद्धैः पुरा सदा ॥
प्रयोक्तव्या प्राणिनां ह्येषा दमनार्थं पापनाशनी ।
तथैव पुरतः स्थित्वा उभौ पाणिसमाश्रये ॥

समाश्लिष्टौ थ तौ कृत्वा अञ्जलयाकारमाश्रितौ ।
अङ्गुष्ठयुगले क्षिप्रं तर्जन्यौ संन्यसेदुभौ ॥
कुण्डलाकारसंश्लिष्टौ तृतीगे पर्वगाश्रयेत् ।
एषा अर्थकरी मुद्रा द्वितीया कथिता जिनैः ॥
शत्रूणां नाशयेत् क्षिप्रं हृदयांसि प्रदोषिणाम् ।
तृतीयं मुद्रं प्रवक्ष्यामि मञ्जुघोष ! शृणोहि ताम् ॥
नाम्ना शल्यहरी दिव्या सर्वशल्यविनाशिनी ।
सर्वत्र योजिता मुद्रा सर्वव्याधिचिकित्सकी ॥
विषशस्त्रकृतां दोषां जलपावकसम्भवाम् ।
अनिलोद्भवदोषांश्च दुष्टसत्त्वगरप्रदाम् ॥
क्रव्यादां मानुषांश्चापि सविषां स्थावरजङ्गयाम् ।
यच्च देहगतां शल्यां नारीणां प्रसवात्मिनाम् ॥
संसाराभिरतां चान्यां प्राणिनां दोषपीडिताम् ।
सर्वेनेतास्तथा शल्याः विशल्यकरणी ह्ययम् ॥
एष मुद्रा महामुद्रा स्मरिता सर्वजन्तुभिः ।
विशल्या सुखिता क्षिप्रं भवते नात्र संशयः ॥
नाममात्रेण ते मर्त्या मन्त्रस्यास्य प्रभावतः ।
सर्वव्याधिविनिर्मुक्ता विचरन्ते महीतले ॥
पूर्ववच्चौक्षसमाचारा शुचिर्वस्त्रशुची तदा ।
बध्नीयान्मुद्रवरं श्रेष्ठं तृतीयं पापनाशनम् ॥
उभौ हस्तौ समायोज्य विपरीताकारसम्भवाम् ।
समौ व्यक्तौ अञ्जल्याकारौ हृदयस्थाने तु तं न्यसेत् ॥
एष मुद्रा महामुद्रा सर्वानर्थनिवारणी ।
यं बद्ध्वा जापिनः सर्वे नियतं बोधिपरायणाः ॥
चतुर्थी तु महामुद्रां महायक्षीं तमादिशेत् ।
महाप्रभावा विज्ञेया सर्वमन्त्रेषु जापिनाम् ॥

अत्र यक्षगणाः सर्वे यक्षिण्यश्च महर्द्धिकाः।
मन्त्रदेवतसर्वेषु उत्तमाधममध्यमाः ॥
सर्वसत्त्वैस्तु सम्पूज्या मुद्रेयं सम्प्रगीयते।
आदौ बद्ध्वा जपेन्मन्त्रं होमसाधनकर्मसु ॥
सर्वत्र योजिता पुण्या सर्वमन्त्राणि साधयेत्।
वज्रपाणिस्तथा मात्रः सर्वमुद्रेश्वरी ह्ययम् ॥
पठिता लोकनाथैस्तु पुरा ज्येष्ठैर्ह्यतीतकैः।
तथैव शुचिनो भूत्वा स्थित्वा उदङ्मुखस्तदा ॥
बध्नीयान्मुद्रवरे श्रेष्ठः सर्वकर्मेषु जापिनः।
दमनार्थं सर्वभूतानाम् ॥
यथायं कुरुते क्षिप्रं यः सत्त्वाचेष्टितं भुवि।
उभौ हस्तौ तदा न्यस्य सम्पुटाकारचेष्टितौ ॥
कुर्यात् त्रिसूचिकाकारं अङ्गुष्ठौ कन्यसमध्यमौ।
अन्योन्यसंश्लिष्टौ चतुर्भिश्चाप्यथ नामितौ ॥
कुर्यान्मुद्रवरं ह्युक्तं शिरःस्थाने तु संस्थितम्।
यं दृष्ट्वा सर्वभूता वै विद्रवन्ति न संशयः ॥
पञ्चमी तु महामुद्रा शृणु त्वं मञ्जुरवः सदा।
नाम्ना त्रिसमया चैव महापुण्यतमा शिवा ॥
दुर्दान्तदमनी नित्यं सर्वसत्त्वार्थसाधनी।
घोररूपी महेशाक्षा कालरात्रिसमप्रभा ॥
कृतान्तरूपिणी भीमा यमस्यापि भयानिका।
चण्डा च चण्डरूपीति दुःप्रेक्षा दुःसहा सदा ॥
रुद्रवासवयक्षेषां राक्षसग्रहमातराम्।
देवानन्तुसरांश्चैव मन्त्रमुख्यां महर्द्धिकाम् ॥
सर्वसत्त्वा तथा नित्यं दुर्दान्तदमकी हिता।
अकालमृत्युविनाशाय मृत्युनाशाय वै हिता ॥

सृष्टा सर्वबुद्धैस्तु कृतान्तस्यापि भयानका ।
यं बद्ध्वा पुरुषा नित्यं समयज्ञा भवन्ति ह ॥

ये च मन्त्राश्रिता नित्यं तेऽपि मुक्ता जपे रता ।
तेषां सिद्ध्यन्ति मन्त्रा वै अयत्नेनैव देहिनाम् ॥

अजापिनोऽपि भवेज्जापी अशुचिः शुचिनो भवेत् ।
संयुक्तः क्रोधराजेन यमान्तेनेह मुद्रया ॥

सर्वकर्मकरा ह्येषा संयुक्ता तत्त्वदर्शिभिः ।
सर्वविघ्नविनाशार्थं सर्वव्याधिचिकित्सना ॥

सर्वसत्त्वार्थसम्भारा सर्वदुष्टनिवारणा ।
सर्वासां पूरणार्थाय विहिता मुनिवरैः पुरा ॥

एष मुद्रा हिता लोके समयभ्रंशाच्च पूरणी ।
बद्ध्वा तु मुद्रवरं श्रेष्ठं समयज्ञस्तत्क्षणाद् भवेत् ॥

सर्वेषां चैव मन्त्राणां लौकिकानां च ततोत्तमात् ।
प्रविष्टो मण्डलो ज्ञेयः मुद्रा मन्त्रेण ईरितः ॥

तथैव शुचिनो भूत्वा पूर्ववत् सर्वकर्मसु ।
त्रिसूच्याकार तथा वज्रं अङ्गुलीभिः समाचरेत् ॥

ज्येष्ठमध्यमअङ्गुल्यौ अङ्गुष्ठैश्च सता न्यसेत् ।
मूर्ध्नि स्थाने ततः कृत्वा अपसव्येन भ्रामयेत् ॥

एष मुद्रवरा श्रेष्ठा प्रयुक्तः सर्वकर्मसु ।
एता पञ्च महामुद्रा लोकनाथैस्तु भाषिता ॥

नियतं पुरुषवरा बद्ध्वा सम्बोध्यग्रं स्पृशन्ति ह ।
सर्वासां पूरयन्त्येते जापिनां मनसोद्भवाम् ॥

सर्वतथ्यं यथाभूतं दर्शयन्ति यथेप्सितम् ।
अपरे मुद्रवरा श्रेष्ठा पञ्च चैव प्रकाशिता ॥

शिरः वज्रोऽथ गात्रं च उत्पलं कवचं तथा ।
एते मुद्रवरा दिव्या मञ्जुघोषस्य धीमतः ॥

पुरा लोकवरैर्मुख्यैः कथिता तत्त्वदर्शिभिः ।
अहं च मञ्जुरवं वक्ष्ये कथ्यमानं निबोध्यताम् ॥

शृणुष्वैकमना नित्यं मुद्रा मुद्रवरोत्तमाम् ।
पूर्ववच्चौक्षसमाचारः स्थित्वा धातुवरागतः ॥

बध्नीयात् करपुटे नित्यं मुद्रां पञ्चार्थसंज्ञिकाम् ।
उभे करपुटाग्रे तु कुड्मलाकारकारिते ॥
दद्युः शिखरे नित्यं शिरमुद्रेति संज्ञितम् ।
यथैवोत्पलमुद्रा तु न्यस्तः दुरवरे सदा ॥
सा च सर्वतः क्षिप्ता गात्रमुद्रा विधीयते ।
स चैव कुतो ज्ञेया वक्रमुद्रा तु सा भवेत् ॥
तथैव हस्तौ संन्यस्य नाभिस्थाने तु संन्यसेत् ।
ईषि तर्जन्याङ्गुल्यनाभिमात्मनः संस्पृशेत् ॥

सा भवेत् कवचमुद्रा तु आत्मरेक्षा तु सा भवेत् ।
सर्वत्र योजिता ह्येते सफला सर्वार्थसाधिका ॥

एते मुद्रा महामुद्रा मङ्गल्या मघनाशना ।
जापिभिः सर्वकालं तु प्रयोक्तव्याः सफला हिताः ॥

महावीर्या महापुण्या सर्वानर्थनिवारिका ।
यं बद्ध्वा पुरुषा नित्यं नियतं बोधिपरागणाः ॥

अपरे पञ्च महामुद्रा लोकनाथस्य तापिनः ।
मुनिने शाक्यसिंहाय तथा रत्नशिखे गुरौ ॥

सुपुष्पाय सुकेशाय तथा सुमनसोरत्ने ।
सङ्कुसुमाय च बुद्धाय तथा पद्मोत्तरे वरे ॥

सम्पूर्णाय सुनेत्राय शुद्धा चैव जगद्गुरोः ।
पितामहाय चैव मुक्ताय जगद्वराम्बरमुक्तये ॥

एतेषानां च बुद्धानामन्येषां च महात्मनाम् ।
अतीतानागता सत्त्वां वर्तमानां स्वयम्भुवाम् ॥

सर्वेषानां च बुद्धानां मूर्ध्नि सम्भूतिलक्षणा ।
महाप्रभावा महामुद्रा समन्ताज्ज्वालमालिनः ॥
उष्णीषा इति विख्याता तृधातुसमालये ।
चक्रवर्त्ती महापुण्यो मङ्गल्यो मघनाशना ॥
सर्वेषां च विद्यानां विद्याराजः स्मृतः प्रभुः ।
एकाक्षरसंयुक्तः मन्त्रो सुगतमूर्धजः ॥
मुद्रो तस्य विदो ज्ञेयो प्रभुरेकाक्षरस्य तु ।
चक्रवर्त्ती जिनकुले जात मुद्रः परमेश्वरः ॥
उभौ हस्तौ समाश्लिष्य सम्पुटाकाराचिह्नितौ ।
मुष्टियोगेन वद्ध्वा वै मध्याङ्गुल्यौ सुसूचितौ ॥
ईषित् सङ्कोच्यवत्कृत्वा कुण्डालाकारदर्शितौ ।
एष सर्वत्रगे मुद्रा सर्वमन्त्रेश्वरो विदो ॥
मूर्धानं देवतं कृत्वा सुपिराकारकुड्मलम् ।
ईपिन्नामिततर्जन्यौ कन्यसं तु सुपूजितौ ॥
एष मुद्रवरः श्रेष्ठः तेजोराशे तु कथ्यते ।
तदेव सम्पुटं चाग्र्या छत्राकारसंज्ञकम् ॥
विकास्याङ्गुली सर्वां सितातपत्रेति संज्ञितम् ।
जयोष्णीपं हितं देवं हि मध्याङ्गुल्यौ सुसूचितौ ॥
तदेव विसारितौ चाग्रे पाणिभिः सर्वतो गतैः ।
उष्णीषसङ्कभवा ज्ञेया सर्वत्रार्थदर्शिभिः ॥
मुनिमूर्धजसम्भूता मुद्रा अग्रा प्रगीयते ।
पञ्चमा तु भवेत् सा तु सर्वमुष्णीपसम्भवा ॥
अनेन वै सर्वबुद्धानां यावन्तमुष्णीपमूर्धजाम् ।
सर्वे ते च समायान्ति सर्वकर्मेषु योजिता ॥
सर्वे मुनिवरैर्मुद्रा ये गीता भुवनत्रये ।
सर्वेषां तु मुद्राणां मुद्रेयं परमेश्वरी ॥

अनेनावाहयेन्मन्त्रां अनेनैव विसर्जयेत् ।
अनेन सर्वकर्माणि कुर्यात् सर्वत्र जापिनः ॥

एते पञ्च महामुद्रा पुरा गीता मुनिवरैः ।
सर्वकर्मार्थयुक्ता वै सर्वमुष्णीषसाधिका ॥

यावन्तो मुनिवरैः गीता उष्णीषा भुवनत्रये ।
सर्वेषां तु सर्वत्र इमे पञ्चार्थपूरणा ॥

सर्वमुष्णीषतो ज्ञेया मुद्रा वै च असङ्ख्यका ।
तेषां पञ्च वरा प्रोक्ता सर्वमुष्णीषसाधनी ॥

अवलोकितमुद्रस्य पञ्च वैते सुमुद्रकाः ।
प्रकृष्टा पद्मकुले श्रेष्ठा मुद्रे ते भुवि मण्डले ॥

उष्णीषं च शिरोवक्रपद्ममुद्रा च कथ्यते ।
महाकरुणजा देवी तारा भवति पञ्चमी ॥

पूर्वं चौक्षसमाचारः धौतवस्त्र सुजप्तधीः ।
पाणिना शिरसा स्पृश्य ऊर्ध्वहस्तो भवेन्नरः ॥

वामपाणितले लेख्यां मुष्टियोगेन वेष्टयेत् ।
एष उष्णीषमुद्रोऽयं अवलोकितमूर्धजाम् ॥

तदेव शिरवरे दत्त्वा शिरमुद्रा प्रगीयते ।
तदेव सङ्कुचितौ चापि नाभिदेशे प्रतिष्ठितौ ।

विकास्य अङ्गुली सर्वा पद्ममुद्रेति सा विदोः ।
उपरिष्टादेव वक्रान्ते हस्तौ तौ न समाश्रुते ॥

अन्योन्यमिश्रितौ हस्तौ विरलाङ्गुलिमाश्रितौ ।
तदेव वक्रमुद्रा तु पद्मकेतोऽथ गीयते ॥

या तु पद्मध्वजे मुद्रा नागलोके प्रकथ्यते ।
स भवेन्मुष्टियोगेन उभौ हस्तौ समाश्रितौ ॥

उभौ तर्जन्यतां चोर्ध्वौ सूचीभूतौ सुचिह्नितौ ।
अङ्गुष्ठपीडितौ श्रेष्ठौ तारामुद्रेति कथ्यते ॥

॥॥

एषा मुद्रवरा श्रेष्ठा करुणा पद्मध्वजे विदोः ।
इत्येवं पञ्च महामुद्रा कथिता पद्मालये सदा ॥
बोधिसत्त्वस्य मुख्ये ता लोकीशस्य महात्मने ।
अत्र पद्मकुले भवन्ति वन्धं सर्वकर्मसु ॥
मन्त्रनाथेश्वरो ये च विद्या देवतलौकिका ।
सर्वे ते अत्र वै मुद्रे मुद्रा यान्ति सुमुद्रिता ॥
ये च यक्षेश्वरा गीता वज्रपाणिमहर्द्धिका ।
महामन्त्रार्थरौद्राश्च क्रोधप्राणहरा तथा ॥
ये चान्ये लौकिका मुख्या मन्त्रयुक्ताश्च देवता ।
सर्वे ते च समायान्ति मुद्रैरेतैः सुमुद्रिता ॥
एते मुद्रा महामुद्रा पवित्रा पापनाशना ।
यं वद्ध्वा जापिनः सर्वे क्षिप्रमायान्ति क्षिप्रतः ॥
मुक्ता ताथागती मुद्रा अन्येषां परमेश्वरी ।
अवलोकितनाथस्य सर्वव्याधिचिकित्सने ॥
मुद्रै तो पञ्च महाभोगा विचरन्ति महीतले ।
स्त्रीरूपधारिणो भूत्वा सर्वसत्त्वार्थयोजिता ॥
यं वद्ध्वा पुरुषा प्राज्ञ ! नियतं बोधिपरायणा ।
अपरा पञ्च महामुद्रा वज्रपाणि महर्द्धिका ॥
य एष वज्रेश्वरः श्रीमां सर्वमन्त्रेश्वरः प्रभुः ।
दशभूम्यपतिः श्रीमां सर्वानर्थनिवारकः ॥
महाभयप्रदो चण्डः दुष्टसत्त्वनिवारणः ।
दुर्दान्तदमको धीमां दक्षः सत्त्वार्थसिद्धिषु ॥
यक्षरूपेण सत्त्वानां आत्मना चेष्टिते भुवि ।
सत्त्वार्थक्रियायुक्तः धर्मार्थमवतारयेत् ॥
बोधिसम्भारमर्थाय विचेरुर्यक्षरूपिणः ।
ये ते सत्त्वा हिता लोके यक्षिण्या सह मोहिता ॥

तेषां सिद्धिर्न भवेन्मन्त्रां वाचा दुश्चरितेरिताम् ।
बोधिसत्त्वो महापुण्यः बहुरूपी महार्द्धिकः ॥
प्रदोष्य चित्तं मन्त्रेशे कुतः सिद्ध्यन्ति मानवाः ।
मुद्रैता पञ्च वरा प्रोक्ता बुद्धैश्चापि महर्द्धिका ॥
वज्रपाणिर्महापुण्या तां च क्षिप्र सुयोजयेत् ।
तथैव हस्तावुद्वर्त्य श्वेतचन्दनकुङ्कुमैः ॥
तथैव सम्पुटाकारौ कुड्मलाकारवेष्टितौ ।
शिरःस्थाने तथा न्यस्तौ चापि सुस्थितौ ॥
सा तु वज्रशिरा ज्ञेया महामुद्रा हिता त्रिदोः ।
यक्षसेनापतेर्मुद्रा द्वितीया भवति मूर्धजा ॥
उष्णीपमुद्रा हिता लोके उष्णीपं यक्षपतेर्हितम् ।
तदेव वज्रं शिरामुद्रा ऊर्ध्वमञ्जलिस्थापिताम् ॥
एप मुद्रा महामुद्रा उष्णीपेति प्रगीयते ।
तृतीया वज्रोद्भवा नाम ललाटस्थाने तु सा भवेत् ॥
संन्यस्ताञ्जलिसम्पूर्णा ध्रुवौ मध्येऽनामिकौ ।
एपा वज्रोद्भवा नाम वज्रपाणेऽर्थसाधिका ॥
चतुर्थी तु महामुद्रा वज्रयज्ञेति गीयते ।
उत्तानौ हस्ततलौ न्यस्य वेणिकाकारसम्भवौ ॥
वक्षःस्थाने तथा न्यस्य मध्याङ्गुल्यां सुग्रन्थितौ ।
एपा मुद्रा महामुद्रा वरा यक्षवरे हिता ॥
सर्ववज्रालया च सा ।
पञ्च मात्रा महामुद्रा वज्रपाणि महार्द्धिका ॥
तथैव हस्तौ संन्यस्य नाभिस्थाने तु कारयेत् ।
तर्जन्यां कुञ्चितौ कृत्वा अङ्गुष्ठाग्रे तु नामयेत् ॥
तृतीये पर्वमाश्लिष्य कन्यसौ च सुसंस्थितौ ।
बद्ध्वो च वेणिकाकारां शेपैरङ्गुलिंभिस्तदा ॥

एषा वज्रालया नाम महामुद्रा प्रगीयते ।
अत्रैव सर्वमुद्रा तु लौकिका ये च वज्रिणे ॥
शैवाः शक्रकाश्चापि रिपीणां च महर्द्धिका हिता ।
सा वरा मतङ्गिनो ह्यग्रा मुद्रा प्रोक्ता महात्मभिः ॥
यक्षराक्षसप्रेतैश्च कूष्माण्डैः कटपूतनैः ।
ये तु मुद्रा वरा प्रोक्ता विष्ण्वीन्द्रैश्च वनाह्वयैः ॥
ईशानमातरैर्लोकग्रहैश्चापि ।
भास्करेन्दुविवस्वाक्षैर्वसवश्चापि सुपूजितैः रक्षात्मकैः ॥
सृष्टा मुद्रवरा ये तु सर्वभूतगणैः सदा ।
सर्वे चैव समायान्ति मुद्रेऽस्मिं वज्रमालये ॥
प्रथिता मुद्रवरा ह्यग्रा कुलेऽस्मिं वज्रमाह्वये ।
मुक्ता तथागतीं मुद्रां अवलोकीशस्यापि महात्मनः ॥
मुद्रा एके तु मुक्ता वै अन्येषां प्रभुरिष्यते ।
एषा मुद्रा महामुद्रा यक्षसेनापतेर्विदोः ॥
यं बद्ध्वा पुरुषा नियतं सर्वे बोधिपरायणाः ।
एषा मुद्रा वरः श्रेष्ठः परमाहुस्तथागताः ॥
इत्येता पञ्च महामुद्रा वज्रपाणे यशस्विनः ।
जापिभिः सर्वकालं तु स्मर्तव्या च महाभये ॥
आशु नश्यन्ति भूता वै क्रव्यादा पिशिताशिना ।
यक्षराक्षसप्रेतांसि कूष्माण्डाः कटपूतना ॥
देवगन्धर्वमनुजाः किन्नराश्च ससिद्धकाः ।
ग्रहमुख्यवरा गरुडा मातराश्च महर्द्धिकाः ॥
येऽपि ते लोकमुख्याश्च ब्रह्माविष्णुमहेश्वराः ।
सर्वसत्त्वाश्च वै लोके येषु सवत्र प्राभृताः ॥
सर्वे ते दृष्टमात्रं वै विद्रवन्ति न संशयः ।
एते मुद्रा जिनैख्याता वज्रधृते प्रभोः ॥

मन्त्रनाथस्य यक्षेशे लोकीशस्यापि महात्मने ।
तस्माच्च जापिभिः सर्वैः नियतं सिद्धिलिप्सुभिः ॥

स्मर्तव्या जपकाले तु सर्वमन्त्रेषु सिद्धिदा ।
योऽसौ किसलयेत्याहुः मुद्रामादौ प्रगीतवाम् ॥

तथैव हस्तौ संन्यस्य उरःस्थाने न्यसेद् बुधः ।
तामादौ वेणिकां कृत्वा अङ्गुलीभिः समन्ततः ॥

सा विद्या किसलये मुद्रा लौकिकां मन्त्रदेवताम् ।
तामादौ योजयेत् क्षिप्रं क्षुद्रकर्मेषु धीमताम् ॥

ज्वररोगगता सर्वान् नाशयेन्नात्र संशयः ।
सैव सुमनसा ज्ञेया कन्यसाङ्गुलिनामितौ ॥

पटही तु भवेत् सा तु मध्यमाङ्गुलिनामितौ ।
कन्दर्पी च भवेत् सा च उभौ अङ्गुष्ठमुच्छ्रितौ ॥

घटखर्परिका ज्ञेया अनामिकाग्रमुनामितौ ।
तथैव कुड्मलं कृत्वा हस्ताग्रौ च सुभूषितौ ॥

उत्पलाकारचिह्नं तु मुद्रमुत्पलमुच्यते ।
विकासितोभयौ हस्तौ अङ्गुलीभिः समन्ततः ॥

एषा वै पद्ममुद्रा तु भवे ज्योत्स्ना सनामितौ ।
तथैव योजितां सर्वां अङ्गुल्याग्राग्रकारिता ॥

एषा सुपर्णिने मुद्रा सुपर्णीति प्रगीयते ।
तदेव लम्पुटाकारं विपर्यस्ताकारचेष्टितम् ॥

सा भवेद् यमलमुद्रा तु गरुत्मस्यापि महात्मने ।
तथैव हस्तौ संन्यस्य मुष्टियोगेन योजितौ ॥

उभयाङ्गुष्ठमध्यस्थौ लिङ्गमुद्रेति गीयते ।
उत्थिताङ्गुष्ठमध्यस्थौ तदेवं शङ्खमिष्यते ॥

तदेव हस्तौ विसृज्य जया भवति विश्रुता ।
विजया भवते मुद्रा कन्यसाङ्गुलिवेष्टितौ ॥

अनामिकाभिः समायुक्ता अजिता भवति पूरणी ।
विसृज्य हस्तौ संयुक्तौ वामहस्तेन मीलयेत् ॥

अङ्गुष्ठाग्रमधो नाम्य मुष्टिं बद्ध्वेह पण्डितः ।
एषापराजिता ज्ञेया मुद्रेयं च सुपूजिता ॥

चतुःकुमार्यो विधि ज्ञेया भगिन्येषु प्रकीर्तिता ।
तुम्बुरुस्त्वेष विख्यातः ज्येष्ठभ्राता प्रकल्प्यते ॥

नौयानसमाश्रिता ह्येते अम्भोधेस्तु निवासिनः ।
विचरन्ति इमं स्थाने महापुण्यमहर्द्धिकाः ॥

वश्यार्थं सर्वभूतानां सृष्टा ब्रह्मविदो विदे ।
सर्वत्र पूजिता ह्येता गुह्यमन्त्रैस्तु योजिता ॥

अमोघा सिद्धिमेतासि सर्वकर्मेषु योजिता ।
क्षिप्रमर्थकराः सिद्धा मङ्गल्या मघनाशनाः ॥

शुचिना शुचिकर्मेषु साधनीया तथोत्तमैः ।
दीप्तं ज्वलनं शान्तं खचरं कायि सिद्धये ॥

मध्यं समध्यकर्मेषु अशौचं कश्मलादिषु ।
ये चापि पापकर्मा वै नित्योच्छिष्टाश्च देहिनाम् ॥

तेषां सिद्ध्यन्त्ययत्नेन क्षुद्रकर्माणि वै सदा ।
तथैव हस्तौ संयम्य नाभिदेशे समानयेत् ॥

मध्यमाङ्गुल्यतः सूच्या वेणिकाकार वेष्टयेत् ।
सुमेखला च सा मुद्रा उद्दिष्टा भवति मेखला ॥

तमेव मधतलौ न्यस्तौ मुद्रा भवति सम्पुटा ।
सैवमुच्छ्रिता ग्रीवे श्रीसम्पुटमुच्यते ॥

नाभिस्थाने तदा न्यस्य अपसव्येन भ्रामयेत् ।
रजनी मुद्रवरा ह्येषा दुष्टसत्त्वनिवारणी ॥

दक्षिणे करमुद्यम्य मुष्टियोगेन माश्रयेत् ।
मुद्रा मुष्टिवरेत्याहुः सर्वमन्त्राणि चूर्णनी ॥

सैवाङ्गुलिमुत्सृज्य उभौ हस्तौ प्रयोजिता।
मुष्टिमुद्रा वरेत्याहुः पिशिताशननाशनी॥

सा तु सङ्कुचिता ज्ञेया अङ्गुल्याग्रौ सुकुञ्चितौ।
मुद्रा सुकुन्ता विज्ञेया कुन्ता चैव प्रसारितैः॥

तारा सुतारा विधिज्ञेया एकरूपौ उभौ भवेत्।
उत्पलाकारसंन्यस्ता तर्जनीभिः सुसंहता॥

एकसूचिकमित्येव सम्पुटाकारवेष्टितौ।
तदेव प्रसारिता हस्तौ तारा भवति घुष्यते॥

तदेव हस्तौ संन्यस्य अञ्जल्याकारकारितौ।
तर्जन्या मिश्रितौ श्रेष्ठौ तृतीये पर्वणि स्थिते॥

अङ्गुष्ठौ चान्ते मुद्रा भवति लोचना।
तदेवाङ्गुलिमुत्सृज्य तर्जन्यौ सम्प्रयोजितौ॥

तदेव विहिता मुद्रा मुद्रा मामक्या सम्प्रयोजिता।
एवला मुद्रवरेत्याहु मध्यमाङ्गुल्यैः सुनामितैः॥

श्वेता याभ्रमुद्रा वै करैश्चात्र प्रसारितैः।
पण्डरा तु भवेन्मुद्रा मुष्टिभिः सम्प्रपीडितैः॥

महाप्रभावा महापुण्या तर्जन्यावुच्छ्रितावुभौ।
तदेव हस्तौ सम्मिश्र सम्पुटाकारवेष्टितौ॥

तर्जनीभिः ततो कृत्वा नेत्राकारं तु पीडयेत्।
भ्रुकुटी मुद्रवरा ख्याता महाभयहरी सदा॥

इत्येते चाष्ट मुद्रा वै कथिता जिनवरैः पुरा।
महाप्रभावा महापुण्या महेशाख्या महर्द्धिका॥

सर्वमुद्रेषु सर्वत्र मन्त्रैश्चापि विशेषतः।
सर्वत्र पूजिता ह्येते स्मर्तव्यार्थफलप्रदा॥

महारक्षा पवित्राश्च मङ्गल्यमघनाशनाः।
सर्वत्र पूजिता बुद्धैः सर्वमन्त्रांश्च साधयेत्॥

तारा भृकुटी चैव श्वेता पण्डरवासिनी ।
मामकी लोचना चैव सुतारा तारवर्तिनी ॥

इत्येते च महामुद्रा पठिता लोकतत्त्वविभिः ।
एष रक्षाविधिः प्रोक्तः महारक्षेषु कथ्यते ॥

महापापहरी ह्येता महामुद्रा स्वयम्भुवे ।
लोकेशस्य च वीरस्य महायक्षपतेस्तथा ॥

एते मुद्रा महापुण्या नियता सिद्धिहेतवः ।
कथिता लोकमुख्यैश्च सम्बुद्धैश्च यशस्विभिः ॥

तथैव हस्तौ संन्यस्य वेणिकाकारसम्भवौ ।
सम्पीडितौ विपर्यस्तौ मुद्रा भवति सङ्कुला ॥

तथैव सूचिकाग्रं तु अङ्कुशस्याहु वर्णितः ।
तथैव करपुटोऽग्रं वै उन्ननाम्यो शिरःस्थितौ ॥

विकास्य अङ्गुलीं सर्वां छत्रा भवति शोभना ।
संयम्य मुष्टिमाकारौ रात्री भवति देवता ॥

तामसी विसृतैर्नित्यं मुद्रा भवति तत्त्वतः ।
तथैव अङ्गुलां वेष्टौ ऊर्ध्वमङ्गुष्ठनामितौ ॥

विषनिनीशना सृष्टा रेखमुद्रा यशस्विभिः ।
मनसा नामितौ ज्ञेया महामानसमुद्रितैः ॥

तथैव हस्तावुत्सृज्य एकहस्तेन मीलयेत् ।
तर्जन्यौ वेष्टयेन्मध्यां एषा सा गरुडध्वजा ॥

उभौ हस्तौ समायुक्तौ वेणिमाश्रृत्य मध्यजौ ।
हंसमालेति मुद्रेयं नाम्ना सर्वत्र गीयते ॥

तदेव विसृतौ हस्तौ तृसूच्याकारवेष्टितौ ।
सा भवेत् वज्रमुद्रा तु मुद्रा श्रेष्ठतमा हिता ॥

प्रकृष्टा सर्वमुद्राणां वज्रपाणेः समाहिता ।
तदेव विसृताङ्गुल्यौ पद्ममाला तु सा भवेत् ॥

ज्येष्ठा मुद्गरा ख्याता पञ्चकेतोः समा भवेत् ।
एषा मुद्गरा दिव्या महापुण्या महोद्भवा ॥
प्रयुक्ता सर्वकर्मेषु सिद्धिमायान्ति देहिनाम् ।
भुवि मण्डलविख्याता प्रसिद्धा सर्वकर्मसु ॥
वक्रार्थवक्रिता ज्ञेया उभौ पाणितले समे ।
सन्न्यस्ताङ्गुलिमग्रे तु तर्जन्याङ्गुलिमुच्छ्रिता ॥
मुद्रा वक्रमिति ज्ञेया अर्द्धवक्रा तु कन्यसैः ।
समौ मुष्टितलौ ज्ञेयौ अङ्गुष्ठोत्तमनप्रमितौ ॥
लोहितामुद्रमित्याहुः मध्यमानामितमुलोहिता ।
नीललोहितिका ज्ञेया मुद्रा रुद्रस्य मूर्धजा ॥
महाप्रभावा विख्याता या मुद्रा भुविमण्डले ।
सर्वविघ्नहरी देवी दुष्टसत्त्वनिवारणी ॥
सा मुद्रा कथ्यते लोके शृणुध्वं भूतिकांक्षिणः ।
तथैव हस्तौ संयम्य मुष्टिमादौ प्रकल्पयेत् ॥
विसृतौ मध्यमौ ज्ञेयौ ईषित् सङ्कुचिताथ सूचितौ ।
महामुद्रा इति ख्याता मुद्रा सा भयसूदनी ॥
तथैव सूच्याग्रौ तौ हस्तौ सुव्यक्तमीलितौ ।
एषा विष्णुमिति ख्याता मुद्रा सर्वत्र पूजिता ॥
ब्राह्मी तु भवे मुद्रा उभौ अङ्गुष्ठमिश्रितौ ।
तथैव कुड्मलाकारा मुद्रा वैन्द्रीति उच्यते ॥
सा भवेन्माहेश्वरी मुद्रा उभौ कन्यसमुच्छ्रितौ ।
तदेव हस्तावुत्सृज्य नृत्ययोगेन माश्रयेत् ॥
वामबाहुस्तदा नित्यं उभयाग्रं प्रकल्प्यते ।
दक्षिणं भुजमाश्लिष्य तर्जन्याकारवेष्टितम् ॥
एषा वज्रधरा नित्यं वराहीति प्रकल्प्यते ।
तदेव विसृतौ वाहू नत्ययोगेन कल्पितौ ॥

उभौ तर्जन्याकारतः क्षिप्तौ वज्रचामुण्डि मुच्यते ।
स एव विसृताकारौ उभौ पाणौ समाश्रृतौ ॥
ऊर्ध्वमाश्रृत्य गता दृष्टिः घोरा चामुण्डि मुच्यते ।
कौमारी तु भवेन्मुद्रा कार्त्तिकेयस्य महामही ॥
तदेव हस्तौ विन्यस्य सूच्याग्रं तु मीलयेत् ।
विसृतैरङ्गुलीभिश्च इयं मुद्रा सर्वमातरी ॥
एषा सर्वमुद्राणां मातराणां तु महर्द्धिका ।
एतेन सर्वकर्मा वै बालिशानां तु कल्पयेतु ॥
सूतिकानां च नारीणां गर्भस्थानं च देहिनाम् ।
रक्षमोक्षणमुद्रेषु प्रेतव्यन्तरकश्मलैः ॥
मोक्षणार्थं तु कल्पीत ग्रहमातरनैर्ऋताम् ।
हितार्थं प्राणिनां लोके मुद्रा भवति सुखावहा ॥
श्रेयसः सर्वमन्त्राणां भूतानां प्रयुक्ता सुखदा हिता ।
क्षुद्रकर्मेषु सर्वत्र योजयेत् सर्वत्र जापिनः ॥
एते मुद्रा सदा मन्त्रैरेतैरेव प्रयोजयेत् ।
तथैव हस्तौ संन्यस्य स्वकुण्डलाभोगवेष्टितौ ॥
अङ्गुलीभिः समन्ताद् वै मुद्रा नागीति गीयते ।
तथैव मङ्गलिमध्यस्थौ सूच्याग्रं तु मीलितौ ॥
भवेन्नागमुखी मुद्रा प्रकृष्टा सर्वकर्मसु ।
या सा मुद्रवरा ज्ञेया माला लोके प्रकल्पते ॥
तथैव हस्तौ संन्यस्य अङ्गुलीभिः समन्ततः ।
वेणिकाकार बद्ध्वा वै मुष्ट्याकारं तु कारयेत् ॥
तथैव सम्पुटाकारौ अङ्गुष्ठौ मध्यनामितौ ।
सा भवेन्मालमुद्रा तु सर्वकर्मार्थसाधनी ॥
तथैव मङ्गलिभिर्नित्यं उच्छ्रितैः सप्तभिः सदा ।
सा तु सप्तच्छदा मुद्रा तृषु लोकेषु गीयते ॥

एते मुद्रवरा ह्यग्रा यथोक्तास्ते दर्शिता पुरा ।
एतेषानां तु मुद्राणां निर्दिष्टा पूर्वविस्तराम् ॥
सर्वा लोकतमा ज्ञेया विधिनिर्दिष्टदर्शिता ।
विस्तरार्थगता ह्येते विकल्पार्थाः सविस्तराः ॥
स्मृताः सर्वे भवेन्मुद्रा सर्वमुद्रैस्तु मुद्रिता ।
मुद्रा चाष्टशता ज्ञेया उक्ता सर्वार्थसाधिका ॥
एक एव भवेत् तेषां यथासङ्ख्यार्थपूरणी ।
नृत्ययोगेन स्थित्वा वै ऊर्ध्वं पश्येज्जापिनः ॥
ललाट मङ्गुली न्यस्य तर्जन्या कन्यसान्विताम् ।
कृत्वा वै नेत्रयोगेन स्थितकोऽञ्जलिना न्यसेत् ॥
सर्वत्रादर्शनी नाम मुद्रा चाष्टशतात्मिका ।
अनेन मन्त्रा सिध्यन्ते यथोक्ता सर्वज्ञदर्शिना ॥
सर्वमुद्रास्तु अनैव प्रयोक्तव्या ह्यविकल्पतः ।
यथोक्तमुद्रागणा ह्येष उक्तोऽयं मन्त्रसमासत इति ॥

आर्यमञ्जुश्रीमूलकल्पात् बोधिसत्त्वपिटकावतंसकान्म-
हायानवैपुल्यसूत्रात् सर्वतथागताचिन्त्यधर्म-
धातुमुद्रामुद्रिता त्रिचत्वारिंशतिमः
स्वचतुर्थो मुद्रापटलविसरः ।

———

# अथ षट्चत्वारिंशः पटलविसरः ।

अथखलु भगवां शाक्यमुनिः पुनरपि शुद्धावासभवनमवलोक्य मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । शृणु त्वं मञ्जुश्रीः ! पञ्चममुद्रापटलविसरं त्वदीयं सर्वतथागतधर्मकोशानुप्रविष्टं परमगुह्यतमं धर्मधात्वसंख्येयाचिन्त्यमुद्रामुद्रितं सर्वमन्त्रचर्यानुप्रविष्टं परमरहस्यतमं सर्वलोकोत्तरोत्कृष्टतमं सर्वलौकिकानुचरितां मोघतमं कतमं च तद् भाषिष्येऽहम् । पूर्वं तथागतैः भाषितवन्तः ॥

अथ मञ्जुश्रीः कुमारभूतो बोधिसत्त्वो महासत्त्वः पुनरपि उत्थायासनाद् भगवतः चरणयोर्निपत्य भगवन्तमेतदवोचत् । तद् साधु भगवां देशयतु सर्वमन्त्रचर्यानुप्रविष्टां सर्वसत्त्वानामर्थाय अस्माकं चानुकम्पामुपादाय महाप्रणिधानमहानिर्हारमहाबोधिमण्डोपसङ्क्रमणचर्यापरिपूरणताय पञ्चमं महामुद्रापटलविसरं संक्षेपतः पञ्च चैव महामुद्राः । अपर्यन्ता च स्थितमुद्रां आह्वाननविसर्जनसर्वकर्मार्थसर्वमनोरथमाशापारिपूरणतायै सर्वमन्त्रतन्त्रमहामुद्रानुप्रवेशनतायै सर्वसत्त्वसन्तोषणमहासमयसर्वमुद्रानुप्रवेशनतायै यस्येदानीं कालं मन्यश्चेति ॥

एवमुक्तस्तु भगवतो शाक्यसिंह नरोत्तम ।<br>
मञ्जुप्रतिभो धीमां तूष्णीं तस्थौ तदान्तरे ॥

इयं वसुमती कृत्स्ना षड्विकारं प्रकम्पिरे ।<br>
सर्वभूतगणा त्रस्ता क्षुभितं चापि ऋषालयाः ॥

तृधातुगतयः सत्त्वास्तत्क्षणादेव मागताः ।<br>
दृष्ट्वा आगतां सत्त्वा वव्रे वाणी ऋषिसत्तमः ॥

शाक्यकुलजो दक्षः मुद्रां देशे तु तत्क्षणात् ।<br>
यं बद्ध्वा पुरुषा प्राज्ञा नियतं बोधिपरायणाः ॥

सर्वमन्त्राश्च सिद्ध्येयु सौगता ये च लौकिका ।<br>
पञ्च चैव महामुद्रा बद्धा मुनिवरैः पुरा ॥

अधुना शाक्यमुद्देक्ष्यः बद्ध्वैता वृषवालये ।
स्वयमेव भगवां शास्तु हस्तोत्तानतां कृथा ॥
वेणिकाकारमावेष्ट्य मध्यमाङ्गुलि नामयेत् ।
कन्यसौ संस्पर्शयेद् धीमां उभा अङ्गुष्ठ उच्छ्रये ॥
अङ्कुञ्च्यमञ्जल्याकारं दर्शयेन्मञ्जुरवेहिताम् ।
एषा मुद्रा महामुद्रा सर्वबुद्धानुवर्णिनी ॥
सर्वथा साधिता देवी पूर्णेति च गीयते ।
तदेव हस्तौ भ्रामयित्वा तु नाभिदेशे तु संन्यसेत् ॥
आशासम्पादिनी क्षिप्रं महापुण्या हिता हि सा ।
मनोरथेति समाख्याता दुर्दान्तदमनी सदा ॥
तदेव हस्तौ संन्यस्य मुष्टियोगेन वेष्टयेत् ।
उरःस्थाने सदा न्यस्या तृतीया भवति सुनिर्मला ॥
चतुर्थी तु भवेत् सा तु शिरःस्थाने सुमुद्रया ।
पञ्चमी तु भवे ज्येष्ठा मुक्ता सर्वगतां तु गुणान् ॥
लोकधात्री तु सा ज्ञेया प्रसिद्धा सर्वकर्मसु ।
एष एव सदायोगः प्रयोक्तव्यः सर्वकर्मसु ॥
आकृष्टावङ्गुलितर्जन्यौ आकृष्य वश्यता हिता ।
विक्षिप्तैर्विसर्जनं कुर्यात् मनसा मोक्ष एव तु ॥
सर्वं दर्शयेत् क्षिप्रं सर्वकर्मार्थसाधयेदिति ॥

आर्यमञ्जुश्रियमूलकल्पात् बोधिसत्त्वपिटकावतंसकात्
महायानवैपुल्यसूत्रात् चतुःचत्वारिंशतिमः
महामुद्रापटलविसरः
परिसमाप्त इति ।

---

## अथ सप्तचत्वारिंशः पटलविसरः ।

अथखलु भगवां शाक्यमुनिः पुनरपि शुद्धावासभवनमवलोक्य तं च महापर्षन्मण्डलं अनन्तव्यूहालङ्कारसर्वज्योतिप्रभास्वरविकुर्वाणानन्तगुह्यतमं सर्वगुह्यतमं सर्वमन्त्रानुचरितं नाम समाधिं समापद्यते। समनन्तरसमापन्नस्य भगवतः ऊर्णाकोशाद् रश्मयो निश्चरन्ति स्म। सर्वतश्च समन्ता दशसु दिक्षु रित्यूर्ध्वमधस्तिर्यक् महतावभासेनावभास्य सर्वमन्त्रां सञ्चोद्य पुनरपि भगवतः ऊर्णाकोशान्तर्हिता। समनन्तरान्तर्हिते रश्मिभिः चतुर्दिक्षु च आधश्चोर्ध्वं चत्वारः कुमार्यो भ्रातृसहिता तास्मिन्नेव महापर्षन्मण्डले अधः सुमेरुपर्वतराजसमीपे बुद्धाधिष्ठानेनाधिष्ठितोऽभूत्। सन्निपतिता सन्निषण्णा महाबोधिसत्त्वकुमारभूतं रिद्ध्या विक्रीडनसन्दर्शनार्थं महामन्त्रचर्यानिर्हारार्थं सर्वलोकोत्तरलौकिकमन्त्रचर्याक्रीडासमनुप्रवेशवशमाकर्षसमाश्वासनचर्यासमनुप्रवेशनार्थम् ॥

अथखलु भगवां शाक्यमुनिर्वज्रपाणिं बोधिसत्त्वं महासत्त्वं तस्मिन्नेव पर्षदि सन्निपातितम् ईषिन्निरीक्ष्य सर्वं च बोधिसत्त्वगणम् ॥

अथ सा सर्वावती पर्षदिह महापृथिवी च देवतागणपरिवृता महाभूतैकमन्त्रालयं ओषध्यो महाज्योतींपि नगां सञ्चाल्य प्रचलिता रणिता प्ररणिता क्षुभिता सम्प्रक्षुभिता दाक्षिणा दिगुन्नमति, उत्तरा दिगवनमति, पश्चिमादिगुन्नमति पूर्वा दिगवनमति, अन्तादवनमति, मध्यादुन्नमति, मध्यादवनमति, अन्तादुन्नमति, महतस्य चावभासस्य लोके प्रादुर्भावोऽभूत् ॥

अन्यानि चाप्रमेयानि असङ्ख्येयानिश्चर्याद्भुतानि प्रातिहार्याणि सन्दृश्यन्ते स्म। ताश्च देवसङ्घा निःप्रपञ्चमहतालम्बनज्ञानशान्तिपदं नाम समाधिं समापद्यते स्म। यन्न शक्यं सर्वप्रत्येकबुद्धार्हत्त्वमहाबोधिसत्त्वैरपि ज्ञातुम्। कः पुनर्वादः समापद्येतुं अन्येषां सर्वलौकिकलोकोत्तराणां तीर्थायतनानां अभिभवनार्थं सर्वमन्त्रतन्त्रानुप्रवेशनार्थं सर्वविमोक्षधर्मपरिपूरणार्थं सर्वसत्त्वानां च शान्तिपदमनुप्रापणार्थं

सर्वभूतमनुकम्पाभूतकोटितथताचिन्त्यबोधिमण्डवज्रासनमाक्रमणतिष्ठ-पदमनुप्रापणार्थं च भगवां शाक्यमुनिः ध्यायन्तः स्थितोऽभूत् ॥

अथखलु मञ्जुश्रीः कुमारभूतो बोधिसत्त्वो वज्रपाणिं बोधिसत्त्वं महायक्षसेनापति आमन्त्रयते स्म — भाप भाप त्वं भो! जिनपुत्र! सर्वमन्त्रचर्यानुप्रवेशं सर्वलौकिकमन्त्राणां सारभूतं तमं परमरहस्यं सर्वभूतसत्त्वानां समयानुप्रवेशं यथाशयमनोरथसर्वपारिपूरकं अनुज्ञातस्त्वं भो! जिनपुत्र! सर्वबुद्धैर्भगवाद्भिः अतीतानागतप्रत्युत्पन्नैस्तथागतमज्ञकोशसर्वज्ञतापरिपूरणार्थं इह कल्पराजपटलाविसरे सर्वविक्रीडालीलाचिन्त्याश्चर्याद्भुतविकुर्वणसन्दर्शनार्थं सर्वज्ञज्ञानमुद्भावनार्थम् ॥

अथखलु वज्रपाणिः बोधिसत्त्वो महासत्त्वः मञ्जुश्रियं कुमारभूतमामन्त्रयते स्म । शृण्वन्तु भो! धर्मधर सर्वतथागतानां समतानुरक्षणदक्षकथायास्यहं चतुःकुमारीणां भ्रातृसहितानां सरहस्यं पटविधानहोमजापकालक्रियानियमः प्रतिमाविधानमण्डलसमयआह्वाननविसर्जनापूजनार्घदीपगन्धधूपमाल्यविलेपनचूर्णवस्त्रनिवेदनध्वजपताकघण्टामालप्रदीपस्नग्विधिसाधनसाध्योपायनियमक्रमः शान्तिकपौष्टिकाभिचारुक अन्तर्द्धानाकाशगमनपादप्रचारिकवशीकरणावेशनविद्वेपणोत्सादनशोपणमोहनस्तम्भनमारण विविधसत्त्वाकारकरणपीडनतर्जनभर्त्सनबहुपदापदकरणक्रियो मार्गसन्दर्शनयथेष्टकर्मफलः बन्धनरोहणावन्ध्यकरणसर्वकर्ममन्त्रतन्त्रसाधनोपयिकेपु स्थानेपु नियोजनः सिद्धिपरिपूरणा । तच्छ्रूयतां भो! जिनपुत्र! ॥

अथ वज्रपाणिः श्रीमां प्रणिपत्य सुगतं विभुम् ।
उवाच मधुरां वाणिं शब्दार्थभूपिताम् ॥
अनर्थां कर्णसुखां चैव मधुरार्थसुकूजिताम् ।
बह्वार्थकरीमिष्टां सर्वमन्त्रास्पदकरी ब्रह्मस्वरनिनादिनीम् ॥
कलविङ्करुताघोषा स्पष्टगम्भीरसंयमी ।
सूक्ष्मार्थतत्त्वावचोदनीम् ॥
सर्वमन्त्रेश्वरीं श्चैव वाचं भापेऽथ वज्रधृक् ।
शृणोथ भूतगणाः सर्वे देवसङ्घा महर्द्धिका ॥
वक्ष्यमाणां तथा कल्प सविस्तरं सर्वकार्मिकम् ।

चतुर्मूर्तिर्महौजस्क चतुर्दिक्षु समागमम् ।
चतुर्वर्णसमायुक्तं चतुरक्षरभूषितम् ॥
चतुर्मन्त्रसमोपेतं स पुमां पञ्चमाश्रृताम् ।
चतुर्थगतिमाहात्म्यं चतुर्भूतसमागमम् ॥
सभ्रातृपञ्चमं ज्येष्ठं महाभूताकाशमुद्भवम् ।
सर्वत्राप्रतिहतं श्रेष्ठं सर्वमन्त्रार्थसाधनम् ॥
सर्वकर्मकरं पूज्यं ज्येष्ठं मङ्गल्यमघनाशनम् ।
प्रवृत्तं सर्वभूतानां मन्त्ररूपेण श्रेयसाम् ॥
चतुःकुमार्येति विख्याता कुमारा पञ्चमात्मका ।
वाय्वम्बुज्योतिर्षिं पृथिवीं खपञ्चमात्मकाम् ॥
तेषां मन्त्ररूपिण्यां विपाको भवति देहिनाम् ।
पञ्चमो श्रेयसो मुख्यो भ्रातृरूपेण मन्त्रराट् ॥
तेषां मन्त्रं प्रवक्ष्यामि अपराख्य शृणोथ मे ।
अथ ते सर्वभूता वै प्रहृष्टमनसा अभूत् ॥
निषण्णा धर्मतां ज्ञात्वा सौम्यचित्ता समाहिता ।
श्रोतुकामा हि वै सर्वा निश्चलायतलोचना ॥
अथ मञ्जुवरः श्रीमां ऊर्ध्वक्ष्य सुगतात्मजम् ।
वज्रपाणिं महायक्षं सर्वमन्त्रेश्वरालयम् ॥
कृपाविकृष्टहृदयो अपरोऽभूत् तदन्तरे ।
सर्वबुद्धा वै प्रत्येकार्हश्रावका ॥
बोधिसत्त्वा महासत्त्वा दशभूमिसमाश्रृता ।
सर्वसत्त्वा तथा लोके मुख्या अग्रतमाश्च ये ॥
निषण्णा सर्वतः सर्वे गतिपञ्चसुयोजिताः ।
जन्मिनो वरमुख्याश्च पराः परपूजिता ॥
भवाग्रा ह्यावीचिपर्यन्तां अनन्तां धातुमाश्रृताम् ।
त्रिजन्माध्यक्षपर्यन्ता दशभूमाधिपा परा ॥

श्रोतुकामा इह वै सर्वे निपतुस्तं समागमम् ।
अथ वज्रधराध्यक्षो निरीक्ष्य सर्वानागताम् ॥

सत्त्वां बोधिसत्त्वांश्च सर्वान्त्रैधातुकालयाम् ।
सुरज्येष्ठां तथा देवां दशभूम्येश्वराम् ॥

सर्वसत्त्वां विदित्वैनां प्रसन्नां बुद्धशासने ।
मन्त्रं प्रत्याहरेद्धीमां मन्त्रनाथेश्वरस्तदा ॥

नमः सर्वबुद्धानामप्रतिहतशासनानाम् अचिन्त्याद्भुतरूपिणाम् । ॐ तुरु तुरु हुलु हुलु मा विलम्ब समयमनुस्मर मम कार्यं साधय हूँ हूँ फट् फट् स्वाहा ॥ सर्वकर्मिकोऽयं मन्त्रः । हृदयोऽयं सर्वबुद्धबोधिसत्त्वानां सर्वलौकिकलोकोत्तराणां सर्वव्याधिराजाधिपतीनां च मूलमन्त्रोऽयम् अनेन सर्वकर्माणि कारयेत् ॥

सर्वद्रव्याणि साधयेत् सर्वकर्मकरो विभुः ।
अनेन तु सदा कर्म कुर्यात् क्षिप्रार्थसाधने ॥

तत्र मन्त्रं प्रवक्ष्यामि देवसङ्घा शृणोथ मे ।

ॐ देव स्वाहा । सार्थवाहायस्तुम्बुरेर्मन्त्रः । ॐ जये स्वाहा । ॐ अजिते स्वाहा । ॐ अपराजिते स्वाहा । एते मूलमन्त्रा सभ्रातृसहितानां चतुर्भगिनीनां लोकपूजितानां हृदयानि भवन्ति । तासाम् ॐ रूपिणि ॐ विरूपिणि विश्वात्मने । एते हृदयोद्भवा मन्त्रास्तुम्बुरेर्हृदये मन्त्रा भवन्ति । ॐ देवेशाय स्वाहा । उपहृदयानि भवन्ति । ॐ वामनि पिशाचि ॐ महाराक्षसि स्वाहा । ॐ विकृतरूपिणि स्वाहा । ॐ प्रकीर्णकेशी कृतान्तरूपिणि स्वाहा । ॐ वज्ररूपिणि कृतान्तरात्रि भयानकि स्वाहा । तुम्बुरेः सार्थवाहस्योपहृदयं भवति । ॐ चतुर्वक्त्रविभूषितमूर्ति त्रिनेत्रा लम्बोदर बहुरूपि स्वाहा । ॐ धु धु ज्वलय सर्वदिशां स्वाहा । सर्वेषां भगिनीनां भ्रातृसहितानां दिव्यस्तु मन्त्रोऽयम् । ॐ हूँ सर्वेषां शिखा । ॐ ह्रीः जः सर्वेषां शिरः । ॐ ध्यायिनि स्वाहा । सर्वेषां मन्त्रः । ॐ ट्रक् सर्वेषां नेत्रः । ॐ भगिनीनां भ्रातृसहितानां चन्दनकुङ्कुमानुलिप्तानां समया च रक्षितानां

हिमवन्तससागरचारिणां दृढव्रतानां बुद्धधर्मसङ्घानुज्ञातानां श्रीः । ह्रीः । रीम् । त्रीः । भुजः । एष सर्वभगिनीनां सर्वभ्रातृसहितानां गात्रे महामन्त्रः । सर्वकर्मिकः प्रसिद्धः सर्वकर्मसु । परमगुह्यनमः । ॐ आय हिं महादेव विश्वरूपिणे स्वाहा । ॐ तुम्बुरे सार्थवाहस्याह्वाननमन्त्रा । ॐ गच्छगच्छ महादेव विश्वात्मने स्वाहा । तुम्बुरेः सार्थवाहस्य विसर्जनमन्त्रा । ॐ आयाहि देवि कुमारिके किं चिरायसि समयमनुस्मर । मम कार्यं सम्पादय स्वाहा । जयायाह्वाननमन्त्रा । ॐ आयाहि महाभोगिनि कार्यं मे साधय समयमनुस्मर स्वाहा । ॐ महायोगान्धरिं विस्तीर्णधनप्रिये स्वाहा । अजिताया आह्वाननमन्त्रा । ॐ श्मशानवासिनि रूपपरिवर्तिनि देहानुचरे स्वाहा । अपराजिताया आह्वाननमन्त्रा पुनरेव सर्वमण्डलां लौकिकलोकोत्तरामालिखेत् । सर्वकर्मेषु च योजयेत् । परकल्पविधानेनापि ईप्सितमर्थं साधयेत् । अस्मिन्नेव कल्पविसरे मूलकल्पराजपटलसमतासम्मतश्चतुःकुमारिणां कुमारसहितानामादिमाख्यायते मन्त्रोऽयं बुद्धात्मजो यमिच्छति ।

सर्वकर्मिकमित्याहुः बुद्धपुत्रा महर्द्धिका ।
कुलाग्रा मन्त्रमुख्याश्च सर्वमन्त्रेश्वरो विभुः ॥
करोति विविधां कर्मां विचित्रां साधुवर्णिताम् ।
प्रसह्यं चापि भूतानां चित्तं हरति नृजन्मिनाम् ॥
गत्यर्थवश्यताहेतुनापत्यार्थरामुद्भवम् ।
प्रसह्यं कुरुते कर्म गतियोनिविनिर्गतः ॥
चतुर्भगिन्येति विख्याता ।
सभ्रातृसहिता नित्यं महोदधिनिवासिनः ॥
नौयानसमारूढा सभ्रातृसहपञ्चमा ।
कर्णपागेऽम [illegible] [illegible] संज्ञिताः ॥
विचरन्ति महीं कृत्स्नां सत्त्वानुग्रहतत्पराम् ।
विचित्ररूपधारिण्यो विचित्राभरणभूषिताः ॥
विचित्रैव फलं तासां विचित्रोपकरणपूजिताम् ।
पर्यटन्ति महीं सर्वां सशैलसहसागराम् ॥

तासां मन्त्रो महाउग्रेग्रः तुम्बुरुर्नाम इष्यते।
सार्थवाहस्य मन्त्रो वै त्र्यम्बकस्य जनाधिपे॥
चतुरक्षरसंयोगा ओङ्कारसपञ्चकः।

प्रथमः सर्वमन्त्राणां चार्चनं कुर्यात् गन्धधूपदीपमाल्योपहारविशेषैः बलिविधानं दत्वा जपं कुर्यात्। अनाकुलपदाक्षरैः। गुह्यप्रदेशे एषामन्यतमं श्रेष्ठं मन्त्रं गृहीत्वा त्रिःकालमष्टसहस्रं जपेत्। आगताया अर्घं दत्वा सर्वकर्माणि कारयेत्। अर्घमन्त्रं चात्र भवति। ॐ प्रतिगृह्णतु भगिन्यः सभ्रातृसहिता चार्घम्। समयमधितिष्ठन्तु स्वाहा। अर्घमन्त्रा सर्वेषां भ्रातृसहितानां सर्वोपचारमन्त्राणि भवन्ति। ॐ ज्वल ज्वल महाहुताशार्चि महाद्युतीनां स्वाहा। सर्वेषां प्रदीपमन्त्रा। ॐ धूँ धूँ। अरितवासिनि धूपशिखे सुरभिगन्धमनोहरे प्रतिगृह्णतु देव्यः भ्रातृसहिताः ध्यायन्तां स्वाहा। धूपमन्त्रः सर्वेषाम्। ॐ कुसुमवासिनि कुसुमाढ्ये सुरभिमाले सुगन्धिमनोहरे वने कुसुमा जाताः सुकुमाराः सुगन्धिनः। तां निवेदितो भक्त्या प्रतिगृह्णध्वं मनोजवा स्वाहा। पुष्पमन्त्रा। अनेन पूजां कुर्वीत। ॐ गन्धगन्धाधिवासे स्वाहा। गन्धमन्त्रा। ॐ बलिते बलिनि स्वाहा। बलिमन्त्रा। ॐ लालावति स्वाहा। निवेद्यमन्त्रा। ॐ म्। वस्त्रमन्त्रा। ॐ फट्। घण्टामन्त्रा। ॐ स्वरव्यञ्जनमन्त्रा। ॐ छादय छत्रमन्त्रा। ॐ दोधूयते धूयते स्वाहा। चमरमन्त्रा। ॐ केलिमहोकलिहृदयङ्गमे स्वाहा। सर्वद्रव्योपकरणाञ्जनरोचनादर्शप्रसाधनमन्त्रा। ॐ समस्तव्यापिनि स्वाहा। सर्वदिग्बन्धवज्रप्राकारमन्त्रा। ॐ मण्डलिने स्वाहा। इत्यूर्ध्वमधः बन्धमन्त्रा। सर्वतश्च समन्ताशेषबन्धं भवति। ॐ नमः सर्वबुद्धानामप्रतिहतशासनानाम्। ॐ हूँ हः। सर्वकर्मिकोऽयं महाविद्याराजा शासनो नाम। वशिता सर्वभूतानां चतुःकुमारीणां सभ्रातृसहितानां पीडनो शोषणो रोधनो बन्धनः वशयिता निग्रहानुग्रहे रतः सर्वभूतग्रहमातर सर्वकर्मषु अप्रतिहतशासनः गुह्ये प्रदेशे अत्वरके वा जप्यमानश्चतुर्भगिनीनां सभ्रातृसहितानां यं रोचते तं कारयति। याच्यमानस्तु यं वरं रोचते

तं वरं याचयितव्या शीघ्रं वरमनुप्रयच्छन्ति । एवं बन्धनताडनतर्जन-तर्जनमारणादीनि कर्माणि कुर्वन्ति । अनेनैव विद्याराजेनोपतप्यमाना सह जप्यमाना सर्वकर्माणि कुर्वन्ति । आसां मन्त्राणि भवन्ति । विसर्जनाक्षेपणादीनि कार्याणि कुर्वन्ति ॥ ॐ रूपिणि गच्छ गच्छ समयमनुस्मर स्वाहा । जयाया विसर्जनमन्त्रा । ॐ वामने पिशाचि प्रकीर्णकेशि विश्वरूपिणि गच्छ गच्छ मम कार्यं साधय स्वाहा । विजयाया विसर्जनमन्त्रः । ॐ लहु लहु रूपिणि गच्छ गच्छ समय-मनुस्मर मम कार्यं समादाय स्वाहा । अजिताया विसर्जनमन्त्रा । ॐ विश्वरूपिणि विकृते विकृतानने सर्वदुष्टनिवारणि गच्छ गच्छ ममार्थं साधय स्वाहा । अपराजिताया विसर्जनमन्त्रा एते विसर्जनाक्षेपण-मन्त्रा । यन्मनीषितं कार्यं । विचित्रकुसुमैरञ्जलिं पूरयित्वा याच-यित्वा प्रसाद्य च देवीनामग्रतः सभ्रातृसहितानां क्षेप्तव्याः । ततस्ता मुक्ता भवन्ति । सभ्रातृसहिता सान्निध्यं च कल्पयन्ते । यथेष्टं च वर-मनुप्रयच्छन्ति विचरन्ति यथासुखमिति । वाचा वक्तव्या प्रतिदिनं च कर्तव्यमेवमुपरुध्यमाना मोक्षणाच्च सान्निध्यं न परित्यजन्ति । सतत-क्रिया अन्यथा उपरुध्यमाना नावतिष्ठन्ते कर्तव्यम् ॥

अथ ते भगिन्यः सभ्रातृसहिताः थरथरायमानाः पीड्यमानाश्च वेपथुरुपजातशङ्का बोधिसत्त्वानुभावेन चतुर्दिक्षु रागत्य एवं वाचमु-दीरयन्ते —परित्रायस्व भगवं वज्रपाणि परित्रायस्व । पीडिताः स्म भगवं सुपीडिताः स्म । गतिरन्या न विद्यते । त्वमेव भगवं शरणम् । त्वमेव त्राणमिति ॥

अत्रान्तरे विद्याराजेन शासने सुशासिता सर्वदेवनागयक्षग-न्धर्वासुरगरुडकिन्नरमहोरगमनुष्यामनुष्या सर्वसत्त्वाश्च सर्वगतिसङ्गृ-हीताश्च सुविनीताश्च सुशासिता महाविद्याराजेन वज्राधिपतिनानुभा-वेन ताः भगिन्यः भ्रातृसहिताः भीताः सुविनीता आर्तस्वरं क्रन्दमानाः अवतिष्ठन्ते ॥

अथ खलु मञ्जुश्रीः बोधिसत्त्वो महासत्त्वः तां देवतां भ्रातृस-हितानामन्त्रयते स्म । मा भैष्टत भगिन्यः मा भैष्टथ । बुद्धं शरणं

गच्छध्वम् । द्विपदानामग्रं धर्मं शरणं गच्छध्वम् । विरागाणामग्रं सङ्घं शरणं गच्छध्वम् । गणानामग्र्यम् ॥

अथ ता भगिन्यः सम्भ्रान्तृपक्रमाः बुद्धं शरणं गच्छन्ति । एवं शरणं गच्छन्ति । सङ्घं शरणं गच्छन्ति स्म । ततस्ताः सुखसौमनस्याः परमेण सुखसौमनस्येन समन्वागता अभूवन् । मुक्तगाढबन्धनात्मानं सञ्जानते स्म । प्रीतीसुखसमर्पिताः लब्धप्रसादपरमसञ्जातहृष्टरोमकूपाः इदमुदानमुदानयन्ति स्म ॥

अहो आश्चर्यमिदं प्राप्तो रत्नत्रयोद्भवे ।
सुखिताः स्म क्षणाल्लब्धात् सर्वदुर्गतिघट्टिताः ॥

सुगतौ स्वर्गमोक्षौ च सदा बुद्धिनिवेशिता ।
ततस्तां तुष्टमनसो मञ्जुघोषं निरीक्ष च ॥

प्रणिपत्य चरणौ मूर्ध्ना इदं वाचमुदीरयम् ।
त्रातस्त्वं सर्वदुःखेभ्यः गतिस्त्वं भो महाद्युतेः ॥

यस्त्वं सर्वधर्माणां गभीरपदमक्षरा ।
त्वं देशयसे नाथ बन्धुभूत नमोऽस्तु ते ॥

आज्ञापय महावीर मन्त्रनाथं जिनात्मजम् ।
किमानीताः स्म देवेन आज्ञां किं करवानि ह ॥

एवमुक्तास्तु वीरो वै सर्वबुद्धात्मजो विभुः ।
उवाच मधुरां वाणीं देवताभिः स चोदितः ॥

गच्छ त्वं शरणं भूयः वज्रपाणिजिनात्मजे ।
अवैवर्तिकसङ्घो वै बोधिसत्त्वाग्रजोद्भवेत् ॥

त्रिरत्नमादौ कृत्वा वै वंशजं जिनवरात्मजम् ।
चित्तं च बोधौ ईरध्वं मैत्रचित्ता भवोत्सुका ॥

ततो वा सर्वतः कृत्वा जग्मुः स्वस्थतास्पदम् ।
ततस्ता देवताः सर्वे प्रणिपत्य जिनात्मजम् ॥

आज्ञां सम्पाद्य सर्वे वै येन वज्री तदोन्मुखा ।
नमस्कृत्वा तु तां क्षिप्रं वज्रपाणिं महाद्युतिम् ॥

अभिप्लुत्य ततः सर्वे स्थिताः तन्मुखोद्भवाः ।
प्रसमीक्ष्य तदा कन्या सभ्रातृसहपञ्चमा ॥

वज्रपाणिं च यक्षेशं निरीक्षमाणाः स्थिताः ।
अभूवं नित्यार्थमास्पदा देव्यः अनित्यार्थार्थभूषिताः ॥

प्रणेममधुरां वाचामात्ममन्त्रार्थशोभनाम् ।
नमस्ते सर्वबुद्धानां बोधिसत्त्वां महर्द्धिकाम् ॥

प्रत्येकार्हसङ्घं च असतांश्चैव योगिनाम् ।
आत्ममन्त्रार्थविस्तारं कथयामो महाद्युते ॥

यथातत्त्वावबोधात्र्थं जनानां तु महीतले ।
सरहस्यं गुह्यमन्त्राणां त्वद्वक्षान्निसृतात्मनाम् ॥

अनुरक्षार्थमन्त्राणां आस्पदार्थात्र्थभूषणाम् ।
एवमुक्ते तु मन्त्रेशः वज्रपाणिर्महाद्युतिः ॥

ईषिस्मितप्रमुखो भूत्वा विलोक्य विकसन्मुखः ।
पूजयामास तां कन्यां सभ्रातृसखीजनाम् ॥

अनुज्ञातं मया यूयं निर्विशङ्क भविष्यथ ।
संश्राव्य कल्पविस्तारं सरहस्यं समण्डलम् ॥

जन्तुभिः पूजिता नित्यं वरं वो दास्यथ सर्वदा ।
ऋषिभिः पूजिता यूयं यक्षराक्षसकिन्नरैः ॥

गरुडैर्देवगन्धर्वैः असुरैश्चापि महर्द्धिकैः ।
कूष्माण्डैः मातरैश्चापि समग्रैः सोमभास्करैः ॥

लोकपालैः धनाध्यक्षैः पतद्भिः वसवैस्तथा ।
तैरिवेयं सुराध्यक्षैः पिशाचोरगमानुषैः ॥

भूताध्यक्षैः निशाध्यक्षैः पिशिताशनव्यन्तरैः ।
राक्षसाधिपमुख्यैश्च रौद्रचित्तैर्विहेठकैः ॥

दैत्यदानवसङ्घैश्च यमैः प्रेतमहर्द्धिकैः।
मानुषामानुषैश्चापि ब्रह्मविष्णुमहेश्वरैः॥

सुरमुख्यैर्महाज्येष्ठैः सिद्धचारणपूतनैः।
योगिभिर्जिनपुत्रैश्च पूजिता वो भविष्यथ॥

न सन्देहो प्रभावा वरक्रमा।
जयाया मन्त्रमित्याहुः कल्पविस्तारविस्तरा॥

नव कोट्यस्तु मन्त्राणां तन्त्रकल्पसविस्तरा।
विजया चैव मन्त्राणां षष्टिर्लब्धा प्रकीर्तिता॥

अजिताया तु भवेन्मात्र लक्षषोडशकोद्भवा।
अपराजिताया तु कन्याया चतुःकोट्यः उदाहृताः॥

तुम्बुरेः सार्थवाहस्य नवकोट्योऽथ गायतः।
तत्प्रमाणा भवेत् कल्पा नृसुरासुरपूजिताः॥

सर्वं शैवमिति ख्यातं सर्वैर्भूतलवासिभिः।
मयैव निगदितं पूर्वं कल्पे मास्मिं साविस्तरे॥

पश्चादन्यो जनः प्राहुः कल्पमन्त्रां पृथक् पृथक्।
तुम्बुरुः सार्थवाहस्य त्र्यम्बकस्य तु धीमतेः॥

अनन्ता कल्पविस्तारा शर्वस्यास्य कपर्द्दिने।
यत्प्रभावात्स्थे मन्त्राणां सिद्धिं यास्यन्ति भूतले॥

अनुज्ञाताथ वै यूयं कल्पराजेऽथ वै सदा।
भाषध्वं मन्त्रतन्त्राणां सरहस्यं सविस्तरम्॥

सगुह्यं गुह्यतमं चापि सर्वसत्त्वसुखोदयम्।
इत्युक्त्वा वज्रभृक् श्रीमां वज्रमाश्रित्य लीलया॥

तूष्णीम्भूत तदा तस्थौ रत्नपङ्कजमुच्छ्रिते।
अथ ताः कन्यकाः क्षिप्रं सम्भ्रान्तमथपञ्चमाः॥

प्रणिपत्य मन्त्रनाथं वै यक्षेशं जिनवरात्मजम्।
वज्रपाणिं महावीरं मन्त्रनाथेश्वरं विभुम्॥

उवाच मधुरां वाचां एकैकामनुपूर्वतः ।
मण्डलं तु समासेन वक्ष्येऽहं भुजगांद्‌यम् ॥

ज्येष्ठमण्डलमित्याहुः जया ज्येष्ठमगायत ।
विजने रहसि सम्पाते विगते चैव महाजने ॥

प्रच्छन्नेऽग्रमसम्बाधे सरित्तीरे शिलोच्चये ।
विविक्ते कानने रम्ये वृद्धाध्युषितमन्दिरे ॥

शून्ये देवकुले चापि शून्ये वेश्मसु शोभिते ।
एकवृक्षे शुभे रम्ये महोदधिसमाश्रये ॥

एकलिङ्गे श्मशाने च विगते धूमपांसुभिः ।
वज्रासनमहापुण्ये धर्मचक्रे सुशोभने ॥

यत्र शान्ति गतो बुद्धः यत्र जातो महामुनिः ।
एते स्थाना भवेन्मुख्या मण्डलालिखने शुभा ॥

गङ्गातीरेऽथ सर्वत्र सद्वीपपुलिनाश्रये ।
सरिद्वराश्च मुख्या ये कीर्त्तिता लोकविश्रुता ॥

तेषु तीरेषु सर्वत्र नित्यं मण्डलमालिखेत् ।
समन्तात् सर्वतोयान्ता महोदधिसमप्लुता ॥

हिमवन्तविन्ध्या तोयान्ता प्रस्थिता निम्नगाम्बुभेः ।
सरिद्वरिष्ठेषु तीरेषु युक्तो मण्डलमालिखेत् ॥

अन्ये वा रहसि भूभागे उडये वा सुशोभिते ।
देवायतनरम्येषु स्तूपे चापि महोच्छ्रिते ॥

धातुगर्भे तथा चैत्ये वापीकूपासु वीथिकैः ।
तेषु तीरेषु सर्वत्र मध्ये चापि सुशोभितै ॥

गोष्ठे पद्मसरस्सर्वा क्वचित् तोयाश्रयोद्भवैः ।
अन्यैर्वा स्थानाग्रैर्नित्यं विहारारामभूषितैः ॥

यथेष्टमनसो तुष्टिः मुनिजुष्टे महीतले ।
पर्वताग्रैर्ग्रहैश्चापि कन्दरैः सानुचिह्नितः ॥

शान्तैरावसथैर्दिव्यैः ग्रहैश्चापि विजन्तुभिः ।
ध्यानानुकूलैः प्रशस्तैश्च ऋषिमुख्यैर्निषेवितैः ॥
यत्र वा मनसो तुष्टिः तत्र मण्डलमालिखेत् ।
एषु स्थानेषु वै नित्यं यथोद्दिष्टैः सुपूजितैः ॥
निपेतुर्देवताः क्षिप्रं सान्निध्यं चापि कल्पयेत् ।
तत्र स्थाने तदा नित्यं जपहोमक्रमो विधिः ॥
ये साध्या मन्त्रमुख्याश्च उत्तमाधममध्यमाः ।
सिद्ध्यन्ति मन्त्राः सर्वे वै सिद्धक्षेत्रेष्विहोदिते ॥
सिद्ध्यन्ति सर्वमन्त्रा सर्वे वै ज्येष्ठमध्यमकन्यसा ।
त्रिविधा हि भवे सिद्धिः त्रिविधैव क्रियाविधिः ॥
त्रिप्रकारस्तु मन्त्राणां त्रिधा कालप्रभेदतः ।
त्रिसन्ध्यं सर्वमन्त्राणां त्रिधा कर्मफलोन्मुखाः ॥
शान्तिकं कर्म निर्दिष्टं जयाख्ये मण्डले शुभे ।
विजयाख्ये तु पौष्ट्यर्थं अजिताख्ये चाभिचारुकम् ॥
अपराजिताख्ये तथा नित्यं निर्दिष्टं क्षुद्रकर्मसु ।
सर्वकर्मसु मन्त्रज्ञः तुम्बुराख्यं समालिखेत् ॥
पञ्चैव मण्डला ज्ञेया अभ्यासे तु निराङ्गनाम् ।
समन्ताच्चतुरश्रं वै उक्तिमात्रं खनेद् भुवि ॥
चतुर्हस्ताष्टहस्तं वा संशोध्य पाणिना पुनः ।
कठणः शर्कराङ्गारः तुषकेशमतस्कराम् ॥
कपालास्थिशकृदुष्टां संशोध्य पाणिना ततः ।
स्वयं चापि परैस्तत्र सर्वावस्करतां जपेत् ॥
कृमिजन्तुसमाकीर्णाः संशोध्यः यत्नतो व्रती ।
आपूर्यारन्यमृत्तिकैः शुचिभिश्च सुगन्धिभिः ॥
नदीकूलोद्भवैर्मेध्यैस्तथा वल्मीकाग्रसम्भवैः ।
गोष्ठभूतलयोर्मध्ये तदन्यैर्वा पार्थिवोद्भवैः ॥

सिकताभिः समन्ताद् वै सञ्छाद्य प्रसन्नधीः ।
अथवा गोमयमिश्रैर्वा मृत्तिकाभिः समन्ततः ॥

समन्तमालेपयेत् क्षिप्रं पञ्चगव्यसमाप्लुतैः ।
कुङ्कुमाक्तैस्तथा स्निग्धैः विविधैः गन्धमिश्रितैः ॥

मृत्तिकाभिः समन्ताद् वै मण्डलं तु समन्ततः ।
आलेप्य भुवि यत्ना वै मन्त्रविन्मन्त्रतन्त्रवित् ॥

पञ्चाङ्गिकचूर्णैस्तु विविधैः धूपवासितैः ।
आलिखेन्मण्डलं दिव्यं समन्ता चतुर्हस्तकम् ॥

अष्टहस्तप्रमाणं वा ज्येष्ठं मण्डलमुच्यते ।
चतुर्हस्तोऽथ कनिष्ठं मध्यमं परिकीर्त्यते ॥

पञ्चहस्तोऽथ विख्यातः षड् हस्तोऽथ मुक्तवाम् ।
सर्वेषां तु देवीनां सभ्रातृसहिनातगनाम् ॥

मण्डलप्रमाणमित्युक्तः समन्ता चतुरश्रितम् ।
चतुर्द्वारं चतुःकोणं चतुस्तोरणभूषितम् ॥

आलिखेन्मण्डलं दिव्यं प्रशस्तं चारुरूपिणम् ।
मध्ये कुमारमालिख्य बालरूपसुभूषणम् ॥

कुङ्कुमाकारवर्णाभं वाममध्येऽथ संस्थितम् ।
नीलोत्पलं समन्ताग्रकरलग्नोपशोभितम् ॥

दक्षिणे करविन्यस्तं श्रीमालं फलमायतम् ।
किञ्चिद्वरदं देवं मञ्जुघोषं महाप्रभुम् ॥

किंचिदुन्मीलिनाक्षं तु ईषित्प्रेक्षणदेवताम ।
दक्षिणेन समन्ताद् वै महोदधि समालिखेत ॥

तत्रस्था नावारूढं देव्यां भ्रातृपञ्चमाम् ।
आलिखेन्मन्त्रविद्यानां सुवेषां चारुरूपिणाम् ॥

विचित्राभरणविन्यस्तां विचित्रप्रहरणोद्यताम् ।
कुमार्याकारचेष्टानां सभ्रातृकुमारविक्रमाम् ॥

नौयानसमारूढां सभ्रातृसहपन्नगाम् ।
कर्णधारसमोपेतां तुरुचुरुः सार्थवाहिकाम् ॥
महोदधि समन्ताद् वै मण्डलाभ्यन्तरं स्थितम् ।
रूपाद्यै प्राणिभिर्युक्तं स्फाटिकं वारिपूजितम् ॥
आलिखेन्मण्डलं धीमां गुप्ते रहसि सर्वतः ।
यथा हि विधिनिर्दिष्टं तत्त्वं चापि कीर्त्तितम् ॥
तत् सर्वं कारयेत् क्षिप्रं लौकिकेष्वेव योजयेत् ।
यावन्ति शैवतन्त्रेऽस्मिं ये तन्त्रे चापि गारुडे ॥
ब्रह्माद्यैर्ऋषिमुख्यैश्च भृग्वङ्गिरसकाश्यपैः ।
मार्कण्डमुनिवरैश्चापि पुलस्त्यागस्तिसम्भवैः ॥
वासवैः शक्रदेवैश्च रुद्रेन्द्रसभास्करैः ।
विविधैः सत्त्वमुख्यैश्च यमाद्यैः प्रेतमहर्द्धिकैः ॥
ग्रहमातरकूष्माण्डैः यक्षराक्षसपूजितैः ।
मानुषामानुषे लोके चित्तनाथैर्महर्द्धिकैः ॥
पूजिता कल्पविस्तारा विष्णुरुद्रसवासवैः ।
कथिता कल्पमहात्म्यं निखिलाश्चैव भूतले ॥
तस्मिं मण्डले योज्या सिद्ध्यन्तीह न संशयः ।
विविधा योनिमुख्यैस्तु विविधाकारचेष्टितैः ॥
कथिता कथयिष्यन्ति देवीनां कल्पविस्तराम् ।
तस्मिं समये नियोक्तव्या जयाख्ये मण्डले मुनिरिति ॥

बोधिसत्त्वपिटकावतंसकान्महायानवैपुल्यसूत्रादा-
र्यमञ्जुश्रीमूलकल्पात् पञ्चचत्वारिंशतमः
पटलविसरात् प्रथमः चतुर्भगिनीमण्ड-
लमनुप्रवेशसमयगुह्यतमपटल-
विसरः परिसमाप्त इति ।

## अथाष्टचत्वारिंशः पटलविसरः ।

अथ खलु विजया नाम देवी तत्रैव पर्षदि सन्निपतिता सन्निषण्णाभूत्वम् । स स्वकं मण्डलोपचर्या साधनविधिं भाषयति स्म ॥

आदौ तावद् विविक्ते देशे प्रच्छन्ने रहसि पञ्चरङ्गिकचूर्णेन शुक्लकृष्णपीतरक्तहरितैः चूर्णैः पञ्चम्या शुभे सितकृष्णयोः पक्षे चतुर्थ्यां वा मण्डलमालिखेत् । चतुर्हस्तप्रमाणं समन्ताच्चतुरश्रं चतुःकोणं चतुस्तोरणभूषितम् । समन्तान्मण्डलमध्ये महोदधि समालिखेत् चतुर्मुद्रालङ्कृतम् । मध्ये सार्थवाहश्च मुद्रामण्डलाकारं इन्दुवर्णाभं पूर्वोत्तरे कोणे जया मुद्रा अर्धचन्द्राकारसितं दक्षिणपूर्वकोणे विजया मुद्रा तृकोणाकारं पीतनिर्भासं, पश्चिमदक्षिणकोणे अजिताया मुद्रं बन्धाकारं रक्तावभासं उत्तरपश्चिमकोणे अपराजिताया मुद्रं वज्राकारं कृष्णनिर्भासं सर्वतश्च मुद्राणां ज्वालामालिनः कर्त्तव्याः ॥

पूर्ववच्चौक्षसमाचारेण भूत्वा चतुःकोण चत्वारः पूर्णकलशाः स्थापयितव्याः आम्रपल्लवप्रच्छादितमुखाः सर्वव्रीहिरत्नपरिपूर्णगर्भाः । मध्ये तु सार्थवाहस्य तुम्बुरेः पञ्चमं कलशं तथैवाम्रपल्लवप्रच्छादितमुखं प्रत्यग्रवस्त्रावकुण्ठिताश्च कार्याः । तच्च तथैव बलिनिवेद्यपुष्पादयो यथा मुद्रास्तथैव कार्या । तद्वर्णश्च पुष्पधूपगन्धादयः तत् सर्वं तथैव कार्यम् । चतुर्दिशं च बलिः क्षेप्तव्या । अर्धरात्रे मध्याह्ने चाभिचारुके प्रत्यूषे पौष्टिके अपराह्णे शान्तिकमस्तं गते वा सवितरि कर्मत्रयं चापि यथाकालोपदिष्टमण्डलहोमजपसाधनेषु प्रयोक्तव्यम् ॥

शुचिनो दक्षशीलाश्च स्त्रीपुरुषादयः अव्यथिताश्च प्रवेशयितव्याः सरदारिकाश्च गुह्यमन्त्रधारिणो आदौ प्रवेशयितव्याः । प्राङ्मुखं स्थापयित्वा विजयाया मूलमन्त्रेणोदकमभिमन्त्र्य सप्ताभिमन्त्रितं कृत्वा सर्वेषामभ्युक्षिञ्चेत् । सकृदहोरात्रोषितानां शुचिवस्त्रप्रावृतानामष्टौ प्रभृति यावदेकं प्राङ्मुखं पश्चाद्द्वारेण प्रवेशयेत् प्रत्यग्रमुखप्रच्छादितां कृत्वा एकैकं विजयाया मुद्रं बद्ध्वा अञ्जलिं कृत्वा पीतपुष्प दत्वा क्षिपापयेत् । विजयाया मन्त्रं कृत्वा मुखमुत्साद्य मण्डलं दर्शा-

पयेत्। प्रदक्षिणं च कारापयेत्। सर्वेषां मुद्रां दर्शयेत्। ततोऽनुपूर्वतः सर्वे प्रवेशयितव्या यावदष्टाविति॥

पूर्वं तावद् देवीनामाह्वाननमन्त्रेण भ्रातृसहितानां मूलमन्त्रेण यथोचितैः पुष्पैरावाहयेत्। पूर्वं पश्चाद् धूपं दत्वा यथोचितं नमस्कारं कृत्वा यत्रोत्सहते शिष्यः स्त्रीपुरुषदारकदारिकां वा स तस्मिं मण्डले बहिरभिषेचयितव्यः राजवत् सर्वोपकरणैः यथाभिरुचितैर्वा मन्त्रं मण्डलाचार्यस्य तुष्टिर्येन वा तुष्येत तयाभिषेचयेत्। अभिषिच्य च एक वा त्रयो वा अभिषेचनीयः आर्याभिषेकेण। एकं च वक्तव्यम्। शृणु कुलपुत्रकुलदुहितुर्वा लब्धाभिषेकस्त्वमनुज्ञातः सर्वदेवताभिश्च सभ्रातृसहितैश्च स्वमन्त्रतन्त्रेषु यथेष्टं मण्डलमालिख्य स्वमन्त्राणां विधिनियमचर्याकल्पविस्तरां ददस्वेति वक्तव्यः। तदन्ये विद्याभिषेकेणाभिषेचयितव्या। द्वित्रयो वा जनाः। शेषास्तु स्वमन्त्रचर्यायाः शिक्षापयित्वा विसर्जयितव्या॥

ततो मण्डलाचार्येण चन्दनोदकेनाभ्युक्ष्य अर्घं दत्त्वा स्वमन्त्रेणैव धूपपुष्पादिभिः देवतां विसर्जयितव्या। सर्वं चोपकरणं आत्मना ग्रहेतव्यम्। गृह्य च स्वं प्रत्यंशं त्रितीयभागं सर्वमनाथेभ्यो दातव्यम्। शेषमुदके प्लावयितव्यम्। तं पृथिवीप्रदेशं सुलिप्तं कृत्वा सुशोभितं विगतरजस्कं यथेष्टतो गन्तव्यम्। यथा स्वमन्त्रचर्यासु च तथा शिक्षापयितव्याः। सर्वे शिष्याः प्रच्छन्ने रहसि विगतजनसम्पाते स्वदेवतामुद्रांश्च बन्धापयितव्याः। तैरेव मन्त्रैः पूर्वनिर्दिष्टैर्मन्त्रैः सुविशेषतः सर्वमन्त्रा सिद्धिं गच्छन्तीति॥

आशु सिद्धिक्रियायुक्तिमन्त्राणां च विशेषतः।
जयाख्ये मण्डले ह्युक्तं पूर्वनिर्दिष्टहेतुभिः॥

तत्कर्मविधिनिर्दिष्टः विजयाख्ये मण्डले शुभे।
द्वितीयं मण्डलमित्याहुः निर्दिष्टं तत्त्वार्थमन्त्रिभिः॥

विजया नामतो ज्ञेया सर्वकर्मार्थसाधिका ।
ईप्सितां साधयेदर्थां सर्वमन्त्रेषु मन्त्रवित् ॥

पूर्वं जप्तो मन्त्रस्तु सर्वकर्मेषु मानवी ।
तयात्मदेवता रक्षा विजयाया तु कीर्त्यते ॥

पराभवश्च विघ्नानां आरम्भश्च फलोन्मुखः ।
मण्डले विजयाख्ये तु द्वितीये सर्वार्थसाधने ॥

दर्शनान्मुच्यते पुंसः सर्वकिल्बिषमायतैः ।
जपाद् योगाच्च मन्त्रज्ञः पापशुद्धिश्च जायते ॥

पराभवश्चान्येषां मन्त्राणां तु भूतले ।
परिपक्षगतां देषां स्वदुष्टादुष्टयोनिजाम् ॥

नाशये तत्क्षणान्मन्त्री विजयाख्ये मण्डलावृतोः ।
सर्वकार्मिकमित्याहुः वश्याकर्षणभूतिकम् ॥

सफलं कर्मजं लोके पुष्टिशान्त्यर्थसाधकम् ।
सर्वार्थसाधको ह्येष मण्डलोदधिसम्भवो ॥

विजयाख्ये बहुमतः पुण्यः प्रशस्तः सोमपूजितो ।
नित्यं नित्यतमो पुण्यो मङ्गलो मघनाशनः ॥

सुरूपो रूपमन्तश्च धन्यः सर्वार्थसाधकः ।
लिखनान्मन्त्रिभिः क्षिप्रं ऊर्ध्वगामर्थसाधकमितिदिति ॥

अजितादेवमित्याहुः प्रसन्ना बुद्धशासने ।
मण्डलं प्रथमकं वै कथितं लोकपूजितम् ॥

पूर्वं रिपिवरैर्मुख्यैः कथितं लोकविश्रुतैः ।
अधुना च प्रवक्ष्येऽहं अजिताख्यं मण्डलम् ॥

यद्व तत् तथैव नियोजयेत् ।
किन्तु वर्णवरं रक्तं रक्तैश्चापि चूर्णकैः ॥

तथैव वलिपुष्पाद्यां गन्धधूपादिभिः क्रमैः ।
सर्वरक्तमयं वाग्मय्यग्रस्ताङ्गशोभनम् ॥

तथैव मुद्रां सर्वत्र भीमां चैव वियोजयेत् ।
बलिहोमक्रियायुक्तिः रक्तश्चापि नियोजयेत् ॥
कलशाश्चैव रक्ताणां रक्तवस्त्रांश्च नागयेत् ।
तथैव मुखवेष्टं वा रक्तच्छत्रं तथैव च ॥
आसनं शयनं यानं रक्तं चैव समालभेत् ।
तथैव रक्तमन्त्राणां स्त्रीपुंसार्थकारणम् ॥
रागार्थे आवृते मन्त्रां रागिणस्यैव युज्यते ।
नान्यमन्त्रेषु मन्त्रज्ञो धर्मिं कारेश कर्तृणाम् ॥
बुद्धिमन्तः सदारागी मन्त्रज्ञो मन्त्रमारयेत् ।
कामार्थे सम्पदं प्राप्ता वश्याकर्षणहेतुकम् ॥
प्राप्नुयात् सम्पदां सर्वां अजितारूये मण्डलेऽद्भुताम् ।
सर्वभूतवशार्थाय मण्डलं भुवि मुच्यते ॥
कथितं मन्त्रिभिर्नित्यं चित्तविक्षेपकारणात् ।
आकृष्य महोजं कर्म वश्या भौतिकचेष्टितम् ॥
विक्षिप्तचित्तो मर्त्यो वै आविष्टाविरलेक्षिताम् ।
दासभूतं समायातं सर्वज्ञासम्पतीच्छकम् ॥
विवशं वशमायानं किङ्करानुवशवर्तिनम् ।
तादृशं मानुषं दृष्ट्वा पुनरेव सम्प्रमोक्षयेत् ॥
स्त्रियं वा यदि वा पुंसं दारकं वाथ दारिकाम् ।
भूयोऽपि मूलमन्त्रेण अजितेनैव मोक्षयेत् ॥
पूर्वनिर्दिष्टकर्मैश्च विधियुक्तैर्महीतले ।
आलिखेन्मण्डलं भीमां सर्वदैव प्रयोजयेत् ॥
सफलं कर्म निर्दिष्टं समन्त्रं मन्त्रकर्मणि ।
पूर्वमन्यप्रयोगैस्तु साधयेद् विधिमुत्तमाम् ॥
साध्यमाना हि सिद्ध्यन्ते सर्वे माहेश्वरा गणाः ।
विधानज्ञापतो रूपं मुद्रं मन्त्रार्थतन्त्रता ॥

क्रियायोगप्रमाणं तु कथ्यमानातिविस्तरा ।
एतत् प्रमाणतो ज्ञेयं मण्डलेऽस्मिन् निबोधनाम् ॥
हस्ता च दष्टसप्ता वा षट्पञ्चचतुरस्तथा ॥
द्विहस्तहस्तमात्रं वा वृता मण्डलमुद्भवेत् ॥
ज्येष्ठमष्टस्तथा हस्तं सप्त षट् पञ्च मध्यमाः ।
चर्तुहस्तद्विहस्तं वा हस्तमात्रं तु कन्यसम् ॥
ज्येष्ठे शान्तिकं कुर्या तथा मध्ये तु पौष्टिकम् ।
आभिचारुकमन्त्रेषु कुर्यात् कन्यसमण्डले ॥
वश्यार्थे सर्वभूतानां नित्यं जम्भनमोहने ।
कुर्यात् सर्वकर्माणि जापी मन्त्ररतः सदा ॥
अजिताख्यं मण्डल निर्दिष्टं सर्वग्रहविमोक्षणम् ।
यत्र भूताः पिशाचाश्च ग्रहमातरपूतनाः ॥
दृष्टमात्रा वशमायान्ति नित्यं जम्भितमोहिताः ।
दर्शनान्मण्डले नित्यं क्षिप्रं गच्छान्ति वश्यतामिति ॥
अपराजिता तु देव्या वै प्रणम्य जिनवरात्मजम् ।
वज्रकं गुह्यकेन्द्रं तु मञ्जुघोषं सुभूपणम् ॥
सर्वां बुद्धसुतांश्चैव महौजसाम् ।
सभ्रातृपञ्चमां देवीमिमां वाचमुदीरयेत् ॥
अहमप्येवंविधं कार्यं मण्डलार्थेति युक्तिजम् ।
वव्रे च शुभसङ्गीतं युक्त्यर्थाक्षरसंसृष्टिरेप प्र ॥
महाप्रभावं महौजस्कं दुर्दान्तदमकं मतम् ।
सकृष्णं कृष्णवर्णाभं कालरात्रिसमप्रभम् ॥
यमदूताख्यवर्णाभं ।
साक्षाद् विवस्वतं घोरं परप्राणहरं भयम् ॥
यथावत् पूर्वनिर्दिष्टं देवीनां तु मण्डले ।
तथैव तत् कुर्यात् सर्वं वर्जयित्वा तु वर्णतो ॥

श्मशाने नित्यमालेख्यं पुरे दक्षिणतः सदा ।
सधूमे ज्वालामालीढे अस्थिकङ्कालवेष्टिते ॥
मध्यस्थे सवस्तजे देशे तत्रस्थें तु महीतले ।
श्मशानभस्मना लेख्यं कृष्णवर्णे तु भूतले ॥
यथैवं पूर्वनिर्दिष्टं मन्त्रैरर्चविधिक्रमम् ।
तत् सर्वं क्षिप्रतो मन्त्री सर्वं चैव नियोजयेत् ॥
स्वमन्त्रं मन्त्रनाथं च तुम्बुरुं सार्थवाहकम् ।
महोदधिसमावृताम् ॥
अजितायामाशु निर्दिष्टा विजया खड्गपाणिनी ।
धनुर्हस्तां सदा देवी जया तामभिनिर्दिशेत् ॥
विचित्रप्रहरणा ह्येता विचित्राभरणभूषिता ।
विचित्रगतिसत्त्वाख्या विचित्रा वेषचेष्टिता ॥
आलिख्य मण्डले ह्यत्र कृष्णवर्णा तु भूतले ।
परप्राणहरं ह्येतत् मण्डलं भुवि चेष्टितम् ॥
विविधार्थक्रिया मन्त्रा विविधा कर्ममुद्भवा ।
तत् सर्वं पूर्ववत् कृत्वा पश्चात् कर्म समारभेत् ॥
जपहोमक्षया मन्त्रा मण्डलांश्चैव दर्शनम् ।
प्रवेशं मण्डले ह्यस्मिन् तत्पूर्वं विधिर्मुद्भवैः ॥
एष संक्षेपतो ह्युक्तः कथ्यमानोऽतिविस्तरम् ।
मण्डलं देविमुख्यायाः कन्यसाया तु कीर्त्तितम् ॥
अपराजिताख्यनामतः ज्ञेयो मण्डलं भुवि विश्रुतम् ।
अजितं सर्वतः पूर्वं राक्षसेश्वरकिन्नरैः ॥
भूतैर्दैत्यमुख्यैस्तु यममातरसग्रहैः ।
कूष्माण्डे व्यन्तरैश्चापि पिशिताशैः सपूतनैः ॥
तन्त्रे तु सर्वतो मन्त्रैः क्रव्यादैस्तु सकश्मलैः ।
असुराध्यक्षैः महाघोरैः सर्वभूतमहोदयैरिति ॥

अथ तुम्बुरुः सार्थवाहो वैस्त्रं मण्डलमभाषयम् ।
तुम्बुराख्यं नामतो मर्त्या वज्रभृक् तं निबोधताम् ॥
पूर्वनिर्दिष्टमित्याहुः पुनरेव महीतले ।
प्रणम्य वज्रिणं मूर्ध्ना इमां वाचमुदीरिरे ॥
सर्वं पूर्वनिर्दिष्टं मण्डलं चतुरोदयम् ।
प्रथमं सर्वकर्मान्तं द्वितीयं तु इहोच्यते ॥
व्यतिमिश्रं तथा युक्त्या अनुपूर्वमिहागतम् ।
मण्डलं चतुराख्यं तु सर्वभूतप्रसाधकम् ॥
शून्यवेश्म तथा नित्यं शून्यदेवकुले सदा ।
प्रच्छन्ने रहसि विस्रब्धे स्वगृहे वात्वरकेऽपि च ॥
विचित्रैरङ्गनेपथ्यै विचित्रैश्चारुपूर्णकैः ।
पञ्चरङ्गिकचूर्णैस्तु विविधैर्वा फलोद्भवैः ॥
शालितण्डुलपिष्टैस्तु विचित्रैरङ्गमुज्ज्वलैः ।
शुक्लचूर्णैस्तथा युक्तैः चन्दनागरुधूपितैः ॥
विमिश्रैश्चन्दनचूर्णैस्तु कुङ्कुमागरुयोजितैः ।
कर्पूरकस्तूरिकासिक्तैः प्रियङ्गुकेशरादिभिः ॥
स्पृक्कासीरसमायुक्तैः कृष्णागरुसुधूपितैः ।
चूर्णैर्विविधगन्धैर्वा नित्यं मण्डलमालिखेत् ॥
त्रिःस्नायी जपहोमी च त्रिचेलपरिवर्तिनः ।
व्यतिमिश्रपक्षे तथा मन्त्री सितासितसुचिह्निते ॥
यथेष्टं तिथिनक्षत्रे नित्यं मण्डलमालिखेत् ।
चतुर्हस्तप्रमाणं वै यथोक्तं विधिपूर्वके ॥
तत् सर्वमालिखेद् धीमां मन्त्रं यत्नाद्धि चेतसा ।
चतुःकोणं चतुर्द्वारं चतुस्तोरणसंयुतम् ॥
मध्ये सरिपतिर्नित्यं मण्डलेऽस्मिं समालिखेत् ।
मध्यस्थं पद्ममारूढं धर्मचक्रानुवर्तिनम् ॥

शाक्यसिंहं महावीरं मन्त्री बुद्धं समालिखेत्।
शेषं मुद्रवरैः क्षिप्रं सम्भ्रातृसहपञ्चगम्॥

आलिखेत् सर्वतो मन्त्री चतुःकोणे तु सर्वतः।
ज्येष्ठात् पश्चिमे तस्थौ अथस्तात् बुद्धस्याम्बुधेः॥

तुम्बुरे मुद्रमालेख्यं सितवर्णोऽथ सर्वतः।
सर्वे शुक्लवर्णाभा कुन्देन्दुशशिप्रभा॥

कुमुदाकारसङ्काशा सर्वेवस्तुशुक्लका।
पूर्वनिर्दिष्टप्रयोगेन देवीनां तु विधानवित्॥

तत् सर्वं कुर्यान्मन्त्री सर्वकर्मार्थसाधनमिति।
यथैव मण्डलं सर्वपटे स्मित प्रयोजयेत्॥

त्रिविधं पटनिर्दिष्टं मण्डलेऽस्मिन् यथाविधि।
शेषं यथेष्टवत् कुर्यात् पटमण्डले भूतले॥

आलेख्यं मन्त्रतन्त्रेऽस्मिन् यथाविहिते गते।
फलके पट्टके वापि यथाकाष्ठसमुद्भवैः॥

आलेख्याः देवताः सर्वे सभ्रातृसहपञ्चमाः।
यथैव मण्डले सर्वे तत् सर्वं आलिखेत् पटे॥

अम्बरे वापि निर्दिष्टं यथोचितसमुद्भवे।
निर्दिष्टं पटमन्त्रज्ञैः प्रतिमानां तु कीर्त्यते॥

चन्दनं मलयमित्याहु रागं चापि सकेसरम्।
पुन्नागं चैव मन्त्रज्ञैः नित्यं प्रतिमासु योजयेत्॥

पियालं पद्मकं विन्द्यात् रोध्रकाष्ठं महीतले।
सरलं देवदारुं च काश्मीरं चैव सघण्टकम्॥

कुटजार्जुनजम्बूकं प्रियङ्गुष्ठोमकोद्भवम्।
रक्तचन्दनकाष्ठं तु विशेषात् पटमुच्यते॥

प्लक्षोदुम्बरकाष्ठं च सहकारं विशेषतः।
पुण्डरीकं ससर्जं वै सिन्दुवारं सिद्धोद्भवम्॥

वकुलं तिलकं चैव काष्ठं सप्तच्छदं तथा ।
विविधा वृक्षजातीनां पुंसस्त्रीनपुंसकाम् ॥
सर्वेषां ग्रहणं काष्ठे मूलगण्डे ततोर्ध्वगम् ।
शाखासु सर्वतो ग्राह्या मधुकस्तिलककाष्ठयो ॥
पिचुमन्दं तथा काष्ठेऽरिष्टे भूततरौ तथा ।
पुत्रञ्जीवककाष्ठेषु नित्यं चैवाभिचारुके ॥
अश्वत्थे शान्तिकं विन्द्यात् काम्रे चापि महीतले ।
पौष्ट्यर्थं काष्ठमित्युक्तं अशोकं शीर्षमेव वा ॥
सर्वकर्माणि सर्वत्र सर्वकाष्ठेषु योजयेत् ।
मूलकाष्ठेन प्रतिमाया मूलनक्षत्रयोजिता ॥
ततस्तम्भकृते काष्ठे ज्येष्ठनक्षत्र योजयेत् ।
ततः शाखाकृतं काष्ठं सर्वनक्षत्र योजयेत् ॥
ततोर्ध्वनक्षत्ररेवत्या इन्दुवारेण कारयेत् ।
मूल आदित्यवारे वै स्तम्भः शुक्राग्रमीक्ष्यते ॥
सर्ववारैस्तथा मुख्यैः सर्वग्रहगणादृते ।
मूले रसातलं गच्छेत् आसुरिं तनुमाविशेत् ॥
ततस्तम्भकृतैः काष्ठैः गाण्डैश्चापि समुद्भवैः ।
वश्याकर्षणभूतानां जम्भस्तम्भअमोहनाम् ॥
कुर्यादाभिचारं वै तेषु प्रतिमा समाविशेत् ।
ततोर्ध्वं नभस्तलं गच्छेदूर्ध्वकाष्ठसमुद्भवैः ॥
प्रतिमां देव्य समायुक्ते सुरयानसमाश्रयाम् ।
शाखासु सर्वतो गच्छेदन्तर्धानसुखोदयाम् ॥
दिशां च सर्वतो मन्त्री यथेष्टं वा कर्म समारभेत् ।
काष्ठाः सर्वे तु निर्दिष्टाः प्रातिमालक्षणमिष्यते ॥
नौयान च समारूढा देव्याकारसुभूषिताः ।
कुमार्याकारचिह्नस्तु पञ्चचीरकमूर्धजाः ॥

तथैव करविन्यस्तौ मण्डलेऽस्मि हि बोधिताः।
तुम्बुरुः सार्थवाहो वै कर्णधारो महाद्युतिः॥
करवालकरन्यस्तो वाहमन्तोऽथ सव्यके।
तिर्यमानगता गन्धा व्यङ्गुल्यङ्गुलाङ्गना॥
दीर्घशो वितस्तिमात्रं वा नावं चैव सुकारयेत्।
सुसृष्टं श्वेतसङ्काशं शङ्खेन्दुधवलसन्निभम्॥
जया कारयेद् धीमान् तुम्बुरुं च विशेषतः।
विजयां पीतनिर्भासामजितां चैव सुरक्तिकाम्॥
अपराजिता कृष्णवर्णा वै शुक्लां चैव अनामिकाम्।
प्रसन्नां तुम्बुरुमूर्त्या जयां चैव विनिर्दिशेत्॥
ईषिद्भ्रुकुटिनो देव्या विजया चापराजिता।
अजिता सौम्यवेशा तु कर्तव्य थ सर्वतः॥
अङ्गुष्ठपर्वमात्रं वा कन्यसाङ्गुलिमात्रता।
सर्वाः प्रमाणवेषाख्या कथिता सर्वमन्त्रिणैः॥
दन्ती भोगगदा ख्याता सौवर्णपार्थिवोद्भवाः।
पृथिव्यामधिपत्योर्वा कुर्यामेतां सुशोभनाम्॥
रौप्यं ताम्रमयीं वापि प्रतिमा ख्याता वशावहा।
आकर्षणं च भूतानां कांसी ह्युक्ता महीतले॥
त्रपुसीसकलोहैश्च प्रतिमा ह्युक्ताभिचारुके।
समारै रत्नविशेषैश्च प्रवालस्फटिकसम्भवैः॥
कुर्यात् प्रतिमां सौम्यां आशु सिद्धिलिप्सुभिः।
कपालास्थिमयैः प्रतिमैः कर्म कश्मलजाद्भवम्॥
शृङ्गैः विविधमुख्याद्यैः यथान्यस्तार्थलाभिनाम्।
सिद्ध्यन्ते सर्वमन्त्रा वै क्षुद्रमन्त्राश्च भूतले॥
यथासम्भवतो लाभा यथाप्राप्तार्थसम्भवा।
सिद्ध्यन्ते सर्वतः कृत्वा प्रतिमाभिश्च योजिता। इति॥

अथ तुम्बुरुः सार्थवाहः सर्वेषां साधनविधानं समाचक्षते सामान्यतः। दन्तमयीं प्रतिमां कृत्वा देवीनां कन्यसाङ्गुलिप्रमाणामतिगुप्ते प्रदेशे आहूय मूलमन्त्रैः नागहस्तेन धूपं दत्वा जयाया मूलमन्त्रं जपेत्। अष्टसहस्रमष्टशतं वा जपं कृत्वा मनसेप्सितं तत् सर्वं स्वप्ने कथयति। त्रिसन्ध्यं सप्तदिवसानि जपः कर्तव्यः। यथेप्सितं तत् सर्वं सम्पादयन्ते। वश्याकर्षणग्रहविमोक्षणादीनि सर्वाणि क्षुद्रकर्माणि कुर्वन्ति। यथेष्टं वा सत्त्ववशीकरणे उत्तमसाधनादिषु कर्माणि निमित्तानि दर्शयति। जातीकुसुमैर्देवीनां प्रतिमां ताडयेत्। राजा वश्यो भवति। जातीकलिकैः देवीनां प्रतिमां ताडयेत्। अष्टशतवारां पञ्चकलिकाभिः त्रिसन्ध्यं सप्त दिवसानि। यामिच्छति राजकन्यां महाधनोपेतां वराङ्गरूपिणीं तां लभते। जातिपुष्पैः पञ्चभिः कुसुमैः प्रतिमा एकैका आहन्तव्या त्रिसन्ध्यं सप्तदिवसानि अष्टशति। यामिच्छति वराङ्गनां तां लभते। तामेव प्रतिमामादाय मूर्धनि धारयेत्। केशावृतं कृत्वा भर्ता चास्य दासत्वेनोपतिष्ठति। ऊरुमध्ये संन्यसेत्। परमसौभाग्यं लभते। गृहीत्वाध्वानं व्रजेत्। चोरैर्न मुष्यते। परबलं दृष्ट्वा स्तम्भयति। सङ्ग्राममवतरेत्। शस्त्रैर्न हन्यते। अरिं मोहयाति। परसैन्यं हस्त्यश्वरथपर्यटतीं स्तम्भयति। अञ्जनमभिमन्त्र्याक्षीणां जपेत्। यं प्रेक्षति सोऽस्य दासभूतो भवति। गोरोचनामभिमन्त्र्य आत्मवक्त्रे तिलकं कृत्वा यं प्रेक्षति सोऽस्य वशो भवति। यावत् तिलकस्तिष्ठते। तावन्मैथुनेऽव्यवच्छिन्नरतो भवति॥

एवं वस्त्रभूषगन्धमाल्यपुष्पोपकरणविशेषांश्च यज्ञोपवीतदण्डकमण्डलुकाष्ठोपानहाशयनयानासनभोजनादिषु सर्वोपकरणविशेषां सप्ताभिमन्त्रितां कृत्वा आत्मना परैर्वा कारापयेत्। सर्वसत्त्वा वश्याभवन्ति किङ्करानुवर्तिनः। मापजम्बुवर्तिकां सप्ताभिमन्त्रितां कृत्वा प्रच्छन्ने स्थाने देवीनामग्रतः अग्नौ अष्टसहस्रं जुहुयात् त्रिसन्ध्यं सप्त दिवसानि सर्वे रण्डाः सर्वे डाकिन्यः सर्वे भूतग्रहाः सर्वे च कश्मलाः वशा भवन्ति। किङ्करानुवर्तिनो योजनशतगमनागमने च गोमूत्रेण पिष्ट्वा पूर्वाह्णे पिण्डारकवन्दकं आम्रवन्दकं च गृह्य सहस्रसम्पादितं

कृत्वा पादं लेपयेत् । दिव्योदकेन उगोप्रोदकेन वा सर्वकर्मसु योज्य सर्वपूजितेषु च कल्पेषु परमन्त्रविधानेनापि । किन्त्वयं विशेषः । यत्र मण्डले सार्थवाहस्य तुम्बुरुर्भगिन्यां धर्मस्वामी बुद्धः सर्वसत्त्वानामग्रः शाक्यमुनिरभिलिखितः तस्मिं मण्डले द्यूरागतस्य कर्माणि कर्तव्यानि । आशु सर्वकर्माणि सिद्ध्यन्तीति । दशसहस्राणि पूर्वसेवाजापः कार्य इति ॥

जया स्वकल्पं भाषते । मरकतेन्द्रनीलपद्मरागस्फटिकादिभिः प्रवालाङ्कुराश्मवैदूर्यरत्नविशेषैः सुवर्णरूप्यमयैर्वा प्रतिमां कृत्वा देवीनां कन्यसाङ्गुलप्रमाणां यवफलाग्रं वा मुक्ताफलं वा प्रतिमां कृत्वा नौयानसमारूढा चतुर्भगिनीनां सभ्रातृसहितानामन्तशः प्रतिमां कृत्वा पूर्ववद् यथाभरणप्रहरणविशेषाणां देवीनां शुचौ देशे चन्दनकुङ्कुमकर्पूरोदकाभ्युषिक्ते तैरेव मण्डलं कृत्वा अतिगुप्ते स्थाने मार्गशीर्षमासे कार्त्तिकपूर्णमास्यां वा अन्ये वा सितपक्षे प्रातिहारककुसुमागमे अन्ये वा शुक्लेऽहनि प्रशस्ते तिथौ चन्द्रभार्गववारे रोहिणीरेवत्यनुराधाज्येष्ठनक्षत्रा भिक्षाहारेण उदकसक्तवाहारेण वा हविः फलभक्षणे वा मोचाम्रफलसनालिकेरैः पूर्वं जयायाः अक्षरलक्षं जपेत् । जप्ता कृतपुरश्चरणः तथागतबिम्बोद्गममण्डलं तुम्बुरुदेष्ट्रा कृतरक्षः शुक्लाम्बरधरः स्रग्वी मालतीकुसुमावबद्धशिरस्कः अहोरात्रोषितो भूत्वा साधनमाविशेत् । पूर्ववदर्घं कृत्वा जातीकुसुमार्घं महाकृष्णपापिण्डीतगरनागकेसरपुन्नागैर्वा धूपनामन्यतमेन नवैर्वा महतीं पूजां कृत्वा मालतीकुसुमानां पञ्च पञ्च गृहीत्वा देवीनां ताडयेत् । सभ्रातृसहितानां लक्षत्रयेण । षड्भिः मासैः विद्याधरो भवति । क्षणेन ब्रह्मलोकमपि गच्छति । दिव्यरूपी यथेष्टगतिरन्तरकल्पं जीवति । अन्यकल्पविधानेनापि सर्व[illegible] ॥

अजिता स्वकल्पं भाषते विजया चैव मन्त्रिणी । उभावप्येतौ महादेव्यौ स्वमन्त्रयोनिजौ सर्वकर्माणि कुर्वन्ति पूर्ववत् । किन्तु एतेषामयं विशेषः । विजयायाः पीतपुष्पैः अजितायाः रक्तपुष्पैः तद्वर्णैश्चोपकरणविशेषैः सर्वकर्माणि साधयेत् । विजयाप्येवमाहुः । प्रतिमा पीतरक्ता कार्या । पूर्ववत् तथागतमण्डलं कृत्वा तुम्बुरोः सार्थ-

वाहस्य अजितायास्ताम्रमयी रक्तचन्दनमयीं वा मम कल्पे तु रूप्यरागमयी पीतनिर्भासः गोरोचनकुङ्कुमाक्ता च कार्या । तथैव सर्वं पूर्वनिर्दिष्टम् । उभौ परस्परतः देव्यावेवमाहुः । विजया अजिता च । यथाभिलषितमनसेप्सितं सर्वकर्माणि साधय इति ॥

अपराजिता एवमाह । अहमपि कल्पं भाषे । यन्मयोदितं मण्डलेऽस्मिं सर्वं तथैव कर्तव्यं स्वमन्त्रेणैव । श्मशानाङ्गारेण श्मशानभस्मेना वा देवीनां प्रतिमां लिख्य कृष्णपुष्पैरभ्यर्च्य शत्रोर्नामं गृह्य जपेत् गुह्ये प्रदेशे श्मशाने वा । तत्क्षणान्म्रियते । उन्मत्तको वा भवति । अपस्मारेण वा गृह्यति । गोत्रोत्सादनं वा करोति । साधकस्येच्छया तत्रैव श्मशाने महामांसं जुहुयात् । अरीन् नाशयति स्तम्भयति शोषयति महाराक्षसेन गृह्णापयति गोत्रोत्सादं वा करोति साधकस्येच्छया । सर्वविषयजनपदं महामार्योपसर्गेण गृह्णापयति पुनः स्वस्थीकरोति । एवं सर्वकर्माणि क्रूराणि परप्राणहराणि सद्योपघातानि । कृष्णपक्षे चतुर्दशीनवम्यष्टमीषष्ठीचतुर्थ्यादिभिस्तिथौ कार्याणि । आदित्याङ्गारकशनैश्चरवारैरहोभिः सर्वकर्माणि सिद्ध्यन्ति । अयत्नेनैव श्मशानाङ्गारं गृह्य चण्डालकपाले नाममालिखेत् प्रतिबिम्बं वा स्त्रियः पुरुषस्य वा लिखेत् । तत्क्षणादेव सन्ध्यन्ति । भगेऽङ्गुलिं दत्वा च प्रतिबिम्बे कपालस्थे तत्क्षणाद् दह्यमाना स्त्री आगच्छति योजनशतादपि । कपालं गृह्य जपद् अदृश्यो भवति । कज्जलं गृह्य अक्षिण्यञ्जयेत् । मदनाग्निना दह्यमाना स्त्री आगच्छति । सर्वकर्माणि कर्तव्यानीति ॥

एवमुक्ता देव्यो भगवन्तं याचयन्ति स्म । तद् वदतु भगवां धर्मस्वामी बुद्धो स्वमन्त्रं च । या चास्माकमनुकम्पार्थं सर्वसत्त्वानां च हिताय सुखाय स्वमन्त्रचर्यात् ॥

अथ भगवां तथागतः शाक्याधिराजतनयः तां कन्यांमीषदवलोक्य भ्रातृसहितामिमां वाचमुदीरयन्ति स्म । न यूयं कन्यका भ्रातृपञ्चमा तथागतस्य गुणमहात्म्यं मन्त्रचर्याप्रभावं श्रोतुं चर्यां वा प्रतिपद्येतुम् । कोऽन्य सदेवके लोके सश्रमणब्राह्मणिकायां पूजायां श्रोतुं चर्यां वा प्रतिपद्येतुम् । वर्जयित्वा उत्पादितबोधिचित्तानां

दशभूमिप्रतिष्ठितेश्वराणां बोधिसत्त्वानां सर्वमन्त्रचर्यानिर्हारसमनुप्रवेशसर्वतथागतज्ञानमायाप्रतिविशिष्टमूर्ध्वजः कोऽन्यः शक्तः श्रोतुं ज्ञातुं वा निर्देशं मन्त्रचर्यासमनुप्रवेशमाचक्षितुं सर्वसत्त्वानां च प्रकाशयितुम्। वर्जयित्वा तथागतानामर्हतां सम्यक् सम्बुद्धानां तत्प्रतिपन्नानां च सत्त्वानामुत्पादितबोधिचित्तानाम्। न यूयं कन्यकाः! शक्यथ। तेन हि बोधिचित्तमुत्पादयध्वम्। सर्वसत्त्वानामन्तिके मैत्रचित्ता हितचित्ता भवथेति ॥

एवमुक्त्वा ताः कन्यकाः तृशरणपरिगृहीताः उत्पादितबोधिचित्ताश्च निषण्णा धर्मश्रवणाय तूष्णीम्भूता इति ॥

आर्यमञ्जुश्रीमूलकल्पात् बोधिसत्त्वपिटकावतंसकात् महायानवैपुल्यसूत्रात्
षट्चत्वारिंशतिमः पटलविसराद् द्वितीयसाधनोपयिक-
मण्डलप्रवेशानुविधिश्चतुःकुमार्यपटलविसरः
परिसमाप्तमिति।

---

## अथैकोनपञ्चाशः पटलविसरः ।

अथ ता देवता भगवन्तं शाक्यमुनिं सर्वांश्च बोधिसत्त्वां सर्वश्रावकप्रत्येकबुद्धांश्च त्रिः प्रदक्षिणीकृत्य शिरसा प्रणम्य बुद्धं भगवन्तं निरीक्षमाणाः स्थिताः अभूवं निरीक्षमाणाः समन्त्रतन्त्रकल्पविस्तराणि च । भाषन्ते स्म स्वमुद्राणां चौषध्यो यथाभिमतं भाषन्ते स्म । अनुज्ञाता तथागतेनार्हता सम्यक्सम्बुद्धेन सत्त्वानामर्थाय सर्वमुद्रामन्त्रपटलविसरं भाषते स्म स्वकं स्वकं मुद्रापटलमोषधीनां च कल्पं भाषन्ते स्म ॥

तुम्बुरुः सार्थवाहो एवमाह — "आदौ तावद् गन्धेन हस्तावुद्वर्त्य चन्दनमिश्रेण वान्यैर्वा सुगन्धजातिभिर्देवीनामग्रतः प्राङ्मुखः स्थित्वोदङ्मुखो वा वामहस्तेन दक्षिणहस्ताङ्गुष्ठं मुष्टियोगेन गृहीत्वा अवसव्येन भ्रामयित्वा नाभिदेशे स्थापयेत् । मुष्टियोगेन शिरःस्थाने वा न्यसेत् । एष भगवं! तुम्बुरेः सार्थवाहस्य समयमुद्रा मम । तदेव हस्तौ कर्मार्थसाधका वामहस्तेनाङ्गुष्ठमभ्यन्तरे प्रक्षिप्य दृढं प्रगृह्य मुष्टियोगेन नाभिदेशे न्यसेत् । एष भगवं! मम जयाया मुद्रा सर्वकर्मकरा । तदेव मुष्टिं तर्जन्यां विकास्य तर्जयेत् । दक्षिणां दिशि सर्वविघ्ना प्रनश्यन्ते । एष द्वितीयो महामुद्रः द्वितीयमङ्गुलिमुत्क्षिप्य पश्चिमां दिशि प्रावर्जयेत् । एष द्वितीयो महामुद्रः सर्वदुष्टा नागां स्तम्भयाति निर्विषीकरणे च प्रयोक्तव्यः । तृतीयमङ्गुलिमुत्क्षिप्य उत्तरायां दिशि आवर्जयेत् सर्वयक्षयक्षीकिन्नरमहोरगकूष्माण्डाश्च वश्या भवन्ति । आकृष्टा एषा तृतीया महामुद्रा भवति । सर्वाशापारिपूरिका । सर्वकर्माश्चाभिमुखा भवन्ति । चतुर्थमङ्गुलिं विकास्य अभ्यन्तरस्थितमङ्गुष्ठं सङ्कोच्य हस्ततले पूर्वायां दिशि आवर्जयेत् । सर्वे देवा वश्या भवन्ति । देवानामग्रतः प्राङ्मुखो भूत्वा दर्शयेत् । सर्वभूता वश्या भवन्ति । सर्वसत्त्वानां च प्रियो भवति । एषा चतुर्थी महामुद्रा सर्वकामफलप्रदा । द्वौ हस्तौ संयम्य सर्वमङ्गुलिं विकास्य अञ्जल्याकारेण मूर्धन्यास्पृशेत् । ऊर्ध्वमधश्चावलोकयेत् । आब्रह्मस्तम्बपर्यन्तात् । अधश्च रसातलम् । सर्वदेव-

दानवां वशमानयति । एष पञ्चमो महामुद्रः सर्वकर्मार्थसाधकः ।
एतदेव भगवं! पञ्च महामुद्रा सर्वकामफलप्रदा भवती"ति ॥

विजया एवमाह—"पञ्च एव भगवं! मम महामुद्रा भवन्ति। वामहस्तेनाङ्गुष्ठाभ्यन्तरं कृत्वा यथा नखा न दृश्यन्ते तथा कार्यं दृढं मुष्टिं कृत्वा प्रहारमार्जनयोगेनाधः अवलोकयेत्। एष प्रथमा महामुद्रा। द्वितीयमपि ऊर्ध्वमवलोकने। तृतीयं दिग्दक्षिणमवलोकने चतुर्थं सर्वदिग्ग्रहणे। पञ्चमं शिरसि न्यस्तम्। इत एव पञ्चमहामुद्रा सर्वकामफलप्रदा भवन्ति" इति ॥

अजिता एवमाह—"उभौ हस्तौ संयम्य उभौ अङ्गुष्ठमध्ये प्रक्षिप्य सुषिराञ्जल्याकारं कृत्वा मध्यमाङ्गुलिसूचिकौ कन्यसाङ्गुलिमुच्छ्रितौ पार्श्वाकारं कृत्वा उभौ तर्जन्यौ तथैव चानामिकावबध्य अजिता नाम महामुद्रा भवति। दुर्दान्तदमका पुण्या सर्वकर्मार्थसाधकः। तदेव मुद्रं दक्षिणां दिशि मावर्जयेत्। द्वितीया महामुद्रा विजया नाम भवति। एवं पश्चिमायां दिशि मावर्जयेत्। जया नाम महामुद्रा भवति। एवमुत्तरायां दिशि मावर्जयेत्। अपराजिता नाम भवति महामुद्रा। एवं पूर्वायां दिशि मावर्जयेत्। महासार्थवाहो नाम महामुद्रा भवति। एत एव पञ्चमहामुद्राः सर्वाशापारिपूरका भवन्ति" इति ॥

अपराजिता एवमाह—"पञ्च एव भगवं मम महामुद्रा भवन्ति। पूर्ववत् हस्तौ प्रक्षाल्य कृष्णपक्षे बन्धयितव्याः। तेनैव विधिना यथा साधनेऽस्मिं तथा योज्याः। दक्षिणाभिमुखं स्थित्वा देवीनामग्रतः उभौ हस्तौ संश्लिष्य मध्यमानामिकातर्जन्यादिभिः त्रिसूच्याकारं त्रिशूलं कृत्वा कनिष्ठिकाङ्गुलिमध्यमङ्गुष्ठौ च मध्ये प्राक्षिप्य हस्ततलेऽस्मिं मूर्ध्नि स्थाने तदा न्यसेत्। प्रथमं महामुद्रः अपराजिता नाम एवं सर्वे प्रयोक्तव्याः। यथा अजितायाः। यन्नामिका भगिन्यः भ्रातृसहिताः तन्नामकाः सर्वेषां महामुद्रा भवन्ति। यदेष हस्ततले एतत् सागरम्। यदेतदङ्गुष्ठं यद् भ्रातुस्तुम्बुरोः यदेतदङ्गुल्यः सर्वे भगिन्यः अनुपूर्वसंज्ञकाः। तर्जनी जया मध्यमा विजया अनामिका अजिता कन्यसा अपराजिता। एतदनुपूर्वक्रमेण पञ्चयामेव

योज्यः । ध्याताः नमस्कृताश्च सान्निध्यं कल्पयन्ति । चिन्तिता नाचिन्तिता मुद्रा भवन्ति । सर्वकर्मकराः सर्वाशापरिपूरकाः विषमस्थे चिन्तायितव्या महामुद्राः । भयं न भवति" इति ॥

तुम्बुरुः सार्थवाह एवमाह— "अथेषां सामान्यतः अगदाभिधानं भवति । अस्माकं च ओषधीनां प्रभावो येन वश्या भवन्ति सर्वभूताः । कतमं च तत् । अश्वत्थन्यग्रोधशृङ्गां गृहीत्वा क्षीरेण पीषयित्वा गोक्षीरेणालोड्य सितपक्षे अश्विनिनक्षत्रेण इन्दुवारे तिथौ सप्तम्यां पूर्वाह्णे ऋतुमत्याः स्त्रियाया अप्रसवनधर्मिन्याः सार्थवाहमन्त्रेण परिजप्य सप्तवारां तथैव मुद्रां बध्वा पाययेत् पूर्वाभिमुखां कृत्वा नारी गर्भं ग्रहेष्यते । पुत्रं जनयते दीर्घायुष्यं सुपतिना च सह स्वप्तव्यम् । तेषामेव मूलं गृहीत्वा मूलनक्षत्रेणोत्तरायां दिशि गतायां शिलायामादित्यवारेण सूक्ष्मचूर्णानि कारयेत् । यस्य ददाति स वशो भवति आहारपानभोजनादिषु गन्धमाल्यताम्बुलादिषु प्रयोक्तव्यम् । यथा शरीरेषु विशति तथा कार्यम् । स्पृशति वाचा सत्त्वेनोपतिष्ठति । तदेव शृङ्गौ तेनैव विधिना यथा स्त्रिया तथात्मना पिबेत् । स्त्रीशतमपि गच्छति अव्यवच्छिन्नरेतः । तथा स्त्रियामपि बृहल्लिङ्गतामभिनिर्वर्त्तयति । गोजरुकः शतपादी वा नरशङ्कफलानि तथैव चूर्णमिदं पयसा सह पेयं यस्य गृहे प्रमदाशतमस्ति । एवमनेन प्रकारेण पूर्वमूलां स्वमुद्रां मन्त्रेणोपेताः वजयित्वा विषमुपविषं च सर्वं योज्यम् । सर्वकर्मिषु च सर्वभूतानां वशीकरणमुत्तमं साधनीयाश्चे"ति ॥

जया एवमाह—"जयन्तीमूलं गृह्य तथैव कर्त्तव्यं यथा तुम्बुरेः सर्वकर्माणि साधयति । अथाकाशगमनमिच्छेत् । जयन्तीमूलं त्रलोहपरिवेष्टितं कृत्वा पुष्ययोगेन सोमवारेण शुक्लपक्षसप्तम्यां सपूर्णमास्यां चतुर्दश्याष्टम्यां त्रिरात्रोषितेन शुचिना कुङ्कुममिश्रं कृत्वा मुखे प्रक्षेप्तव्याः । चन्द्रग्रहे मुक्ते अन्तर्हितो भवति । स्वमन्त्रं अक्षरलक्षं जप्त्वा गुडिकां प्रक्षिप्य चन्द्रग्रहे मुक्ते विद्याधरो भवति कामरूपी यथेष्टगतिः विंशतिवर्षसहस्राणि जीवति । उद्गीर्णे पुनर्दृश्यति । मानुषे पुनः एवं सर्वकर्माणि करोती"ति ॥

विजया एवमाह—"किन्तु अयं विशेषः । अगस्तिवन्दाकं गृह्य ज्येष्ठोदकेन दिव्यवारिणा वा पिष्ट्वा स्वमन्त्रेणाभिमन्त्र्य पादौ म्रक्षयेद्योजनशतं गमनागमनं करोति । अखिन्नं यावन्न त्यजते । विजयामूलं गृह्य तथैव कर्तव्यम् । तथा जयायाः सर्वं करोति" इति ॥

अजिता एवमाह—"अजितमूलं सङ्गृह्य तथैव कर्त्तव्यम् । सर्वं साधयति" इति ।

अपराजिता एवमाह— "अपराजितामूलं गृह्य शुक्लकृष्णौ सपत्रफलमूलौ सर्वं तथैव कर्तव्यं यथा सार्थवाहस्येति । किन्त्वयं विशेषः । आशुकारि क्षिप्रं सिद्ध्यतीति ।

पुत्रञ्जरी कृताञ्जली सहा च सहदेवा च महोषधी ।
छत्राधिच्छत्रा तथा देवी महाकालश्च विश्रुतः ।
नाकुली गन्धनाकुल्यौ तथा सङ्कुचितकर्णिका ॥

एतेषां मूलमादाय शूर्जचूर्णानि कारयेत् ।
अनेन पृष्टमात्रस्तु वशमायान्ति देहिनः ॥

रक्तशालितुषं चैव कुङ्कुमं सहचन्दनम् ।
कस्तुरिकासमायुक्तं दिव्यवारिसमप्लुतम् ॥

त्रिलोहाकारयेनेष्टं वै गुटिकां कुर्वीत मन्त्रवित् ।
अक्षमात्रं ततः कृत्वा गुटिकां वक्त्रे तुं तां न्यसेत् ॥

चन्द्रग्रहेऽथ रात्रौ वा जपेन्मन्त्रं समाहितः ।
प्रभाते सिद्धमन्त्रस्तु यथेष्टं याति देहजः ॥

परिवर्तयते जापं वक्त्रस्था गुटिका सदा ।
यथेष्टपशुरूपी वा समन्ताद्धिण्डति मेदिनीम् ॥

उद्गीर्णे तथा युक्तिः स्वदेही भवति जापधीः ।
अन्यथा यदि वक्त्रस्था विश्वरूपा भवेत् सदा ॥

स्वमन्त्रेणात्मरक्षं तु कृतजापी विशिष्यते ।
अन्यथा ह्रियते गुटिका यदि रक्षां न करोति जापी ॥

सर्वमन्त्रास्तु सिद्ध्यन्ते मन्त्रराड् सर्वलौकिकाः ।
पूजनात् सर्वकल्पानां सर्वसर्वैश्च भाषिताम् ॥
तेऽस्मिं सिद्धिमायान्ति मन्त्रतन्त्राभिभाषिताम् ।
विचरन्ति महीं कृत्स्नां विचित्रा वेषधारिणो ॥
गतियोनिविदेहस्थाः श्वानवायसरूपिणः ।
मार्जार तथोलूकाः भूपमण्डूकवृश्चिकाः ॥
सर्वयोनिसमाकीर्णाः विदेहा देहविस्थिताः ।
पर्यटन्ति महीं कृत्स्नां सर्वभूतरुतान्विनः ॥
सर्वसत्त्वे वशा वेषा सर्वभूते प्रियोदया ।
कुर्वन्ति च सदा मर्त्या तदा तेषां नियोजयेत् ॥
नान्येषां कथ्यते लोके पूजिताश्चैव देवतैः ।
सर्वं च सर्वतो ज्ञेयं सर्वमन्त्रप्रसाधकम् ॥
कथितं कथयिष्यन्ति ये चान्ये भुवि मानवाः ।
तत् सर्वं कल्पविसरं इह चोक्तं लोकमातरैः ॥
एवमुक्तास्तु देवा वै सूत्रान्तसहपञ्चमाः ।
तूष्णीम्भूता ततस्तस्थु प्रणम्य जिनपुङ्गवम् ॥
निषण्णो धर्मश्रवणाय तस्मिं पर्षद्वरेद्वरे ।
अधिष्ठानां च बुद्धानां अशेषाणां च जिनात्मजाम् ॥
अध्येष्य च महावीरं तूष्णीम्भूतास्तदनन्तरे ।
अथ वज्रधृक् श्रीमां पूजयामास देवताः ॥
साधुकारमदात् तेषां सत्त्वानुग्रहकाम्यया ।
साधु साधु ततः कन्य समये तिष्ठध्व यत्नतामिति ॥

आर्यमञ्जुश्रियमूलकल्पात् बोधिसत्त्वपिटकावतंसकात् महायानवैपुल्यसूत्रात् सप्तचत्वारिंशतिमः पटलविसरात् तृतीयः चतुःकुमार्योपयिकसर्वसाधनजपनियममुद्राओषधितन्त्रमन्त्रसर्वकर्मपटलविसरं परिसमाप्त इति ॥

---

शुभं भूयात् ॥

॥ श्रीः ॥

# आर्यमञ्जुश्रीमूलकल्पम्।

## (तृतीयो भागः।)

---

### अथ पञ्चाशः पटलविसरः।

अथ खलु भगवां वज्रपाणिर्यक्षसेनापतिः तस्यां पर्षदि सन्निपतितोऽभूत्। सन्निषण्णः उत्थायासनादेकांशमुत्तरासङ्गं कृत्वा दक्षिणं जानुमण्डलं पृथिव्यां प्रतिष्ठाप्य स येन भगवांस्तेनाञ्जलिं प्रणम्य भगवन्तमेतदवोचत्—यो हि भगवं मञ्जुश्रिया कुमारभूतेन क्रोधराजा यमान्तको नाम भाषितः तस्य कल्पं विस्तरशो भगवता न प्रकाशितम्। नापि मञ्जुश्रिया कुमारभूतेन। अहं भगवं पश्चिमता जनतामवेक्ष्य भगवता परिनिर्वृते शासनान्तर्धानकालसमये वर्तमाने महाभैरवकाले युगाधमे सर्वश्रावकप्रत्येकबुद्धविनिर्मुक्ते बुद्धक्षेत्रे तथागतशासनसंरक्षणार्थं धर्मधातुचिरस्थित्यर्थं सर्वदुष्टराज्ञां निवारणार्थं रत्नत्रयापकारिणां निग्रहार्थं वैनेयसत्त्वकौशलाचिन्त्यबोधिसत्त्वचर्यापरिपूरणार्थं अचिन्त्यसत्त्वपाकमभिनिर्हरणार्थं च पश्चिमे भगवं काले पश्चिमे सुगतसमये शासनाविमलोपे वर्तमाने य इमं यमान्तकं नाम क्रोधराजानं यथाविधि कल्पविनिर्दिष्टं प्रयोक्ष्यति तस्य सिद्धिः भविष्यति। नियतं च दुष्टराज्ञां शासनापकारिणां च सत्त्वानां महायक्षाणां महोत्साहिनां निग्रहानुग्रहप्रवृत्तानां महाकरुणाविरहितानां तेषामयं क्रोधराजा प्रयोक्तव्यः नान्येषाम्॥

अथ भगवां तूष्णीम्भावेन बुद्धविकुर्वणाधिष्ठानं नाम समाधिं समापद्यते स्म। मञ्जुश्रीः कुमारभूतोऽपि तूष्णीम्भावेन स्थितोऽभूत्। सर्वावन्तश्च पर्षन्मण्डल षड्विकारं प्रकम्पमजायत।

G. P. T. 3280. 500 17-8-97 B

भीताश्च देवसङ्घा उत्रस्ताः सर्वबालेशाः ।
सर्वदेवाश्च नागाश्च दानवेन्द्राः समातराः ॥
सर्वे च ग्रहमुख्याद्या देवसङ्घाः प्रकम्पिरे ।
मानुषा प्रकम्पे भिन्नमनसा दुष्टचित्ताश्च पूतनाः ॥
आर्त्ता भीताः ततस्ते वै रौद्रचित्ता नराधिपाः ।
शरणं ते तदा जग्मुः धर्मराजस्य शासनम् ॥
गुह्यकेन्द्रस्य यक्षस्य वज्रपाणिमहाद्युतेः ।
मञ्जुघोषस्य ते भीताः कुमारस्यैव मन्त्रराट् ॥
समयं च तदा चक्रे मञ्जुघोषस्य अन्तिके ।
परित्रायस्व भो बाल! सर्वसत्त्वानुकम्पक! ॥
निर्दहिष्यामि नो अद्य क्रूरमन्त्रैः सुदारुणैः ।
क्रोधेन मूर्च्छिता ह्यद्य प्रतिष्ठाम महीतले ॥
ततस्तां बोधिसत्त्वा वै बालरूपी महाद्युतिः ।
मा भैष्ठथ सुराः! सर्वे! यक्षराक्षसदानवा! ॥
समयं वो मया ह्युक्तः अलङ्घ्यः सर्वदेवतैः ।
मानुषामानुषाश्चापि सर्वभूतैस्तु केवलैः ॥
मैत्रचित्त सदा भूत्वा तन्मन्त्रं स्मरते सदा ।
सम्बुद्धं द्विपदामग्र्यं शाक्यसिंहं नरोत्तमम् ॥
तेनैव भाषितं मन्त्रं उष्णीषाद्याः सलोचनाः ।
त्रैलोक्यगुरवश्चक्री तेजोराशिं जयोद्भवम् ॥
विजयोष्णीषमन्त्राद्यां पद्मपाणिं सलोकितम् ।
अवलोकितनाथं च भ्रकुटी तारां यशस्विनीम् ॥
देवीं च सितवासिन्यां महाश्वेता यशोवतीम् ।
विद्यां भोगवतीं चापि हयग्रीवश्च मन्त्रराट् ॥
एते ह्यब्जकुले मन्त्रा प्रधाना जिननिःसृता ।
एकाक्षरश्चक्रवर्ती वा मन्त्राणामधिपतिं प्रभुम् ॥

स्मृत्वा देवदेवं च मन्त्रनाथं महाद्युतिम् ।
क्रोधप्रभवो तस्य यमान्तो नाम नामतः ॥
अवलोकितनाथस्य चेतांसि करुणोदयाः ।
महाकरुणाक्रुष्टमनसो पूर्वबुद्धैः प्रकाशिता ॥
सा तारा तारयते जन्तुं अवलोकितभाषिता ।
विद्या समाधिजा आर्या स्वयाख्या संज्ञारूपिणी ॥
बोधिसत्त्वोऽथ चरते बोधिचारिकमुत्तमाम् ।
लोकधातुसहस्राणि असङ्ख्या बहुधा पुनः ॥
पर्यटन्त तदा देवी सत्त्वानां हितकारणा ।
स्त्रीरूपधारिणी भूत्वा मन्त्ररूपेण देहिनाम् ॥
विधिनेयतदां सत्वां बोधियानेति योजयेत् ।
चर्या बोधिसत्त्वानां अचिन्तेयं प्रकाशिता ॥
वज्रपाणिं तथा वीरं मन्त्राणामधिपतिं स्मरेत् ।
मामकीं कुलन्दरीं देवीं त्रैलोक्यप्रतिपूजिताम् ॥
शङ्कुला मेखलां चैव वज्रमुष्टिं यशस्विनीम् ।
क्रोधेन्द्रतिलकं शत्रुं नीलदण्डं सभैरवम् ॥
एते दूतिगणाः क्रोधाः विद्याध्यक्षाः प्रकीर्तिताः ।
प्रधाना वज्रकुले सर्वे अस्मद्रक्षिता हि ते ॥
गजगन्धं तथा लोके बोधिसत्त्वं महर्द्धिकम् ।
महास्थानगतं धीमं बोधिसत्त्वं महर्द्धिकम् ॥
ज्येष्ठं तनयमुख्यं तु समन्तभद्रं सुशोभनम् ।
यः स्मरेत् तदा काले भयं तेषां न विद्यते ॥
माणिभद्रं तथा नित्यं जम्भलं यक्षमुत्तमम् ।
सर्वश्रावकप्रत्येकं बुद्धानां च कुतो भयम् ॥
स्मरणात् पूजनात् तेषां महारक्षा प्रकीर्त्तिता ।
ददत् फलं तदा देवां पुण्याभां च असंज्ञका ॥

स्त्रीरूपधारिणीं देवीं वीतरागां महर्द्धिकाम् ।
रत्नत्रये च पूजां वै प्रसन्ना जिनशासने ॥

तेषां न विद्यते किञ्चित् मित्रामित्रभयं यदा ।
समयं तत्र इत्युक्तः अलङ्घ्यं सर्वमन्त्रिभिः ॥

एतत् क्रोधवरे ख्यातं यमान्तस्यैव वर्णिते ।
समये च स्थितां सर्वां अभक्षाः सर्वमानुषाः ॥

ततस्ते हृष्टमनसः सर्वे देवा ह्यमानुषाः ।
समये तस्थिरे सर्वे जिनपुत्रानुबुद्धिना ॥

यक्षसेनापतिः क्रुद्धः वचनं चेत् पराभवम् ।
सम्प्रकम्प्य तदा सर्वां लोकधातुमसङ्ख्यकाम् ॥

निरर्थं क्रोधराजं तु किमर्थमिदं प्रकाशितम् ।
जिनपुत्रैस्तदा पूर्वं सत्त्वानां विनयकारणात् ॥

प्रभावं क्रोधराजस्य उत्पृष्टं च पुरातनम् ।
एवमुक्तास्ततो वज्री वज्रं निक्षिप्य तस्थुरे ॥

ततः प्रहस्य मतिमां बालरूपी महर्द्धिकः ।
कुमारो मञ्जुघोषो वै इमां वाचमुदीरयेत् ॥

मा प्रदुष्य महायक्ष! वज्रपाणि! महर्द्धिक! ।
मया प्रकाशितो ह्येष क्रोधराजो महर्द्धिकः ॥

तवैव मन्त्रं दास्यामि यथेच्छं सम्प्रकाशय ।
त्वया न शक्यं क्रोधस्य प्रभावं परिकीर्तितम् ॥

तवैव संस्थितो ह्येष देहस्थ इह दृश्यते ।
आकृष्टः तेन वै तुभ्यं हृदयं ते यदि पृच्छसि ॥

न शक्यं निवर्त्तितुं ह्यत्र क्रोधाविष्टे। ।हे वै प्रभो।
यथेच्छं सम्प्रकाशयस्व समयं त्यक्त्वानुमन्यतः ॥

अस्नाते प्रसुप्ते च ग्राम्यधर्मानुवर्त्तिते ।
तैलाभ्यक्ते अरक्षे च दुष्टचित्तेषु वा सदा ॥

त्यक्तो मन्त्रवरैः सर्वैः अप्रसन्नेषु शासने।
वैचिकित्सो तथा मर्त्यो अश्राद्धेषु दुःस्थिते॥

सद्धर्मरत्नसङ्घे च प्रतिक्षिप्तव्याः समाहिते।
नग्नके च सदोच्छिष्टे अशुच्याचारगोचरे॥

अगुप्ते ह्यमन्त्रयुक्ते च नित्योच्छिष्टे हि निर्घृणे।
देवावसथचैत्येषु विहाराङ्गणमण्डले॥

मैथुनाभिरता तत्र तेषां क्रोधो विनाशयेत्।
समयभ्रष्टा प्रसन्नाश्च मन्त्रयुक्तिमजानका॥

इषिस्खलितगताचारा तेषां क्रोधो निपातयेत्।
सर्वेषां मानुषां लोके अप्रमादो न विद्यते॥

प्रमादप्रभिरागिन्यः समयभ्रंशानुच्छिद्रिणे।
हन्यन्ते क्रोधराजेन अप्रयुक्तैस्तु मन्त्रिभिः॥

सर्वथा बालिशाः सर्वे प्रमादा वशगामिनः।
वीतरागां सदा मुक्त्वा प्रत्येकार्हश्रावकाम्॥

सर्वे वै क्रोधराजस्य वध्या दण्ड्याश्च सर्वतः।
एवमुक्तास्तु मञ्जुश्री करुणाविष्टेन चेतसाम्॥

अचिन्त्यं चर्यबुद्धानां बोधिसत्त्वां महर्द्धिकाम्।
एवमुक्त्वा ततः सर्वा तूष्णीम्भूतो हि तस्थुरे॥

अथ वज्रधरः श्रीमां भूयो वज्रं परामृशेत्।
गृह्य वज्रं तदा तुष्टो लब्धानुज्ञां प्रभाषत इति॥

आर्यमञ्जुश्रियमूलकल्पाद् बोधिसत्त्वपिटकावतंसकान्म-
हायानवैपुल्यसूत्राद् अष्टचत्वारिंशत्तमः
यमान्तकक्रोधराजपरिवर्णनमन्त्र-
माहात्म्यनियमपटलविसरः
परिसमाप्त इति॥

## अथ एकपञ्चाशः पटलविसरः ।

अथ खलु वज्रपाणिर्गुह्यकाधिपतिः सर्वावन्तं महापर्षन्मण्डल मवलोक्य सर्वास्तां शुद्धावासोपरिनिषण्णां भूतसङ्घानामन्त्रयते स्म । शृण्वन्तु भवन्तो मार्षा यमान्तकस्य क्रोधराजस्यापरिमितबलपराक्रमस्य दुर्दान्तदमकस्य वैवस्वतजीवितान्तकरस्य दुष्टसत्त्वनिग्रहतत्परस्य महाबोधिसत्त्वस्य मञ्जुश्रियभाषितस्य महाबोधिसत्त्वस्यादौ तावत् पटविधानं भवति ॥

न तिथिर्न च नक्षत्रं नोपवासो विधीयते ।
अरीणां भयमुत्पन्ने पटमेतं लिखापयेत् ॥

गृह्य कृष्णे निशापक्षे चतुर्दश्याष्टमौ तिथौ ।
श्मशाने मृतकं प्राप्य ब्राह्मणस्य अम्बरं तम् ॥

गृह्य ततो रात्रौ असृणां रञ्जयेत् ततः ।
भूयो जलशौचं तु सुशुष्कं कारयेत्ततः ॥

क्रूरं चित्रकरं क्रुद्धं भीषणे चापि लेखयेत् ।
श्मशाने कृष्णपक्षे च त्रिरात्रेणैव समापयेत् ॥

अष्टमीं चतुर्दशीरात्रौ महावसादीपदीपितः ।
तत्र स्थितः चित्रकरः दक्षिणाभिमुखः सदा ॥

कपाले मानुषासीने कृतरक्षः समाहिते ।
स्वयं वा आलिखेन्मन्त्री अरिदुःखभयार्दितः ॥

प्रथमे रात्रिमारब्धे अरीणोऽपि महद् भयम् ।
द्वितीये महाज्वरेणापि आविष्टः शत्रुमूर्च्छितः ॥

तृतीये मुञ्चते प्राणां परलोकगतो भवेत् ।
कुतस्तस्य भवेच्छान्ति अप्रसन्नेन मन्त्रिणा ॥

देहं शुष्यति शत्रोर्वै गृहभङ्गोपजायते ।
लिखनात् पटमेवं तु यमान्तस्य महाभये ॥

षण्मुखं षट्चरणं लेख्यं कृष्णवर्णं वृकोदरम् ।
क्रुद्धं व्याघ्रचर्मनिवसनम् ॥

नानाप्रहरणं घोरं दण्डहस्तं भयानकम् ।
रक्तनेत्रं सरोपं च त्रिनेत्रगतिचिह्नितम् ॥

ऊर्ध्वकेशं सजालं वै धूम्रवर्णं क्वचित् तथा ।
कृष्णाञ्जननिभं घोरं प्रावृण्मेघसमप्रभम् ॥

कृतान्तरूपसङ्काशं महिषारूढं तु आलिखेत् ।
क्रूरकर्मं महाभीमं रौद्रं रुद्रघातकम् ॥

यमजीवितनाशं वै उग्रन्तं सत्त्वघातकम् ।
क्रूरं भृशं सर्वकर्माणं भीपणापतिदारुणम् ॥

भयस्यापि भयत्रासं मारकं सर्वदेहिनाम् ।
एतत् क्रुद्धवरं लिख्य आत्मशोणितवर्णकैः ॥

ज्यातिमिश्रमुज्ज्वलैर्लेख्य महावसागव्यमिश्रितैः ।
कपालभाजनैश्चापि मानुपास्थिसुसम्भवैः ॥

कूर्चकैर्वर्तिकैर्युक्तो मृतकेशसुसम्भवैः ।
अभुञ्जानस्तथालिख्य स्वयं वा चित्रकरेण वा ॥

प्रभूतबलिपुष्पाद्यैः रक्तमाल्यैर्वरचन्दनैः ।
महामांसवसाधूपैर्वसादीपैश्च भूपितम् ॥

कारयेत् पटवरमादौ अन्ते मध्ये च पूजना ।
परिस्फुटं तु पटं कृत्वा वित्तं दत्त्वा तु शिल्पिने ॥

प्रभूतं चापि मूल्यं वै येन वा तुष्यते सदा ।
अवध्यं तस्य कर्तव्यं धर्मं चापि सहाभयम् ॥

यथेप्सितं तस्य कुर्वीत वीरमूल्यं समासतः ।
सफलं शिल्पिने कर्म निरामिषं चापि वर्जयेत् ॥

तथा तथा प्रयुञ्जीत यथासौ सम्प्रतुष्यते ।
महारक्षा च कर्तव्या अन्यथा मृयते ह्यसौ ॥

सकुटुम्बो नश्यते कर्मी आत्मनश्चापि रक्षयेत् ।
जप्तविधेन कर्त्तव्यं नान्येषां विधिरुच्यते ॥

परिस्फुटं तु पटं कृत्वा दृष्ट्वा वा मनसेप्सितम् ।
गर्ता च कारयेत् कर्गा रौद्रां शत्रुघातकाम् ॥
गृह्य पटवरं गच्छेद् यथेष्टं यत्र वाञ्छितम् ।
महायक्षां महाराज्ञां महाचित्तसगर्वितां ॥
महामानातिमानानां क्रूरां क्रूरकर्मिणाम् ।
रत्नत्रयापकारीणां नास्तिक्यां मन्त्रवर्जिताम् ॥
अपूजकानां तु मन्त्राणां तद्भक्तास्तनिन्दकाम् ।
जापिनां निन्दका ये च तेषां चैव पराभवा ॥
तेषां प्रयोगः कर्त्तव्यः विधिदृष्टेन कर्मणा ।
अधर्मिष्ठां तथा नित्यां सर्वसत्त्वानुतापिनाम् ॥
तेषां तु कर्म प्रयुञ्जीत सद्यः प्राणोपरोधिनम् ।
गृह्यारिष्टफलं पत्रं त्वचं चापि समूलतः ॥
काञ्जिकं आम्लसंयुक्तं मानुषास्थिसचूर्णितम् ।
कटुतैलविषं चैव अम्लवेतसमार्द्रकम् ॥
राजिकं रुधिरं चैव मानुषोद्भवसम्भवम् ।
गृह्य सर्वं समायुक्तं पटं स्थाप्य विवेकतः ॥
दक्षिणाभिमुखो भूत्वा पटश्चापि उदङ्मुखः ।
कृत्वाग्निकुण्डं यथेष्टं वै शुष्ककाष्ठैः कटुमुद्भवैः ॥
ज्वालयं कटकैश्चापि तस्मिं कुण्डे समाहितः ।
पुष्पात् सर्वसमायुक्तं विधिर्निर्दिष्टहोमिकम् ॥
अग्निराहूय मन्त्रैस्तु क्रोधराजस्य वै पुनः ।
बद्ध्वा शूलमुद्रं तु सर्वकर्मेषु वा इह ॥
सहस्राष्टमाहुतिं दद्यादग्निकुण्डे सरोषतः ।
प्रथमे पुत्रमरणं सत्त्वे प्राप्ते तु तं भवेत् ॥
द्वितीये चापि भार्या वै पार्षद्याः सनायकाः ।
तृतीये मरणं तस्य यस्योद्दिश्यं हि तत् कृतम् ॥

अर्धरात्रे यदा जापः क्रियते पटसन्निधौ ।
शत्रूणां च वधार्थाय तत् तथैवानुवर्तते ॥

राष्ट्रभङ्गं भवेत् तस्य सेनायां मारिसम्भवम् ।
अग्निदाहं महावातं महावृष्टिश्च जायते ॥

समस्तं सर्वतश्चक्रं परचक्रेण हन्यते ।
विविधोपद्रवा तस्य महाव्याधिसमाकुलम् ॥

देहं शुष्यति सर्वं वै तस्य राज्ञो न संशयः ।
अमानुपाकीर्णं सर्वन्तं गृहं तस्य समाकुलम् ॥

धृतिं न लभते शय्यां आवर्तं च महीतले ।
राक्षसैः प्रेतक्रव्यादैः गृहं तस्य समावृतम् ॥

आर्त्तो विभेति सर्वत्र तीव्रदुःखैः सुदुःखितः ।
अशक्ता रक्षितुं तस्य महेश्वराद्या भुवि देवता ॥

ब्रह्माद्या लोकपालाश्च शक्राद्या त्रिदशेश्वराः ।
सर्वमन्त्राः सर्वदेवाश्च सर्वलौकिकसम्भवा ॥

दुष्टारे मानिने क्रुद्धे तदन्तं तस्य जीवितम् ।
अर्धरात्रे तु मध्याह्ने भापितो यत्र जापिनः ॥

क्रुद्धो वैवस्वतः साक्षाद् यमराजावकल्पते ।
यथेष्टं कृष्णपक्षे च पटं संस्थाप्य महीतले ॥

महतिं पूजां बलिं कृत्वा श्मशानारण्यसम्भवे ।
एकवृक्षे तथा लिङ्गे शैले प्रान्ते गुहासु वा ॥

एकाकी अद्वितीयश्च सदा कर्म समारभेत् ।
महारण्ये विविक्ते च शून्ये देवकुलेषु च ॥

शून्ये मन्दिरे नद्यां अम्बुधेः तटमाश्रिते ।
तत्र देशे समीपे वा तत्रस्थे वा यथेप्सितम् ॥

योजनाशतमभ्यन्तर सदा कर्माणि कारयेत् ।
एतत् प्रमाणकर्माणि कारयेच्छुचिना सदा ॥

अप्रमेयस्थितो चापि गतदेशामितः शुचिः ।
अचिन्त्यमन्त्रविषये अचिन्त्यं मन्त्रगोचरम् ॥

अचिन्त्यो ऋद्धिमन्त्राणां अचिन्त्यं सिद्धिजापिनाम् ।
अचिन्त्यं दृश्यते कर्म फलं चापि अचिन्त्यकम् ॥

क्रोधराजस्य यमान्तकस्य महात्मने ।
कर्म ऋद्धिविषयं विकुर्वणं च महोदयम् ॥

अचिन्त्यं रूपिणां सिद्धिं दृश्यते इह महीतले ।
अशक्ता रक्षयितुं सर्वे बोधिसत्त्वा महर्द्धिकाः ॥

किं पुनर्लौकिका मन्त्राः सग्रहा मातराश्च ताः ।
ईशानश्च सविष्णुर्वा स च स्कन्दो पुरन्दरः ॥

समये धारिता तेऽपि सजिना जिनपुत्रकाः ।
बोधिसत्त्वा महात्मानो दशभूमिसमास्थिताः ॥

प्रत्येकबुद्धा ह्यर्हन्त वीतरागा महर्द्धिकाः ।
अशक्ता रक्षयितुं तेऽपि समयं तैः पुरा कृतम् ॥

संक्षेपेण तु वक्ष्यामि शृणुध्वं भूतकांक्षिणा ।
नान्यो निवर्तने शक्तः अप्रसन्नेन जापिने ॥

कुतस्तस्य भवेच्छान्तिरतुष्टे मन्त्रवरे इह ।
यदा प्रसन्नमनसः करुणार्द्रो वा भवेत् कदा ॥

जापिनः क्रोधराजस्य यमान्तस्य महात्मने ।
तदादौ लभते शान्तिं धृतिं वा जीवधारणम् ॥

पिचुमन्दं कटुतैलं च काञ्जिकं विषपञ्चमम् ।
रुधिरं मानुषं मांसं लवणं त्रिकटुकं पुनः ॥

राजिकं शङ्खचूर्णं च अम्लवेतसमार्द्रकम् ।
धुंधूरकस्य तु मूलानि कोशातक्या तथैव च ॥

एरण्डमूलं यवक्षारं कुसुम्भं चापि कण्टकम् ।
मदनोद्भवमूलं च लशुनं गृञ्जनकं तथा ॥

पलाशशाखोटकं चैव पलण्डुं राग्रुरागवा ।
सर्वान्येतानि समं कृत्वा जुहुयात् अग्नौ पटसन्निधौ ॥

हुते सहस्रमष्टे तु शत्रुनाशः समूलतः ।
सर्वां वा राजिकां हन्या पारिपर्श्वां शुभाशुभाम् ॥

समूलोद्धरणं तस्य द्वितीये सन्ध्ये तु जुहुता ।
तृतीये समनुप्राप्ते सन्ध्ये जुहुन जापिना ॥

दुर्भिक्षं भवते तस्य जने चापि सनैगमे ।
अनावृष्टिमहामार्यः राक्षसाकीर्णसर्वतः ॥

अग्निदाहं शिलापातं वज्रनिर्घातसाशनिः ।
जनपदं देशविपर्यं वा यवाः तस्य नराधिपे ॥

बह्वोपद्रवसम्पातं परचक्रागमं तथा ।
अनेकधा बहुधाश्चापि तस्य देशे उपद्रवाः ॥

जायन्ते विविधाकाराः महालक्ष्मीप्रणाशनैः ।
धुर्धूरकमूलं जुहुयादेकं उन्मत्तिस्तस्य जायते ॥

कटुकं जुहतो नित्यं महादाहेन गृह्यते ।
अत्यम्लं जुहतो मग्नौ महाज्वरं शीतसम्भवम् ॥

सम्भवेत् तस्य देहस्थः दुष्टराज्ञां बलगर्विनाम् ।
महायक्षां धनिनां क्रूरां महासैन्यसमाश्रुताम् ॥

द्विरात्रे सप्तरात्रे वा मरणं तस्य जीवितम् ।
यो यस्य देवताभक्तः नक्षत्रो वा नामतो लिखेत् ॥

श्मशानाङ्गारैः कृतिं कृत्वा पटस्याग्रनभुस्तनम् ।
आक्रम्य पादतो मूर्ध्नी सङ्क्रुद्धो जपमाचरेत् ॥

अकस्माद् विविधैः शूलैः गृह्यतेऽसौ नराधिपः ।
महाव्याधिसमाक्रान्तः मृयते चापि तत्क्षणात् ॥

पशुना हन्यते चापि व्यङ्गो वा भवते पुनः ।
भक्ष्यते राक्षसैः क्रूरैः कश्मलामानुपोद्भवैः ॥

क्रव्यादैः पूतनैश्चापि पिशाचैः प्रेतमातरैः ।
तत्क्षणाद्धन्यते चापि आत्मनश्चापि सेवकैः ॥

अथ वज्रधरः श्रीमां इत्युक्त्वा परिषेत्तदा ।
सर्वबुद्धां नमस्कृत्य तूष्णीम्भूतो ततः स्थिरे ॥
लोकानां हितकाम्यार्थं पुनरेवमुमूचत ।
सर्वां यक्षगणां मन्त्रः यक्षीणां च स सर्वतः ॥

उवाच बोधिसत्त्वो वै यक्षसेनापतिस्तदा ।
यक्षीणां पटलं वत्रे सर्वकर्मोपसंहितम् ॥
सर्वाकर्षं वशं चैव सर्वशल्यानजुद्धरम् ।
मैथुनार्थी यदा मन्त्री रागान्धो वाथ मूढधीः ॥

न शक्य प्रतिपक्षेण सुगताज्ञैर्निवारितुम् ।
अनादिमति संसारे पुराभ्यस्तं सुदुःखितैः ॥
दुःखा दुःखतरं तेषां गतिरुक्ता तथागतैः ।
शोभनां गतिमाप्नोति ब्रह्मचारी जितेन्द्रियः ॥

भद्रं शिवं च निर्दिष्टमन्ते शान्तिमवाप्नुयात् ।
त्रियानसमतारूढः माप्नुयान्ते सुनिर्वृतिम् ॥
विपरीताः कुगतिग्रस्ता ये रागान्धा तपस्विनाम् ।
संसारगहने घोरे भ्रमन्ति गतिपञ्चके ॥
तेषां दुःखितामर्थे कामभोगं तु वर्ण्यते ।
ते निर्वृता सर्वपापा तु त्रिधा दोषनिवर्तिता ॥
शास्तुराज्ञासमाविष्टा मुच्यन्ते सर्वबन्धना इति ॥

आर्यमञ्जुश्रियमूलकल्पाद् बोधिसत्त्वपिटकावतंसकान्महा-
यानवैपुल्यसूत्राद् एकूनपञ्चाशतिमः यमान्त-
कक्रोधराजाभिचारुकनियमः द्वितीयः
पटलविसरः परिसमाप्तः ।

---

## अथ द्विपञ्चाशः पटलविसरः ।

अथखलु शान्तमतिर्बोधिसत्त्वो महासत्त्वः तस्मिन्नेव पर्षत्सन्निपाते सन्निपतितः सन्निषण्णोऽभूत् । उत्थायासनात् सर्वबुद्धं प्रणम्य पर्षन्मण्डलमध्ये स्थित्वा भगवन्तं शाक्यमुनिं त्रिः प्रदक्षिणीकृत्य चरणयोर्निपत्य स येन वज्रपाणिः महायक्षसेनापतिः तेन व्यवलोक्य वाचमुदीरयति स्म । अतिक्रूरस्त्वं वज्रपाणेः यस्त्वं सर्वसत्त्वानां सत्त्वोपघातिकं कामोपसंहितं च मन्त्रतन्त्रां भाषयसे । न खलु भो जिनपुत्र ! बोधिसत्त्वानां महसत्त्वानामेष धर्मः । महाकरुणाप्रभाविता हि महाबोधिसत्त्वा बोधिसत्त्वचारिकां चरन्ते सर्वसत्त्वानामर्थाय हिताध्याशयेन प्रतिपन्ना भवबन्धनान्न मुच्यन्ते । न च पुनर्भो जिनपुत्र । सत्त्वोपघातिकां धर्मदेशनां तथागतार्हन्तः सम्यक् सम्बुद्धाः सर्वसत्त्वानुद्दिश्य भाषन्ते महाकरुणासमन्वागतत्वात् । सर्वसत्त्वानां हिताध्याशयेन प्रतिपन्ना भवन्ति ॥

अथ खलु वज्रपाणिर्बोधिसत्त्वो महासत्त्वः शान्तमतिं बोधिसत्त्वमामन्त्रयते स्म । एवं हि शान्तमते ! बोधिसत्त्वेन शिक्षितव्यम् । एवं प्रतिपत्तव्यम् । यथा त्वं वदसि यथा त्वं प्रकाशयसि । तथा सर्वबुद्धाः बोधिसत्त्वाश्च महर्द्धिकाः । तथाहं निर्देक्ष्यामि परमार्थतो ॥

भूतकोटिं समाश्रित्य धर्मकोटिं तु मुच्यते ।
अचिन्त्यां सत्त्वकोटिं वै परिपाकमचिन्तितम् ॥
अचिन्त्या बुद्धधर्मास्तु चर्या बोधिमचिन्तिका ।
वैनेयसत्त्वमागम्य अचिन्त्यं चरितं हि तैः ॥
चर्या बोधिसत्त्वानां अचिन्त्या परिकीर्त्तिता ।
सर्वमन्त्रेषु तन्त्रोऽयं अचिन्त्यतत्प्रभावतः ॥
क्रोधराजस्य मन्त्रस्य यमान्तस्य महात्मनः ।
अचिन्त्यं ऋद्धिविषयं गतिमाहात्म्यमचिन्त्यकम् ॥

अचिन्त्या हि शान्तमते ! बोधिसत्त्वानां महासत्त्वानां चर्यानिष्पन्दितसत्त्वधातनिर्हारम् । एवं हि शान्तमते ! बोधिसत्त्वेन मन्त्र-

जापिना चित्तमुत्पादयितव्यम् । काममस्य सत्त्वस्यार्थाय बहुपुण्यं प्रसुनुयात् । महानरकोपपत्तिश्च । न त्वेवायं सत्त्वः बहुतरमपुण्यस्कन्धं प्रसुनुयात् । मा नामायं सत्त्वो त्रयाणां बोधीनामभव्यो भवेत् । एवं हि शान्तमते ! बोधिसत्त्वेन मन्त्रजापिना चित्तमुपस्थाप्य उपायकौशल्यं चाभिचारुकं च कर्म प्रयोक्तव्यम् । सर्वकर्मिषु च निमित्तग्राहिणा भवितव्यम् । नाकुशलग्राहिणा सत्त्ववैनेयमुपादायता च शिक्षितव्यम् । करुणाविष्टेन चेतसा ॥

अपिच भो जिनपुत्र ! धर्माधर्मशुभाशुभं कुशलाकुशलगतिमाहात्म्यसत्त्वोपायविनयनिरहारतां धर्मधातुनिरहारतां च प्रतिपद्यन्ते बुद्धा भगवन्तः सर्व एव धर्मदेशनासत्त्वोपायपायकां च प्रतिपद्यन्ते । तथैव भो जिनपुत्रास्माभिः शिक्षितव्यम् । यदुत त्वविनयनाय सत्त्वपाकानुशासनाय च तत्रभवन्तो जिनपुत्राः योऽयं पर्षन्मण्डलमहासमयोपविष्टाः तत्र सर्वैः समग्रैः श्रोतव्यं श्रद्धातव्यं य एव कुशलाकुशलगवेषणैर्भवितव्यम् । यदुत तथागतधर्मदेशनाभिरतैर्भवितव्यम् ॥

अथ शान्तमतिर्बोधिसत्त्वो महासत्त्वः वज्रपाणिं यक्षसेनापतिं व्यवलोक्य तूष्णाम्भूतः स्वके आसने निषण्णोऽभूत् । अचिन्त्या बुद्धधर्मा इति मनसिकृत्य बुद्धं भगवन्तं व्यवलोकयमानः ॥

अथ वज्रपाणिर्गुह्यकाधिपतिः सर्वं तत् पर्षन्मण्डलमवलोक्य भूयः क्रोधराजस्य कल्पं भाषते स्म । शृण्वन्तु भवन्तो देवसङ्घाः ये सत्त्वधातुनिसृताश्च सर्वे भूतगणाः आदौ तावत् कृतरक्षः तं पटं क्रोधराजस्य परिगृह्य विवेके स्थाने गत्वा एकलिङ्गे महेश्वरस्यायतने तं लिङ्गं विषरुधिरराजिकाकाञ्जिकेनाभ्यज्य पिचमर्दपत्रैरर्चयित्वा मानुषान्त्रनालिभि आत्मना यज्ञोपवीतं कृत्वा मानुषशिरकपालेन दक्षिणहस्तेन सप्रहारो भूत्वा वामहस्तेन तर्जन्या लिङ्गं तर्जयमानः परमक्रोधाभिभूतः अवमानितदुष्टराजानैः महापरिभवगतमानसः अन्यैर्वा भूर्तपुरुषैः महायक्षैर्महाधनैर्महाप्रचण्डैः महानायकैः शुद्धारं पिथयित्वा नग्नको मुक्ताशिखः महेश्वरलिङ्गं वामपादेनाक्रम्य क्रोधमन्त्रं तावज्जपेत्

यावन्महेश्वराल्लिङ्गो मध्ये स्फुटित इति द्विविदलीभूतं महांश हुङ्कारः श्रूयते । ततो न भेतव्यम् । तदेहो एव दुष्टराज्ञः अन्यो वा यःकश्चिन्महायक्षः अरिस्तत्क्षणादेव ज्वरेण गृह्यते । अमानुषेण वा गृह्यते राक्षसादिभिः । तत्रैव मुहूर्त जपेद् यावत् क्षणादेव शत्रोर्जीवितं मरणपर्यवसानं भवति । यदि रात्र्यन्तं जपे तत्सर्वकुटुम्बो नश्यति ॥

अपरमपि कर्म भवति । मध्याह्ने तथैव महेश्वरायतनं गत्वा निम्बपत्रैरभ्यर्च्य महामांसधूपं दत्त्वा मन्त्रं जपेत् । यावच्छत्रोर्भवनमग्निना दह्यते, शत्रोश्च महाज्वरकम्पो भवति । यदि जापं न त्यजते क्रुद्धो वा दक्षिणमूर्तेस्तिष्ठते स शत्रुर्म्रियते गोत्रोत्सादो भवति । अथ प्रत्यायनं करोति । भूयो लिङ्गमुदकेन प्रक्षाल्य सुशीतलेन क्षीरेण स्नापयेत् । गव्येन भूयः । स्वस्थो भवति ॥

अपरमपि कर्म भवति । महेश्वरलिङ्गस्य दक्षिणामूर्त्तौ मदनकण्टककाष्ठैरग्निं प्रज्वाल्य वैकङ्कतसमिधानां त्रिपरुधिरराजिकाक्तानां अष्टसहस्रं जुहुयात् । सर्वेशत्रवो महाव्याधिना गृह्यन्ते । अशक्ता भवन्ति सर्वकर्मेषु । द्वितीये दिवसे महाज्वरेण महाशूलेन वा गृह्यन्ते विविधैर्वा रोगैः अमानुषैर्वा मारणान्तिकैः । तृतीये दिवसे तृभिः सन्ध्यैः सर्वेण सर्वं जीवितं त्यजन्ते । प्रत्यायने क्षीरं जुहुयात् । शान्तिर्भवति । सर्वजनपदेषु सर्वशत्रवश्च स्वस्था भवन्ति । एवं सर्वदेवानां सर्वभूतानां यो यस्य देवताभक्तः तमाक्रम्य कुर्यात् । तस्य नक्षत्रमन्त्रसंज्ञतां पादेनाक्रम्य वामेन कर्म कुर्यात् । वर्जयित्वा तु ताथागतं विद्याम् । सर्वेषां च पादाङ्गुष्ठं वामेन गृहीत्वा कर्म कुर्यान्न चाक्रमेणापि चलंयेयेत्कदा सर्वलौकिकमन्त्राश्चाक्रम्य कुर्यात् । असिद्ध एव क्रोधराजा जापमात्रेणैव कर्माणि करोति सर्वमन्त्रां विनाशयति सर्वशत्रुं घातयति सर्वयन्त्रां पातयति । संक्षेपतो यथा यथा प्रयुज्यते सर्वलौकिकलोकोत्तरमन्त्रविधानेनापि तत् सर्वं करोति । सर्वं साधयति । जापमात्रेण सर्वाशां परिपूरयति । पठितसिद्धा एष क्रोधराजा उत्तमां सिद्धिमनुप्रयच्छति । मनसेच्छया शत्रुं घातयति महाशूलमुद्रया संयुक्तः सर्वकर्माणि करोति ॥

अपरमपि कर्म भवति । मध्याह्ने श्मशानं चितावैकरात्रोषितः कृष्णचतुर्दश्यां श्मशानकाष्ठैरग्निं प्रज्वाल्य विषरुधिराक्तां राजिकां जुहुयात् । ततो हाहाकारं कुर्वन्तः सर्वप्रेता आगच्छन्ति । न भेतव्यम् । ततो वक्तव्यं शत्रुं मे घातयेति । एवमस्त्विति कृत्वान्तर्धीयन्ते । ततो मुहूर्तमात्रेण योजनसहस्रमपि गत्वा शत्रुं घातयन्ति कुलानुत्सादयन्ति । एवमादीनि कर्माणि कुर्वन्ति ॥

अपरमपि कर्म भवति । विवेके शुचौ देशे शुचिवस्त्रप्रावृतेन शून्यगृहं प्रविश्य कर्पासास्थ्याहुतीनां अष्टसहस्रं जुहुयात् ततो तं भस्म उभाभ्यां हस्ताभ्यां गृह्य शुचौ वस्त्रखण्डे बध्नीया पृथक् पृथक् । द्वौ पोट्टलिकां कृत्वा शरावसम्पुटे स्थाप्य महाकृतरक्षात्मनो द्रव्यं च गृहमप्रविश्य महाश्मशानं गत्वा रात्रौ कृष्णचतुर्दश्यां कृष्णाष्टम्यां वा चितौ स्थित्वा दक्षिणाभिमुखः शरावसम्पुटं गृहीत्वा स्थितको नग्नको मुक्तशिखः सक्रुद्धो निर्भयो भूत्वा विद्या दशसहस्राणि जपेत् । सिद्धो भवति । तद् भस्म यदि कश्चिदमानुषो द्रव्यं प्रार्थयते न दातव्यम् । हठं करोति क्रोधराजं स्मृत्वा हुङ्कारः प्रयोक्तव्यः । तत्क्षणादेव नश्यते । सर्वविघ्नानामेष एव विधिः । वामदक्षिणकरगृहीतं भस्म चिह्नं कारयेत् । अप्रमत्तेन रक्षां कारयित्वा आगन्तव्यम् । प्रभाते सूर्योदये स्नात्वा शुचिना शुचिवस्त्रप्रावृतेन स्वगृहं प्रवेष्टव्यम् । अस्थाने वा यथाभिमते गन्तव्यम् । ततो यो दक्षिणहस्तेन गृहीतं भस्म तेन मनुष्यादिद्विपदचतुष्पदां सर्वप्राणिभूतां सदेवनागयक्षां मूर्ध्ना ताडयेद् वशा भवन्ति । यद् वामेन हस्तेन गृहीतं भस्म तेन सर्वेषां मनुष्यामनुष्याणां सर्वासां स्त्रीणां मूर्ध्ना ताडयेद् वश्या भवन्ति । दक्षिणेन यद् गृहीतं भस्म तेन मनुष्याणां नाभिदेशे ताडयेत् । नपुंसका भवन्ति । अङ्गजातदेशेन च चूर्णयेद् असमर्थो भवति । ग्राम्यधर्मनिषेविणो यस्या स्त्रियायां अभिशक्तो भवति तस्याङ्गजाते गुह्यप्रदेशे भस्मनावचूर्णयेत् । असमर्था सा भवति अन्यपुरुषातिसेवने । नष्टव्रणा भवति यावन्तं तदेव पुरुषं प्राप्नुयात् । पुनरेव तस्याः तद्व्रणमुखं प्रादुर्भवति । ......

ध्याचारमशक्तो निसेवितुम्। एवं पुरुषस्यापि। पुरुषेन्द्रियं दक्षिण-हस्तं भस्मनावचूर्णयेत्। सोऽपि असमर्थो भवति। परदाराभिगमने परिम्लानमिव तिष्ठते। तस्य तदङ्गजातं यावद् दात्रवशाद् तस्यैव तत् पुनः प्रादुर्भवति। स्त्रियस्य वा पुरुषस्य वा येन वा तद् भस्म पुनर्दत्तं भवति तस्य वशेन वर्त्तति वा न वर्तति वा यथेष्टं वा तं करोति। यदि बलात् कुर्वन्ति येषां तु तद् दत्तं तेषां गुह्यप्रदेशानि क्रिमयः प्रादुर्भवन्ते। यैर्भक्ष्यमाना जीविताद् व्यपरोप्यन्ते। मासाभ्यन्तरेण पूतिका वा भवन्ति दुर्गन्धकुणपसदृशाः महाप्रतररोगादिभिः पुरुषव्याधिभिः पुरुषा गृह्यन्ते। महाश्वेथुश्चोपजायते। येन तेषां तेनैवाबाधेन कालक्रिया भवति। अशक्ता वा भवन्ति प्रतिसेवितुं दातुस्येच्छया। यथाभिरुचितं तत् सर्वं कारयति। स्पृष्टमात्रो यदि न प्राप्नोति स्पर्शनं दर्शनपथे स्थिता अदर्शने वा अनुवाते च भस्ममुत्सृजेत्। यथा तस्य भस्मना ईषिदवधूलितः मनसा च चिन्तयित्वा दाता भस्ममुत्सृजेत्। यत् तेन चिन्तितं भवति तद् सर्वाणि कर्माणि करोति। परहस्तेन वात्मना वा यथाभिलषितं तत् सर्वाणि कर्माणि करोति। नान्यथा चावन्ध्यं भवति॥

अथ शयनासनादीनां अस्तरणप्रावरणादीनां विविधानि वालङ्करणविशेषाणि नानावस्त्राणि वा वाहनयानोपानहच्छत्रादीनां सत्त्वाण्युपकरणविशेषाणि भोजनपानभक्षणादीनां सर्वाणि शरीरोपयोज्यानि भाण्डोपकरणानि पुष्पन्ताम्बूलफलगन्धधूपादीनां सर्वेषु तेसनं भस्मनावचूर्णयेत्। अरीणां यूकमत्कुणक्रिमिभिः समन्तावच्छरीरमाकीर्णं भवति। भक्षते च। विविधदुःखविहतो भवति। सप्तरात्रेण म्रियते। अशक्ताः सर्ववैद्याः सर्वदेवाश्च निवारयितुम्। अशक्ताः सर्वमन्त्राः रक्षयितुम्। वर्जयित्वा तु तेन दत्तं भवति॥

अथ प्रत्यायनं भवति। यष्टिमधुं नीलोत्पलं श्वेतचन्दनं चेकीकृत्य शीतलेनाम्भस पीपयित्वा तच्छरीरं म्रक्षयेत् मूर्ध्ना प्रभृति यावत् पादतलम् आर्यमञ्जुश्रियमूलमन्त्रं जपता। स्वस्थो भवति॥

अपरमपि कर्म भवति। स्त्रीणामनुवातं गत्वा यत्रेप्सता सर्वदुष्टडाकिनिस्त्रीणां गर्वितानां च प्रयोक्तव्यं नान्येषाम्। तमेनमनुवाते

स्थित्वा भस्ममुत्सृजेत् । मनसा चिन्तयित्वा सर्वभगस्तनान्यपहृतानि भवन्ति । पुरुषस्यापि पुरुषेन्द्रियं श्मश्रुरोमाणि च स्तनानि च प्रादुर्भवन्ते ॥

एवं विविधविचित्राण्यनेकानि कर्माणि करोति । परेण वा कारापयति । यत्र वा प्रीतिरुत्पद्यते तेन वा कारापयति । स्त्रिया वा पुरुषेण वा । यत्र वा चित्तस्य निर्वृत्तिरुत्पद्यते तस्य तद् भस्मां दत्वा यथेष्टं कारापयति । प्रयोगतश्च शिक्षापयेत् । एवं महाव्याधिभिः गृह्णापयति । मनसा चिन्तयित्वा मूर्ध्नि स्पर्शनान्मस्तकशूलः मुखस्पर्शनान्मुखपाकः एवमनुपूर्व्या यावद्धृदयं हृच्छूलकुक्षिशूलं वा उपजायते । एवं पद्भ्यां जङ्घाभिश्चासृगुद्भवै रोगैर्दुष्टशोणितादिषु रोगैर्गृह्णापयति । संक्षेपतो मारयति शोषयति पाचयति आकर्षयति वशयति यथा यथा प्रयुज्यते तथा तथा तत् सर्वं करोति । चोपघातिकं आकर्षणवशीकरणं च सुदूरेऽपि स्थितः कर्माणि करोति । सुदुर्गं कुड्यसमीपं गत्वा, अनुवाते स्थित्वा, तदेव भस्मोत्सृजेत् । उभौ पाणिगृहीतं प्राकारं प्रतोली अट्टालांश्च प्रपतन्ते । तदाध्यक्षं भवनं च महाग्निदाहमुपजायते । सेनाभङ्गं च भवति । महोपद्रवैश्चोपद्रुतो भवति । सर्वमवमुच्य प्रपलायति वा ग्रहणं वाधिगच्छति । एवं परबलेऽपि अनुवाते भस्ममुत्सृजेत् । महाबलसेनायां भङ्गो भवति । दाघज्वरेण वा गृह्यते । हस्त्यश्वरथपताकादयः सेनापतिश्च भङ्गमुपजायते । ग्रहणं वा अभिगच्छति । एवमनेकप्रकाराणि यथेष्टानि शत्रुनाशाय कर्माणि करोति । आत्मनो महारक्षा ये च स्वसेनायां वा सखायानां । अथ प्रलयनं करोति । सर्वतः सर्वेषां पटस्याग्रतः क्षीराहुतिसहस्रं जुहुयात् । स्वस्था भवन्ति अधृष्याश्च ॥

अथ यक्षिणीं साधयितुकामः,

नटी नट तथा भट्ट रेवती चापि विश्रुता ।
तमसुरी थ लोका मेखला चापि सुमेखला ॥
इत्येता अष्ट यक्षिण्यः सर्वकामप्रसाधिकाः ।

नटिकाया मन्त्रः—ॐ नटि महानटि आगच्छागच्छ दिव्यरूपिणि स्वाहा । अस्योपचारः—फलके पट्टके वा अभिलिख्य मांसाहारेण वा क्षीराहारेण वा विद्या अष्टसहस्रं जप्तव्या । आलेख्या च सर्वालङ्कारभूषणी श्यामावदाता वृक्षाश्रिता एकवस्त्रा मुक्तकेशा, संरक्तनयना ईषिस्मितमुखा साधकं तर्जयमाना दक्षिणहस्तेन वामेन पाणिना वृक्षशाखामवलम्ब्या सर्वाङ्गशोभना विचित्रपट्टनिवस्ता । तस्यैव क्रोधराजस्य पटस्याग्रतः उन्मना उत्तरामुखं स्थित्वा पलाशकाष्ठैरग्निं प्रज्वाल्य गुग्गुलुगुटिकानां दधिमधुघृताक्तानां अष्टसहस्रं जुहुयात् त्रिसन्ध्यं यावत् सप्त दिवसानि । ततः सप्तमे दिवसे उदारां बलिं कृत्वा घृतप्रदीपांश्च प्रज्वाल्य मन्त्रं जपता तावत् तिष्ठेत् यावदर्धरात्रम् । ततः सा यक्षिणी स्वयमेव महावभासं कृत्वा स्वरूपेणागच्छति । आगता च ब्रवीति । किं मया कर्तव्यम् इति । ततः साधकेन वक्तव्यम्—भार्या मे भवस्व इति । एवमस्त्विवति कृत्वान्तर्धीयते । ततःप्रभृति भार्या भवति । सर्वकामदा स्वभवनं नयति । रसायनं प्रयच्छते । यत् पीत्वा दिव्यरूपी भवति महायक्षप्रतिस्पर्धी । यदि नागच्छति द्वितीये वारे क्रोधराजसहितं जपेन्नियतमागच्छति । न चेदुच्छुष्कं म्रियते ॥

नट्टाया मन्त्रः—ॐ नट्टे शुक्लाम्बरमाल्यधारिणि मैथुनप्रिये स्वाहा । एतस्यैव एव विधिः ।

भद्राया मन्त्रः—ॐ भद्रे भद्रे आलोकिनि किं चिरायासि एह्येहि आगच्छागच्छ मम कार्यं कुरु स्वाहा । एषा विनापि पटेन सिद्ध्यते । शिरःस्थाने मण्डलकं कृत्वा गुग्गुलुधूपं दहता विद्यामष्टसहस्रं जपेत् । मौनिना एकाकिना शुचिना द्वारं पिधाय मासेन रात्रौ नियतमागच्छति । आगता च कामयितव्या भार्या भवति सर्वकामदा । यद्यसौ भवनं प्रविशते पञ्चवर्षसहस्राणि जीवति । न चेदत्रैव जम्बूद्वीपे विचरति । पञ्चवर्षशतानि जीवति । तया सार्धं क्रीडति । सर्वाज्ञां सम्पादयति । तेन सह यत्रेष्टं तत्र गच्छति । रसायनमनुप्रयच्छते । इष्टभार्येवावहिताध्याशयं करोति ॥

रेवत्या मन्त्रः—नमः सर्वयक्षीणाम् । ॐ रक्ते रक्तावभासे रक्तानुलेपने स्वाहा ।

रेवत्या यक्षिणी श्रेष्ठा ललन्त्या मैथुनप्रिया ।
ईषिद् रक्तेन वस्त्रेण नीलकुञ्चितमूर्धजा ॥

सर्वाङ्गशोभना यक्षी कामभोगरता सदा ।
कामदा भोगदा नित्यं वरदां तां मभिनिर्दिशेत् ॥

पूर्ववत् पटमभिलिख्य एतस्या अयं विशेषः—रक्तपट्ट-निवस्ता रक्तपट्टांशुकोत्तरीया रक्ताव्रभासा च वर्णतः ।

मेखलायाः मन्त्रः—ॐ मेखले महायक्षिणि मम कार्यं स-म्पादय स्वाहा ॥

सुमेखलाया मन्त्रः—ॐ मेखले सुमेखले महायक्षिणि सर्वार्थसाधनि ॐ समयमनुस्मर स्वाहा ॥

आलोकिन्या मन्त्रः—ॐ लोकिनि लोकवति स्वाहा ।

एतेषामेत एव विधिः ॥

तमसुन्दर्याया मन्त्रः—ॐ घुणु गुह्यके घुणु घुणु गुह्ये एह्येहि गुह्यके स्वाहा । अस्योपचारः न । एताया पटविधानोऽस्ति आदौ तावत् शुचिना शुचिवस्त्रमावृतेन पूर्णमास्यां विविक्ते स्थाने द्वारं पिधायित्वा अन्धकारे आलोकवर्जिते त्रिरात्रं दशसहस्राणि जपेत् । पूर्वसेवा कृता भवति । ततः साधनमारभेत् । पूर्णमास्यादारभ्य या-वदपरा पूर्णमासी अत्रान्तरे कर्म भवति । रात्रौ शयनकाले शय्यामा-रूढः प्रच्छन्ने गुप्तप्रदेशे एकाकिना द्वारं पिधयित्वा सङ्कुचितकर्णिका वानपुष्पं च कटुतैलेन मिश्रयित्वा हस्तौ पादौ प्रक्षालयित्वा दक्षिणं वाहुमष्टशताभिमन्त्रितं कृत्वा स्वपेत् मौनी । एवं प्रत्याहं यावत् पौर्णमा-स्यात् । ततोऽर्धरात्रे नियतमागच्छति । आगता च न मन्त्रापयितव्या । तूष्णीभावेन कामयितव्या षड्भिः मासैः । यदा मन्त्रापयति तदा मन्त्रयितव्यम् । ततः प्रभृति सिद्धा भवति । भार्या भवति सर्वका-मदा । दिव्यं चास्य सुखसंस्पर्शम् अदर्शनेनैव सर्वकार्याणि सम्पाद-

यति । रसरसायनानि सम्प्रयच्छति । पृष्ठमारोप्य सुमेरुमपि नयति । रात्रौ जम्बूद्वीपं भ्रामयति । योजनशतास्थितमपि शत्रुं घातयते । यथाज्ञप्ता तत् सर्वं सम्पादयति । वर्जयित्वा परस्त्रियाभिगमनम् । सर्वेषामयं विधान परस्त्रीं नाभिगच्छेत् । तेनैव सह संवसेत् । यदि गच्छेन्मरणोत्मार्त्तिं वा प्रयच्छन्ते । एषा अन्धारसुन्दरी नाम यक्षिणी । अनेकयक्षीशतसहस्रपरिवृता । दिने दिने एकैकां यक्षिणीं क्षर्विटिं प्रेषयति । सिद्धा सती सर्वसाधकानां अनेकमन्त्रपरिवारां च सर्वयक्षीणां च महर्द्धिका तमावृता । सर्वेषामेव एव विधिः । किं तर्हि तेषां दर्शनं भवति । एतस्या दर्शनं न भवति ॥

अन्धारवासिनी नाम यक्षीणां महर्द्धिका ।
गुहावासिनी नरवीरा कुमारी लोकविश्रुता ॥
मधुयक्षी मनोज्ञा च सप्तमा सुरसुन्दरी ।
इत्येताः सप्त यक्षिण्यः सत्त्वानुग्रहकारिकाः ॥
पर्यटन्ति इमं लोकं कृत्स्नां चैव मेदिनीम् ।
ईपित् क्षणमात्रेण उत्पतन्ति सुरालयम् ॥
सङ्ग्रामं देवदैत्यानां युद्ध्यन्ते च महर्द्धिकाः ।
धर्मिष्ठा करुणाविष्टाः सत्त्वकामाः सुवत्सलाः ॥
सत्त्वानां हितकाम्यर्थं पर्यटन्ति महीतले ।
न तासां किञ्चि दुःसाध्यं सर्वकर्मकराः शुभाः ॥
सत्त्वानामुपभोगार्थं बोधिसत्त्वेन भाषिता ।

गुहावासिन्या मन्त्रः — ॐ गुहिले गुह्मनि गुहवासि आनय भगवति ममान्तिकं समयमनुस्मर स्वाहा । खादिरकाष्ठैरग्निं प्रज्वाल्य पुन्नागपुष्पाणां घृताक्तानां अष्टसहस्रं जुहुयात् त्रिसन्ध्यं मासमेकम् । पूर्वसेवा कृता भवति । ततः पश्चात् साधनमारभेत् । फलके वा पट्टके वा कुड्यायां वा अश्लेपकैर्वर्णकैः नवभाजनकूर्चकैः । आदौ तावत् पर्वतराजा सुमेरुर्लिखापयितव्यः चतुरस्रः चतुःशृङ्गोच्छ्रितः सप्तपर्वतपाङ्क्तिपरिवेष्टितः । तेषां पर्वतानामन्ते गुहः पर्वतनिःसृतः आलि-

लिखितव्यम् । तत्रस्था दिव्यरूपिणी सर्वालङ्कारभूषिता प्रकाशिनी यक्षिणी गुहवासिनी नाम लिखापयितव्या पट्टवस्त्रनिवसना पट्टांशुकोत्तरीया कनकवर्णा विचित्रचारुरूपी तं तादृशं पटमभिलेख्य शून्ये प्रदेशे शुचिना क्षीराहारेण निशां दशसहस्राणि जपेत् । महापूजां कृत्वा यथाशक्तितो वा ततो जपान्ते महात्रभागं कृत्वा दिव्यरूपी यक्षिणी स्वयमेवागच्छति । आगताया जातीकुसुमैः श्वेतचन्दनोदकव्यतिमिश्रैः अर्घो देयः । ततः सा ब्रवीति — वत्स किं कर्तव्यम् । वक्तव्यम् — माता मे भवस्वेति' । कृत्वान्तर्धीयते । न च तत्र चित्तं दूषयितव्यम् । नापि कामोपसंहितं प्रार्थयितव्यम् । आर्या सा महर्द्धिका च काम प्रार्थयति न सिद्ध्यते । ततः प्रभृति मातृवत् सर्वकार्याणि करोति । अष्टशतपरिवारस्य भक्ताच्छादं प्रयच्छते । विषमस्थस्य त्रायते । महावन्यपर्वतस्योपरिस्थितस्यापि सर्वकार्याणि सम्पादयति । कामितं च भोजनमनुप्रयच्छते । रसरसायनादीन् सर्वमनुप्रयच्छति । यथेष्टं चानुवर्त्तते । कुटीकुटादीमभिनिर्मिणोति । सुवर्णसहस्रमनुप्रयच्छति दिने दिने । सर्वं व्ययीकर्त्तव्यं तदह एव । यदि न करोति च्छिन्नो भवति । सर्वेण सर्वं भवति ॥

अपरमपि कर्म अस्या । अस्यैव पटस्याग्रतः खदिरकाष्ठैरग्निं प्रज्वाल्य विगतार्चिधूमविगतैः अङ्गारैः दक्षिणहस्ततले मनःशिलया प्रतिकृतिमभिलिख्य नाम च पुरुषस्य स्त्रिया वामहस्ततले तत्रैवाङ्गारराशौ तापयेत् मन्त्रं जपता । योजनशतादपि स्त्रियमानयति । यदुच्यते तत् सर्वं कारयति । रात्रौ एतत् कर्म । न दिवा ॥

नरवीराया मन्त्रः — ॐ नरवीरे स्वाहा । तथैव एतस्या पटमभिलिख्य वर्जयित्वा गुहालयं अशोकवृक्षाश्रिता लिखापयितव्या । एतस्याः अयं विशेषः — सर्वं तथैव कर्म यथा गुहवासिन्या । अयं च वक्तव्या — भगिन्यास्वेति ॥

एतस्यापरोऽस्ति कर्म । चन्द्रग्रहे सुवर्णगैरिकां भूर्जपत्रेण वेष्टयित्वा मुखे प्रक्षिप्य तावज्जपेद् यावच्चन्द्रो मुक्त इति । ततः सुवर्णगैरिकया यस्या नाम लिखति स्त्रियस्य वा आयोजनशतास्थिता

अभ्यानयति । प्रभाते तत्रैव नयति । भगिनीव सर्वाणि कार्याणि करोति । आत्मनश्च महारक्षां करोति । सर्वाण्येव स्त्रियां आनयनेन नाङ्गीकरोति । नरवीराया एष विधिः ॥

यक्षकुमारिकाया मन्त्रः—ॐ यक्षकुमारिके स्वाहा । अस्या-अयमुपचारः—गोरोचनेन भूर्जपत्रे लिखापयितव्या । कुमारी अर्धचन्द्रगाशिरा सर्वालङ्कारभूषिता एकवस्त्रा दक्षिणहस्तेन बीजपूरकग्रस्तफला वामहस्तेनाशोकवृक्षशाखावलग्ना । तादृशं कुमारीं शिरःस्थाने उपरि स्थापयितव्यम् । शुचौ प्रदेशे एकाकिना न स्नातव्यम् । श्वेतचन्दनेन च मण्डलकं कृत्वा त्रिसन्ध्यं जातीकुसुमैरभ्य । [illegible] गुग्गुलुधूपं दहता विद्यामष्टसहस्रकम् जपेत् यावन्मासमेकम् । ततो पूर्णमास्यां जातीकुसुमैः महती पूजां कारयित्वा घृतप्रदीपां । निवेद्यांश्च दत्त्वा कुशविण्डकोपविष्टेन रात्रौ तावज्जपेद् यावत् स्वरूपेणैव कुमारी पञ्चशतपरिवारा वैश्रवणस्य दुहितृ आगच्छति । सर्वं तं दिशाभागमवलोकयित्वा स्वरूपेणान्तरिक्षे तिष्ठति । सा एवमाह—किं मया कर्तव्यम् । ततः साधकेन वक्तव्यम्—त्रयाणां स्थानानामन्यतममेकं वरं प्रार्थयितव्या । मातृत्वे भगिनीत्वे भार्यात्वे च । यदि माता भवति न चित्तं दूषयितव्यम् । दूषयतो विनाश उपजायते । मातृवद् वर्तयितव्या । सा च माता पञ्चशतपरिवारस्य भक्ताच्छादनगन्धद्रव्यविशेषाणि च सर्वत्र चिन्तितमात्रेणैव सम्पादयति । दिने दिने दीनारसहस्रं ददाति । अत्रैव जम्बूद्वीपे विचरतः सर्वं सम्पादयति । भगिनी भवति तदा योजनशतादपि स्त्रीयमानयति । तत्रैव नयति । भगिनीवत् सर्वकार्याणि सम्पादयति । अथ भार्या भवति स्वभवनं नयति । दिव्यं वर्षसहस्रं जीवति । यदा मृयते तदा आढ्यकुलोपपत्तिः । सर्वाज्ञां भार्येव सम्पादयति ॥

वधूयक्षिण्या मन्त्रः— ॐ निः । एषा वधुयक्षिणी । अस्यामुपचारः— श्वेतचन्दनेन दक्षिणां बाहुमुपलिप्य वामतः कुङ्कुमेन रा-हस्राभिमन्त्रितं कृत्वा रात्रौ एकाकिना मौनिना प्रच्छन्ने प्रदेशे द्वारं पिधाय पञ्चाष्टौ विभीतकफलानि तिलतैले प्रक्षिप्य पचेत् । तं तैलं

गृहीत्वा बिभीतकफलां परित्यज्य नवे भाण्डे सौवर्णे राजते ताम्रे मृन्मये वा स्थाप्य पादान्ते शय्यायां सहस्राभिमन्त्रितां कृत्वा अनेनैव मन्त्रेण एकाक्षरयक्षिण्या अन्धकारे निर्जने शयने पुष्पाभिकीर्णे स्वप्तव्यम् । आगत्य चामानुषी पादौ म्रक्षयति । दिव्यसुखं स्पर्शकोमलहस्ततला । यस्य स्पर्शनादेव दिव्यं सुखसंस्पर्शं निद्राप्रजायते । येन सूर्योदयेऽपि राज्यन्ते दुःखेन प्रतिबुध्यते । प्रतिबुद्धोऽपि सन् तदेव चिन्तयेत् । न च कामयितव्या नापि मन्त्रापयितव्या । षड्भिर्मासैः सिद्धा भवति । ततः सा दिव्यरूपी अभिनवयौवना वयात् समाना परिचारिकैः परिवारिता प्रदीपहस्ता स्वप्रभोद्योतितालोका शयनासनपरिगृहीता विचित्राभरणोज्ज्वला आगत्य च मन्त्रापयते । कामभोगोपकरणपरिगृहीता आगत्य च साधकं कण्ठे परिष्वजते । ततःप्रभृति इष्टभार्येव मनुवर्त्तते । आगता च कामयितव्या रात्रौ परिचर्य प्रभातेऽन्तर्धीयते । शय्यायां मुक्ताहारं त्यज्य सुवर्णसहस्रमूल्यं दिने दिने परित्यज्य गच्छति च । सर्वं निरवशेषं व्ययीकर्त्तव्यम् । यदि किञ्चित् स्थापयति भूयो न भवति । न कस्यचित् कथितव्यम् । यदि कथयति भूयो नागच्छति । अनर्थं वा कुरुते । मारणान्तं परमगुह्यका ह्येते परमगोप्या न द्वितीयसत्त्वसमारोचनं क्षमन्ते । मातापितृसुहृत्स्वामित्रान्धवानामपि नारोचयितव्यम् । अन्तशः पशुस्यापि तिर्यग्गतानां प्राणिनां नारोपयितव्यम् । परमगुह्यमेतत् । सर्वगुह्यकानां सर्वयक्षिणीनां च एष एव विधाना । सिद्धा अपि असिद्धा भवन्ति । यत्रारोचयते । अन्यस्त्रीमैथुनाभिगमनं च भार्याया च वर्जयेत् सदा ॥

मनोज्ञाया मन्त्रः—ॐ मनोहरे मदोन्मादकरि विचित्ररूपिणि मैथुनप्रिये स्वाहा । अस्यामुपचारः—उद्यानवाटिकायां अशोकवृक्षस्याधस्तात् सविभक्तां कुटिं कारयित्वा अनुत्तरां कृतकवाटार्गलप्राकारोच्छ्रितां शुचिना लक्षमेकं जपेत् । ततः कर्ममारभेत् । महावसां सङ्गृह्य श्मशानचोटकेन वर्तिं कृत्वा द्वारं पिधयित्वा प्रदीपं प्रज्वालयेत् । सदशं च वस्त्रं केशापगतं बहिर्द्वारं स्थापयेत् । अलग्रं

रात्रौ सा नग्निकागत्य तं वस्त्रं निरास्य प्रविशने मानुषस्त्रीरूपिणी भूत्वा । ततः साधकः तेन सार्धं रमते यावत् प्रदीपं ज्वलते । निर्वृते प्रदीपेऽन्तर्धीयते । तस्मिन् वस्त्रे सुवर्णमेकं बद्ध्वा वस्त्रं परित्यज्य-शय्यायामपक्रमति । अथ साधकस्तां हस्ते गृह्णाति । अङ्गुलेयिकैकानमुच्यात्क्रमते । अथ कण्ठा दिव्यमुक्ताहारां अथ बाहात् कटकं कक्ष्यां मेखलां पद्भ्यां नूपुरं शीर्षे मणिं एवमन्यतरान्यतरं-दिव्यमाभरणमेकं यत्र यत्र गृह्यते तत्र तत्रानुप्रयच्छति । अत्रध्यां गच्छति चागच्छति च । एवं प्रत्यहं निरवशेषं व्ययीकर्त्तव्यम् । एवं यावत्त्रिर्मासैः मन्त्रापयाति तदा मन्त्रयितव्यम् । भार्या भवति । नित्यस्था रसायनं प्रयच्छति यं पीत्वा दीर्घकालं जीवति । मनसा ध्यात्वा खदिरकीलकं भूमौ निखानयेत् । दिव्यं विमानमुपपद्यते । उद्धृतेऽन्तर्धीयते । अस्याया मन्त्रः द्वितीयमस्ति । ॐ महानग्नि नग्निजे स्वाहा तेनैव दीपं प्रज्वाल्य अनेन मन्त्रेणाष्टशताभिमन्त्रितं कृत्वा कारयेत् । नियतमागच्छति । कीलकं चाभिमन्त्र्य निखानयेत् । उद्धृते दीपं निर्वृते चान्तर्धानं कीलकं मानुषं वसाकीलं च सो शृङ्गे गवलमाहिषशृङ्गे वा श्मशाने चैलवर्तिना वोढव्यम् । देशान्तरे । यत्रेष्टं तत्र ददाति । स्वयं वा करोति । न च मन्त्रा दातव्या । अथ ददाति छिन्नविद्यो भवति । यस्य ददाति तस्यैव तत् सम्पद्यते । यत्र वाभिरुचितं यत्र वा स्थानं गुप्तं करोति । एषा सिद्धिः आचर्ये नापगच्छति । अन्यां वा रमापगते । किन्तु तैः सार्धं न मन्त्रयति । अन्यस्त्रीदर्शनाभिरुचितं मनसेप्सितं तदानुरूपी तस्योपसङ्क्रमतो ह्यपूर्वस्य साधकवशादिति ।'

सुरसुन्दर्याया मन्त्रः--- ॐ सुरसुन्दरि ! स्वाहा । अस्यामुपचारः—खदिरकाष्ठैरग्निं प्रज्वाल्य घृताहुतीनां अष्टसहस्रं जुहुयात् । त्रिसन्ध्यं मासमेकं शुक्लपूर्णमास्यां कुशपिण्डकोपविष्टः शुचिना शुचौ देशे मन्त्रं तावज्जपेद्रहसि यावदर्धरात्रे नियतमागच्छति । ततो माता भगिनी भार्या यथैव पूर्वं तत् सर्वं करोति सर्वं च विस्तरतो वक्तव्यम् ॥

इत्येताः सप्त यक्षिण्यः वज्रपाणिसमाज्ञया ।
पर्यटन्ति महीं कृत्स्नां त्रैलोक्यं च सुरासुरम् ॥
विचेरुः कृपालुभ्यो मर्त्यानां मैथुनप्रियाः ।
केऽपि दार्यास्तथा वाला मूढाश्चापरयक्षिका ॥
पर्यटन्ति तथा रात्रौ सिंहकाम्यपरा हिता ।
बालानां जीवनाशाय लोलुपा मांसभोजिका ॥
तथा रुधिरगन्धेन जम्बूद्वीपं हि मागताः ।
प्राणापरोधिका यक्षी नित्यं सा शोणितप्रिया ॥
पर्यटन्ति गृहां सर्वां आरक्षामृतकसूतकाम् ।
तेषा निग्रहमित्युक्तः समयोऽयं सम्प्रकाशितः ॥
यथा सङ्ग्रहरागं च निवन्ध्यं चेह वालिशाम् ।
तथा सर्वमिदं प्रोक्तं सत्त्वानां हितकारणात् ॥
मैथुनार्थी यथा मन्त्री रागान्धो मूढचेतसः ।
मन्त्रैराकृष्य भुञ्जीत यक्षीं वा अथ राक्षसी ॥
नागी च मथ गन्धर्वीं दैत्ययोपिमथ किन्नरीम् ।
पातालभवनं रम्य असुराणां पुरोत्तमम् ॥
प्रविशेत् तत्र मन्त्रज्ञः यत्र स्त्रीणामसङ्ख्यकम् ।
तत्र गत्वा वसेत् कल्पं मन्त्रज्ञो मन्त्रजापिनः ॥
मैत्रेयो नाम सम्बुद्धः यदा बुद्धो भविष्यति ।
तदासौ श्रोष्यति सद्धर्मं श्रुत्वा मुक्तो भविष्यति ॥
सुरकन्यासुरीं चैव विद्याधरवराङ्गनाम् ।
मन्त्रैराकृष्य भुञ्जीत दिव्यसौख्यरतिं तदा ॥
जम्बूद्वीपगतो मन्त्री तत्रैवानयते सदा ।
शुचिस्थाने तदा गुप्ते शौचाचाररतः सदा ॥
मूढानामुत्तमा सिद्धिः कदाचित् तेन जायते ।
विन्मूत्रमशुचिस्थानं सदा दुर्गन्धिपूतिकम् ॥

व्याधिदुःख तथा शोकं मरणान्तं दुःखभाजनम् ।
वियोगं रतिसम्पृक्तं न स्पृशेन्मानुषीं स्त्रियाम् ॥
अनित्यदुःख तथा शून्यरिक्तस्तुच्छमशाश्वतम् ।
वालमुद्धापनं ,चापि सङ्कल्पजनितोद्भवेत् ॥
न गच्छेत् कामतो मन्त्रीः सर्वकामामनादिजाम् ।
तेषां रतिमित्युक्तो विमुक्तिः तेपु सिद्धिताम् ॥
सिध्यन्ते तस्य मन्त्रा वै ये विरक्ता तु कामतः ।
विन्मूत्ररुधिरासिक्तां + + +चैव पूजिताम् ॥
रामृत्युसुशोकां च न स्पृशेन्मानुषीं तनुम् ।
न भेजेन्मैथुनं तत्र मोहान्धा रागचेतसाम् ॥
न सिद्धिर्लभ्यने मन्त्रां तेपु सेवी सदाशुची ।
मन्त्रज्ञो मन्त्रजापी च समज्ञोऽथ जितेन्द्रियः ॥
शौचाचाररतो धीरः सर्वमन्त्रोऽपि हि सदा ।
पद्मोच्चा समोदा च अजिता चापि जया सदा ॥
श्यामावर्ते तथा यक्षीः इत्येता यक्षिमहर्द्धिका ।
पद्मोच्चाया मन्त्रः---'ॐ पद्मोचे स्वाहा' ॥

अस्याः कल्पः —गङ्गाकूले समुद्रतटे वा उद्यानपुष्पवाटिकायां मध्ये उडयं कृत्वा शुचितरं आत्मना च शुचिर्भूत्वा शिलापट्टकाकारं मृण्मये कृत्वा तत्रैव रात्रौ द्वारं पिधयित्वा सर्वकामभोग्याद्युपकरणान्युपहृत्य तत्रैवात्मसमीपे यक्षिण्यां शय्यां कल्पयेत् । ततो विद्यां दश सहस्राणि जपेत् । एवं यावन्मासाभ्यन्तरेण नियतमागच्छतीति । आगता च कामोपभोग्या भवति भार्या । दिव्यं च मुक्ताहारं शय्यां परित्यज्य प्रभाते गच्छति । एवं यावद् दिनेदिने पड्भिर्मासैः नित्यस्था भवति । तन्मुक्ताहारं न ग्रहेतव्यम् । यदि गृह्णाति तन्मात्र एवमुपपद्यते । दीनारलक्षमूल्यं तत् हारं मणिरत्नोपशोभितं पड्भिर्मासैरतिक्रान्तैः नित्यस्था भवति भार्या सर्वकामदा । यथा रूपमभिलपितं

तथा रूपं कृत्वा उपतिष्ठते। यथाभिरुचितमोन्मानमाभिनिर्मिनोति। साधकस्येच्छया सर्वेषां यक्षीणामयं विधानः यथा निर्दिष्टानां अत्र अन्यत्र ॥

जयाय मन्त्रः—ॐ जये! सुजये! जापयति सर्वकार्याणि कुरु मे स्वाहा।

कनकाभा चित्राङ्गी नीलकुञ्चितमूर्धजा।
सर्वाङ्गशोभना देवी भाम्य च सुभगा शुभा ॥
प्रियंवदा प्रमदाश्रेष्ठा सुरूपा चारुदर्शना।
प्रशस्ताकाररुः शुक्रः सर्वलोकसुपूजिता ॥
ईषिद्रक्तेन वस्त्रेण जयां तामभिनिर्दिशेत्।

अस्याः कल्पः—आदौ लक्षमेकं जपेत्। पूर्वसेवा कृता भवति। ततो महारण्यं प्रविश्य फलाहारः तावज्जपेद्यावत् स्वरूपेणोपतिष्ठते। आगता च ब्रवीति—'किं करोमी'ति। यदि माता भवति। मातृवत् सर्वाशां परिपूरयते। राज्यं ददाति। महाधनपतिं करोति। दीर्घायुष्कतामधितिष्ठते। अथ भगिनी यथेप्सितं स्त्रीमानयति याजनसहस्रस्थितामपि। दीनारलक्षं दिने दिने ददाति। स च व्ययीकर्तव्यः। अथ भार्या भवति स्वभवनं नयते दिव्यविमानाभिरूढो तया सार्धं रमते। दीर्घकालं त्रिंशद् वर्षसहस्राणि यथेष्टं विचरते। महायक्षप्रतिरूपो भवति ॥

प्रमोदाया मन्त्रः—ॐ ष्ट्रीः। ह्रीः महानग्नि हूं फट् स्वाहा। अस्याः कल्पः—अर्धरात्रे अपरिमाणो जापः कर्तव्यः। भूयो निद्रां गच्छेत्। मासाभ्यन्तरेण नियतमागच्छति। भार्या भवति सर्वकामदा। दिनेदिने पञ्चविंशति दीनारामनुप्रयच्छति। आत्मना ... दीर्घकालं च जीवापयति ॥

एवमपरिमाणानि यक्षिणी शतसहस्राणि भवन्ति। एवं पिशाचाः पिशाचमहर्द्धिकाः नागकन्याः असुरकन्याः अप्सरा सुरगोविद् दैत्यकन्या। एवं विद्याधरीणां सर्वेषां सर्वतः मानुषीणाममानु-

षीणां च मन्त्राणि भवन्ति। असङ्ख्येयानि तथैव यक्षाणां देवानां नागानां ऋषीणां गन्धर्वाणां असुराणां प्रेतानां राक्षसानां च महाब्रह्मणः महेश्वरस्य महाविष्णोः मातराणां ऐन्द्राणि चामुण्डिनारायाहिप्रमुखानां मन्त्राणि भवन्ति पृथक्पृथक् सर्वे च समये आकृष्टाः इह क्रोधराजेन यमान्तकेन आनीता ग्रस्ता समये स्थापिता मञ्जुघोपस्योपनामिता अनुपरिवारा अनुपूर्वस्थिता परिचारिका सर्वेषां संक्षेपतः यत्र प्रतिमा स्वयं वा प्रतिकृतिं कृत्वा क्रोधराजानं यमान्तकं तावज्जपेद्यावत् प्रतिबिम्बं प्रकम्प्य प्रचलते प्रस्विद्यति वा। अयं स्वरूपेणागच्छन्ते। यदुच्यते तत् सर्वं सम्पादयन्ते॥

एवं यापि ताः चतुःकुमार्यः महायक्षिण्यः भ्रातुः तुम्बुरुसमेता दिव्यरूपिण्यः अम्बुराशिसमाश्रिताः नौयानसमारूढाः सर्वलो(क)सुपूजिता सत्त्वानुग्रहकारिकाः तेषामप्येष एव विधिः। यदुत

पटभित्तिफलके समाकीर्णा लिखितापि वा।
नौयानसमारूढा भ्रातुर्ज्येष्ठानुनेयिका॥
अम्बुधे अन्तर्गता कन्या चतुरेवसमानुगा।
तेषां प्रच्छन्नतः स्थाप्य क्रोधं जाप्य समारभेत्॥
चलः कम्पः तथा स्वेदः जायतेषु च सर्वतः।
ततः सिद्धा इति ज्ञात्वा मन्त्रजापी जपं त्यजेत्॥
स्वरूपेणैव रात्र्यन्ते कथयन्ति शुभाशुभम्।
सर्वथा साधका ते वै भवन्ते ह सजापिने॥
सर्वे कुर्वन्ति आज्ञप्ताः क्रोधमाकृष्टमूर्च्छिताः।
सोमाद्यैर्ग्रहवरैर्नित्यं ऋषिभिः राक्षसैस्तथा॥
पिशाचैर्गरुडैश्चापि सुपूजिता ते महर्द्धिकाः।
महेश्वराद्यैस्तथाभूतैः पूजिता ते महर्द्धिकाः॥
एतैश्च भाषिता कल्पा मन्त्रतन्त्राः सविस्तराः।
ते तु सर्वे प्रयोक्तव्या सकल्पा कल्पविस्तराः॥
सर्वे ते क्रोधराजस्य वशे तिष्ठन्त्ययत्नतः।
धावन्ति केचिन्मन्त्रा वै उच्छुष्या कश्मलोद्भवाः॥

सर्वे ते क्रोधराजस्य नियुक्ता ते प्रकाशिता ।
आर्या ये च मन्त्रा वै विशिष्टा सर्वतोगताः ॥
उत्कृष्टाः प्रवरा ह्युग्राः भाषिता जिनवरैस्तथा ।
तथा मन्त्रधरे मन्त्रा मया चैव प्रभाषिता ॥
ये चान्ये मन्त्रमुख्यास्तु कुलेष्वेव हि पञ्चसु ।
भाषिता जिनपुत्रैस्तु लौकिकाश्चापि महर्द्धिका ॥
सर्वांस्तां समाकृष्य क्रोधराजो महर्द्धिकः ।
सर्वेषां मन्त्रतन्त्रास्त्रनिबद्धास्ते इह शासने ॥
यो येषां विधिराख्यातः तेनैवायं नियोजितः ।
क्रोधराजा यमान्तस्तु उत्कृष्टः सर्वकर्मिकः ॥
तारां च भृकुटीं चैव तथा पण्डरवासिनीम् ।
महाश्वेतां तथा विद्यां मामक्यां कुलिशोद्भवाम् ॥
उष्णीषप्रभां सर्वलोचनां चैव देवताम् ।
सर्वां तथागतीं विद्यां मञ्जुघोषं च धीमतम् ॥
महास्थामं समन्तं च तथा पद्मवरं प्रभुम् ।
यथापि लोके यक्षेशं बोधिसत्त्वं महर्द्धिकम् ॥
यदुक्तं जिनपुत्रं तु सर्वाङ्गं लोकविश्रुतम् ।
वज्रसेनं सुषेणं च मत्सुतां चापि धीमताम् ॥
मया ये भाषिता मन्त्रा नावज्ञां कारयेज्जपी ।
ते सर्वा पूजयेन्नित्यं अल्लङ्घ्यास्तेषु भाषिता ॥
न जपी योजयेत् तत्र क्रोधराजं सुपूजितम् ।
विद्याच्छेदं न कुर्वीत तेषु मन्त्रेषु सर्वदा ॥
सर्वांश्चैव यथा कर्मा लौकिकां मन्त्रदेवताम् ।
उमाशङ्करब्रह्माद्यां हरिं चापि सुपूजितम् ॥
यथा तन्त्रेषु मन्त्राणां सर्वेष्वेव तथा कृता ।
सर्वे च सर्वतो मन्त्रां सर्वे चैव समारभेत् ॥

सर्वमन्त्रप्रवृत्तिस्तु दृश्यते क्रोधसम्भवा ।
एष मन्त्रो महाक्रोधः यमान्तो नाम नामतः ॥

आकृष्य घातयेत् क्षिप्रं यमस्यापि महात्मने ।
वैवस्वतं कृतान्तं वै शक्रश्चापि महात्मनः ॥

आकृष्टा वसिता घोरा दुर्दान्तदमको प्रभुः ।
एष मन्त्रो महामन्त्रः कथितो मञ्जुभाणिना ॥

सर्वकर्मकरः क्रूरः सर्वमन्त्रप्रसाधकः ।
इत्येवमुक्त्वा ततः श्रीमां वज्रपाणिर्महर्द्धिकः ॥

प्रणम्य बुद्धं महावीरं शाक्यसिंहं नरोत्तमम् ।
मन्त्रं च काश्रितो वज्री मन्त्रं भाषे महर्द्धिकम् ॥

शृण्वन्तु सर्वे सत्त्वा वै सर्वभूतगणाः शुभाः ।
सर्वमैत्रगणाध्यक्षा भाषेऽहं मन्त्रमुत्तमम् ॥

भाषितं बोधिसत्त्वेन मञ्जुघोषेण धीमता ।
दुर्दान्तदमकं घोरं सर्वदुष्टनिवारणम् ॥

विनेयार्थं तु सत्त्वानां बोधिसत्त्वेन भाषितम् ।
अहं च भाषहे ह्यत्र पर्षन्मध्ये सुदारुणम् ॥

नमः समन्तबुद्धानां अभावस्वभावसमुद्गतानाम् । नमः प्रत्येकबुद्धार्यश्रावकाणां नमो बोधिसत्त्वानां दशभूमिप्रतिष्ठितेश्वराणां बोधिसत्त्वानां महासत्त्वानाम् । तद्यथा—ॐ ख ख खाहि खाहि दुष्टसत्त्वदमक असिमुसलपाशपरशुहस्त चतुर्भुज चतुर्मुख षट्चरण गच्छ गच्छ महाविघ्नघातक विकृतानन सर्वभूतभयङ्कर अट्टहासनादिन व्याघ्रचर्मनिवसन कुरु कुरु सर्वकर्मा च्छिन्द च्छिन्द सर्वमन्त्रां आकर्षाकर्षय सर्वभूतां निर्मथ निर्मथ सर्वदुष्टां प्रवेशय प्रवेशय मण्डलमध्ये वैवस्वतजीवितान्तकर कुरु कुरु मम कार्यं दह दह पच पच मा विलम्ब मा विलम्ब समयमनुस्मर हूं हूं फट् फट् स्फोटय स्फोटय सर्वाशापारिपूरक हे भगवं किं चिरायसि मम सर्वार्थं साधय स्वाहा ।

एष सः मार्षाः सर्वदेवगणाः यमान्तको नाम क्रोधराजा यमराजानमप्यानयति घातयति शोषयति पाचयति दमयति । एवं सर्वमन्त्रां सर्वदेवां किं पुनर्मानुषं प्रति दुःखिनम् । दशभूमिप्रतिष्ठितामपि बोधिसत्त्वानानयति । किं पुनर्लौकिकां मन्त्रान् । एवमपरिमितबलपराक्रमोऽयं क्रोधराजा । एवं सर्वमन्त्रतन्त्रभाषितेष्वपि सर्वकर्माणि कुरुते । सर्वमन्त्राणां यथा यथा प्रयुज्यते तथा तथा करोति पठितसिद्ध एष क्रोधराजा यमान्तको नाम परिसमाप्त इति ।।

आर्यमञ्जुश्रीमूलकल्पाद् बोधिसत्त्वपिटकावतंसका-
न्महायानवैपुल्यसूत्रात् पञ्चाशतिमः यमा-
न्तकक्रोधराजासर्वविधिनियमः तृतीयः
पटलविसरः परिसमाप्त इति ॥

---

नमो बुद्धाय । समाप्तं च यमान्तकस्य
क्रोधराजस्य कल्पमिति ॥

---

## अथ त्रिपञ्चाशः पटलविसरः ।

अथ खलु भगवां शाक्यमुनिः तस्मात् समाधेर्व्युत्थाय महासागरोपमायां पर्षन्मण्डलं धर्मं देशयमानः सर्वसत्त्वानां सर्वभूतगणानामग्रतः सन्निषण्णाः तत्र वज्रपाणिप्रमुखानामनेकबोधिसत्त्वासङ्ख्येयसहस्रां शारिपुत्रप्रमुखां अनेकासङ्ख्येयार्हत्सहस्रां वैश्रवणप्रमुखां असङ्ख्येयाश्चचातुर्महाराजिकदेवपुत्रां शक्रप्रमुखां त्रायस्त्रिंशां असङ्ख्येयदेवपुत्रां सुयामसन्तुषितनिर्माणरतिपरनिर्मितवशवर्तिब्रह्मकायिकब्रह्मपुरोहितमहाब्रह्मपरीत्ताभाप्रमाणाभाभास्वरेर्यावत् पुण्यप्रसवा बृहत्फला वृहातपाकनिष्ठा देवानामन्त्रयते स्म । शृण्वन्तु भवन्तो देवसङ्घाः! सर्वबोधिसत्त्वार्यश्रावकाः!

अनित्याः सर्वसंस्कारा उत्पादव्ययधर्मिणः ।
उत्पद्य हि निरुध्यन्ते तेषां व्युपशमः सुखम् ॥

अविद्याप्रभावाः सर्वे उत्पद्यन्ते सहेतुकाः ।
सहेतुं दुःखमूलं तु स्कन्धा उक्ताः समोदयाः ॥

तेषां निरोधिनी शिवा सुखहेतुर्मार्गिकाम् ।
दुःखप्रहाणमित्युक्तं संक्षेपेण निवारणा ॥

तदेव त्रिविधं यानं निर्दिष्टं च मया इह ।
अनित्यदुःखमनात्मानो क्षणिकं सर्वसंस्कृतम् ॥

शून्यं सदा सर्वदा सर्वं निर्दिष्टं पश्यन्तानाम् ।
तद्विरागा विधा यान्ति ये सत्त्वा योगनिसृता ॥

बोधिसत्त्वास्तदा बुद्धा प्रत्येकां बोधिमाश्रिताम् ।
तथा परेऽर्हरहतो वीतरागा महर्द्धिका ॥

श्रावकीं बोधिनिसृता शिवा शान्तिगता हि ते ।
एष धर्मो समासेन निर्दिष्टो मे शुभाशुभम् ॥

अशुभं वर्जयेन्नित्यं सर्वदा शुभमाचरेत् ।
अहिंसा सर्वभूतानां यथा धर्मो प्रकाशितः ॥
एक एव भवेन्मार्गं धर्माणां गतिपञ्चके ।
अनाश्रवश्च यो धर्मो भूतकोटिसमाश्रितः ॥

स एष कथितो मार्गः आदिबुद्धैः पुरातनैः ।
मयापि कथितं सर्वं शान्तनिर्वाणगामिनम् ॥

धर्मकोटिं समागम्य भूतकोटिं तु लभ्यते ।
अकोटी सर्वधर्माणां भूतकोटिमुदाहृता ॥

एष धर्मः समासेन द्विविधैव प्रकाशितम् ।
शृण्वन्तु सर्वे देवा वै बोधिसत्त्वा महर्द्धिकाः ॥

अर्हन्तः श्रावका मह्यं निर्वाणं मे यदा भुवि ।
अभूत् सालवने मध्ये हिमवत्कुक्षिसम्भवे ॥

नद्यां हिरण्यवत्यायां मल्लानामुपवर्तते ।
यमकशालकवने मध्ये निर्वाणं मे भविष्यति ॥

यावत् संज्ञी तथा नगरे चैत्ये मकुटवर्धने ।
नदीतीरे सदा रम्ये निर्वाणं मे तदा भुवि ॥

सर्वे वै बोधिसत्त्वास्तु श्रावकाश्च महर्द्धिकाः ।
देवा नागा तथा यक्षा लोकपाला महर्द्धिका ॥

शक्रब्रह्मसुयामाश्च अकनिष्ठाद्यास्तथा परे ।
सर्वेषां सन्निपाता वै तस्मिं स्थाने भविष्यति ॥

यमकशालकवने तत्र मल्लानामुपवर्तते ।
गङ्गायामुत्तरे तीरे महानद्यास्तथा परे ॥

हिमाद्रेर्दक्षिणे भागे अभूत् सालवने वने ।
अपश्चिमे मे तथा शय्या तस्मिं स्थाने भविष्यति ॥

नद्या तीरे तथा रम्ये हिरण्याख्ये शुभे तटे ।
सर्वदेवसङ्घाद्यां सन्निपातो भविष्यति ॥

मनुजैः नृपवरैः सर्वै मनुष्यामनुष्यसम्भवैः ।
सर्वभूतैस्तथा मर्त्यैं बालिशाबालिशैस्तदा ॥

महोत्सवमहोत्साहं तस्मिं स्थाने समागमम् ।
कृतमन्त्रमहं दिव्यं मच्छरीरे तु सामिपे ॥

निरामिषं तु तदा स्थाप्य शान्तिमाप्नोति निर्वृतिम् ।
धर्मकोटिं परित्यज्य भूतकोटिं तु संविशेत् ॥

अपश्चिमा मे तथा जातिः नगरे कपिलवास्तुके ।
शाक्यानां च कुले मुख्ये जातोऽहं भवचारके ॥

ततोऽहं त्यज्य दुःखात्म्यं निर्यातोऽहं गृहात्तथा ।
बहुतीर्थां तथा सेव्य न च प्राप्तो मृतः पुनः ॥

दुःकरं च मया चीर्णं कायं सन्ताप्य तत्रैनम् ।
षडाब्दमुषितः भ्रष्टदेहं वापि विशुष्कतः ॥

न च किञ्चिन्मया लब्धं येन ज्ञानमवाप्नुतम् ।
ततोत्थाय मया तत्र आहारं कृथ शुभोदनम् ॥

देवताभ्यर्चितं मार्गं गतोऽहं तत्र भूतलम् ।
नद्या नैरञ्जनातीरे वृक्षराजे सुशोभने ॥

नानापुष्पसमाकीर्णे तथेरण्येऽथ भूतले ।
महावनफलोपेते नानावृक्षसमुद्भवे ॥

महानदी परिवेष्ठप्रान्ते तरुमूले ततो ह्यहम् ।
गो स्वकं दृष्टमात्रं तु भूगागं भूमिगंलगे ॥

तथैवाहं तं तरुं दृष्ट्वा पर्णशाखोपशोभितम् ।
महावृक्षं महाच्छायं मूलगूढोपशोभितम् ॥

अश्वत्थेऽश्वत्थवां गच्छेत् तरुमूले निपन्न वै ।
धृतिं तत्राभिनिन्दामि ध्यानं चापि समाधिकम् ॥

प्राप्तं तत्र अनाशां वै रात्र्यन्ते जातिरन्तकम् ।
मारेण बहुधा विघ्ना अनेकाकारसुयोजिताः ॥

भग्नसैन्यपरावृत्ता गतोऽसौ स्वभवनं पुनः ।
तदर्थं मन्त्रतन्त्रा वै भाषिता बहुधा पुनः ॥

अनेकाकारप्रयोगाश्च ध्याना ज्ञानाश्च भाषिताः ।
त्रिधा यानं पुनस्तत्र चरितं सर्वसेवितम् ॥

प्रतिपक्षा हि दोषाणां त्रिधा नैव प्रकाशितः ।
ततोत्थाय पुनर्गत्वा त्रुरुनिल्वां शुभोदकाम् ॥
स्नात्वाम्भसे तत्र ऋषिं प्रव्रज्य सशिष्यकाम् ।
सत्त्वार्थं बहुधा कृत्वा प्रक्रान्तोऽहं ततः पुनः ॥
पुनः काशिपुरीरम्यां अनुपूर्व्या समाविशेत् ।
तत्र स्थाने तु गत्वा वै परा बुद्धा महर्द्धिकाः ॥
तत्राहं स्थितो देशे जने काशिजने स्वयम् ।
प्रवर्त्य चक्रं साधर्म्यशान्तिं निर्वाणकारकम् ॥
सगुरासुरलोकानां गतिं पञ्चामुनिसृताम् ।
सर्वभूतसुखार्थाय तत्र धर्मं प्रकाशितः ॥
आदिबुद्धैः पुरा तत्र धर्मचक्रं प्रवर्तितम् ।
मयापि दिशि तत्र धर्मचक्रो ह्यनुत्तरः ॥
भवमुक्तिसुखार्थाय सत्त्वदोषनिवारणा ।
प्रवर्त्य चक्रं त्राह्मां वै क्षेमं शान्तपरायणम् ॥
भवमार्गविनाशार्थं चतुःसत्यसमाधिजम् ।
आर्याष्टाङ्गिकं मार्गं चतुर्ब्राह्मनिभूषितम् ॥
सप्रतीत्य समुत्पादं द्वादशाकारकारितम् ।
अविद्यानिरोधसंयुक्तं विद्यामुत्पादनेमिजम् ॥
भ्रामिता कोटितस्थ्यं वै भूतकोटिसुकोटिजम् ।
अनुलोमविलोमाभ्यां गतिमाहारनेमिजम् ॥
सम्प्रदेशशिवं चक्रं बहुसत्त्वा विमोक्ष च ।
विमुञ्च्य काशिपुरीं रम्यां श्रावस्त्याहं तदा गमे ॥
तीर्थिकानां तथा वर्ज्या प्रातिहार्यैर्विकुर्वतैः ।
शङ्कश्ये तथा कृत्वा ऋद्धिर्जनपदे तदा ॥
बहुतीर्थायतनां स्थानां सम्प्रतोष्य तदा पुनः ।
अग्निभाण्डे जने कृत्वा देवावतरणं शुभम् ॥

त्रायस्त्रिंशेषु देवेषु शक्रमंयोऽग्र भर्गनाम्।
अकनिष्ठाद्यां तथा देवां ब्रह्मादीशपुरन्दराम्॥
सवैश्रवणयक्षेन्द्रां चतुर्महाराजकायिकां गदा।
मत्ताकरोपमाणाश्च त्रिवीणां मालधारिणाम्॥
देवां यणगणां सर्वां भौमां दिव्यान्तरीक्षकाम्।
आर्यां यथगणाध्यक्षां सर्वांश्चैव सुरासुराम्॥
कृत्वा धर्मफले युक्तां निर्वाणानुगसत्त्विताम्।
श्रेयसैव तदा योज्या बहुप्राणामचित्तकाम्॥
असङ्ख्या गणना तेषां संसारान्तादनन्तकाम्।
महासाहस्रलोकानां धात्वाध्यामचित्तकाम्॥
बहु सर्वे सदा सत्ये भूतार्थे सान्नियोज्य वै।
इहाहमागतस्तत्र शुद्धावासोपरि स्थितः॥
प्रवर्त्य मन्त्रसद्धर्मंविधायानसयानुगम्।
सत्त्वानां विनयमागम्य कल्पराजमिदं पुनः॥
प्रकाश्ये बहुधा लोके मञ्जुघोषस्य वचनां।
निर्वृते तु मया लोके शून्यीभूते महीतले॥
मञ्जुश्रियोऽथ सत्त्वानां बुद्धकृत्यं करिष्यति।
आरक्षणार्थं सद्धर्मां जिनेन्द्राणां परिनिर्वृता॥
सतता रक्षणा नित्यं मञ्जुघोषो भविष्यति।
मन्त्रप्रभावनार्थं तु कथितं कल्पविस्तरम्॥
तस्मिं काले युगान्ते वै महाघोरे सुदारुणे।
नराधिपा महाक्रूरा परस्परवधे रताः॥
पापकर्मा दुराचारा अल्पभोगा तदा युगे।
भविष्यन्ति न सन्देहो तस्मिं काले युगाधमे॥
ममागम्य च पूजार्थं अभूत् सालवने वने।
नदीहिरण्यानतीतीरे चैत्ये मकुटबन्धने॥

परिनिर्वृते शयानं मे शान्तधातुसमाश्रुते ।
चितामरोपिते देहे सम्भोगे भोगवर्जिते ॥
दृष्ट्वैव तत् पुरा कर्म मामेवाद्भुतचेष्टितम् ।
मयैव विनयतागम्ये बुद्धवैनेयचेष्टिते ॥
चरितं तं शुभं चित्रं स्मृत्वा सर्वे नराधिपाः ।
सर्वे पूजां करिष्यन्ति सदेवासुरमानुषाः ॥
समागत्यथ भूपालाः सर्वे पूजामहोत्सवाम् ।
करिष्यन्ति न सन्देहः तस्मिन् काले ममान्तिके ॥
चितामारोपिते देहे सामिषे गुणमुद्भवे ।
अशुभान्ते शुभे चैव सर्वे पुण्यविवर्जिते ॥
भूतकोट्योऽथ शून्यास्ते पञ्चस्कन्धसमोद्गमे ।
बहुसत्त्वा तु तं दृष्ट्वा महापुण्यार्थे तु योजिता ॥
महाश्रावका महात्मानः वीतरागा महर्द्धिका ।
बोधिसत्त्वास्तु सर्वे वै दशभूमिसमाश्रुता ॥
परिवार्य स्थिता सर्वे सर्वे चैवानुकम्पका ।
सर्वे वै देवसङ्घास्तु आर्या सपृथग्जना ॥
सर्वे चैतं महापुण्यं स्थानं चैकत्र माश्रितम् ।
चित्तप्रसादं प्रतिलेभेऽनित्यदुःखार्थमाश्रयम् ॥
सर्वे भूतगणा तस्थुः चैत्यान्तेऽपि समीपतः ।
पूजां च महतीं चक्रे चुचुक्रोश रुरोदनम् ॥
मुमुचुः साश्रुविन्दूनि सवाष्पाणि करुणेरिताम् ।
एवं च क्रोशिरे सर्वे अनित्यं दुःखशून्यताम् ॥
धर्मं दिदेशितवां बुद्धः साम्प्रतेऽथ महीतले ।
सैवाद्य मुनिवराः श्रेष्ठः सप्तमो ऋषिपुङ्गवः ॥
शाक्यजः सर्वसत्त्वाग्र्यो दर्शनं तस्य अपश्चिमम् ।
स एष भगवां शेते अनित्यदुःखाभिभाषिणः ॥

शून्यपरमार्थमाख्यायी आदिशान्तार्थभाषिणः।
किमर्थं देवसङ्घा भो न प्रबोधयत तं प्रभुम् ॥

आगता इह सर्वे वै बुद्धपुत्रा महर्द्धिका।
धर्मार्थिका महावीरा श्रावकाश्च महर्द्धिका ॥

सर्वे वै दुःखिता सत्त्वा मानुषाश्च सुरासुराः।
समयो वर्तते ह्यत्र धर्मचक्रानुवर्तने ॥

उत्थातु भगवां क्षिप्रं बुद्धवेलानुवर्तनेः।
महासागरे चले वोल्लङ्घ्या मुनितद्गतैः ॥

न चात्रमन्यां बहूं सत्त्वां चिरकालं समोभिजे।
ध्यानं विमोक्ष संसेस्तु शान्तनिर्वाणमार्गे ॥

निषण्णुं वा भनतो मुनिः।
एवम्प्रकारं ह्यनेकां बहुप्रलापां प्रलपन्तं नरे ॥

तूष्णीम्भूताथ सर्वे वै देवसङ्घा महर्द्धिका।
आक्रन्दमतुलं कृत्वा समणामा ततस्थिरे ॥

चुक्रुचु विरः सुत्क्रोश्य साश्रुकण्ठा सगद्गदा
सशोकाचित्तमनसो ब्रह्माद्याः ससुरासुराः ॥

मनुजा नराधिपाः सर्वे निषण्णास्तत्र महीतले।
अपरः शाक्यजो मुक्तः वीतरागो महर्द्धिकः ॥

ज्ञानिनो देवदेवस्य बुद्धस्यैव महात्मने।
अनिरुद्धो नामतो भिक्षुः अनुजोऽसौ मनुजः शुभः ॥

सुसूक्ष्म निपुणो व्यक्तः गीतनीतिविशारदः।
परिवारितो रहमुख्यैस्तु अनेकैश्चापि नराधिपैः ॥

स भाषे मधुरां वाचां निश्वसन्तः सुचेरिताम्।
करुणार्द्रचेतसां क्षिप्तां मल्लानां सनराधिपाम् ॥

मा तावन्मापां ह्यत्र चितात्वग्नि प्रदायथ।
यावद् भगवतः पुत्रः अग्रतो धर्मतोद्भवः ॥

महाकाश्यपनामेन श्रावकोऽसौ महर्द्धिकः ।
महामुने ह्यग्रश्रीजातब्राह्मणोऽसौ निरामिषः ॥
मगधानां जने जातः पर्वते तत्र समाहितः ।
तिष्ठते ग्रहपिप्पले नगरे राजगृहे वरे ॥
स एवागमनं क्षिप्रं करिष्यति न चान्यथा ।
या तत्र देवताभक्ता स चेल्होल्कां निवारयेत् ॥
मा तावचितिरान्दीपं करिष्यथ वृथा श्रमम् ।
यावत् सो महर्द्धिको ह्यग्रः श्रावको मुनिनौरसः ॥
प्रदक्षिणीकृत्य गुरवे बुद्धस्त्रैलोक्यपूजिते ।
मूर्ध्ना प्रणम्य पादौ शास्तुनो लोकपूजितौ ॥
तदायं चितिदीपार्थं सर्वे तत्र करिष्यथ ।
आदीप्ता चैत्यभूताद् भविष्यति तदा इमा ॥
सर्वे मा वृथा कुर्व श्रमं केवल भो इह ।
एवमुक्तास्तु ते सर्वे अनिरुद्धेन धीमता ॥
निषण्णा सर्वमल्लास्तु मानुषास्ते सनराधिपाः ।
मानुषाणामुत्पन्नोऽहं मानुषैश्चापि वर्धितः ॥
भोगैर्बहुविधा चान्यैः कलाशिल्पशुभोदयैः ।
मनुष्याणां बोधिलब्धा मे तरुमूले महीतले ॥
मनुष्याणां धर्मनिर्दिष्टः सर्वसत्त्वोपकारकम् ।
अत एव मनुष्याणां चिता दीपार्थयोजिता ॥
मनुष्योऽहं सर्वभूतानां अग्रयत्वं च सगागतः ।
मनुष्यलोके च शान्ति मे परिनिर्वाणं तु कल्पितम्
ये केचित् सर्वबुद्धा वै अतीतानागतवर्तिना ।
सर्वे वै मनुष्यलोकेऽस्मिं मनुष्या देहमुज्झना ॥
जातिबोधि तथा चक्रं सावर्म्ग चरितुं शुभम् ।
शान्तिं समाविशेत् सर्वे प्रत्येकामर्हतास्त्रिधा ॥

मानुषीं तनुमाश्रित्य गता शान्तिमनुत्तराम् ।
उपकारं मया तेषु कृतं कल्पामनिन्तिकाम् ॥

आपश्चिमं मया शान्ते शीतीभूते निरोदये ।
स्थापिता धातवस्तत्र शून्यीभूते महीतले ॥

मनुष्याणां हितार्थाय पूजानुग्रहकाम्यया ।
ससुरासुरलोकानां ऋषियक्षगरुत्मताम् ॥

राक्षसां प्रेतकूश्माण्डां पिशाचां प्रेतमहर्द्धिकाम् ।
सर्वांश्चैव भूतानां मयहाश्चैव मानवान् ॥

सर्वांश्चैव तथा लोकां शास्तानित्यामसङ्ख्यकाम् ।
सर्वप्राणिभृतांश्चैव पूजनार्थाय धातवः ॥

स्थापिता ते तदा काले शून्यीभूते महीतले ।
केचि द्रव्यागतैः मर्त्यैः देवराजैश्च चापरैः ॥

पातालवासिभिश्चान्यैः दानवेन्द्रैर्महर्द्धिकैः ।
नागराजैस्तथा दैत्यैः धातवो ये पृथक् पृथक् ॥

अपहृत्य हृतार्था ये मुगवन्तोऽथ महर्द्धिकाः ।
करिष्यन्ति तदा पूजां नीत्वा स्वभवनं पुनः ॥

भविष्यन्ति न सन्देहः सर्वेवना महर्द्धिकाः ।
उत्तमाधममध्यस्था त्रिधा जिनशासनः ॥

भविष्यन्ति ते त्रिधा लोके चक्रवत्समर्द्धना ।
त्रिधा यानं तथा लोके त्रिप्रकारं समोदितम् ॥

महायानानुवर्णितं मार्गं नरकांश्चनिर्गता ।
भविष्यन्ति तदा लोके सल्लोकां बोधिनिःश्रिताम् ॥

श्रावकाश्च परे तत्र वीतरागमहर्द्धिका ।
भविष्यन्ति तदा लोके त्रिधा शीलविभूषिता ॥

महीपाला महाभोगा महासौम्याश्च चक्रिणः ।
दिव्यां मानुषसम्पत्तीः अनुभूय चिरं तदा ॥

कालमासाद्य अन्ते वै त्रिधा शान्तिं गता हि ते ।
आदिमद्भिः पुरा बुद्धैः वर्त्तमानैर्ह्यनागतैः ॥

सर्वेषां एष मार्गो वै यथार्थं सम्प्रकाशितः ।
तत्र निर्वाणभूमा वै निषण्णाः सर्वदेवता ॥

विभिन्नमनसोद्विग्नाः सगद्गद्भाषिणः ।
एवमाह तदा सर्वे अहो कष्टं ह्यनित्यता ॥

बुद्धमहर्द्धिका लोके परिनिर्वाणास्तापि ते ।
एवमुक्तास्तु ते सर्वे देवराजा महर्द्धिका ॥

तूष्णीम्भूताथ तस्थिरे ।
मागधानां जने श्रेष्ठे कुशाग्रपुरिवासिनाम् ॥

पर्वतं तत्समीपं तु वाराहं नाम नामतः ।
तत्रासौ ध्यायते भिक्षुः गुहालीनोऽथ पैपले ॥

श्रावको मे सुतो ह्यग्रः औरसो धर्मतोद्भवः ।
महाकाश्यपनामासौ निषण्णो गुहवरे तदा ॥

पिण्डपातं तदा भुक्त्वा निषण्णश्चिन्तयेत् स्वयम् ।
बहुकालं मया बुद्धो वन्दितोऽसौ महामुनिः ॥

साम्प्रतं गन्तुमिच्छामि स्वयम्भुवं तं नरोत्तमम् ।
कुत्र वा तिष्ठते भगवां शाक्यतो मुनिसत्तमः ॥

समन्वाहरति तत्रस्थः महाकाश्यपनिःस्वराट् ।
एवं समन्वाहृतवां नुं जिनेनैव मुनिना मुनिम् ॥

दिव्येन चक्षुषा लोकं सर्वलोकांश्चावलोकयेत् ।
अकनिष्ठाद्यं तथा लोकां अवभास्या लोकधातवः ॥

सर्वां समग्रसत्त्वाग्र्यां महासाहस्रोऽवनोऽवताम् ।
श्रावकानां गोचरं यावत् पश्यते दिव्यचक्षुषा ॥

शासनं निर्वृतं शान्तं शीतीभूतं निरामिषम् ।
परिवारितं समन्ताद्व वै देवसङ्घैः महर्द्धिकैः ॥

मनुजैर्नराधिपैश्चापि असुरैर्यक्षराक्षसैः।
सर्वभूतगणैश्चापि वोभिसत्त्वैर्महर्द्धिकैः॥

महायशैः श्रावकैश्चापि प्राज्ञैः धुर्यरतां गतैः।
सरागैर्वीतरागैश्च दिव्यार्यैर्मनुजैस्तदा॥

चितामारोपितं वीरं बुद्धमादित्यबान्धवम्।
देवदेवं तदा श्रेष्ठं मुनीनां सत्तमं प्रभुम्॥

परिवारित समन्ताद् वै भूपालैर्द्वीपवासिभिः।
तृणोल्कैर्गृहीतसंहस्तैः मल्लैश्चापि मनुजेश्वरैः॥

नादीपयितुं समर्था ते देवताभिर्निवारिता।
व्रतिना चैवमुक्तेन अनिरुद्धेनैव भिक्षुणा॥

साश्रुकण्ठं स चोत्कृष्टां निघृष्टांश्चैव मेदिनीम्।
हाहाकाररवं घोरं दुन्दुभीनां च नादितम्॥

दिव्यं ऋषिगणाकीर्णं अप्सरां गणसंस्तुतम्।
सिद्धविद्याधरीगीतं किन्नरोद्गीतं च तद् वनम्॥

मधुराकूजितोद्घुष्टं पक्षिणां रुदितं शुभम्।
चित्रं मनोज्ञवादित्रं दिव्यगानुष्यनादितम्॥

अप्सरां गणगङ्गीतं गिर्वाननादरोनितम्।
योगिभिः सर्वतः कीर्णं अभूत् शालवनं वनम्॥

समन्तात् परिवृतं श्रेष्ठं श्मशानं मुनिपुङ्गवम्।
ततोर्ध्वं निःश्वस्य सशोको वै वीतशोको॥

अश्रुबिन्दुं प्रमुञ्चं वै श्रमणः काश्यपस्तदा।
अग्रभावको महां पूर्णिमा मानवर्तने तदा॥

वाचं चाभाषते क्षिप्रं अहो कष्टं प्रवर्तते।
यत्र नाम तथा बुद्धाः परिनिर्वृत्यै चाश्रवाः॥

अनित्यं दुःखशून्यं तु इह तेनैव भाषितम्।
न दृष्टो मे शाश्वतो निश्चं अन्यजन्मानुवर्तिनम्॥

ततोत्थाय ततः क्षिप्रं मगधानां नृपतिं व्रजेत् ।
अजातशत्रुं दुःखार्तं पितृशोकपरायणम् ॥

गृहं तस्य तदा गत्वा नमृतात नराधिपम् ।
निर्वृतोऽसौ महाराज! शास्ता नो द्विपदोत्तमः ॥

क्षिप्रं योजय यानं तु गच्छामो शास्तुरन्तिकम् ।
धरणिस्थं शयानं वै निर्जरं गतचेतसम् ॥

सर्ववैरभयातीतं सम्भोग्यं कायशासनम् ।
श्रुत्वा तद्वचनं क्रूरं सुदुःखी सो नृपतिः पुनः ॥

अन्तः प्रलापं क्रन्दन्तः तानां भाषे तदा नृप ।
उभाभ्यामपि भ्रष्टोऽहं शास्तुनो पितरस्य च ॥

सर्वबान्धवै त्यक्त्वा अविश्वास्योऽहं तथा जने ।
पतितोऽहं घोरनरके कः शरण्यं वृणोम्यहम् ॥

परित्रायस्व महावीर श्रावकः शास्तुरग्रकः ।
महाकाश्यपो महातेजा नास्ति मे जीवितं इह ॥

इत्येवमुक्त्वा तु नृपो मुख्यो मागधानां नराधिपः ।
प्रपतितः तत्क्षणादुर्व्यां अग्रश्रावकपादयोः ॥

निश्चेष्टो मूर्च्छितस्तत्र सहसा शयने महीम् ।
त्वं कुमार तदा काले मञ्जुघोष महर्द्धिक ॥

समन्ताद् विचरसे लोकां सत्त्वानुग्रहकाम्यया ।
चितामारोपिते देहे मम स्थाने तते तदा ॥

तत्र त्वं निषण्णोऽभूद् बोधिसत्त्वगणावृतः ।
मच्छरीरं हि पूजार्थं त्वया कृत्वेह महीतले ॥

समन्तादालोकयसे भूतां को हि दुःखी कमुद्धरेम् ।
इत्यहं पतितो भूमौ कुमारो गम्भीरतथ्यधीः ॥

मञ्जुश्रिया थ त्वयात्रस्य भूपालस्यातिदुःखिते ।
तत्रस्थोऽपि त्वया तस्य त्यागेन निवारितोऽसौ ॥

बोधिसत्त्वानगम्यो यो न तच्छ्रावकं महर्द्धिकैः।
दैवतैर्न ऋषिभिश्चान्यैः प्रत्येकार्हेश्चापरैः॥

तत्रस्थः स्वप्नवरपर्यङ्केनाञ्जलिं जगानिपम्।
त्वयैव ऋद्धिमाविष्टः स राजा शोकमूर्च्छितः॥

पश्यतेऽसौ तदा स्वप्ने प्रत्यक्षं च नालिनम्।
कुमारं विश्वमात्मानं मञ्जुघोष महर्द्धिकम्॥

विकुर्वन्तं तथा धर्मं बोधिगन्तं महालकम्।
विचित्रं अचिन्त्यतां ऋद्धिं मञ्जुश्रीः त्वत्प्रसादतः॥

अवीचिनिगमनं नृपतेः उत्थानं च सत्त्वरम्।
विविधां धर्मतांश्चैव अपायं नाशशोभनम्॥

गतिमाहात्म्यगुणांश्चैव सर्वेश्रावकवर्गिताम्।
विस्तरेण ततः कृत्वा सूत्रको कृत्यनाशनम्॥

अजातशत्रोर्नृपतेः विनोदं चातिविस्तरम्।
समासेन इदं प्रोक्तं विस्तरार्थार्थभूषितम्॥

वचनं सर्वबुद्धानां आदिमध्यावसायिनाम्।
सर्वसत्त्वहितार्थाय भाषितः कल्पविस्तरः॥

त्वं कुमार तदा काले मञ्जुश्रीर्विञ्च सर्वतः।
विनेष्यसि महीपालां पापकर्मानुवर्तिनाम्॥

अचिन्त्यं ते ऋद्धिविषयं विनेयं वापि अचिन्तितम्।
सर्वभूतगणांश्चैव त्वं विनेता भविष्यसि॥

इत्येवमुक्त्वा महावीरो बुद्धानां च महाद्युतिम्।
मञ्जुघोषं तदा काले शुद्धावासोपरिस्थितम्॥

उवाच वदतां श्रेष्ठः सम्बुद्धो द्विपदोत्तमः।
भविष्यसि त्वं सम्बुद्धः बहुकल्पाभिनिर्गतैः॥

अचिन्त्यैर्गणनासङ्ख्यैर्गानुपैर्गणनागमैः।
पञ्चबुद्धकोटि नामा ते तदा लोके भविष्यसि॥

बुद्धकृत्यं तदा कृत्वा अनुपूर्वेण तां सदा ।
विमोच्यथ बहूं सत्त्वां परिनिर्वाणं ते भविष्यति ॥

इत्युक्त कुमारो वै बालरूपी महर्द्धिकः ।
स दीर्घं निःश्वस्य संविग्नः करुणाविष्टचेतसा ॥

चिरमालोक्य सम्बुद्धं साश्रुनिन्दून मुमूचनु ।
सप्रणामाञ्जलिपुटः निपसाद ततः पुनः ॥

ततो क्ष्मातलाधस्थः अजाताख्यो नृपोत्तमः ।
प्रणम्य शिरसा क्षिप्रं महाकाश्यपमद्भुतम् ॥

विबुद्धश्चेतनायातं पादौ वन्द्य अग्रणः ।
निःश्वस्य च चिरं कालं विस्तरार्थं निवेद्य च ॥

निषण्णो नृपतेः पुत्रः अजाताख्यो मगधेश्वरः ।
महाकाश्यपं ततो नत्रे गच्छागोस्तं चितालयम् ॥

पूजितं चैत्यबिम्बस्थं उपकारार्हमानुपाम् ।
तत्रस्थः श्रावको ह्यग्रः ऋद्ध्या चैत्रमुपागमम् ॥

तस्योत्त्वंहते चिरं अयुक्तं मम ऋद्धिये ।
पद्भ्यां गन्तुमिच्छामि महाचित्तं समागमम् ॥

अपश्चिमे गतिः शास्तुः दर्शनार्थं तु गागमम् ।
ततोऽर्धपथे तस्थुः सङ्घाराते तु स व्रती ॥

यावत् पश्यते तत्र सङ्घारामनिवासिनम् ।
महल्लं भिक्षुनवकम्मायसत्त्वं विमोहितम् ॥

स दृष्ट्वा उपसङ्क्रान्त महल्लो तं चिरोपिणम् ।
महेशाख्यं महाभागं शुद्धसत्त्वनिरामयम् ॥

उपसङ्क्रम्य तं क्षिप्रं वन्दित्वा पादयोस्तदा ।
उवाच तं महाभागं स्वागतं ते किमागतम् ॥

कुत्र वा यास्यते क्षिप्रं उद्विग्नो वा किं वतिष्ठसे ।
उवाच सो तं ऋषिं तं वालं आयुष्मां न श्रुतं त्वया ॥

शास्ता वै सर्वलोकस्य समुद्रो द्विपदोत्तमः।
पिता मे अग्रणीः बुद्धः प्रदीपानिरिव निर्वृतः॥
अस्तं गतो महावीरः शून्यीभूता हि मेदिनी।
सर्वशून्यास्तथा लोकाः शून्या भूताश्च मे दिशः॥
ततः प्रहृष्टो महल्लोऽसौ निपतितो नाल्पचेतनः।
प्रसह्य वचनं चाह निर्वृतोऽसौ प्रदीपकः॥
प्रलम्बबाहुरत्युच्चलक्ष्मासरसर्पाशिरः।
अस्माकं नायको ह्यत्र शिक्षाशिक्षमनुवर्तिनः॥
यथेष्टं विचरिष्यामि साम्प्रतं तेन निर्वृते।
इत्येवमुक्तो महल्लेन प्रहृष्टोऽसौ महर्द्धिकः॥
भृकुटिं कृत्वा ततो नाके हुङ्कारोऽसौ प्रयोजयेत्।
रुरुष्य तत्क्षणाद् विघ्नः वासनाभावितो यतिः॥
हन्यान्महीतले तत्र पादाङ्गुष्ठेन तत्क्षणात्।
सर्वं प्रचलिता उर्वी पर्वतोच्चाः समो रवः॥
क्षुभिताः सागराः सर्वे सर्वे वृक्षाश्च पर्वताः।
कन्दरा गुहाविन्यस्ता नागराजाश्च देवता॥
नष्टा लोका मही तस्मिन् काले चन्द्रभास्करौ।
निपाता वा ततस्तस्थुः उल्काश्चापि पपेतुरे॥
ततोऽसौ मन्त्रमिति ध्यानः श्रावकाणां कुलोद्भवम्।
एकाक्षरः सहुङ्कारः सर्वकर्मकरः शुभः॥
असाधितोऽपि करोत्येष जापमात्रेण मन्त्रराट्।
सर्वशस्त्रंस्तथा स्तम्भं विषं स्थावरजङ्गमम्॥
सर्वेषांदुष्टसत्त्वानां जापमात्रेण स्तम्भनः।
करोति कर्मवैचित्र्यं अन्यांश्चैव विशेषतः॥
प्रपलानो महल्लकस्तत्र तूष्णीम्भूतो ह्यतो गतः।
ऋद्ध्या चावर्जितस्तेन विनायित्वा च तत्क्षणात्॥

श्रावकेण तदाग्रेण नीतोऽसौ निविसन्निधौ ।
पश्चर्या गतो हि सो भिक्षुः वीतरागो महर्द्धिकः ॥

गत्वासौ पश्यते तत्र मुनिनां देहाचिताश्रिताम् ।
अनेकधा देवसङ्घैस्तु महापूजां प्रवर्तिताम् ॥

विविधाकारवरोपेतां सर्वाकारसुभूषिताम् ।
चितामारोपितं देहं मुनिनो गौतमस्य वै ॥

दृष्ट्वा तु तं महाभागं महाकाश्यपमद्भुतम् ।
सर्वे.ते वीतदोषा वै भिक्षवश्च महर्द्धिकाः ॥

सर्वे देवगणा भूताः हाहाकारं प्रमुञ्च्य च ।
आक्रन्द्य च महच्छब्दं रवं चापि सुशोकजम् ॥

प्रत्युद्गम्य ततः सर्वे देवनागा महर्द्धिकाः ।
उवाच तं महाभागं वन्दस्व द्विपदोत्तमम् ॥

तवैचोदीक्षणं तं त्रिशा देवसङ्घा समानुगाः ।
सर्वे भूतगणाश्चैव रूपयक्षनराधिपाः ॥

चितादीपनतं निष्ठा अशक्ता दीपयितुं चिताम् ।
ततोऽसौ वीतदोषस्तु महाभोगो महर्द्धिकः ॥

कृत्वा प्रदक्षिणं बाहु बहुधानुस्मृत्य तथागतम् ।
चितान्ते अन्तिमे भागे वन्दतेऽसौ महर्द्धिकः ॥

आयसीं च तदा द्रोणीं भित्वा पादौ विनिर्गतौ ।
वन्दित्वा पादयोर्मूर्ध्ना परामृश्य पुनः पुनः ॥

उद्वीक्ष्य बहुधा तत्र चरणौ मुनिवरे वरौ ।
प्रविष्टा भूयसस्तत्र आयसीं द्रोणिमाश्रितौ ॥

निषण्णोऽसौ ततोत्थाय वीतरागो महर्द्धिकः ।
परिवारोऽथ अर्हन्तैः वीतरागैर्महर्द्धिभिः ॥

राजा मागधो मुख्यः आगतोऽसौ चितान्तिके ।
अनुपूर्व्या तथा यानैः हस्त्यश्वरथवाहनैः ॥

मुनिना व्याकृतो ह्यत्र बुद्धकृत्यं करिष्यति ।
वयं च भवता सार्धं अनुयास्याम काश्यपम् ॥
ऋद्धिमात्रं महाभागं तेजवन्तं महद्युतिम् ।
द्वितीयमिव शास्तारं प्रतिबिम्बं महीतले ॥
महाकाश्यपमुख्यं तु श्रावकाणां महर्द्धिकम् ।
तिष्ठन्तं ध्रियमाणं वै गा शोकं चेतु वै कृथा ॥
एवमालापिनः सर्वे करुणाविष्टा महर्द्धिका ।
वीतरागा महायोगा मुनिपुत्रा निषण्णवाम् ॥
चितामादीपितो तैस्तु मल्लैश्चापि नराधिपैः ।
आदीप्ते तु समन्ता वै भस्मीभूतं तु तं चितम् ॥
तं दृष्ट्वा देवसङ्घा तु भोगवन्तो महोरगाः ।
शान्तये तच्चितास्थानं चन्दनोदकवारिणा ॥
महावर्षं प्रमुञ्चन्ता स्थिता भूयोऽथ तत्क्षणात् ।
महापुष्पौघमुत्सृज्य पुनरेव महीतले ॥
आगता तत्क्षणात् सर्वे जिनधातुं सुपूजना ।
सर्वे परस्परं युद्धं कर्तुमारब्ध तत्क्षणात् ॥
ब्रह्माद्या शक्रयामाश्च सर्वदेवगणास्तथा ।
निवारिता वीतरागैस्तु श्रावकैश्च महर्द्धिकैः ॥
महाकाश्यपेन विभज्यं वै धातवो जिनमूर्तिजा ।
स्तोकस्तोकानि दत्तानि पूजनार्थाय सर्वतः ॥
त्रिधा यानपराद्यार्त्ति निष्ठाशान्ति च कारणात् ।
महाकाश्यपस्तदा योगी वीतरागो महर्द्धिकः ॥
चिन्तयामास तं बोध्यं महल्लकस्य अभाषितम् ।
माहैव प्रवचनं कृत्स्नं द्वादशाङ्गं सुखोदयम् ॥
सूत्रविनयाभिधर्मं वै धूमकालिकतां व्रजेत् ।
अस्तं याते महवीरे निष्प्रलापो भविष्यति ॥

सङ्गातव्यमिमं कृत्स्नं वचनं बुद्धभाषितम् ।
गच्छामः सहिताः सर्वे वीतरागा महर्द्धिकाः ॥
मागधानां पुरं श्रेष्ठं राजाख्यं नगरं शुभम् ।
कुशाग्रपुरे रम्ये पर्वते सुशिलोच्चये ॥
वैशाल्यां च शुभे देशे चैतस्थाने सुशोभने ।
एवम्प्रकारा ह्यनेकांश्च शासनार्थं तु कारणात् ॥
मल्ला पलायिनः सर्वे चक्रिरे स महर्द्धिका ।
तस्मिं काले युगान्ते वै अस्तं याते मया तु वै ॥
महीपाला भविष्यन्ति परस्परविधे रता ।
भिक्षवो बहुकर्मान्ता सत्वा लोभमूर्च्छिता ॥
अश्राद्धा युगान्ते वै उपासकोपासिकास्तथा ।
परस्परवधासक्ताः परस्परगवेषिणः ॥
छिद्रप्रहारिणो नित्यं सव्रणा दोषदस्तथा ।
भिक्षवो ह्यसंयतास्तत्र मुनिरस्तं गते युगे ॥
स्थापिता रक्षणार्थाय शासनं भुवि मे तदा ।
अष्टौ महर्द्धिका लोके वीतरागा निराश्रवाः ॥
अर्हन्तः तदा ज्येष्ठा राहुलाद्या प्रकीर्त्तिता ।
तेषां दर्शनं नास्ति तस्मिं काले युगाधमे ॥
अमोघं दर्शनं तेषां ऋद्धिकाले तु मन्त्रिणाम् ।
मयात्र स्थापिताः सर्वे ऋद्धिमन्तो महर्द्धिकाः ॥
प्रणिहितं मया तेषां दण्डकर्गमहायशाम् ।
आज्ञोल्लङ्घनं तेषां किञ्चिच्छिष्या व्यतिक्रमे ॥
तिष्ठध्वं यावत् सद्धर्मं भूतकोटिं निरामिषम् ।
मम वाक्यमिदं पुण्यं यावद् घुष्यते तले ॥
ततः शान्ता निरात्मनः परिनिर्वाथ निराश्रवाः ।
भविष्यति तदा काले शासनान्तर्हिते मुनौ ॥

भिक्षाभिक्षुकाः सर्वे भिक्षुण्यश्च गृहस्थगाः ।
तर्कुकाः कुहनका नित्यं परिभूता तदा युगे ॥

सुस्थिता शासने मह्यं गृहद्वारगवेषिणः ।
उपासकाश्च तदा काले परदाराभिरताः सदा ॥

चिह्नमात्रं तदा संज्ञा परिशेषेण चतुर्विधे ।
वैराभ्यासरताः सर्वे परस्परनिहेठकाः ॥

तीर्थिका क्रान्तमुत्पिष्टा सर्वाक्रान्ता च मेदिनी ।
भविष्यन्ति तदा काले द्विजवर्णरता जना ॥

मिथ्याचारा तथा मूढा प्राणिहिंसारता नरा ।
मया तु परिनिर्वाणे व्याकृतोऽयं कलौ युगे ॥

बहुनार्यो नराश्चैव परदाररताः सदा ।
अकुशलेषु रताः सर्वे कुशलार्थविवर्जिताः ॥
बहुसत्त्वा भविष्यन्ति मयि शान्तगते मुनि ।
ममैतच्छरीरपूजा तु देवसङ्घा महोजसा ॥
मनुष्याश्चैव महात्मानो यक्षभूतगणास्तथा ।
असुरा अथ गन्धर्वा किन्नराश्च महर्द्धिकाः ॥
गरुडा अथ गन्धर्वा राक्षसा ऋषयस्तथा ।
सिद्धा योगिनश्चैव महोजसा ॥

विविधाकारसत्त्वास्तु विविधां गतियोनिजाः ।
भवसूत्रनिबद्धास्तु निष्क्रान्तान्तगामिता ॥
करिष्यन्ति तदा पूजां शरीरेऽस्मिन् गतिज्वरे ।
नदीहिरण्यवतीतीरे यमकशालवने वने ॥
चैत्ये मकुटबन्धे तु मल्लानामुपवर्तने ।
परिनिर्वृते च तत्राहं शान्तिं गच्छेद् भयवर्जिताम् ॥
मेदिनद् धातु मकुटश्च कुमाणैः परैस्तदा ।
देवैश्च रसुरैश्चापि सर्वभूतगणैस्तथा ॥

विभज्य स पृथग् भागेषु क्रमशं कारिणा अथ ।
मनुष्यराजा महासैन्यः अजातशत्रुर्नाम नामतः ॥

प्रार्थयामास सर्वेषां श्रावकां सुमहर्द्धिकाम् ।
ममाप्यकृतपुण्यस्य पितुर्मरणकारिणः ॥

अभ्युद्धरथ महात्मानं दुःखितं पतितं तु माम् ।
ततोऽग्र्यः श्रावको धीमां बुद्धस्य सुतसंभवः ॥

महाकाश्यपेति विख्यातः प्रजानां हितकारकः ।
तं तु दृष्ट्वाथ वैकृत्यं अजाताख्यास्य धीमतः ॥

समन्वाहरति तत्कालं ऋद्ध्या चैवाभिनिर्गतम् ।
भागैकं गृह्णयामास सधातूनां जिननिःश्रितान् ॥

अन्येदपहृतादन्यैः भोगिभिश्च महानलैः ।
अन्योन्यरभसात् क्षोभं कृत्वा चैव परस्परम् ॥

नीत्वा धातुं तदाकाशैः स्वगृहं चापि तस्थुते ।
महाकाश्यपो तदा भिक्षुः अग्रश्रावकः तदा मुनिः ॥

चिन्तयामास
अहो कष्टं मनुष्येषु शून्योऽयं भुवि मण्डले ॥

बुद्धैः प्रत्येकबुद्धैस्तु श्रावकैश्च महर्द्धिकैः ।
आलोकहीना सत्त्वा वै भवचारकचारिणा ॥

ते दुःखां विविधां तीव्रां अनुभविष्यन्ति ते चिरम् ।
धातुं पूजयित्वा तु लोकनाथस्य तायिने ॥

अनुभविष्यन्ति ते सौख्यं देवलोकमनल्पकम् ।
राज्यं च मथ भोगांश्च मन्त्रसिद्धिसुदुर्लभाम् ॥

प्राप्स्यन्ति विविधाकारां विचित्रगतिचेष्टिताम् ।
लोकस्याग्रा सम्पदामिष्टां त्रिधा गोत्रभूषिताम् ॥

पूजयित्वा तु धातूनां प्राप्नुयात् सिद्धिमुत्तमाम् ।
एवं चिन्तयित्वा तु ब्राह्मणः लोकविश्रुतः ॥

श्रावको मुनिवरे ज्येष्ठः काश्यपो नाम नामतः ।
सङ्गृह्य च तदा धातुं संविभार्त्ति तदा शुचि ॥
स्तोकं दत्वाजाताख्ये मागधस्यैव यत्नतः ।
एवं नराधिपेषु सर्वेषु अष्टेष्वपि महाद्युतिः ॥
सर्वेभ्यः सर्वतो दद्याच्छ्रावकोऽसौ महात्मनः ।
पुनरेव भवस्तस्थौ अनित्यसंज्ञमभावत ॥
शोचयामास सत्त्वानां करुणाविष्टेन चेतसा ।
रोदिष्यन्ति चिरं सत्त्वा कल्पां वहुविधां तथा ॥
सद्धर्मिन्तर्धिते लोके शास्तुनो शाक्यपुङ्गवे ।
सञ्ज्ञातव्यमिमं वाच्यं माहैवं धूमकालिकम् ॥
ततोऽभ्युत्थितवां वीरः प्रभावामृतचेतसः ।
आमन्त्रयामास मन्त्रजेन्द्रं अजाताख्यं नराधिपम् ॥
गच्छामो राजगृहं नगरं शास्तुशासनसत्कथा ।
गाथकुम्भसुविन्यस्तां धातुं प्रक्षिप्य यत्नतः ॥
तेऽत्र पूर्वेण आयाता क्षिप्रं राजगृहं तदा ।
स्थानं वेणुवनं प्राप्य स्थापयामास जिनोद्भवाम् ॥
स्तूपं महाद्भुतं कृत्वासौ लोकनाथस्य तापिने ।
पूजयामास तं स्तूपं विविधाकारभूषणैः ॥
माल्यचीवरच्छत्रैश्च चूर्णगन्धैस्तु धूपनैः ।
छत्रैः पताकैर्विचित्रैश्च घण्टामाल्यविलेपनैः ॥
अनेकाकारविचित्रैस्तु दीपमालाभि स्रग्मिभिः ।
पूजां कृत्वा महीपाल प्रणामगतचेतसः ॥
मूर्ध्नां प्रणम्य तं स्तूपं प्रणिधिं चक्रिरे तदा ।
लोकाग्रं पूजजित्वा तु यन्मया कुशलं बहु ॥
अनेकताथागतीपूजां प्राप्नुयाहमचिन्तिया ।
उत्थाय ततो राजा महाकाश्यपमब्रवीत् ॥

अश्रु सम्परामृज्य वाष्पाकुलितलोचनः ।
कृपाविष्टहृदयः पितरं संस्मरेत् तदा ॥
आर्यो मे महाप्राज्ञः साक्षिभूतो भवस्व माम् ।
यन्मया कारितं पापं नियतावीचिपरायणम् ॥
तादृशं धर्मराजं तु शास्तुर्वचनपथे स्थितम् ।
घातयित्वा तु तं पितरं न शक्नोमि विनोदितुम् ॥
कल्याणमित्र आर्यो मे धमार्थं देष्टुमर्हति ।
एवमुक्तो महात्मासौ अग्रश्रावको जिने ॥
काश्यपो नामतः धीमां इमं वाचमुदीरयेत् ।
मा भैष्ट महाराज कृतं ते कुशलं बहु ॥
अस्ति ते जन्मिनोऽभ्यासिः अनेकशतधा पुरा ।
बुद्धानामनुत्पादा प्रत्येकजिनसम्भवः ॥
नगर्यां वाराणस्यां श्रेष्ठिपुत्र अभूत् तदा ।
अज्ञानाद् बालचापल्याद् रथ्यायां निर्ययौ तदा ॥
स एव भगवं तत्र प्रत्येकजिनमागतः ।
भिक्षार्थी हिण्डते तत्र लोकानुग्रहकाम्यया ॥
बालस्य दृष्ट्वा तं प्रसन्नगतमानसम् ।
पादयोर्निपत्य पप्रच्छ किं करिष्यसि तैर्भिक्षु ॥
तूष्णीमेव स्थितो भगवां खड्गकल्पमसम्भव ।
तदा तेन तु बालेन चीवरे गृह्यमस्थित ॥
गच्छ गच्छ इमं श्रेष्ठं मन्दिरं ध्वजभूषितम् ।
अस्माकमेतदावासं पादौ प्रक्षाल्य भोक्ष्यसे ॥
भुंक्ष्व क्षिप्रं यथाकामं क्रीडिष्यामो यथेष्टनः ।
ततोऽसौ वीतदोषस्तु त्रिमक्लान्तकघातकः ॥
अनुपूर्वेण ययौ तत्र परानुग्रहतत्परः ।
गत्वा द्वारमूलेऽस्मिं स्थित एव महाद्युतिः ॥

ततस्तेन तु बालेन प्रविशित्वा अम्ब उच्यते ।
देहि भक्ष मया अम्ब भिक्षांश्च विविधां बहूम् ॥

मित्रो मे ह्यागतो ह्यत्र पांसुक्रीडनकश्चिरात् ।
मोदिष्यसि चिरं तेन तिष्ठते द्वारमागतः ॥

तदा स त्वरमाना तु द्वारं निर्ययु तत्क्षणात् ।
पश्यते तं महाभागं शान्तवेषं महर्द्धिकम् ॥

तदा सा क्षिप्रमागत्य गृहीत्वा भाजनं शुभम् ।
सुप्रक्षाल्य ततो हस्तौ ॥

गृहीत्वा ओदनं चौक्षमनेकरसभूपितम् ।
विविधाकारभक्षांश्च भाजने न्यस्य राजते ॥

आगम्य च तदा क्षिप्रं पात्रे निवेद्य च ।
पादयोर्निपतिता सा तु ससुता धर्मवत्सला ॥

गृहीत्वासौ पिण्डपातं तु आकाशे अभ्यगच्छत ।
ततोऽसौ ज्वलमानस्तु दीपमालेव दृश्यते ॥

तेन तेषां वाचिको धर्म विद्यते खड्गचारिणाम् ।
प्रभाव ऋद्धिसत्त्वानां दर्शयन्ति महात्मनः ॥

अतिकारुणिका तेऽपि सत्त्वेभ्यो गतमत्सराः ।
परलोकार्थं तु सत्त्वेभ्यः ऋद्धिं सन्दर्शयन्ति ते ॥

तेन कर्मविपाकेन मात्रया सह बालकः ।
पञ्चजन्मसहस्राणि देवत्वमथ कारयेत् ॥

देवानां देवराजासौ सा एव जननी अभूत् ।
अमनुष्याणां चक्रवर्त्तित्वं मनुजेश अभूत् तदा ॥

अनुभूय चिरं सौख्यं, विम्बासारसुतो इह ।
यस्ते आकर्पितो भगवां चीवरान्तेऽथ गृह्य च ॥

वाचा दुर्भापिता उक्ता भिक्षुवादेन चोदितः ।
पांसुक्रीडनको मह्यं भवस्वेति पुरा तदा ॥

वाचो गतस्य कर्मस्य अनिष्टस्य कटुकस्य च।
तीव्रं प्रतापनादुःखं अनुभूय चिरं बहु॥

नरके पतितो घोरे अनीप्सको दुःखदुःसहम्।
कर्मपाशानुबद्धास्तु सत्त्वा गच्छन्ति दुर्गतिम्॥

हसद्भिः क्रियते कर्म रुदद्भिरनुभूयते।
पूर्वं बालिशभावेन प्रत्येकजिनतापिने॥

वाचा निश्चारिता दुष्टा तस्य कर्मस्य ईदृशम्।
नरकेभ्यः व्यसित्वा तु मनुष्यत्वमिहागतः॥

नारके चेतना ह्यासीद् विपाकजाते नराधिप।
तेन तीव्रेण रोषेण जीविता ते द्रुतपूर्विकाम्॥

पूर्विकां वासनां स्मृत्वा प्रत्येकजिनचारिणीम्।
सम्मुखं दर्शितो बुद्धः पूज्यश्चैवमकारिता॥

तेनैव हेतुना ह्यासीद् राज्यत्वमिह कारय।
एवं वेणुवने तेषां अन्योन्या संलपेद् भुवि॥

एकश्च अग्रशिष्यो मे द्वितीयः स नराधिप!।
प्रणम्य शतधा स्तूपं स्वगृहेणैव ययौ तदा॥

ततोऽसौ शिष्यमुख्यैर्मे पिप्पलागुहवासिनः।
सन्निपात्य मुनिं सर्वां वीतरागां महर्द्धिकाम्॥

द्वादशाङ्गं प्रवचनं कृत्स्नं विनयं चैवमगायत।
तन्मया कथितो धर्मः पूर्वं जिनवरैस्तथा॥

स तेन शिष्यवराग्रेण त्रिप्रकारं समादिशेत्।
ग्रथनं सूत्रभेदेव विनये वाभिधर्मतः॥

तृबन्धान्मोचयेत् सत्त्वां त्रिदोषां चापि शोषयेत्।
तृदुखान्मुक्त्वा धीरः त्रियानं स्थापयेत् तदा॥

शासनार्थं तु बुद्धानां कारयिष्यति अग्रधीः।
महाराजाजातविख्यातो मागधेयो नराधिपः॥

यावदादङ्गपर्यन्तं वारणस्यामतत्परम् ।
उत्तरेण तु वैशाल्यां राजा सोऽथ महाबलः ॥
भविष्यति न सन्देहः शासनार्थं करिष्यति ।
त्वया कुमार ! निर्दिष्टः व्याकृतः शान्तिमुत्तमे ॥
तस्यापि सुतो राजा उकाराख्यः प्रकीर्त्तितः ।
भविष्यति तदा क्षिप्रं शासनार्थं च उद्यतः ॥
तदेतत् प्रवचनं शास्तु लिखापयिष्यति विस्तरम् ।
पूजांश्च महतीं कृत्वा दिक्समन्तान्नयिष्यति ॥
न चास्य दुर्गतिं चास्य देवेषूपपत्स्यते ।
त्रिंशद् वर्षाणि त्रिंशच्च पितृणा सह जन्मिनः ॥
वेलायामर्धरात्रे तु पञ्चत्वं यास्यते तदा ।
गोत्रजेनैव रोगेण अभिभूतोऽसौ भविष्यति ॥
महारोगेण दुःखार्त्तः दिवसानि षड्विंशति ।
समस्तव्याधिग्रस्तोऽसौ विविधाकारमूर्छितः ॥
च्युतोऽसौ नरपतिः क्षिप्र देवेषूपपत्स्यते ।
नियतं प्राप्स्यते बोधिं सोऽनुपूर्वेण यत्नतः ॥
एते चान्ये च बहवः अतीता येऽप्यनागता ।
कृत्वा तु विविधां कारां प्रत्येकजिनतापिषु ॥
इष्टां विशिष्टां सम्पत्तिं दिव्यामानुषिकांस्तथा ।
तेऽनुपूर्वेण गच्छन्ति शान्तिं निर्जरसम्पदम् ॥
हीनोत्कृष्टराजानो मध्यमाश्च नराधिपाः ।
आद्ये तु युगे कथिता नहुषाद्या पार्थिवादयः ॥
बुधशुक्रोदयो नित्यं मन्त्रसिद्धा नराधिपा ।
शान्तनुश्चित्रसुचित्रश्च पाण्डवा सनराधिपाः ॥
यादवा वारयत्याश्च रिपिशापास्तमित्रा तदा ।
कार्त्तिकः कार्त्तवीर्योऽसौ दशरथदाशरथी पुरा ॥
अर्जुनः सिद्धमन्त्रस्तु द्विद्रोणसुतोऽपरः ।
अश्वत्थामा परो मन्त्री साधयामास मन्त्रराट् ॥

शास्तुमूर्जितमन्त्रास्त्रैः क्षमापत्यं कारयेत् तदा ।
समन्तात् त्रिपु द्वीपेपु जम्बूद्वीपगता तदा ॥

देवकारांश्चैव मन्त्राणि पार्थिवादयः ।
तेऽपि ताथागतिं पूजां अनुमोद्या दिविं गताः ॥

बुद्धत्वनियता तेऽपि केचित् प्रत्येकयानिका ।
श्रावकत्वनियता केचित् सर्वे ते मोक्षपरायणाः ॥

कालव्यवस्थानुरूपेण आयुषश्च विकल्पते ।
उत्तमा दीर्घमानुष्ये मध्या मध्यमके तथा ॥

अन्तिमे तु युगे कष्टे कलिप्राप्ते युगाधमे ।
+ + + + + + + + + पार्थिवा तु कलिप्रियाः ॥

अन्योऽन्य वैरिसंसक्ता परस्परविहेठकाः ।
नीचोत्पत्तिमायाताः शस्त्रसम्पातमृत्तवः ॥

शस्त्रप्रवृत्तिसमुत्साहा परदाराभिरतस्तदा ।
भविष्यन्ति न सन्देहः भूपाला लोककुत्सिताः ॥

धूर्ता निकृष्टकर्माणः अनार्या मत्सरिणस्तथा ।
भविष्यन्ति तदा काले मध्ये द्वापरयो कलौ ॥

संक्षेपेण तु वक्ष्यामि क्रमागस्तं निबोधत ।
वर्तमाने तु यत्काले पार्थिवा भुवि मण्डले ॥

तेषां तु रूपचिह्नानि वर्णतश्च निबोधताम् ।
प्रसेनजित् कोसलो राजा विम्बिसारस्तथापरः ॥

उदयनः क्षत्रियश्रेष्ठः शतानीकसमुद्भवः ।
सुबाहुः सुधनख्यातो महेन्द्रचन्द्रसमस्तथा ॥

लिच्छवीनां तथा जातः सिंहो वैशाल्यमुद्भव ।
उदायिप्रद्योतमुद्योतमहासेनश्च कथ्यते ॥

उज्जयन्यां तथा चण्डः कपिलाह्वे [illegible] नृपः ।
राजा शुद्धोदनश्चैव वैराटाख्यां महाबलः ॥

इत्येते क्षत्रियाः प्रोक्ता महीपालाः शास्तु पूजकाः ।
सम्मुखं बुद्ध पश्यन्ति शाक्यसिंहे नरोत्तमम् ॥
धर्मं श्रुत्वा ततस्तेऽपि चिरं प्राप्स्यन्ति सम्पदाम् ॥
नियतं मोक्षकामास्तु शान्तिं प्राप्स्यन्ति तेऽपि ताम् ।
इत्येते लोकविख्याता भूपाला क्षितिमण्डले ।
वर्णतः क्षत्रियः प्रोक्तः चिह्नतो नामसंज्ञितः ॥
पूजयिष्यति ते वाक्यं मयैव कथितं भुवि ।
त्वयैव व्याकृतो लोके कुमारो बालरूपिणः ॥
अजाताख्यो नामसौ नियतं बोधिपरायणः ।
मयि वर्षशते परिनिर्वृते भुवि मण्डले ॥
निरालोके निरानन्दे अज्ञानतमसा वृते ।
भविष्यति तदा शून्या मेदिनी जिनवर्जिता ॥
तस्मिं काले महाघोरे कुसुमाह्वे नगरे तदा ।
अशोको नाम विख्यातः पार्थिवो भुवि पालकः ॥
तीव्रकारी सरोषी च निर्घृणोऽसौ भवेत् तदा ।
कल्याणमित्रमागम्य वीतरागं महर्द्धिकम् ॥
भिक्षुं शीलसम्पन्नं निज्वरं गतचेतसम् ।
पूर्ववासनहेतुं च पांशुदानं महर्द्धिकम् ॥
नियतं क्षेत्रसंम्पन्नं पार्थिवोऽसौ महाधनः ।
धर्माधर्मविचारी च सघृणी कारुणिको हि सौ ॥
हेतुमुद्धाटयामास वीतरागो महर्द्धिकः ।
त्वया हि नृपतेः पूर्वं अज्ञानाद् बालचापलात् ॥
जिने शाक्यसिंहस्य पांसु अञ्जलिना तदा ।
पात्रे भस्मे प्रतिष्ठाप्य प्राप्ता सम्पत्तयो दिवि ॥
देवलोकं व्यवित्वा तु पितृलोकमिहागतम् ।
भुंक्ष्व राज्यं महीपाल! जम्बूद्वीपं सकाननम् ॥

आराध्य मन्त्रं यक्षस्य जम्भलस्य महात्मने ।
ततो भूतरथः सिद्धः क्षितिपश्च महात्मनः ॥
यक्षास्तस्य तिष्ठन्ते आज्ञो दीक्षितमानसाः ।
नागाश्चैव तिष्ठन्ते भव्याः किङ्करहेतवः ॥
एवं महर्द्धिका धर्मात्मा बलचक्री अभूत् तदा ।
यथेष्टगमनं तस्य निषेद्धा न कचिद् भवेत् ॥
पूर्वस्थापितकार्ये तु जिनानां धातुवरा भुवि ।
नगरे राजमुख्ये तु बने वेणुवने तदा ॥
गृह्य धातुधरे धातुं कुशलालम्बनमानसः ।
पूजयामास तं स्तूपं यथा पौराणमकारय ॥
गृह्यन्तं धातुकुम्भं तु विभज्य शतधा पुनः ।
क्षणेनैकेन मेधावी यक्षाणामाज्ञात्रिनिर्दिशेत् ॥
जम्बूद्वीप इमं कृत्स्नं स्तूपालङ्कृतभूषणम् ।
कारयन्तु भवन्तो वै धातुगर्भां वसुन्धराम् ॥
आज्ञाप्रतीच्छते यक्षाः अर्धरात्रे तु यत्नतः ।
अमानुषेयं कृतिं कृत्वा शिलायष्ट्योच्छ्रितां भुवि ॥
अनेकस्तम्भसहस्राणि रोपयामास ते तदा ।
पूजनार्थं तु चैत्यानां चिह्नभूतं च देहिनाम् ॥
कृत्वा तु विविधां स्तूपां लोकनाथेभ्य तापिषु ।
क्षणेनैकेन ते यक्षा नृपतेऽन्तिकमागताः ॥
प्रणिपत्य ततो मूर्ध्ना वाचा निश्चारगुह्यकाम् ।
यथाज्ञतं कृतं सर्वं किं न पश्यसि भूते ॥
ततोऽसौ पार्थिवः क्षिप्रं आरुरोह रथं तदा ।
विविधाकारपूजार्थं अनेकाकारशोभनाम् ॥
काञ्चनं राजतं ताम्रं त्रिविधांस्तूपभूषणाम् ।
ततो भूतरथं क्षिप्रं पूरयामास पार्थिवः ॥

क्षणेनैकन तं देशं यत्र ते धातुधरा जिना ।
विचित्राकारपूजाभिः पूजयेत नराधिपः ॥

शोभने मेदिनीं कृत्स्नां जिनधातुधरैस्तदा ।
प्रणिधिं चक्रिरे राजा धर्माशोको महात्मवान् ॥
अनेन कुशलार्थेन बुद्धो भूमामनुत्तरः ।
एवं विदित्वा महात्मासौ धर्माशोको नराधिपः ॥

मृतोऽसौ देवतां याति नियतं बोधिपरायणः ।
अशीतिवर्षाणि सप्तं च पूजये धातुवरां भुवि ॥

जीवेद् वर्षशतं सार्धं कृत्वा राज्यमकण्टकम् ।
स्वकर्मजनितास्तस्य व्याधिरुत्पन्नदेहजे ॥

तेनैव व्याधितो दुःखी मृतः स्वर्गोपगो भवेत् ।
महतीं सम्पदं प्राप्य अनुभूय दिवौकसाम् ॥

अनुपूर्वेण मेधावी बोधिं प्राप्स्यति दुर्लभाम् ।
मन्त्रा सिद्ध्यन्ति तत्काले वज्राब्जकुलयोरपि ॥

जम्भलाद्यास्तथा यक्षा अस्मिं शासनवर्त्तिनः ।
यक्षिण्यश्च समाख्याता हारीत्याद्या महर्द्धिकाः ॥

चक्रवर्तिसमुत्पादे मन्त्रा सिद्ध्यन्ति चक्रिणः ।
जिनैस्तु कथिता ये मन्त्रा विद्याराजा महर्द्धिकाः ॥

उष्णीषप्रभृतयः सर्वे ये चान्ये जिनभाषिताः ।
उत्तमां साधनां कुर्यात् तस्मिं काले सुशोभने ॥

उत्तमैर्नाधमाः साध्या उत्तमां गतिमाश्रितैः ।
दिलीपो नहुषश्चैव मान्धाता सगरस्तथा ॥

साधयित्वा तु ते मन्त्रां चाक्रिणां जिनभाषिताम् ।
तेजोराशिस्तदा सिद्धः नहुषस्य महात्मनः ॥

राजा सितातपत्रस्तु सिद्धस्तु सगरस्य वै ।
दिलीपस्य तथा मन्त्रं सिद्धमेकमक्षरम् ॥

मान्धातस्य तथा लोके सिद्ध उष्णीषमुन्नतः ।
जयोष्णीषस्तथा सिद्धो धुन्धुमारे नृपोत्तमे ॥
कन्दर्पस्य तथा राज्ञा विजयोष्णीष कथ्यते ।
प्रजापतिस्तस्य पुत्रो वै तस्यापि लोचना भुवि ॥
प्रजापतेः सुतो नाभिः तस्यापि ऊर्णमुच्यति ।
नाभिनो ऋषभपुत्रो वै स सिद्धकर्म दृढव्रतः ॥
तस्यापि माणिचरो यक्षः सिद्धो हैमवते गिरौ ।
ऋषभस्य भरतः पुत्रः सोऽपि मन्त्रान् तदा जपेत् ॥
सोऽनुपूर्वेण सिद्धस्तु महातारां भुवि सर्वदा ।
एते चाऽन्ये च बहवः पार्थिवा लोकविश्रुताः ॥
साधयित्वा तु मन्त्राणां राज्यं कृत्वा दिवं गताः ।
जिनेन्द्रैर्ये तु उक्तानि विद्याराजा महर्द्धिकाः ॥
ते सर्वे शोभने काले युगेऽशीतिसहस्रगे ।
सिद्धाः साधयिष्यन्ति मन्त्रतन्त्रार्थकोविदाः ॥
एते चान्ये च बहवः पार्थिवा लोकविश्रुताः ।
ततोऽशीतिसहस्राणि वर्षाणां शतमेव वा ॥
राज्यं कृत्वा ततः स्वर्गं नियतं बोधिपरायणाः ।
मध्यमे तु तदा काले दिव्यामाश्चर्यमहार्द्धिकाः ॥
मन्त्राः सिद्धिमेवायुरब्जपाणिसमोदिताः ।
मन्त्रिभिर्नरमुख्यैस्तु भूपालैः सार्वभूमिकैः ॥
राजा च ब्रह्मदत्तो वै वाराणस्यां महापुरे ।
सिद्धः अब्जपाणिस्तु लोकेशो लोकविश्रुतः ॥
महावीर्यो महात्मासौ अतिकारुणिको महान् ।
सत्त्वानां मन्त्ररूपेण दिदेश धर्मदेशनाम् ॥
राज्ञा ब्रह्मदत्तेन अनुभूतं मानुषं सुखम् ।
ततोऽसौ सिद्धमन्त्रस्तु सदेहः स्वगमाविशेत् ॥

तस्यापि च सुतो धीमान् पुण्यकर्मा दृढव्रतः ।
तस्यापि सिद्धो महावीर्यो हर्याख्येति विश्रुतः ॥

तेन मन्त्रप्रभावेन जितः शक्र अभूत् तदा ।
तस्यापि सुतः श्वेताख्यो राजाभूत् सर्वदस्तदा ॥

तस्यापि वरदा मन्त्रा महाश्वेता नाम नामतः ।
साधयित्वा तु तां मन्त्रं जीवेद् वर्षशतत्रयम् ॥

तेन मन्त्रप्रभावेन सुखावत्या स गच्छति ।
नियतं बोधिमेत्रास्य ये चान्ये व्याहृता मया ॥

मध्यमे तु तदा काले मध्यमन्त्रांतु साधयेत् ।
अधमेऽतियुगे कष्टे मयि बुद्धत्वमागते ॥

मन्त्राः सिद्धिं प्रयास्यन्ति वज्राब्जकुलयोरपि ।
त्वया कुमार! मन्त्रा वै ये पूर्वे कथिता भुवि ॥

तेऽपि सिद्धिं प्रयास्यन्ति मन्त्रा वै भागहेतुताम् ।
इतराणि तु मन्त्राणि लौकिकां त्रिविधां तथा ॥

कश्मला विकृतरूपाश्च अन्तरिक्षा तु खेचरा ।
भौम्या च मथ यक्षिण्यः पिशाच्या त्रिविधास्तथा ॥

गरुडाः किन्नराश्चैव प्रेता राक्षसभाषिता ।
पिशाचोरगरक्षाणां नागीनां च महर्द्धिका ॥

मन्त्रा सिद्धिं प्रयास्यन्ति युगे कष्टे युगाधमे ।
कुमाररूपास्तु मन्त्रा वै कुमारिरूपास्तु सर्वदा ॥

तेऽपि सिद्धिं प्रयास्यन्ति तस्मिं काले भयानके ।
त्रिविधास्तु तथा मन्त्रा त्रिप्रकारास्तु साधना ॥

त्रिविधेनैव कालेन त्रिविधा सिद्धिरिष्यते ।
संक्षेपेण तु वक्ष्यामि कथ्यमानमतिविस्तरम् ॥

राज्ञे सौ शोकमुख्यस्य पृष्ठते त भवे नृपः ।
विशोक इति विख्यातो लोके धर्मानुचारिणः ॥

तस्य सिद्धा इमा मन्त्रा देवी पण्डरवासिनी ।
विशोकः साधयित्वा तु आजहार दिवौकसाम् ॥
नाकपृष्ठे चिरं सौख्यमनुभूय स महानृपः ।
पुनरेव गच्छन्मानुष्यं भोगशीलो हि वृद्धिगाम् ॥
राज्यं विविधसम्पत्तिं अनुभूय महाद्युतिः ।
पूजयेद् धातुवरां श्रीमां वर्षाणि पञ्चसप्तति ॥
ततो ज्वरेणाभिभूतोऽसौ भिन्नदेहो दिवं गतः ।
तस्याप्यनन्तरे राजा शूरसेनः प्रकथ्यते ॥
विघुष्टो धर्मचारी च शासनेऽस्मिं सदा हितः ।
तेनापि साधिता मन्त्रा देवीस्तूपमहाश्रिया ॥
तेनापि कारिता शास्तुः कारा सुमहती तदा ।
स्तूपैरलङ्कृता सर्वा समुद्रान्ता वसुन्धरा ॥
तस्य कर्मविपाकेन व्याधिरुत्पन्नदेहजा ।
पक्षमेकं क्षयित्वासौ च्युतदेहो भविष्यति ॥
कृत्वा राज्यं वर्षाणि दश सप्त च मानवीः ।
च्युतोऽसौ स्वर्गमाविष्टो नियतं बोधिपरायणः ॥
तस्याप्यनन्तरो राजा नन्दनामा भविष्यति ।
पुष्पाख्ये नगरे श्रीमां महासैन्यो महाबलः ॥
तेनापि साधितो मन्त्र पिशाचो पीलुनामतः ।
तस्य मन्त्रप्रभावं तु महाभोगो भविष्यति ॥
नीचमुख्यसमाख्यातो ततो लोके भविष्यति ।
तद्धनं प्राप्य मन्त्री सो लोके पार्थिवतां गतः ॥
भविष्यति तदा काले ब्राह्मणास्तार्किका भुवि ।
सिद्ध्याभिमानलुब्धा वै नगरे मगधवासिनः ॥
भविष्यन्ति न सन्देहो मिथ्यागर्वितमानिनः ।
तेभिः परिवारितो राजा वै ॥

धर्मशीलोऽपि धर्मात्मा तेषां दास्यति तं धनम् ।
कल्याणमित्रमागम्य पूजे धातुवरानसौ ॥
केवलं तु तदाभ्यासाद् दानाधिक्यहेतुना ।
विहारा कारिता तेन षोडशाष्टौ च धीमता ॥

भविष्यति तदा काले नगरे पुष्पसाह्वये ।
मन्त्रिमुख्यो महात्मा वै घृणी साधु तथा द्विजः ॥
स भविष्यति धर्मात्मा तस्या राज्ञोऽतिशाक्यिनः ।
सोऽपि सिद्धमन्त्रस्तु यक्षिणी वीरमती भुवि ॥
तेनापि कारितं श्रेष्ठं जिनानां धातुवरो भुवि ।
अतिप्राज्ञो हि संवृत्तो यक्षिण्यास्तु प्रभावतः ॥
तेन वासनकर्मेण पूर्ववासनचोदितः ।
अनुपूर्वेण मेधावी बोधिं प्राप्स्यति दुर्लभाम् ॥
स्त्रीकृतेन दोषेण मृत्युं प्राप्स्यन्ति मानवाः ।
वररुचिर्नाम विख्यात अतिरागी अभूत् तदा ॥
नन्दोऽपि नृपतिः श्रीमां पूर्वकर्मापराधतः ।
विरागयामास मन्त्रीणां नगरे पाटलाह्वये ॥
विरक्तमन्त्रवर्गस्तु शल्यमन्त्रो महानलः ।
पूर्वकर्मापराधेन महारोगी भविष्यति ॥
महाज्वरेण दुःखार्तः अर्धरात्रे मरिष्यति ।
आयुंस्तस्य च वै राज्ञः षट्षष्टिवर्षां तथा ॥
नियतं श्रावके बोधौ तस्य राज्ञो भविष्यति ।
तस्याप्यन्यतमः सख्यः पाणिनिर्नाम माणवः ॥
नियतं श्रावकत्वेन व्याकृतो मे भविष्यति ।
सोऽपि सिद्धमन्त्रस्तु लोकेशस्य महात्मनः ॥
साधयेत् प्रज्ञाकामस्तु क्रोधं हालहलं द्विजः ।
तस्य राज्ञोऽपर ख्यातः चन्द्रगुप्तो भविष्यति ॥

जपेन्द्रयक्षसिद्धस्तु कारयेद् राज्यमकण्टकम् ।
महायोगी सत्यसन्धश्च गर्भीता च महीपतिः ॥
अकल्याणमित्रमागम्य कृतं प्राणिवधं बहु ।
तेन कर्मविपाकेन विपक्षांटैः स मूर्च्छितः ॥

अर्धरात्रे रुदित्वासौ पुत्रं स्थापयेद् भुवि ।
विन्दुवारसमाख्यातं वालं दुष्टमन्त्रिणम् ॥

ततोऽसौ चन्द्रगुप्तस्य च्युतः कालगतो भुवि ।
प्रेतलोकं तदा लेभे गतिं मानुषवर्जिताम् ॥

मन्त्राभ्यासात् तदा युक्तो गतिं त्यक्त्वा दिवि गतम् ।
मन्त्रहेतुसमुत्पादात् कुशलालम्बनचेतनाम् ॥

प्रत्येकं वोधिमायाति सोऽनुपूर्वेण नराधिपः ।
राज्ञाथ विम्बसारेण वालेनाव्यक्तचेतसा ॥

पुरा कारितं चैत्यं सिंहदत्तेन भवान्तरे ।
तस्य कर्मप्रभावेन दिवं यातो ह्यनिन्दितः ॥

चश्च जन्मसहस्राणि अमरेभ्यो भुक्तवान् सुखम् ।
स्वर्गलोकाच्च्यवित्वा तु मनुष्येन्द्रोपपद्यते ॥

जातो राजकुले चन्द्रगुप्तस्य धीमतः ।
बाल एव ततो राजा प्राप्तः सौख्यमनल्पकम् ॥

मौढो धृष्टश्च संवृत्तः प्रगल्भश्चापि प्रियवादिनम् ।
स्वाधीन एव तद् राज्यं कुर्याद् वर्षाणि सप्तति ॥

मन्त्रा केशिनी नाम सिद्धा तस्य नराधिपे ।
कुमार! त्वदीयमन्त्रे तु सिद्धिं गच्छेयु ते तदा ॥

भविष्यति तदा काले मन्त्रसिद्धिस्त्वयोदिता ।
कुमाररूपी विश्वात्मा लोकानां प्रभविष्णवः ॥

भविष्यति न सन्देहो मन्त्ररूपेण देहिनाम् ।
+ + + + + + + + + + + + हितकाम्यया ॥

तस्मिं काले सदा सिद्धिर्भविष्यन्ति पठिता शुचि ।
मन्त्री तस्य राज्ञस्य बिन्दुसारस्य धीमतः ॥

चाणक्य इति विख्यातः क्रोधसिद्धस्तु मानवः ।
यमान्तको नाम वै क्रोधः सिद्धस्तस्य च दुर्मतेः ॥

तेन क्रोधाभिभूतेन प्राणिनो जीविताद्धृता ।
कृत्वा तु पापकं तीव्रं त्रीणि राज्यानि वै तदा ॥

दीर्घकालाभिजीवी सौ भविता द्विजकुत्सितः ।
तेन मन्त्रप्रभावेन सदेहमासुरीं भजेत् ॥

आसुरीं तनुमाविष्ट दीर्घकालं स जीवयेत् ।
ततोऽसौ भिन्नदेहस्तु नरकेभ्यो विगच्छतः ॥

ततोऽसौ नारकं दुःखं अनुभूयेह दुर्गतिः ।
विविधा नारकां दुःखां अनिष्टां कर्मजां तदा ॥

कल्पमेकं क्षयित्वासौ क्रोधमन्त्रप्रचोदितम् ।
च्युतोऽसौ नरकाद् दुःखात् तिर्यगेभ्योपपद्यते ॥

नागयोनिं समापद्य भीमरूपी भविष्यति ।
नागराजो महाक्रोधी महाभोगी विषदर्पितः ॥

दारुणं कर्मचारी च ।
च्युतोऽसौ दुष्टकर्मा तु यमलोकमगच्छत ॥

सुनिदा यमराजासौ प्रेतराजो महर्द्धिकः ।
एवं दुःखसहस्राणि अनुभूय पुनः पुनः ॥

सोऽनुपूर्वेण दुर्मेधा शुचिमायात माणवः ।
मानुष्यं जन्ममायातः भीमरूपी भविष्यति ॥

दरिद्र क्रोधनश्चैव अल्पशाख्यो भविष्यति ।
प्रत्येकबुद्धा ये लोके निराशाः खड्गचारिणः ॥

हीनदीनानुकम्प्यास्तु विचरन्ति महीतले ।
सत्त्वानां हितकाम्यर्थं प्रविष्टा पिण्डचारिकाम् ॥

ते तं दुर्मतिं दृष्ट्वा वै परचित्तविदास्तदा।
ते तत्र मनुवृद्धास्तु कारुण्यान्नान्यहेतवः॥
तेन कुल्मापखण्डास्तु गृहीता भक्षहेतुना।
क्रोधमन्त्राभिभूतेन हेतुयुक्त्यादिना तदा॥
तेषां निर्यातयेद् भिक्षं तत्रैकस्य महात्मनः।
इदं भोः प्रव्रजिताः! सर्वे! भक्षयध्वं यथासुखम्॥
तस्यानुकम्पा बुद्धेभ्यः ऋद्धिं दर्शितयां तदा।
ततोऽसौ विस्मयाविष्टः प्रभावोद्गतमानसः॥
प्रपतेत् सर्वतो मूर्ध्ना बुद्धेभ्यः खड्गकल्पिषु।
आकाशेन गताः सर्वे वीतदोषा यथेप्सतः॥
तेनापि कुशलार्थेन प्रत्येकां बोधिचिन्तिताम्।
यादृशा हि महात्मानः शान्तवेषा महर्द्धिकाः॥
तादृशोऽहं भवेल्लोके मा दुःखी मा च दुर्गतिः।
क्षीणकर्मावशेषस्तु च्युतः स्वर्गोपगः सदा॥
सोऽनुपूर्वेण धर्मात्मा प्रत्येकं बोधि लप्स्यते।
तस्मान्न कुर्यान्मन्त्रेभ्यः साधनमाभिचारुकम्॥
बुद्धैर्बोधिसत्त्वैश्च प्रतिषिद्धमाभिचारुकम्।
अतिकारुणिका बुद्धा बोधिसत्त्वास्तु महर्द्धिकाः॥
प्रभावार्थं तु मन्त्राणां दर्शितं सर्वकार्मिगः।
चिन्तामणयो मन्त्रा भाषितास्तु तथागतैः॥
बालरूपा मूढचित्तास्तु क्रोधलोभाभिभूतयः।
परस्परं प्रयोज्यन्ते ये मन्त्रा आभिचारुकैः॥
प्रतिषिद्धं तथा बुद्धैर्बोधिसत्त्वैस्तु धीमतैः।
सर्वप्रकार तु मन्त्राणां सत्त्वेभ्यो भोगवर्धनम्॥
पत्तिष्टमथ राज्यं वै प्रदारक्षां धन्यहेतवः।
आकर्षणं तु सत्त्वानां विविधां योनिमाश्रिताम्॥

साधनीयास्तु मन्त्रा वै न जीवगुपरोधतः ।
तस्मिं काले भविष्यन्ति भिक्षवो मे बहुश्रुताः ॥

मातृचीनाख्यनामास्तु स्तोत्रं कृत्वा ममैव तु ।
यथा भूतगुणोद्देशैः यथाकारमभाषत ॥

प्रसाद्य सर्वतश्चित्तं बुद्धानां शासने रतः ।
मन्त्रसिद्धस्तु दुर्लक्ष्यः मञ्जुघोषस्तथैव तु ॥

गुणवां शीलसम्पन्नः धर्मवादी बहुश्रुतः ।
पुरा तिर्यग्गतेनैव इमां स्तोत्रमभाषत ॥

नृपाख्ये नगरे रम्ये खण्डाख्ये च वने वतु ।
सार्धं शिष्यगणेनैव विहरामि यथासुखम् ॥

तत्रस्थो वायस आसी मां चित्तं सम्प्रसादयेत् ।
प्रसाद्य च मयि चित्तं भिन्नदेहो दिवं गतः ॥

देवेभ्यश्च च्यवित्वा तु मनुष्येभ्योपपत्स्यते ।
मनुष्येभ्योपपन्नस्तु प्रव्रजेच्छासने मम ॥

प्रव्रजित्वा महात्मासौ यथाभूतं हि मां तदा ।
स्तविष्यति तदा काले मातृचीनाख्य सव्रती ॥

स्तोत्रोपहारं यथार्थं च नानादृष्टान्तरहेतुभिः ।
प्रकर्ता सर्वभूतानां हितायैव सुभाषितम् ॥

अनुग्रहार्थं तु सत्त्वानां स्तोत्रचोदनतत्परः ।
भविष्यत्ति तदा काले युगान्ते लोकनिन्दिते ॥

तेन कर्मविपाकेन भिन्नदेहो दिविं गतः ।
सोऽनुपूर्वेण मेधावी अनुभूय विविधां सुखाम् ॥

बोधिं प्राप्स्यति सर्वज्ञिउत्तमार्थमचिन्तियाम् ।
चतुर्थे वर्षशते प्राप्ते निर्वृते मयि तथागते ॥

नागाह्वयो नाम सो भिक्षुः शासनेऽस्मिं हिते रतः ।
मुदितां भूमिलब्धस्तु जीवेद् वर्षशतानि षट् ॥

मायूरी नामतो विद्या सिद्धा तस्य महात्मनः।
नानाशास्त्रार्थधात्वर्थं निःस्वभावार्थतत्त्ववित्॥
सुखावत्यां चोपपद्येन यदासौ त्यक्तकलेवरः।
सोऽनुपूर्वेण बुद्धत्वं नियतं सम्प्रपत्स्यते॥

सङ्गनामा तदा भिक्षुः शास्त्रतत्त्वार्थकोविदः।
सूत्रनीतार्थनेयानां विभज्य बहुधा पुनः॥
लोकाभिधायी युक्तात्मा तुच्छशीलो भविष्यति।
तस्य सिद्धा शालदूतीति कथ्यते॥

तस्य मन्त्रप्रभावेन बुद्धिरुत्पन्न श्रेयसी।
सङ्ग्रहे सूत्रतत्त्वार्थं शासनस्य चिरस्थिते॥
जीवेद् वर्षशतं सार्धं त्यक्तदेहो दिवि गतः।
अनुभूय चिरं सौख्यं दीर्घसंसारसंसरम्॥

अनुपूर्वेण चात्मासौ बोधिप्राप्तो भविष्यति।
एवं बहुविधाकारो भिक्षवो मयि शासने॥
प्रज्ञा धर्मशीलास्तु भविताभूत् तदा युगे।
अपश्चिमे तु तदा काले नन्दनामतः॥

सोऽपि मन्त्रार्थयुक्तात्मा तन्त्रज्ञोऽथ बहुश्रुतः।
तस्य भद्रघटः सिद्धः यक्षमन्त्रप्रचोदितः॥
महायानाग्रसूत्रे तु मया च कथिता पुरा।
तस्मिं काले घटे तस्मिं उज्जहार महातपा॥

तस्य दृष्टसदा तत्र पुस्तकेऽस्मिं मन्त्ररूपिणे।
रक्षा न कारिता तत्र घटेऽस्मिं यक्षसाधिते॥
अनप्रमादात् स्मृतिभ्रंशा घटो मूर्धटके हृतः।
ततोऽसौ सिद्धमन्त्रस्तु भिक्षुर्मन्त्रतपी अभूत्॥

घटं निरीक्षयामास नाभिपश्येत तत्र वै।
ततोऽसौ क्रोधरक्ताङ्गः विस्फूर्जन अभाषत॥

आब्रह्मस्तम्बपर्यन्तं शक्राद्यां समहेश्वराम् ।
मन्त्रेनाकृष्यमानेयं नाहं मन्त्री न मन्त्रराट् ॥
ये मन्त्रा बुद्धपुत्रैस्तु मन्त्रा जिनवरैस्तथा ।
भाषिता निग्रहार्थाय दुर्दान्तदमकापि वा ॥
तेन तु नार्थे शुद्धिर्नास्ति यदि नाकृष्यामि चोरीणाम् ।
ततोत्थाय ततो मन्त्री सिद्धकर्मदृढव्रतः ॥
यथा तु विहिते मन्त्रे प्रयोगाकृष्टहेतवः ।
प्रयोजयामास तं दिक्षु क्षिप्राकर्षणतत्परः ॥
क्षणेना स्मृतमात्रेण क्षिप्रकर्मायतिह्यसौ ।
हुङ्कारेकेण मात्रेण ब्रह्माद्यामानयेद् भुवि ॥
आकृष्टा सर्वदेवास्तु ब्रह्माद्याः सशक्रकाः ।
हाहाकारं प्रमुञ्चाना आर्त्ता भैरवनादिनः ॥
किं करोम किमानीतो नाम यं मन्त्रापराधिनः ।
शीघ्रं च त्वरमाणस्तु भिक्षुर्धीमां विशारदः ॥
दिवौकसां मन्त्रयामास घटं प्रत्यर्पयथ इतो इह ।
अन्योन्यं वै सुराः सर्वे स भिक्षुः सम्प्रभाषत ॥
क्षिप्रं वदत भद्रं वो ये नेनापहृतो घटः ।
निरीक्षयामास ते देवाः न दास्यन्तेऽथ समन्ततः ॥
ससन्व्याहरति देवेशः केनायं घटकोऽपहृतः ।
पश्यते वज्रिणः श्रीमां बोधिसत्त्वो महाद्युतिः ॥
तस्यास्ति गुतो घोरः महारोपी सुदारुणः ।
निर्मितो विघ्नरूपेण विचेरुः सर्वतो जगत् ॥
तेनासौ घटो नीत देवेशः सम्प्रभाषितम् ।
अस्ति वज्रकुले विघ्नः क्रीडते लीलया भुवि ॥
पूजितोऽहमिमेनेति तेनासौ घटको हृतः ।
एवमुक्त्वा तु देवेशः पुनरेव दिवि गताः ॥

सर्वे विसर्जिता देवाः स्वमन्त्रेणैव ते तदा।
क्षणेनैव तु तत्रैकः मुहूर्तेमनगानपि ॥
आनयामास तं विघ्नमन्त्रशात् सघटं तदा।
ततस्तेन तु विघ्नेन प्रेतानां घटमाददे ॥
ततो नीतेन तु विघ्नेन इमां वाचामभाषिता।
प्रेतलोके घटो नीतः न वयं तत्र दोषिणः ॥
रुष्टो सोऽपि महामन्त्री तं विघ्नमभ्यभाषत।
गच्छ गच्छ महाविघ्न! मा भूयो एवमाचरेत् ॥
ततस्तेन तु ते प्रेता आनीतास्तत्क्षणादपि।
क्षुभिताक्रान्तमनसः दीनाः मूर्च्छामुखा हि ते ॥
आर्तस्वरं च क्रन्देयुर्महाघोरतमा ने।
चुक्रुशुः करुणां वाणीं परित्रायस्व महात्मन ॥
घटं वो इह आनीता यथेष्टं कुरुते वयम्।
महाकारुणिको मन्त्री नेपथ्यु सम्प्रजायताम् ॥
करुणार्द्रेण मनसा इमां वाचामभाषत।
किं दुःखं भवतां लोके सम्प्रभाषथ मा चिरम् ॥
ते ऊचुर्दीनमनसा बुभुक्षारमत् सम्प्रधावते।
त्रिषिताः प्रेतलोकेऽस्मिं चिरं कालं महात्मनः ॥
महाकारुणिको भिक्षुस्तेषामेव प्रददौ घटम्।
ततस्ते तुष्टमनसाः रत्नरामालयं गताः ॥
तेषां चिन्तितमात्रेण अन्नपानं भवेद् घटे।
भविता चन्दनमालेऽस्मिं भिक्षुर्नन्दको भुवि ॥
तस्मिं कालाधमे प्राप्ते जीवेद् वर्षशतत्रयम्।
महात्मा बोधिनिम्नस्तु क्षिप्रं प्राप्स्यति दुर्लभाम् ॥
भविष्यन्ति न सन्देहः तस्मिं काले युगाधमे।
राजा गोमिमुख्यस्तु शासनान्तर्धापको मम ॥

प्राचिं दिशिमुपादाय कश्मीरे द्वारमेव तु ।
नाशयिष्यति तदा मूढः विहारां धातुवरांस्तथा ॥
भिक्षवः शीलसम्पन्नां घातयिष्यति दुर्मतिः ।
उत्तरां दिशमाश्रित्य मृत्युस्तस्य भविष्यति ॥
अमानुषेणैव क्रुद्धेन सराष्ट्रः पशुबान्धवः ।
आक्रान्तोऽद्रिखण्डेन पातालं यास्यति दुर्मति ॥
अधो अथ गतिस्तस्य नरकान्नरकतरं भृशम् ।
दुःखा दुःखतरं तीव्रं सम्प्रपत्स्यति दारुणम् ॥
अवीचिर्नाम विख्यातं नरकं पापकार्मिणा ।
मुच्यतेऽसौ महाकल्पं गोमिषण्डो दुरात्मनः ॥
अकल्याणमित्रमागम्य कृतं पापसुदारुणम् ।
तस्मात् सर्वप्रयत्नेन शासनेऽस्मि तथागते ॥
प्रसाद्यमखिलं चित्तं सम्प्रभोक्ष्यथ सम्पदाम् ।
बुद्धत्वनियतं मार्गम् अष्टाङ्गपथयायिनम् ॥
गमिष्यथ सदा सर्वे अशोकं निर्जरसं पुरम् ।
तस्यानन्तरे महीपालः बुद्धपक्ष इति श्रुतः ॥
महायक्षो महात्यागी बुद्धानां शासने रतः ।
भविष्यति न सन्देहः तस्मिं काले युगाधमे ॥
अतिमीलो हि नृपतिः शास्तुः शासनतत्परः ।
विहारारामचैत्यांश्च शास्तुर्बिम्बानतुत्तमाम् ॥
वाप्यः कूपाश्च + + + + + + + + अनेकधाः ।
कारयित्वा महाराजा दिवं गच्छेद् गतायुषः ॥
तस्य सिद्धो महावीर्यः अब्जकेतुर्महीतले ।
पृथिवां पालनां प्रार्थे बोधिसत्त्वस्य महात्मने ॥
तस्य मन्त्रप्रभावेन जीवेद् वर्षशतत्रयम् ।
तेन कर्मावशेषेण क्षिप्रं बोधिमवाप्नुयात् ॥

तस्यापि च सुतो राजा महासैन्यो महाबलः ।
गम्भीरयक्षो विख्यातः पृथिवीगांगिलोदिताम् ॥

सोऽपि राजाथ युक्तात्मा तस्मिन् काले भविष्यति ।
विहारावसथचैत्यांश्च वापीकूपांश्च नैकधा ॥

कारयिष्यति न सन्देहो भूपतिः स महाद्युतिः ।
तेनापि साधितं मन्त्रं मञ्जुघोषस्य धीमतः ॥

षडक्षरं नाम यक्षु वाक्यं महार्थं भोगवर्धनम् ।
तस्य मन्त्रप्रभावेन महाभोगी भवे तदा ॥

अनुपूर्वेण मेधावी क्षिप्रं बोधिपरायणः ।
विविधाकारकारांस्तु शासनेऽस्मिन् तथागते ॥

भविष्यति तदा काले उत्तरां दिशिमाश्रितः ।
नेपालमण्डले ख्याते हिमाद्रेः कुक्षिमाश्रिते ॥

राजा मानवेन्द्रस्तु लिच्छवीनां कुलोद्भवः ।
सोऽपि मन्त्रार्थसिद्धस्तु महाभोगी भविष्यति ॥

विद्या भोगवती नाम तस्य सिद्धा नराधिपे ।
अशीतिवर्षाणि कृत्वासौ राज्यं तस्करवर्जितम् ॥

ततः प्राणात्यये नृपतौ स्वर्गलोके जजगमतु ।
तत्र मन्त्रास्तु सिध्यन्ति शीतला शान्तिकपौष्टिका ॥

तारा च लोकविख्याता देवी पण्डरवासिनी ।
महाश्वेता परहितोद्युक्ता अखिन्नमनसा सदा ॥

इत्येवमाद्यो मोक्ता बहुधा नृपतयोस्तदा ।
अनेकधा बहुधाश्चैव नानारूपाविवर्णिताः ॥

शास्तुपूजकास्तेऽपि म्लेच्छराजा न है ।
वविषः सुहृपश्चैव भावसु शुभगुप्तस्तथा ॥

भाक्रमः पदक्रमश्चैव कमलश्चैव कीर्त्यते ।
भागुप्तः वत्सकश्चैव + + + + + पश्चिमः ॥

उदयः जिह्मनो शान्ते म्लेच्छानां विनिभास्तथा ।
अम्भोधेः भ्रष्टमर्यादा नांद्यः भाझापगोजिनः ॥
शस्त्रसम्पातविध्वस्ता नेपालाभिपतितादा ।
विद्यालुप्ता लुप्तराजानो म्लेच्छतस्करसेविनः ॥
अनेका भूपतयो भोक्ता नाना नैव द्विजप्रिया ।
भविष्यन्ति तदा काले चीनं प्राप्य रागन्ततः ॥
राजा हिरण्यगर्भस्तु महासैन्यो महाबलः ।
विस्तीर्णश्च तन्त्रश्च प्रभूतजनबान्धवः ॥
म्लेच्छप्रणतो विजयी च शास्तुः शासनतत्परः ।
तेनापि साधितो मन्त्रः कुमारस्यैव महाद्युतेः ॥
विद्याराजामष्ट अक्षरम् ।
महावीरं नाम विख्यातं सम्पदानां महास्पदम् ॥
तेन बालधियो राजा राज्यहेतोः समाहितः ।
यस्य स्मारितमात्रेण बुद्धत्वं नियतं पदम् ॥
सोऽल्पकार्यनियुञ्जानः राज्यहेतो नराधिपः ।
आकांक्षमानयद्येवं वरदानमनुत्तमम् ॥
ब्रह्माद्या देवतां कृत्स्नामाज्ञापयति सर्वदा ।
किं पुनर्मानुषां लोके इतरां मात्रकुत्सिताम् ॥
जीवित्वा वर्षशतं सार्धं दिवं गच्छन्महानृपः ।
सोऽनुपूर्वेण धर्मात्मा उत्तमां बोधिमाप्नुयात् ॥
तस्मिं देश इमा विद्या ये कुमारेण भाषिता ।
सत्वरा तेऽपि सिद्ध्यन्ते नान्ये विद्या कदाचन ॥
बोधिसत्त्वो महाधीरः मञ्जुघोषो महाद्युतिः ।
तस्मिं देशे तु साक्षाद्व वै तिष्ठते बालरूपिणः ॥
सिद्धिक्षेत्राऽथ परं दिव्यं मानुष्यैः साधयिष्यति ।
तुरुष्कनामा वै राजा उत्तरापथमाश्रित ॥

महासैन्यो महावीर्यः तस्मिं स्थाने भविष्यति ।
कश्मीरद्वारपर्यन्तं चक्लोद्यं सकाविशम् ॥
योजनशतसप्तं तु राजा भुङ्क्तेऽथ भूतलम् ।
सप्तसप्ततिसहस्राणि लक्षौ द्वौ तस्य भूपतेः ॥
भविष्यति न सन्देहो तस्मिं काले युगाधमे ।
सोऽपि सिद्धमन्त्रस्तु जीवेद् वर्षशतत्रयम् ॥
साधिता केशिनी विद्या नराध्यक्षेण धीमता ।
आत्मना श्रेयसार्थं तु विहारां कारयेद् बहून् ॥
षडाशीतिसहस्राणि कुर्यात् स्तूपवरांस्तथा ।
महायानाग्रधर्मं तु बुद्धानां जननीस्तथा ॥
प्रज्ञापारमिता लोके तस्मिं देशे प्रतिष्ठिता ।
स राजा भिन्नदेहस्तु स्वर्गलोकं गमिष्यति ॥
सोऽनुपूर्वेण क्षितीपेशः बोधिं प्राप्स्यति मुत्तमाम् ।
तस्यान्तरे क्षितिपतेः महातुरुष्को नाम नामतः ॥
धीमतः बहुमतः ख्यातो गुरुपूजकतत्परः ।
सदा सोऽपि साधे स मन्त्रं वै तारादेवीं महर्द्धिकाम् ॥
सोऽपि प्रसिद्धमन्त्रस्तु राज्यहेतो थ भूतले ।
महायक्षा महासैन्यः महेशाक्षोऽथ भूपतिः ॥
सम्मतो बन्धुवर्गाणां राजा सोऽपि भविष्यति ।
अष्टौ सहस्रविहाराणां तस्मिं काले भविष्यति ॥
तस्य मन्त्रप्रभावेन जीवेद् वर्षशतद्वयम् ।
यदासौ भिन्नदेहस्तु तुषितेभ्योपपद्यते ॥
सोन्मत्तो देवपुत्राणां बोधिसत्त्वो महर्द्धिकः ।
सोऽनुपूर्वेण धर्मात्मा बोध्यङ्ग समभिपूरतः ॥
प्राप्नुयामतुलां बोधिं सोऽनुपूर्वेण यत्नतः ।
तत्र देशे सदा कालं तिष्ठते प्रवरं बहु ॥

जिनैस्तु कथितं पूर्वं अधुना चर्यया भुवि ।
वीतरागैः समाक्रान्तं नागैश्चापि महर्द्धिकैः ॥

लोकपालास्तथा यक्षाः शास्तु शासनरक्षकाः ।
भविष्यन्ति तदा काले सद्धर्मा रक्षका भुवि ॥

एवं बहुविधाः प्रोक्ताः भूपाला लोकविश्रुताः ।
कथिताः कथयिष्यन्ति तस्मिं काले सुदारुणे ॥

पश्चाद्देशपर्यन्तं उज्जयन्यामतः परे ।
समुद्रतीरपर्यन्तं लाडानां जनपदे तथा ॥

शीलाह्वो नाम नृपतिः बुद्धानां शासने रतः ।
पुरीं वलभ्य सम्प्राप्तो धर्मराजा भविष्यति ॥

विहारां धातुवरां चित्रां श्रेयसां प्राणिनांस्तथा ।
कारयिष्यति युक्तात्मा भूपतिर्धर्मवत्सलः ॥

पूजां च विविधाकारां जिनबिम्बां मनोरमाम् ।
पूजयेद्धातुवरां अग्र्यां लोकनाथेभ्यो यशस्विषु ॥

नासौ मन्त्रसिद्धस्तु केवलं कर्मजोत्तमः ।
तत्र देशे समाख्यातो भिक्षुः पिण्डचारिकः ॥

शीलवां बुद्धिसम्पन्नो बुद्धानां शासने रतः ।
कालचारी महात्मासौ प्रविष्टो पिण्डचारिकम् ॥

पश्यते राजकुलं श्रेष्ठं विस्तीर्णं च जनावृतम् ।
प्रविष्टो तत्र भिक्षार्थी क्षुधया च समन्वितः ॥

तृषितो क्लान्तमनसो न लेभे पिण्डकं तदा ।
गृहीत्वासौ पुरुषैः क्षिप्रं निर्ययुः तद्गृहात् परम् ॥

ततो सौद्विग्नमनसो रक्षितो राजभटैस्तदा ।
निर्ययुर्नगरात् तस्मात् स्वाश्रयं तत्क्षणाद् गतः ॥

क्षुधितो तृषितश्चैव दुःखी च दुर्मतिं गतः ।
ततोऽसौ भक्तच्छिन्नस्तु अर्धरात्रे समुपस्थिते ॥

प्राणत्यागं तदा चक्रुः यती सौ लघुचेतसः ।
प्रणिधिं च तदा चक्रे लाडानामधिपतिर्भवेत् ॥
ततोऽसौ कालगतो भिक्षुर्धराख्ये नृपतौ कुले ।
उत्पद्येत महात्मासौ शास्तुः शासनपूजकः ॥
दशवर्षाणि विंशं च राज्यं कृत्वा सकण्टकम् ।
लुब्धः स्वजनप्रयोगेण अजीर्णयतिमूर्छितः ॥
भिन्नदेहो ततो राजा कालं कृत्वा दिविं गतः ।
देवा तुषितवरा नाम मैत्रेयो यत्र तिष्ठति ॥
धर्मश्रावी महात्मासौ तत्रासौ उपपत्स्यते ।
धर्मं शृण्वन्ति सत्कृत्य मैत्रेयस्य महाद्युतेः ॥
सोऽनुपूर्वेण बोधिं च प्राप्स्यति दुर्लभाम् ।
शिलाख्ये नृपतौ वृत्ते चपलस्तत्र भविष्यति ॥
वर्षार्धपक्षमेकं तु पञ्च. मासां तथैव तु ।
राज्यं कृत्वा विभिन्नोऽसौ शस्त्रिभिः शस्त्रजीविभिः ॥
शीकृतेनैव तु दोषेण शस्त्रभिन्नो अधो गतः ।
तस्याप्यनुजो ध्रुवाख्यस्तु ध्रुवः स्थावरतां गतः ॥
सेवकः कृपणो मूर्खः लाडानामधिपतिर्भवेत् ।
शेषा नराधिपाः सर्वे मूर्धान्तास्तु सेवकाः ॥
तेषां च पूर्वजा वंशाः शीलाह्वोपरते सदा ।
भविता भूपतयः सर्वे अम्भोजे तीरपर्पगाः ॥
नृपः इन्द्रो सुचन्द्रश्च धनुः केतुस्तथैव च ।
पुष्पनामो ततः प्रोक्ता वारवत्यां पुरोद्भवः ॥
वलभ्यां पुरिमागम्य आद्यमस्ग.....
प्रभनामा सहस्राणि विष्णुनाम।
अनन्ता नृपतयो प्रोक्ता यादवानां कुलोद्भवाः ।
तेषामपश्चिमो राजा विष्णुनामा भविष्यति ॥

ऋषिशापाभिभूतस्तु सपौरजनबान्धवः ।
अस्तं गते नृपो धीमां उदके प्लाविता पुरी ॥
द्वारवत्या तदा तस्य महोदधिसमाश्रिता ।
उत्तरां दिशि सर्वत्र नानारम्भनितम्बयोः ॥
अनन्ता नृपतयः प्रोक्ता नानाजातिसमाश्रृताः ।
शकवंश तदा त्रिंशत् मनुजेशा निबोधता ॥
दशाष्ट भूपतयः ख्याता सार्धभूतिकमध्यमा ।
अन्ते नागसेना तु विलुप्ता ते परे तदा ॥
ततो विष्णुहरश्चैव कुन्तनामाजितः परः ।
ईशानसर्वपश्चिश्च ग्रहसुग्र वथापरः ॥
ततस्ते विलुप्तराजानः भ्रष्टमर्याद सर्वदा ।
विष्णुप्रभवौ तत्र महाभोगो धनिनो तदा ॥
मध्यमात् तौ भकाराद्यौ मन्त्रिमुख्यौ उभौ तदा ।
धनिनौ श्रीमतौ ख्यातौ शासनेऽस्मि हिते रतौ ॥
जप्तमन्त्रौ तथा मन्त्रे कुमारस्त्वयि मन्त्रराट् ।
ततः परेण भूपालो जाताना मनुजेश्वरौ ॥
सप्तमष्टशता त्रीणि श्रीकण्ठावासिनस्तदा ।
आदित्यनामा वैश्यास्तु स्थानमीश्वरवासिनः ॥
भविष्यति न सन्देहो अन्ते सर्वत्र भूपतिः ।
हकाराख्यो नामतः प्रोक्तो सार्वभूमिनराधिपः ॥
तत्र देशे इमे मन्त्रा सिद्धिं गच्छेयु वै तदा ।
धर्मराजेन ये प्रोक्ता विद्या शान्तिकपौष्टिका ॥
विविधां भोगविषयां सम्पदां विविधांस्तथा ।
नाना च रूपधारिण्यो यक्षिण्यश्च महर्द्धिकाः ॥
भविष्यन्ति तत्र वै सिद्धा तस्मि काले युगाधमे ।
दक्षिणां दिशिमाश्रित्य ससमुद्रां वसुन्धराम् ॥

राजा श्वेतसुचन्द्रश्च सातवाहन एव तु ।
महेन्द्रं शङ्करश्चैव वल्लभोऽथ महीपतिः ॥
सुकेशिकेशिश्च विख्याता दक्षिणां दिशि ।
मङ्गलो वल्लभः प्रोक्तो गोविन्दः वृन्दखेतुः ॥
सुत्पातः पोतश्चैव महेन्द्रः चन्द्र एव तु ।
गोपेन्द्रो इन्द्रसेनश्च प्रद्युम्नो माधवस्तदा ॥
गणशङ्करश्चैव व्याघ्रं सिंहो तथा बुधः ।
बुधः शुद्धस्तथा कुम्भः निकुम्भश्चैव कीर्त्यते ॥
मथितः सुमितश्चैव ।
बलः पुलिनश्चैव सुकेशिः केशिनस्तथा ॥
अनन्ता बहवो ख्याता भूपाला दक्षिणां दिशि ।
अतीतानागता चापि वर्त्तमाना निबोधिता ॥
नानामृत्युभवे ह्येते नानाव्याधिसमाप्लुता ।
शस्त्रसम्पातदुर्भिक्षैः मृताः केचिद् दिविं गताः ॥
इत्येते नृपतयः सर्वे कथिता विपुलस्तथा ।
महेन्द्रान्त नृपोताख्यातः तथासहतिस्तथा ॥
भविष्यन्ति तदा अभूत् ।
तस्मिं काले तदा देशे मन्त्राणां सिद्धिमिच्छताम् ॥
साधनीया इमा मन्त्राः क्रोधाद्याः कुलिशोचिताः ।
आभिचारुककर्मेषु वश्यार्थे च तथा हितम् ॥
मञ्जुश्रियोऽथ माहात्मां वै कुमारो बालरूपिणः ।
सिध्यते च तदा देशे कलिप्राप्ते च तदा युगे ॥
पर्वतविन्ध्यमाश्रृतं सागरे लवणोदके ।
कार्तिकेयेति समाख्यातः सत्त्वानां वरदायकः ॥
आज्ञां भो बोधिसत्त्वेन मञ्जुघोषेण धीमता ।
सत्त्वानां हितकाम्यर्थं निवसेद् दक्षिणां दिशि ॥

कार्तिकेयस्य ये मन्त्राः कथिता मञ्जुभाणिना ।
तस्मिं देशे तदा सिद्धिः भविष्यति न संशयः ॥
श्रीपर्वते तदा देशे विन्ध्यकुक्षिनितम्बयोः ।
द्वीपेष्वेव च सर्वत्र कालिङ्गाद्रेषु कीर्त्यते ॥
त्रैगुण्या म्लेच्छदेशेषु समन्ततः ।
अम्भोधेः कुक्षितीरान्ताः नृपा ख्याता अनन्तकाः ॥
कामरूपकलाख्या हि हिमाद्रेः कुक्षिमाश्रिताः ।
बहवो नृपतयो प्रोक्ता उद्रसन्धिषु सर्वदा ॥
नानाम्लेच्छगणाध्यक्षा शास्तुपूजकतत्पराः ।
इन्द्रो सुचन्द्रमहेन्द्रश्च भूपाल म्लेच्छवासिनः ॥
क्ष्मापालौ उभौ तत्र षोडशाद्बा शासने रता ।
पूजकाः शास्तुबिम्बानां स्वत्प्रसादा ॥
भविष्यन्ति न सन्देहो प्रसन्ना शासने जिने ।
बहवो नृपवराः प्रोक्ताः पूर्वायां दिशिमाश्रृताः ॥
अतीतानागता ये तु वर्त्तमानाश्च सर्वदा ।
आद्यं नृपवरं वक्ष्ये गौडानां वंशजो भुवि ॥
जातोऽसौ नगरे रम्ये वर्धमाने यशस्विनः ।
लोकाख्यो नाम सौ राजा भवति गौडवर्धनः ॥
मामानुत्पन्नलोकेऽस्मिं भवितासौ धर्मचिन्तकः ।
बहवः क्षितिपाः क्रान्ता विविधा जीवकर्मिणः ॥
मध्यकाले समास्त्रासा मध्यमा मध्यधर्मिणः ।
अनन्ते व युगे नृपेन्द्रा श्रृणु तत्त्वतः ॥
समुद्राख्यो नृपश्चैव विक्रमश्चैव कीर्त्तितः ।
महेन्द्रनृपवरो मुख्य सकाराद्यो मतः परम् ॥
देवराजाख्यनामासौ युगाधमे ।
निर्द्धाख्ये नृपः श्रेष्ठः बुद्धिमान् धर्मवत्सलः ॥

तस्याप्यनुजो बलाध्यक्षः शासने च हिते रतः ।
प्राचीं समुद्रपर्यन्तां चैत्यालङ्कृतशोभनाम् ॥

करिष्यति न सन्देहः कृत्स्नां वसुमतीं तदा ।
विहारारामवापीश्च उद्याना मण्डवकां सदा ॥

करिष्यति तदा श्रीमां सङ्क्रमां सेतुकारकः ।
शास्तुर्बिम्बान् तदा पूजेत् तत्प्रसन्नांश्च पूजयेत् ॥

कृत्वा राज्यं महीपालो निःसपत्नमकण्टकम् ।
जीवेद् वर्षा षट्त्रिंशत्त्रिंशाहं मत्रजेन्नृपः ॥

ततोत्मानं घातयेद् राजा ध्यायन्तः सम्भ्रमूर्च्छितः ।
पुत्रशोकाभिसन्तप्तः यतिवृत्तिसमाश्रृतः ॥

ततोऽसौ भिन्नदेहस्तु नरकेभ्योपपद्यत ।
त्रीणि एकं च दिवसानि उषित्वा नरकं गतिम् ॥

देहमुत्सृज्य दिविं गच्छेत् सदा नृपः ।
देवानां सुकृतिनां लोकः शुद्धावास इति स्मृतः ॥

देवराजा भवेत् तत्र शुद्धात्मा बोधिनिम्नगः ।
शतशः सहस्रशश्चैव अनुभूय दिविं सुखम् ॥

पुनरेव मानुष्यं प्राप्य बुद्धो भूयो भवान्तरे ।
तेनैव कारितं कर्म अन्यजन्मेषु देहिनाम् ॥

पुरीमुज्जयनीं ख्याता मालवानां जने तदा ।
तत्रायनीमुख्यः वणिजो यो महाधनः ॥

बुद्धानामसम्भवे काले शून्ये लोके निरास्पदे ।
प्रत्येकबुद्धा लोकेऽस्मि विहरान्ति महर्द्धिकाः ॥

सत्त्वानां हितकामाय विचरन्ति महीतले ।
पुरी उज्जयिनी प्राप्य प्रविष्टा पिण्डचारिकां ॥

वर्गचारिणो महात्मानः रथ्यायामवतरतत् ।
वाण्याजेयस्तुतदा सैव दृष्ट्वा तु संमुखां मुनिम् ॥

निमन्त्रयामास तदा भक्तेन स्वगृहं चैव नयेत् तदा ।
नीत्वा मुनिवरां क्षिप्रमासनेन निमन्त्रयेत् ॥

सज्जीभवध्व भवतः भक्तकालोऽयमुपस्थितः ।
तेऽपि तूष्णीं महात्मानो न वाचां भाषिरे तदा ॥

पात्रं च नामयामास वाणिजे यस्य सर्वदा ।
वणिजा इङ्गितज्ञाश्च बुद्धिमन्तो भवेत् तदा ॥

पात्रं च पूरयामास विविधाकारभोजनैः ।
तदासौ स्वहस्तेनैव तेषां प्रायच्छ यत्नतः ॥

गृहीत्वा तु ततः सर्वे प्रजग्मुः सर्वतोनभम् ।
दीपमालेव दृश्यन्ते व्योममूर्त्तिसमाश्रिताः ॥

ततोऽसौ हृष्टरोमस्तु संवेगबहुलस्तदा ।
भूम्यां च पतितस्तत्र ऋद्ध्या वर्जितमानसः ॥

प्रणिधिं च तदा चक्रे प्रव्याहारवभं यथा ।
अनेन कुशलमूलेन यन्मया प्राप्तमद्यतः ॥

एषा मुनिवरा मग्र भवेद् बुद्धो ह्यनुत्तरः ।
दशजन्मसहस्राणि चक्रवर्त्ती तदा भुवि ॥

ततोऽसौ व्युक्तदेहस्तु कोटिषष्टिदिवौकसाम् ।
अनुभूय चिरं सौख्यं त्यक्त्वा जन्म दिवौकसाम् ॥

मानुषाणां तदा जन्म प्राप्नुयात् परवशा इह ।
तस्य राजकुले जन्म भवतीह तु सर्वदा ॥

बालाख्यो नाम सौ नृपतिर्भविता पूर्वदेशकः ।
आजन्मसहस्राणि चिरसौख्यमनावृतम् ॥

प्राप्नुवन्ति या नृपतिः श्रीमां सर्वज्ञत्वं च पश्चिमम् ।
एवं बहुविधं मत्वा सम्पदो विपुलास्तथा ॥

को नु कुर्यात् तदा शास्तुः पूजनाध्येषणांस्तथा ।
कारांश्च श्रेयसीं युक्तां बोधिमार्गवियोजनीम् ॥

तस्यापरेण नृपतिः गौडानां प्रभविष्णवः ।
.ख्यो नामतः प्रोक्तः सोऽपि रत्यन्तधर्मवाम् ॥
स्यापरेण श्रीमां उकाराख्येति विश्रुतः ।
ततः परेण विश्लेष तेषामन्योन्यतेष्यते ॥
महाविश्लेषणा ह्येते गौडा रौद्रचेतसः ।
ततो देव इति ख्यातो राजा मागधकः स्मृतः ॥
सोऽप्यतहतविध्वस्तरिपुभिः समता वृतः ।
यस्यापरेण चन्द्राख्यः नृपतिस्त्वं कारयेत् तदा ॥
सोऽपि शस्त्रविभिन्नस्तु पूर्वचोदितकर्मणा ।
तस्यापि सुतो द्वादश गणनां जीवेन्मासपरम्परम् ॥
सोऽपि विभिन्नशस्त्रेण वाल एव अभूत् तदा ।
तेषां परस्परोपविघ्नचित्तानां रौद्राणामहिते रताम् ॥
भविष्यति तदा काले भकाराख्यो नृपपुङ्गवः ।
अग्रणीर्गौडलोकानां महाव्याधिसमाकुलः ॥
तेनैव व्याधिना आर्त्तः कालं कृत्वा अधो गतः ।
तस्यापरेण दकाराख्यः कतिपायां दिवसां दश ॥
भविता गौडदेशेऽस्मिं गङ्गातीरसमाश्रृतः ।
तस्यापरेण भकाराख्यस्त्रीणि दिवसानि कारयेत् ॥
ततो गोपालको राजा भविता सर्वदस्तदा ।
प्रियवादी च सो राजा घृणी चैव महावलः ॥
स्त्रीवशः कृपणो मूर्खः जितशत्रुर्भवेद् युवाम् ।
कल्याणमित्रमागम्य महात्यागी भवेत् तदा ॥
विहारांश्चैत्यवरां रम्यामारामां विविधांस्तदा ।
वाप्योऽथ जलसम्पन्ना सत्रागारां सुशोभनाम् ॥
सेवतो बहवस्तस्य यशः कीर्त्यार्थमुद्यतः ।
देवायतनरम्यां वै गुणावसथकारिणः ॥

पाषण्डीभिः समाक्रान्तं नानातीर्थिकवासिभिः ।
आक्रान्तः सो दिशः सर्वा समुद्रातीरचर्गगाः ॥
क्रिपी भोगी प्रमादी च सं राजा धर्मवत्सलः ।
भविष्यति न सन्देहः स प्राचीं दिशि मूर्जितः ॥
सद्यातीसारसंयुक्तवार्द्धिक्ये समुपस्थितः ।
गङ्गातीरमुपाश्रित्य राज्यं कृत्वा तु वै तदा ॥
विंशद् वर्षाणि सप्तं च जन्मनाशीतिको मृतः ।
ततोऽसौ भिन्नदेहस्तु तिर्यगेभ्योऽपिपद्यते ॥
नागराजा ततः श्रीमान् धर्मवत्सलः ।
येनास्य कारितं चैत्य शास्तुबिम्बं मनोरमम् ।
विहारां कारितवांश्चात्र सङ्घस्यार्थे तदा भुवि ॥
तेन कर्मविपाकेन अन्तिमे च भवे शिवे ॥
बुद्धत्वं नियतं मार्गं प्राप्नुयादचलं पदम् ।
ततः परेण गौडानां तीर्थिकाक्रान्तपुरं भुवि ॥
ता पूर्वदेशेऽस्मिन् नगरे तीर्थिकसमाह्वये ।
भगवाख्ये नृपे ख्यातः गौडानां प्रभविष्णवः ॥
अभिषिक्तो दक्षिणात्येन प्रतिना प्रभविष्णुना ।
राज्यं कृत्वा तु वै तत्र पश्चिमां दिशिमागतः ॥
प्रविश्य नगरीं रम्यां साकेतां तु यथेप्सितः ।
अरिणा भूतस्तु पुनरेव निवर्तते ॥
प्राचीं समुद्रपर्यन्तां तस्करैश्च समावृतः ।
शस्त्रप्रहारविध्वस्तमृतोऽसौ प्रेततां गतः ॥
त्रीणि वर्षाणि कृत्वासौ भूपालो राज्यमल्पकम् ।
ततो दस्युभिर्ग्रस्तः मृतः प्रेतमहार्द्धिकः ॥
त्रीणि वर्षाणि तत्रैव प्रेतेभ्यो राज्यमकारयेत् ।
ततोऽपि सो त्यक्तदेहस्तु प्रेतलोकां सुदारुणाम् ॥

तस्मान्मुक्तजन्मानः स्वर्लोकं च सदा व्रजेत् ।
तस्याधरेण नृपतिस्तु समुद्राख्यो नाम कीर्त्तितः ॥

त्रीणि दिवसानि दुर्मधः राज्यं प्राप्स्यति दुर्मतिः ।
तस्याप्यनुजो विख्यातः भस्मगाख्यो नाम नामतः ॥

प्रभुः प्राणातिपातसंयुक्तः महासावद्यकारिणः ।
निर्घृणी अप्रमत्तश्च स्वशरीरे तु यत्नतः ॥

परलोकार्थिने नासौ वलिसत्त्वदिहैव तु ।
अकल्याणमित्रमागम्य पापं कर्म कृतं बहु ॥

द्विजैराक्रान्ततद्राज्यं तार्किकैः कृपणैस्तथा ।
विविधाकारभोगांश्च मानुषा पितरास्तथा ॥

विविधां सम्पदां सोऽपि प्राप्तवान् नृपतिस्तथा ।
सोऽनुपूर्वेण गत्वासौ पश्चिमां दिशि भूपतिः ॥

कश्मीरद्वारपर्यन्तं उत्तरां दिशिमाश्रृतः ।
तत्रापि जितसङ्ग्रामी राज्यं कृत्वा तु वै तदा ॥

द्वादशाब्दानि सर्वत्र मासां पञ्चदशस्तथा ।
पृथिव्यामार्तरोगोऽसौ मूर्छितश्च पुनः पुनः ॥

महादुःखाभिभूतस्तु भिन्नदेह अधोगतः ।
तेषां परस्परतो द्वेषे लुब्धानां राज्यहेतुनाम् ॥

महाशस्त्रोपसम्पातं कृत्वा ते तु परस्परम् ।
अभिषिच्य तदा राज्यं सकराख्यं बालदारकम् ॥

चिह्नमात्रं तु तं कृत्वा पुनरेव निवर्त्तते ।
यैर्द्विजातिमुख्यानां भिन्नास्तेऽपि परस्परम् ॥

मागधां जनपदां प्राप्य पुरे उदुम्बराह्वये ।
द्वै बालौ द्विजातिमुख्यश्च अभिषेच्य स्वयं भुवि ॥

ततोऽनुपूर्वेण गत्वासौ प्राचीं दिशिमाश्रृतः ।
गौडां जनपदां प्राप्य निःसपत्ना ह्य वै तदा ॥

घातितौ बालमुख्यौ तौ कलिङ्गेषु दुरात्मना ।
अकल्याणमित्रमागम्य कृतं प्राणिवधो बहुम् ॥

पूर्वसम्मानिता ये तु नृपैर्विग्रहमानिभिः ।
घातयामास सर्वेषां गौडानां जनवासिनाम् ॥

सोमाख्योऽपि ततो राजा एकवीरो भविष्यति ।
गङ्गातीरपर्यन्तं वाराणस्यामतः परम् ॥

नाशयिष्यति दुर्मेधः शास्तुर्विम्बां मनोरमाम् ।
जिनैस्तु कथितं पूर्वं धर्मसेतुमनल्पकम् ॥

दाहापयति दुर्मेधः तीर्थिकस्य वचे रतः ।
ततोऽसौ क्रुद्धलुब्धस्तु मिथ्यामानी ह्यसंमतः ॥

विहारारामचैत्यांश्च निर्ग्रन्थां वसथां भुवि ।
भेत्स्यते च तदा सर्वा वृत्तिरोधमकारक ॥

भविष्यते च तदा काले मध्यदेशे नृपो वरः ।
रकाराद्योतयुक्तात्मा वैश्यवृत्तिमचञ्चलः ॥

शासनेऽस्मिं तथा शक्त सोमाख्यससमो नृप ।
सोऽपि याति तवान्तेन नग्नजातिनृपेण तु ॥

तस्याप्यनुजो हकाराख्य एकवीरो भविष्यति ।
महासैन्यसमायुक्तः शूरः क्रान्तविक्रमः ॥

निर्धारये हकाराख्यो नृपतिं सोमविश्रुतम् ।
वैश्यवृत्तिस्ततो राजा महासैन्यो महाबलः ॥

पूर्वदेशं तदा जग्मुः पुण्ड्राख्यं पुरमुत्तमम् ।
क्षत्रधर्मं समाश्रित्य मानरोपमशीलिनः ॥

घृणी धर्मार्थिको विद्वां कुर्यात् प्राणिवधं बहून् ।
सत्त्वानुपीडनपरो निग्रहायैव सो रतः ॥

पराजयामास सोमाख्यं दुष्टकर्मानुचारिणम् ।
ततो निषिद्धः सोमाख्यो स्वदेशेनावतिष्ठतः ॥

निवर्तयामास हकाराख्यः म्लेच्छराज्ये मपूजितः।
तुष्टकर्मा हकाराख्यो नृपः श्रेयसा चार्थधर्मिणः॥

स्वदेशेनैव मयातः यथेष्टगतिनापि वा।
तैरेव कारितं कर्म राज्यहर्षसमन्वितैः॥

अधुना प्राप्तवां भोगां राज्यवृत्तिमुपाश्रुताम्।
पूर्वं प्रत्येकबुद्धाय भक्ताच्छादनदत्तवाम्॥

पादुकौ च तदा दत्तौ च्छत्रचामरभूषितम्।
तस्य धर्मप्रभावेतौ महाराज्यतृदेवतौ॥

भुक्तवां भोगसम्पत्तीः देवमनुष्यसर्वदा।
सोमाख्यो द्विजाह्वयो महाभोगी भवे ह्यसौ॥

भोगां द्विजातिषु दत्त्वा वै राज्यं कृत्वा वै तदा।
सार्धं सप्तमं तथा॥

वर्षा दश सप्तं च मासमेकं तथापरम्।
दिवसां सप्तमष्टौ च मुखरोगसमाकुलः॥

कृमिभिर्भक्षमाणस्तु कालं कृत्वा अधोगति।
अमानुषाक्रान्तविध्वस्तं तत् पुरं च अभूत् तदा॥

मानुषेणैव दोषेण ज्वरार्तो व्याधिमूर्च्छितः।
मृतो मन्त्रप्रयोगेण राजासौ कालगतस्तदा॥

अवीचिर्नाम विख्यातं नरकं पापकारिणा।
तत्रासौ उपपद्येत पापकर्मान्तचारिणः॥

महाकल्पं तदा नरके पच्यतेऽसौ दुष्टचेतसः।
ततो टटं हहवं चैव सञ्जीवं कालसूत्रं तु॥

असिपत्रवनं घोरं अनुभूय पुनः-पुनः।
तिर्यक्प्रेतलोकं च पुनस्तथा॥

एवं जन्मसहस्राणि संसारे संसरतः पुनः।
नासौ विन्दति सौख्यानि दुःखभाजी भवेद् सदा॥

तस्मात् सर्वप्रयत्नेन शासनेऽस्मिं तथागते ।
प्रसाद्यमखिलं चित्तं गच्छध्वं निर्जरसम्पदम् ॥
बुद्धे कारापकारां च अनन्ता भवति कर्मता ।
बुद्धे प्रासादः कर्तव्यः धर्मसङ्घे च वै तथा ॥
भवन्ति लोके अग्रस्तु विरन्ते पूजका नृपा ।
महेशाख्यमहेराज्यं महाभोगा धनेश्वरा ॥
प्राप्नुयाद् विविधां सौख्यां सम्पदां विपुलां नृपा ।
पूजयित्वा तु लोकाग्र्यां लोक ईश्वरतां व्रजेत् ॥
शक्रत्वमथ याम्यत्वं ब्रह्मत्वं च पुनः पुनः ।
प्रत्येकबुद्धा बुद्धत्वं श्रावकत्वं च वै भुवि ॥
प्राप्नुवन्ति त्रियानग्रत्वं द्वौ यातौ निःस्पृहतां गतः ।
एवं ह्यचिन्तिया बुद्धा बुद्धज्ञानोपचिन्तियः ॥
अचिन्तियो हि फलं तेषां विपाको भवन्त्यचिन्तियः ।
अतः परेण सोमाख्यो नृपतौ अप्यस्तमिते भुवि ॥
अन्योन्यक्षोभशीलस्तु गौडतन्त्रो भविष्यति ।
सदा उद्यतशस्त्रास्तु अन्योन्यापि नपेक्षिणः ॥
दिवसा सप्तमेवं तु मासमेकं तथापरम् ।
राज्यं तदा तन्त्रे भविष्याति सदा भुवि ॥
गङ्गातीरे एतस्मिं विहाराध्युषितमालये ।
ततः परेण सुतस्तस्य सोमाख्यस्य च मानवे ॥
मासान्यष्टौ दिवसा पञ्च साधाहे सुनिशातयन्तु ।
वैश्यवर्णशिशुस्तदा ॥
नागराजसमाह्वयो गौडराजा भविष्यति ।
अन्ते तस्य नृपे तिष्ठं जयाद्यावर्णतद्विशौ ॥
वैश्यैः परिवृता वैश्यं नागाह्वयो समन्ततः ।
दुर्भिक्षोपद्रवास्तेऽपि परचक्रोपद्रुतास्तदा ॥

तेषां राज्यमसम्प्राप्तं महातस्करमाकुलाः ।
ते तं भ्रष्टमर्यादा ॥

वर्षां पञ्चकमेकं वै भुक्ते तत्र समाकुलाम् ।
प्राणात्ययं तदा चक्रुः कृत्वा प्राणिवधं बहून् ॥

पूर्वकर्मपराधेन ते जना वैश्यवृत्तयः ।
अन्योन्यक्षोभशीलास्तु भविष्यन्ति तदा अभूत् ॥

प्रभविष्णुस्तदा तेषां क्षत्रवृत्तिसमाश्रितः ।
भविष्यन्ति न सन्देहः गौडतन्त्रे नराधिपः ॥

शस्त्रभिन्ना तथा केचिद् व्याधिभिश्च समाकुलाः ।
कालं कृत्वा ततो याता नरकेभ्यो नराधिपा ॥

स्त्रीप्रधानं शिशुस्तत्र पुनरेव नराधिपः ।
पक्षमेकं तथा वै शस्त्रभिन्नो हतस्तदा ॥

महादुर्भिक्षसम्पातं परचक्रसमाकुलम् ।
प्राच्या जनपदा व्यस्ता उत्त्रस्ता गतमानसा ॥

भविष्यन्ति न सन्देहः तस्मिं देशे नराधिपाः ।
मधुरायां जातवंशाढ्यः वणिक्‍ पूर्वी नृपो नरः ॥

सोऽपि पूजितमूर्तिस्तु मागधानां नृपो भवेत् ।
तस्याप्यनुजो भकाराख्यः प्राचीं दिशि समाश्रितः ॥

तस्यापि सुतः पकाराख्यः प्राग्देशेष्वेव जायतः ।
क्षत्रियः अग्रणी प्रोक्तः बालवन्धानुचारिणः ॥

दश वर्षाणि सप्तं च बन्धनस्थमधिष्ठितः ।
गोपाख्येन नृपतिना बद्धो मुक्तोऽसौ भगवाह्वये ॥

पश्चाद्देशसमायातः अकाराख्यो महानृपः ।
प्राचिं दिशिपर्यन्तं गङ्गातीरमतिष्ठत ॥

शूद्रवर्णो महाराजा महासैन्यो महाबलः ।
सो वं तीरं समासृत्य तिष्ठते च समन्ततः ॥

पुर्यां गौडजने ख्यातं तीर्थादिनि विश्रुतः ।
समाक्रम्य राजासौ तिष्ठेत च महाबलः ॥
सर्वां च धरित्र्यां वाढः वांगला च तथागतः ।
रात्रौ प्रविष्टवांस्तत्र राज्यन्ते च प्रपूजितः ॥

शूद्रवर्णे नृपः ख्यातः पुनरेव निवर्तयम् ।
गङ्गातीरपर्यन्तं नगरे नन्दसमाह्वये ॥

मागधानां तदा राज्यं स्थापयामास तं शिशुम् ।
काशिनं पद प्राप्य वाराणस्यमतः पुरे ॥

प्रविशेच्छूद्रवर्णस्तु महीपालो महाबलः ।
महारोगेण दुःखार्तः अभिषेचे स तं तदा ॥

अभिषिच्य तदा राज्यं ग्रहाख्यं बालदारकम् ।
महारोगाभिभूतस्तु भूमावावर्त वै तदा ॥

ततोर्ध्वं निःश्वस्य यत्नेन भिन्नदेहोऽपि तीर्यतः
तिर्यैभ्ये वसं मासां अष्ट सप्तं च वै तदा ॥

ततोऽसौ मुक्तजन्मान देवेभ्यां मुपपद्यते ।
विविधां देवसम्पत्तिं विंशजन्मानि वै तदा ॥

ततोऽनुपूर्वेण धर्मात्मा प्रत्येकं बोधिमाप्नुयात् ।
तेनैवोपार्जितं कर्म पूर्वकालेषु जन्मनि ॥

प्रत्येकबुद्धो महात्मा वै वस्त्रैः रामभिच्छादितः ।
उपानहं नामयागारा हस्त्यश्वरथहेतुना ॥

भोजनं च तदा तस्य तस्मा दत्तः प्रयत्नधीः ।
तेन कर्मविपाकेन देवराजा शतक्रतुः ॥

भविता देवलोकेऽस्मि त्रिशत्कोट्यास्तु जन्मतः ।
भुविमायात राजासौ भविता इह जन्मनि ॥

परैरुपार्जितं राज्यं अनुभोक्ता भविष्यति ।
तस्यापि च सुतो राजा वाराणस्यां तु प्रतिष्ठितः ॥

समन्ताद्भूतविध्वस्तविलुप्तराज्यो भविष्यति ।
द्विजकान्तमभूयिष्ठं सद्रु राज्यं रिपुभिस्तदा ॥

प्रमादी कामचारी च स राजा महीमिङ्गितः ।
अपश्चिमे तु काले वै पश्चाच्छत्रुहतो मृतः ॥

मागधो नृपतिस्तेषां अन्योन्याविरोधिनः ।
सोमाख्ये नृपते वृत्ते प्रागदेशे समन्ततः ॥

गङ्गातीरपर्यन्तं वाराणस्यामतः परम् ।
भविष्यति तदा राजा पकाराख्यः क्षत्रियस्तदा ॥

योऽसौ शूद्रवर्णेन अकाराख्येन पूजितः ।
नगरे नन्दसमाख्याते गङ्गातीरे तु समाश्रिते ॥

भविता क्षत्रियो राजा पूर्वकर्मैस्तु चोदितः ।
तेनैव कारितं कर्म कृतं चाप्यनुमोदितम् ॥

अतिक्रान्ते तदा काले कनकाह्वे शास्तुसम्भवे ।
वाराणस्यां महानगर्यां श्रेष्ठिरासीन्महाधनः ॥

वणिजः स सुतो बालः बालिशैस्तु समावृतः ।
पांसुक्रीडनमर्थाय रथ्यायां प्रतिपद्यते ॥

स्वगृहे स्तूपवरं दृष्ट्वा पितामात्राभिपूजितम् ।
तदेव मनसा वर्ते स्तूपं कृत्वा तु पांसुना ॥

पूजां च कारयामास निर्माल्यकुसुमैस्तदा ।
संस्नवागागं तं स्तूपं बुद्धत्वं शाक्यगतिस्मृतिः ॥

क्रीडते बालस्तत्र शिशुभिः परिवारितः ।
जिने कनकशाक्यमुने श्रावकाग्रो नदेककः ॥

वीतदोषस्तु युक्तात्मा नैभातुकमुक्तधीः ।
तदासौ वीतदोषस्तु पिण्डपातमहिण्डत ॥

प्रविशते च तदा नगरीं वारणस्यां सुशोभनाम् ।
वीतरागस्तदादेशं यत्र ते बालिशा भुवि ॥

यत्र ते शैशवः सर्वे समन्तात् परिवारिताः ।
एहि भिक्षु इहागच्छ वन्द स्त्वं शास्तुचैत्यकम् ॥
अस्माभिः कारितं यत्नात् न त्वं पश्यसि शोभनम् ।
ततः श्रेष्ठिसुतो बालः गृहीत्वा तृणवर्तितम् ॥
क्रीडया बन्धयामास वीतरागं महर्द्धिकम् ।
समन्वाहरति तत्रासौ वीतरागो महर्द्धिकः ॥
पश्यते भुवि तत्रस्थं चैत्यं कारितकं हि तैः ।
बालिशं मूर्ध्नि मासृज्य एवं वोच महात्मधीः ॥
मुञ्च दारक गच्छामो यत्र त्वं कारितं कृतिः ।
आगता च ततः सर्वे यत्र धातुधरं भुवि ॥
वन्दित्वा वीतरागा महात्मासौ शिशुभिश्चैतदासमैः ।
पुनरेव प्रस्थितो वीरः पिण्डकार्थं यथेप्सतः ॥
ततः श्रेष्ठिसुतो बालः गृहीत्वा चीवरान्तिकम् ।
स्वगृहं नीतवां ह्यासीद् भोजनार्थं च कारयेत् ॥
ततः श्रेष्ठिमुख्योऽसौ दृष्ट्वा तं बालिशम् ।
गृहीत्वा चीवरान्ते तु वीतरागं महर्द्धिकम् ॥
भीतो हृष्टरोमश्च गृहं मे आगतोऽग्रजः ।
पादयोर्निपतितं क्षिप्रं मुञ्चापयति बालकम् ॥
गृहीत्वा तु सुतं तस्य क्षमापयामास यत्नतः ।
पात्रं तु गृहीत्वा वै जिने अग्र्यजिने हिते ॥
पूरयामास तं पात्रं शालिव्यञ्जनभक्ष्यकैः ।
सुतं चामन्त्रयामास गृह्य मन्त्र प्रयच्छ भोः ॥
ततो बालोऽथ सम्प्रज्ञो हस्तौ प्रक्षाल्य यत्नतः ।
गृहीत्वा पात्रपूरं तु वीतरागाय नामयेत् ॥
नामयित्वा तु तं क्षिप्रं पादयोर्निपतितो भुवि ।
वीतरागो गृहीत्वा तु भुक्तवाम् ॥

वीतरागो तदा ह्यासीत् सुखसंस्पर्शं च लब्धवान् ।
अपरस्तत्र बालो वै मात्सर्याविष्टमानसः ॥
केवलं रोपचित्तेन वीतरागो परेऽहनि ।
प्रभूतं खाद्यभोज्यं च गृहीत्वा तं प्रयच्छत ॥
यद्यस्ति कुशलं किञ्चित् त्वयि दत्वा तु पिण्डकम् ।
अनेन श्रेष्ठिसुतस्याहं भविता आढ्यतमो भुवि ॥
ततस्ते तीर्थिकाः सर्वे द्विजातिवनिता तदा ।
सन्निपत्य तदा सर्वे कलहं निन्दकं कृत्वा ॥
बालिशस्त्वं न जानासि मुण्डकानां कुतो गतिः ।
आत्मना अस्थिता ह्येते परेषां कुत्र निर्वृतिः ॥
तस्य बालकसत्त्वस्य द्वेषमुत्पन्न तादृशम् ।
नाशयामास एतेषां शास्तारेणोपवर्णिताम् ॥
धर्मसेतु सदा कीर्तिं विहारां चैत्यवरां भुवि ।
श्रेष्ठिमुख्यसुतस्यैव आघातं नैव कारयेत् ॥
एतेषां मुण्डकानां तु दत्त्वा दानं कुतो गतिः ।
कुगतिग्रस्तचित्तानां विघातं कारयाम्यहम् ॥
यो सौ वाद्यतमो बालो सोमाख्योऽपि नृपो ह्यसौ ।
अनुभूय चिरं दुःखं विपाकः तस्य नैष्ठिकम् ॥
श्रेष्ठिमुख्यस्य पुत्रोऽसौ भिन्नदेहो दिवि गतः ।
अनुभूय चिरं सौख्यं दिवौकसानां तदा तदा ॥
च्युतोऽसौ देवलोकेऽस्मिम् ।
तदाजन्मे वन्धं सेत्स्यति सर्वदा ॥
तृजन्मोपगतो मर्त्यः क्ष्मापतिः भविता पुनः ।
पुनश्च पतितः कर्मेण तत्र तत्र तदा तदा ॥
भविता जन्मलोकेऽस्मि नृपतित्वं कारयेद् भुवि ।
निर्माल्यदानं यस्स्तूपे निवेद्य सौ बालचापलात् ॥
तेनास्य भोगा क्लिष्टा वै क्लिष्टादानस्य तत् फलम् ।
दुःखेन भोगास्तु प्राप्तास्तु नमसन्धीव सौ नृपः ॥

अस्थैर्यां बालयत्त्वाच्च चलचित्ततया च सदा ।
कुर्वीत महतीं पूजां शास्तुर्धातुवरे भुवि ॥
तेन कर्मविपाकेन राज्यैश्वर्यं चलतां व्रजेत् ।
भूत्वा भवति राजा अभूत्वा प्रतिगच्छति ॥
उदीच्यप्रतीच्यमध्यौ सो नृपतिस्त्वं कारयेद् भुवि ।
यो सौ मुक्तग्रीवबन्धः पुनर्मुक्तश्च बालकः ॥
तेन कर्मविपाकेन बद्धो मुक्तश्च बालकः ।
पञ्चजन्मशतानैव बद्धो मुक्तश्च बालकः ॥
अपश्चिमे तु तदा जन्मे बन्धं छेत्स्यति सर्वदा ।
पञ्चपञ्चाशवर्षस्तु सप्तसप्ततिकोऽपि वा ॥
प्राचीं समुद्रपर्यन्तां राजासौ भविता भुवि ।
विन्ध्यकुक्षिनिविष्टास्तु प्रत्यन्तम्लेच्छतस्कराः ॥
सर्वे ते वशवर्ति स्यात् पकाराख्ये नृपतौ भुवि ।
हिमाद्रिकुक्षिसन्निविष्टा तु उत्तरां दिशिमाश्रुताम् ॥
सर्वां जनपदां भुङ्क्ते राजासौ क्षत्रियस्तदा ।
पांसुना कृत्वा स्तूपं अज्ञानाद् बालभावतः ॥
मागधेषु भवेद् राजा निःसपत्नमकण्टकः ।
सैमामटवीपर्यन्तां प्राचीसमुद्रमाश्रुतः ॥
लौहित्यापरतो धीमां उत्तरे हिमवांस्तथा ।
पश्चात् काश्चिपुरी रम्यां शृङ्गाख्ये पुर एव वा ॥
अत्रान्तरे महीपालः शास्तुशासनदायकः ।
पञ्चकेसरिनामानौ जित्वा नृपतिनौ सौ ॥
स्वं राज्यमकारयत् ।
सर्वांस्तां सिंहजास्तेऽपि ध्वस्तोन्मूलिता तदा ॥
हिमाद्रिकुक्षिप्राच्यां भो दशानूपः तीरमाश्रयेत् ।
सत्त्वा जनपदां भुङ्क्ते राजासौ क्षत्रियस्तदा ॥

अभिवर्धमानजन्मस्तु भोगास्तस्य च वर्द्धताम्।
वार्धिक्ये च तदा मोक्ते भोगां निश्चलतां व्रजेत् ॥

अशीतिवर्षाणि जीवेयुः सप्त सप्त तथा पराम्।
ततो जीर्णाभिभूतस्तु कालं कृत्वा दिविं गतः ॥

देवलोकेऽस्मिं चिरसौख्यमनुभूय तथा नृपः।
पुनश्च्यवति कर्मेण पूर्वसङ्क्लेशितेन तु ॥

तिर्यक्षु न्वसे मासं नागराजमहर्द्धिकः।
ततोऽसौ भिन्नदेहस्तु मानुषेभ्योपपद्यते ॥

क्षत्रियो श्रीमतो जतो वणिग्जीवी विशारदः।
कल्याणमित्रमागम्य भोक्तागो जिनशासने ॥

साधयेद् विद्याराज्ञीं तारादेविं महर्द्धिकाम्।
सिद्धमन्त्रस्तु जिनो नागो यथेष्टगतिचारिणः ॥

विद्याधराणां तदा राजा भविता सुगतस्तदा।
चक्रवर्तिस्तदा ख्यातो नाम्नासौ चित्रकेतवः ॥

विद्याधराणां तदा कर्म ख्यातोऽसौ गतिमांस्तथा।
अशीतिवर्षकोट्यानि नवसप्तानि चैतदा ॥

दिव्यमानुष्यमाद्येन भविता चक्रवर्त्तिनः।
परिवारस्तस्य कन्यानां षष्टिकोट्यो गजायत ॥

ततोऽसौ भिन्नदेहस्तु तारादेव्यानुचोदितः।
देवानामधिपतिं गच्छेत् तत्र धर्मं च देशयेत् ॥

सोऽनुपूर्वेण महीपाल क्षिप्रं बोधिपरायणः।
पकाराख्ये च नृपतौ वृत्ते तदा काले युगाधमे ॥

भिन्नं परस्परं तत्र महाविग्रहमाश्रिताः।
भृत्यस्तस्य तु सप्ताहं राज्यैश्वर्यमकारयेत् ॥
ततोऽनुपूर्वेण सप्ताहाद् वकाराख्यो नृपतिस्तथा।
सोऽप्यहतविध्वस्तः प्रक्रमेत दिशास्ततः ॥

o

पकाराख्ये नृपतौ तत्र भकाराख्यो भवतः परः ।
सोऽपि त्रीणि वर्षाणि राज्यैश्वर्यमकारयेत् ॥

तस्याप्यनुजो वकाराख्यो भविता गणशिष्ठिनः ।
त्रीणि वर्षाणि एकं च भविता राज्यवर्द्धन ॥

अजीर्णितौ उभावप्येतौ रक्तातीसारमूर्च्छितौ ।
कालगतौ लोके यक्षेभ्योपपद्यते ॥

तेऽनुपूर्वेण धर्मात्मानो प्रत्येकां बोधिमाप्नुयाम् ।
तस्याप्यनुजो धकाराख्यः क्षत्रियो धर्मवत्सलः ॥

भविता सोऽपि राजा वै त्रीणि वर्षाणि ।
भवितासौ नराधिपः ॥

तस्यापि कन्यसो राजा नकाराख्योऽथ विश्रुतः ।
भविता तत्र देशेऽस्मिन् सार्वभूमिकभूपतिः ॥

हस्त्यश्वरथयानानि गोत्राणि नगरान्तः ।
जेता रिपूणां सर्वेषां समरे शत्रुघातिनाम् ॥

स इमां जनपदां सर्वां कृत्स्नां चैव वसुन्धराम् ।
शास्तुबिम्बैर्विहारैश्च जिनानां धातुधरैस्तथा ॥

शोभायति सर्वां वै कृत्स्नां चैव वसुन्धराम् ।
नृपपूर्वां तथा तस्य द्विजातिः शासनजस्तथा ॥

मानी तीक्ष्णोऽथ स प्राज्ञः बोधिनिम्नोऽथ मानश्रीः ।
सेनास्य सुमहानन्तां याति तस्मिन् काले युगाधमे ॥

क्षत्रियः अग्रश्रीः प्रोक्तः राजा वै धर्मवत्सलः ।
जीवेद् वर्षशतं त्रिंशत् सप्त चाष्टं च यत्नतः ॥

स्त्रीकृतेनैव दोषेण कालं कृत्वा दिवं गतः ।
सोऽनुपूर्वेण मेधावी प्राप्नुयाद् बोधिमुत्तमाम् ॥

ततः परेण विख्यातः श्रीनागाथ महीपतिः ।
गौडतन्त्रे महाराजा भविता धर्मवत्सलः ॥

गौडानां च पुरे श्रेष्ठे नकाराख्ये च महाजने ।
कारयेत् तत्र राज्यं वै त्रिंशत् समन्ततः ॥
विहारां कारयामास गम नाढ्यौ न तत्र वै ।
द्विजमुख्या तथा युक्तो आरूढानि समाश्रिते ॥
तेन साहाय्यतां याते कुर्याद् राज्यं समन्ततः ।
अशीतिरेकं च वर्षाणि जीवित तत्र नराधिपः ॥
भृत्यदोषेण धर्मात्मा कालं कृत्वा दिवं गतः ।
अनुपूर्वेण तथा राज्यं देवानामपि कारयेत् ॥
ततोऽसौ भिन्नदेहस्तु रागाणां स्वर्गगतां व्रजेत् ।
परिपूर्ण कुशलात् धर्मी नोति ये तस्य केवलः ॥
तस्यैव भृत्यो राजा वै कुर्याद् राज्यमनाकुलम् ।
नाम्ना ककाराद्यस्तु महीपालो भविष्यति ॥
सप्त चैकं च वर्षाणि कुर्याद् राज्यं तदा युगं ।
सैव घातितं स्त्रीभिः घातितश्च अधो गतः ॥
पुनः पकारवंशास्तु राजा भविताथ क्षत्रियः ।
तेनासौ भृत्यवर्गस्तु घातितोऽसौ निरन्तरः ॥
अकल्याणमित्रमागम्य कृतं प्राणिवधं बहून् ।
भविता सर्वलोकेऽस्मिं पापार्जितमूर्च्छितः ॥
क्षिप्रकारी चपलस्तु मद्यपश्च शठप्रियः ।
मद्यप्रमादात् सम्मूढः तद्रागो शयने भुवि ॥
भिन्नोऽसौ शस्त्रघातैस्तु अरिभिश्च समुद्यतैः ।
ततोऽसौ भिन्नदेहस्तु कालं कृत्वा अधोगतः ॥
तस्याप्यन्यतमो भ्राता रकाराद्यो नामतः स्मृतः ।
अष्टचत्वारिंशद्दिवसानि राज्यकर्त्ता सदा भुवि ॥
दत्वा द्रविणं द्विजातिभ्यः कालं कुर्यान्न संशयः ।
ततः परेण भूपालः स्वादाद्यो भविता तदा ॥

